भाविसमीरश्रीमद्वादिराजपूज्यचरणविरचितः

# श्रीमन्महाभारतलक्षालङ्कारः

## तृतीयो भागः






महाभारतसंशोधनप्रतिष्ठानम्

Bhāvisamīra Śrī Vādirājapūjyacaranaviracitaḥ

# Mahābhāratalakṣālankāraḥ

(A critical edition of a rare commentary on the Mahābhārata)

Volume -3

(Mokṣadharmaparvan in Śāntiparvan to Svargārohaṇaparva)

The publication of this book was made possible by generous grants given by the Ministry of Human Resources Department, Government of India under the Scheme of Development of Sanskrit Language

Mahābhārata Samśodhana Pratiṣṭānam
(Mahābhārata Research Foundation)
Bangalore - INDIA

**Mahābhāratalakṣālankāraḥ** is a commentary by Śrī Vādirājatīrtha (1480-1600 CE) on The Mahābhārata of Bhagavān Śrī Vedavyāsa. This critical edition has been prepared using 300 year old manuscripts from the Śrī Sode Vādirāja Matha, Udupi.

Printed in INDIA
2005-06

**Published by:**
**Mahābhārata Samśodhana Pratiṣṭānam**
(Mahābhārata Research Foundation)
#1/E, 3rd Cross, Girinagar,
Bangalore - INDIA.

www.mahabharata.org



Rs. 1800/-
(One Set of 3 Volumes






International distributors Motilal Banarsidass Publications New Delhi.

Typeset by K. Subbanna
Coverpage and box design by K.M. Sheshagiri, Chandranathacharya
Printed by Aditya printers

भावीसमीरश्रीमद्वादिराजपूज्यचरणविरचितः

# श्रीमन्महाभारतलक्षालङ्कारः

तृतीयो भागः

(शान्तिपर्वणि मोक्षधर्मपर्वतः स्वर्गारोहणपर्वपर्यन्तम्)

महाभारतसंशोधनप्रतिष्ठानम्
गिरिनगरम्
बेङ्गलूरु - भारतम्

भाविसमीरश्रीमद्वादिराजपूज्यचरणविरचितः महाभारतलक्षालङ्कारः
श्रीमद्वेदव्यासविरचितश्रीमन्महाभारतस्य अपूर्वं व्याख्यानम् । ग्रन्थोऽयं उडुपि श्रीसोदा वादिराजमठे उपलब्धानां त्रिशतसंवत्सरेभ्योऽपि प्राचीनानां मातृकाणां साहाय्येन संशोध्य प्रकाशितः ।

भारतदेशे मुद्रितम्

प्रकाशकः

महाभारतसंशोधनप्रतिष्ठानम्

गिरिनगरम्, बेङ्गलूरु, भारतम्



# विषयानुक्रमणिका


| | | |
|---|---|---|
| १. | शान्तिपर्वणि मोक्षधर्मपर्व | १ |
| २. | आनुशासनिकपर्व | ४०४ |
| ३. | आश्वमेधिकपर्व | ५७२ |
| ४. | मौसलपर्व | ७०१ |
| ५. | आश्रमवासिकपर्व | ७०८ |
| ६. | महाप्रस्थानिकपर्व | ७२५ |
| ७. | स्वर्गारोहणपर्व | ७२६ |
| ८. | श्लोकानुक्रमणिका | ७३५ |

# Contents


| | | |
|---|---|---|
| 1. | Mokṣadharmaparvan of Śāntiparvan | 1 |
| 2. | Ānuśāsanika parvan | 404 |
| 3. | Āśwamedhikaparvan | 572 |
| 4. | Mausalaparvan | 701 |
| 5. | Āśramavāsikaparvan | 708 |
| 6. | Mahāprasthānikaparvan | 725 |
| 7. | Svargārohaṇaparvan | 726 |
| 8. | Śhlokānukramaṇikā | 735 |


- - - -

॥ श्रीः ॥

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः

श्रीमध्वेशहयवदनाय नमः

॥ श्रीमदानन्दतीर्थभगवत्पादाचार्येभ्यो नमः ॥

भाविसमीरश्रीवादिराजगुरुभ्यो नमः

॥ निर्विघ्नमस्तु ॥

# ॥ महाभारतलक्षालङ्कारः ॥

## ॥ अथ मोक्षधर्मपर्व ॥

### ॥ अथ प्रथमोऽध्यायः ॥

[१] **यथा यथा च पर्येति लोकतन्त्रमसारवत् ।**

**तथा तथा विरागोऽत्र जायते नात्र संशयः ॥ ४ ॥**

**पर्येति लोकतन्त्रमसारवत्** इत्यत्र असारवत् **पर्येति** जानाति ।

**ब्राह्मण उवाच –**

**हृष्यन्तमवसीदन्तं सुखदुःखविपर्यये ।**

**आत्मानमनुशोचामि यो ममैष हृदि स्थितः ॥ १३ ॥**

**सुखदुःखविपर्यय** इत्यत्र सुखविपर्यये अवसीदन्तं, दुःखविपर्यये हृष्यन्तम् इति सम्बन्धः । **आत्मानं** चित्तम् ।

---

१. कुं. १७३ अध्यायः ।

[१] **नैव ते परमार्थार्था** इत्यत्र **परमार्थः** उत्तमपुरुषार्थः मोक्षः । तदर्थे **ते** तव नैव दुःखम् । **परमार्थके** मोक्षे विषये ते तव अज्ञानमेव हि ।

**स्नेहपाशैर्बहुविधैराविष्टविषया जनाः ।**
[२] **अकृतार्था वसीदन्ते जलैः सैकतसेतवः** ॥ २४ ॥

**अकृतार्था वसीदन्त** इत्यत्र **वसीदन्ते** अवसीदन्ते 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति वचनात् ।

**स्नेहेन तैलवत्सर्वं सर्गचक्रे निपीड्यते ।**
**तिलपीडैरिवाक्रम्य क्लेशैरज्ञानसम्भवैः** ॥ २५ ॥

**सर्गचक्रे निपीड्यत** इत्यत्र **सर्गचक्रे** तैलोत्पादकचक्रे **तिलपीडैः** तिलान् पीडयन्तीति तिलपीडाः, त एव तिलपीडकाः तैलकर्तारः पुरुषाः।

**नालं सुखाय सुहृदो नालं दुःखाय दुर्हृदः ।**
**न च प्रज्ञाऽलमर्थानां न सुखानामलं धनम्** ॥ ३० ॥

**नालं सुखाय सुहृद** इत्यत्र सुखाय सुहृदः **नालं** न समर्थाः । दुर्हृदोऽपि दुःखाय नालम् । किन्तु हरिरेव सुखदुःखप्रदः इति भावः ।

**धेनुर्वत्सस्य गोपस्य स्वामिनस्तस्करस्य च ।**
**पयः पिबति यस्तस्या धेनुस्तस्येति निश्चयः** ॥ ३३ ॥

**धेनुर्वत्सस्य** इत्यत्र यथा एकैव धेनुः वत्सगोपादीनाम् एवं पुत्रवित्ताद्याः ये बलात् अपहरन्ति तदीयाः इति भावः ।

---

१. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
२. D8; 'अकृतार्थाश्च सीदन्ते' इति कुं. पाठः । BORI पृ. ९५५

**अन्तेषु रेमिरे धीरा न ते मध्येषु रेमिरे ।**
**अन्तप्राप्तिं सुखं प्राहुर्दुःखमन्तरमन्तयोः ॥३५ ॥**

**अन्तेषु रेमिरे धीराः न ते मध्येषु रेमिर** इत्यत्र **अन्तेषु** धर्मार्थकाम-मोक्षाख्यपुरुषार्थानां क्रमेण गणनायाम् अन्तो मोक्षः । सारूप्यादिभेदेन मोक्षस्यापि बहुविधत्वात् बहुवचनम् । व्युत्क्रमेण गणनायाम् अन्तो धर्मः । तस्यापि बहुविधत्वात् बहुवचनम् । तेषु ये रेमिरे ते । **मध्येषु** अनयोर्मध्यस्थितेषु अर्थकामेषु न रेमिरे । **अन्तयोः** धर्ममोक्षयोः **अन्तरं** मध्यम् ।

**अथ ये बुद्धिमप्राप्ता व्यतिक्रान्ताश्च मूढताम् ।**
**तेऽतिवेलं प्रहृष्यन्ति सन्तापमुपयान्ति च ॥ ३८ ॥**

**व्यतिक्रान्ताश्च मूढताम्** इत्यत्र अतिशयेन **क्रान्ताः** प्राप्ताः **व्यति-क्रान्ताः ।**

**सुखं दुःखान्तमालस्यं दुःखं दाक्ष्यं सुखोदयम् ।**
**भूतिश्चैव श्रिया सार्धं दक्षे वसति नालसे ॥ ४० ॥**

**सुखं दुःखान्तमालस्यम्** इत्यत्र आलस्यं सुखं प्राक् यथा भवति तथा अन्ते दुःखं यस्य तद्दुःखान्तम् । **दाक्ष्यं** दक्षः आलस्यरहितः उत्साही, तस्य दक्षस्य भावः दाक्ष्यम् । **दुःखं** प्राक् दुःखं यथा भवति तथा **सुखोदयम्** अन्ते सुखस्य उदयो यस्मात् तत्सुखोदयम् । काष्ठ-भारानुद्वहनात् अलसस्य तत्काले किञ्चित्सुखम् । अन्ते भोजनालाभे पुत्रमित्रकलत्रादिभिः सह महद्दुःखं भवति । दक्षस्य तु प्राक् काष्ठभाराहरणादिना किञ्चिद्दुःखम् । अन्ते पुत्रमित्रकलत्रादिभिः सह सम्यक् भोजने सति महासुखमिति भावः ।

**शुक्लकृष्णगतिज्ञं तं देवासुरविनिर्गमम् ।**
**उदयास्तमयज्ञं हि न शोकः स्प्रष्टुमर्हति ॥ ४४ ॥**

**उदयास्तमयज्ञं हि** इत्यत्र **उदयो** दुःखोदयप्रकारः । **अस्तमयो** दुःखास्तमयप्रकारः । तं जानातीति स तथोक्तः ।

**यन्निमित्तो भवेच्छोकस्त्रासो वा क्रोध एव वा ।**
**आयासो वा यतो मूलं तदेकाङ्गमपि त्यजेत् ॥ ४५ ॥**

**मूलं तदेकाङ्गमपि त्यजेत्** इत्यत्र **मूलं** दुःखादेः कारणभूतं, **तत्** स्वकारणम् **एकाङ्गम्** एकावयवमपि 'अङ्गुलीवोरगक्षता' इति न्यायेन त्यजेत् ।

**वृत्त एष हृदि प्रौढो मृत्युरेष मनोभवः ।**
**क्रोधो नाम शरीरस्थो देहिनां प्रोच्यते बुधैः ॥ ५१ ॥**

**वृत्त एष हृदि प्रौढ** इत्यत्र **एषः** कामः क्रोधश्च शरीरान्निवृत्तश्चेत् स पुरुषः हृदि प्रौढः । **एषः** शरीरस्थः **मनोभवः** कामः क्रोधश्च मृत्युरित्युच्यते ।

**यदा संहरते कामान् कूर्मोऽङ्गानीव सर्वशः ।**
**तदात्मज्योतिरात्मश्रीरात्मन्येव प्रसीदति ॥ ५२ ॥**

**तदात्मज्योतिः** इत्यत्र **आत्मनि** परमात्मनि **ज्योतिः** ज्ञानरूप-प्रकाशः यस्य सः **आत्मज्योतिः**, आत्मैव ज्योतिः ज्योतिःस्थानीयः प्रकाशो यस्येति वा ।

**उभे सत्यानृते त्यक्त्वा शोकानन्दौ भयाभये ।**
**प्रियाप्रिये परित्यज्य प्रशान्तात्मा भविष्यति ॥ ५५ ॥**

**उभे सत्यानृते त्यक्त्वा** इत्यत्र दस्यून् प्रति सत्यं त्यक्त्वा, साधून् प्रति अनृतं त्यक्त्वेत्यर्थः ।

**उन्मत्ताऽहमनुन्मत्तं कान्तमन्ववसं चिरम् ।**
**अन्तिके रमणं सन्तं नैनमध्यगमं पुरा ॥ ६० ॥**

**उन्मत्ताऽहमनुन्मत्तम्** इत्यत्र अनुन्मत्तम् अन्तिके सन्तं **कान्तं** मनोहरम् **एनं** परमात्मानं रमणम् उन्मत्ता अहं पुरा नाध्यगमम् । इतः परं चिरं तमेव अनुवसामि इति योजना ।

**एकस्थूणं नवद्वारमपिधास्याम्यगारकम् ।**
**का ह्यकान्तमिहायान्तं कान्त इत्यभिमंस्यते ॥ ६१ ॥**

**एकस्थूणं नवद्वारम्** इत्यत्र **एकं** पृष्ठास्थि **स्थूणा** स्तम्भो यस्य तत् । **नवद्वारं** शरीराख्यम् **अगारकम्** अगारम् **अपिधास्यामि** आच्छादयामि कस्मैचिन्न दिशामि इत्यर्थः । **कान्तं** जारम् ।

**अकामां[1] कामरूपेण धूर्ताश्च नररूपिणः ।**
**पुनर्न[2] यभयिष्यन्ति प्रतिबुद्धाऽस्मि जागृमि ॥ ६२ ॥**

**पुनर्न यभयिष्यन्ति** इत्यत्र अकामां मां पुनः **न यभयिष्यन्ति** मैथुनं न करिष्यन्ति ।

**अनर्थोऽपि भवत्यर्थो दैवात् पूर्वकृतेन वा ।**
**सम्बुद्धाऽहं निराकारा नाहमद्याजितेन्द्रिया ॥ ६३ ॥**

---

१. $M_5$,$K_6$; **'अकामाः'** इति कुं.पाठः । BORI पृ. ९५९
२. **'न पुनर्वश्चयिष्यन्ति'** इति कुं. पाठः ।

**निराकारा** निर्गतः वेश्याकारो यस्यास्सा ।

**सुखं निराशः स्वपिति नैराश्यं परमं सुखम् ।**
**आशामनाशां कृत्वा हि सुखं स्वपिति पिङ्गला ॥ ६४ ॥**

**आशामनाशाम्** इत्यत्र **अनाशां** लौकिकेष्वाशारहिताम् ।

**॥ इति शान्तिपर्वणि मोक्षधर्मे प्रथमोऽध्यायः ॥**

## ॥ अथ द्वितीयोऽध्यायः ॥

**पुत्र उवाच–**

**मृत्युनाभ्याहतो लोको जरया परिवारितः ।**[१]
**अहोरात्राः पतन्त्येते ननु कस्मान्न बुध्यसे ।**
**अमोघा रात्रयश्चापि नित्यमायान्ति यान्ति च ॥ ९ ॥**

**मृत्युनाभ्याहतो लोक** इत्यत्र प्रतिदिनं मृत्युनाभ्याहत इति तात्पर्यम्, अन्यथा आयुषोऽन्ते मृत्योः सर्वैः ज्ञातत्वात् ज्ञानिनः पितुः न मृत्युस्तिष्ठतीति प्रतिवचनायोगात् ।

**अहोरात्राः पतन्त्येत** इत्यत्र अहोरात्राणाम् अमोघत्वं नाम त्रिविधजीवानां स्वस्वयोग्यपुण्यपापादिकरणे हेतुत्वम् ।

**यथाऽहमेतज्जानामि न मृत्युस्तिष्ठतीति ह ।**
**सोऽहं कथं प्रतीक्षिष्ये जालेनेवावृतश्चरन् ॥ १० ॥**

**न मृत्युस्तिष्ठति** इत्यत्र मृत्युपदेन दिने दिने जायमानो मृत्युर्गृह्यते । **प्रतीक्षिष्ये** द्रक्ष्यामि ।

---

१. कुं. १७४ अध्यायः ।

**रात्र्यां रात्र्यां व्यतीतायामायुरल्पतरं यदा ।**
**तदैव वन्ध्यं दिवसमिति विद्याद्विचक्षणः ॥ ११ ॥**
**अनवाप्तेषु कामेषु मृत्युरभ्येति मानवम् ॥ १२ ॥**

**तदैव वन्ध्यं दिवसम्** इत्यत्र वन्ध्याख्यमृत्युसम्बन्धिदिवसो वन्ध्यदिवसः । सर्वेषां शतायुष्ट्वनियमाभावादपि दिने दिने मृत्युराशङ्कनीयः इत्याह **अनवाप्तेषु कामेष्विति** ।

**यामेव[१] रात्रिं प्रथमां गर्भो भजति मातरम् ।**
**तामेव रात्रिं प्रस्थाति मरणाय निवर्ततः ॥**

**मरणाय निवर्तत** इत्यत्र निवर्तयतीति **निवर्तत्** गर्भस्रावहेतुभूतं कर्म, तस्मात् ।

**पुष्पाणीव विचिन्वन्तमन्यत्र गतमानसम् ।**
**वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥ १३ ॥**

**उरणम्** अविम् ।

**[२]नियतो देहिनां मृत्युरनिमित्तं हि जीवितम् ॥**

**नियतो देहिनां मृत्युरनिमित्तं हि जीवितम्** इत्यत्र **अनिमित्तं हि** मृत्युनिमित्तकर्मरहितम् ।

**निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः ।**
**[३]छित्वेमां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ॥ २६ ॥**

---

१. BORI पृ. ९६२ ; २. BORI पृ. ९६३
३. 'छित्त्वैताम्' इति कुं.पाठः । BORI पृ. ९६६

**छित्वेमां सुकृतो यान्ति** इत्यत्र **सुकृतः** सुष्ठु कुर्वन्तीति सुकृतः पुण्यात्मानः ।

**न हिंसयति यो जन्तून् मनोवाक्कायहेतुभिः ।**
**जीवितार्थापनयनैः प्राणिभिर्न स हिंस्यते ॥ २७ ॥**

**जीवितार्थापनयनैः** इत्यत्र जीवितार्थम् अपनयन्ति पुरुषम् इतस्ततः इति जीवितार्थापनयनानि तैः कर्मभिरिति सम्बन्धः ।

**सोऽहं ह्यहिंस्रः सत्यार्थी कामक्रोधबहिष्कृतः ।**
**समदुःखसुखः क्षेमी मृत्युं[१] हास्याम्यमर्षवत् ॥ ३१ ॥**

**मृत्युं हास्याम्यमर्षवत्** इत्यत्र **अमर्षवत्** अमर्षमिव ।

**आत्मन्येवात्मना जात आत्मनिष्ठोऽप्रजोऽपि वा ।**
**आत्मन्येव भविष्यामि न मां तारयति प्रजा ॥ ३६ ॥**

**आत्मन्येवात्मना जात** इत्यत्र आत्मपदेन सर्वत्र परमात्मैव गृह्यते । **आत्मनि** प्रलयकाले परमात्मनि स्थितः ।

**नैतादृशं ब्राह्मणस्यास्ति वित्तं**
**यथैकता समता सत्यता च ।**
**शीलं स्थितिर्दण्डनिधानमार्जवं**
**ततस्ततश्चोपरमः क्रियाभ्यः ॥ ३७ ॥**

**यथैकता समता** इत्यत्र **एकता** एकप्रकारता **दण्डनिधानं** वाग्दण्डादेर्न्यासः ।

॥ इति द्वितीयोऽध्यायः ॥

१. $M_5$; 'मृत्युं हास्याम्यमर्त्यवत्' इति कुं.पाठः । BORI पृ. ९६७

## ॥ अथ तृतीयोऽध्यायः ॥

**[१] तं वै सदा कामचरमनुपस्तीर्णशायिनम् ।**
**बाहूपधानं शाम्यन्तं प्रशंसन्ति दिवौकसः ॥ १३ ॥**

**अनुपस्तीर्णशायिनम्** इत्यत्र उपस्तरणेन कम्बलादिना सहितम् उपस्तीर्णं, तत् न भवति इति **अनुपस्तीर्णं** केवलभूतलम् । तत्र शायिनमित्यर्थः ।

**तेषां परमदुःखानां बुद्ध्या भैषज्यमाचरेत् ।**
**लोकधर्मं समाज्ञाय ध्रुवाणामध्रुवैः सह ॥ २१ ॥**

**ध्रुवाणामध्रुवैः सह** इत्यत्र **ध्रुवाणां** जीवानाम् **अध्रुवैः** धनादिभिः **सह** स्नेहं लोकधर्मं समाज्ञायेति योजना ।

॥ इति शम्याकगीतिर्नाम तृतीयोऽध्यायः ॥

## ॥ अथ चतुर्थोऽध्यायः ॥

**[२] ईहमानो धनं मङ्किर्भग्नेहश्च पुनः पुनः ।**
**केनचिद्धनलेशेन क्रीतवान् दम्यगोयुगम् ॥ ५ ॥**

**क्रीतवान् दम्यगोयुगम्** इत्यत्र दमो नाम लगुडताडनादिना तस्य निग्रहः । तद्योग्यगोयुगम् ।

**सुसम्बद्धौ तु तौ दम्यौ दमनायाभिनिःसृतौ ।**
**आसीनमुष्ट्रं मध्येन सहसैवाभ्यधावताम् ॥ ६ ॥**

---

१. कुं. १७५ अध्यायः ।; २. कुं. १७६ अध्यायः ।

**सुसम्बद्धौ** अन्योन्यं कण्ठदेशे पाशेन बद्धौ ।

**तयोः सम्प्राप्तयोरुष्ट्रः स्कन्धदेशममर्षणः ।**
**उत्थायोत्क्षिप्य तौ दम्यौ प्रससार महाजवः ॥ ७ ॥**

**सम्प्राप्तयोरुष्ट्र** इत्यत्र **तयोः** दम्यवत्सयोः **स्कन्धदेशं** स्वस्कन्धदेशं प्राप्तयोः सतोरित्यर्थः ।

**उद्यम्योद्यम्य मे दम्यौ विषमेणैव गच्छतः ।**
**अतिष्ठत्[1] काकतालीयमुन्माथेनेव जम्बुकम् ॥ ११ ॥**

**अतिष्ठत् काकतालीयमुन्माथेनेव जम्बुकम्** इत्यत्र **उन्माथेन** उन्नम्य मथ्नातीति उन्माथो यन्त्रकृतजालविशेषः, तेन । **काकतालीयम्** अकस्मादागतं दुःखं जम्बुकमिव(?) जम्बुकं यथा प्राप तथा इदं दुःखं मम दम्यगोयुगं प्रत्यतिष्ठदिति योजना ।

**यदि वाऽप्युपपद्येत पौरुषं नाम कर्हिचित् ।**
**अन्विष्यमाणं तदपि दैवमेवावतिष्ठते ॥ १३ ॥**

**अन्विष्यमाणं तदपि** इत्यत्र **अन्विष्यमाणं** सर्वैः अनुकूलतया अपेक्ष्यमाणं तत्पौरुषमपि तद्दैवमेव **अवतिष्ठते** अनुवर्तते ।

**नान्तं[2] सर्वविवित्सानां गतपूर्वोऽस्ति कश्चन ।**
**शरीरे जीविते चैव तृष्णा मर्त्यस्य वर्धते ॥ १७ ॥**

**नान्तं सर्वविवित्सानाम्** इत्यत्र 'विदॢ लाभे' इति धातोः वेत्तुं

---

१. **'उत्क्षिप्य काकतालीयम्'** इति कुं.पाठः । BORI पृ. ९७४
२. BORI पृ. ९७५; **'नान्तं सर्वविधित्सानाम्'** इति कुं.पाठः ।

लब्धुम् इच्छाः विवित्साः, तासाम् **अन्तम्** अवसानं, **गतपूर्वः** इतः-पूर्वंगतः कोऽपि नास्ति ।

**निवर्तस्व विधित्साभ्यः [१] सम्यङ् निर्विद्य मामक** ॥ १८ ॥

**सम्यङ् निर्विद्य मामक** इत्यत्र मामकेति स्वचित्तं प्रति शुकस्य सम्बुद्धिः ।

**अनुतर्षुल एवार्थः स्वादु गाङ्गमिवोदकम् ।**
**[२] मद्विलापनमेतत्तु प्रतिबुद्धोऽस्मि तत्तथा** ॥ २८ ॥

**अनुतर्षुल एवार्थ** इत्यत्र **अनुतर्षुलः** अनुसृत्य तृष्णाजननशीलः ।
**मद्विलापनमेतत्तु प्रतिबुद्धोऽस्मि तत्तथा** इत्यत्र तदेतन्मद्विलापनं यथा तथा तत्प्रतिबुद्धोऽस्मि । वाङ्मात्रमिदं न मम बुद्धिरपि तादृशीति भावः ।

**य इमं मामकं देहं भूतग्रामः समाश्रितः ।**
**[३] मयार्थितो यथाकामं वसतां वा यथासुखम्** ॥ २९ ॥

**मयार्थितो यथाकामं वसतां वा यथासुखम्** इत्यत्र हे काम, मयार्थितो यथा तथा वसतां भवान्, **वा**पदेन यथासुखं गच्छतां वा ।

**न युष्मास्विह मे प्रीतिः कामलोभानुसारिषु ।**
**तस्मादुत्सृज्य वः सर्वान् सत्त्वमेवाश्रयाम्यहम्** ॥ ३० ॥

**सत्त्वं** सत्त्वगुणम् । **उत्सृज्य** नाहंबुद्ध्या ।

---

१. BORI पृ. ९७५; '**शाम्य निर्विद्य कामुक**' इति कुं.पाठः ।
२. '**मद्विलापनमेतत्तु प्रतिबुद्धोऽस्मि सन्त्यज**' इति कुं.पाठः ।
३. '**स यात्वितो यथाकामम्**' इति कुं.पाठः ।

**आत्मना सप्तमं कामं हत्वा शत्रुमिवोत्थितम् ।**
**प्राप्यावध्यं ब्रह्मपुरं राजेव च वसाम्यहम् ॥ ५२ ॥**

**आत्मना** मनसा **सप्तमं** व्युत्क्रमेण गणनायां सप्तमम् ।

**एतां बुद्धिं समास्थाय मङ्किर्निर्वेदमागतः ।**
**सर्वान् कामान् परित्यज्य प्राप्य ब्रह्म महत्सुखम् ॥ ५३ ॥**

**एतां बुद्धिं** शुकेनोक्तां बुद्धिम् ।

**अत्रैवोदाहरन्तीमं बोध्यस्य पदसञ्चयम् ।**
**निर्वेदं प्रति विन्यस्तं तं निबोध युधिष्ठिर ॥ ५७ ॥**

**बोध्यस्य पदसञ्चयम्** इत्यत्र **पदसञ्चयं** पदसमूहं वाक्यमिति यावत् ।

**उपदेशेन वर्तामि नानुशास्मीह कञ्चन ।**
**लक्षणं तस्य वक्ष्येऽहं तत्स्वयं परिमृष्यताम् ॥ ६० ॥**

**लक्षणं तस्य वक्ष्येऽहम्** इत्यत्र **तस्य** उपदेशस्य **लक्षणं** लक्षयति बोधयतीति लक्षणं ज्ञापकं वस्तु । उपदेशकर्तॄन् गुरूनिति यावत् । जातावेकवचनम् । **तत्** तैस्तैः क्रियमाणं उपदेशं, **स्वयं** स्वेन भवतैव । **परिमृश्यतां** विचार्यताम् ।

**पिङ्गला कुररः सर्पः सारङ्गान्वेषणं वने ।**
**इषुकारः कुमारी च षडेते गुरवो मम ॥ ६१ ॥**

**पिङ्गला कुररः सर्प** इत्यत्र **पिङ्गला** ग्राम्यभोगाशापरित्यागे गुरुः, **कुररः** स्वायासकारिपरित्यागे गुरुः, एवं षण्णां गुरुत्वं ज्ञेयम् । बोध्यस्तु

अनुशासने गुर्वाज्ञाभावात् स्वगुरूनेव आह न तु तेभ्यः शिक्षितबुद्धिम् इति ।

॥ इति चतुर्थोऽध्यायः ॥

## ॥ अथ पञ्चमोऽध्यायः ॥

**चरन्तं ब्राह्मणं कञ्चित् कल्यचित्तमनामयम् ।[१]**
**पप्रच्छ राजा प्रह्लादो बुद्धिमान् प्राज्ञसत्तमः ॥ ३ ॥**

**कल्यचित्तमनामयम्** इत्यत्र **कल्यं** समर्थं चित्तं यस्य सः ।

**जलजानामपि ह्यन्तं पर्यायेणोपलक्षये ।**
**महतामपि कायानां सूक्ष्माणां च महोदधौ ॥ १४ ॥**

**जलजानामपि ह्यन्तम्** इत्यत्र जले जाताः **जलजाः** प्राणिनः ।

**धारयामि च चीराणि शाणक्षौमाजिनानि च ।**
**महार्हाणि च वासांसि धारयाम्यहमेकदा ॥ २३ ॥**

**शाणक्षौमाजिनानि च** इत्यत्र शाणसम्बन्धि शाणं, शाणपदेन गोणीयोग्यगुल्मत्वक् उच्यते, तेन कृतमाच्छादनम् ।

**उपगतभयरागमोहदर्पो**
**धृतिमतिबुद्धिसमन्वितः प्रशान्तः ।**
**उपगतफलभोगिनो निशाम्य**
**व्रतमिदमाजगरं शुचिश्चरामि ॥ ३१ ॥**

---

१. कुं. १७७ अध्यायः ।

**उपगतफलभोगिन** इत्यत्र **उपगतफलभोगिनः** अजगराः, तान्निशाम्य ।

**[१] अभिगतमसुखार्थमीहनार्थै-**
**रुपगतबुद्धिरवेक्ष्य चात्मसंस्थम् ।**
**तृषितमनियतं मनो नियन्तुं**
**व्रतमिदमाजगरं शुचिश्चरामि** ॥ ३३ ॥

**अभिगतमसुखार्थमीहनार्थैः** इत्यत्र **ईहनार्थैः** इच्छानुकूलप्रयत्नैः **असुखार्थं** दुःखमभिगतं पुरुषमवेक्ष्य । **तृषितं** तृष्णायुक्तम् ।

**न हृदयमनुरुध्यते मनो[२] मे**
**प्रियसुखदुर्लभतामनित्यतां च ।**
**तदुभयमुपलक्षयन्निवाहं**
**व्रतमिदमाजगरं शुचिश्चरामि** ॥ ३४ ॥

**न हृदयमनुरुध्यते मनो मे** इत्यत्र मे मनः **हृदयं** हृद्ययनात् हृदयस्थं परमात्मानम् **अनु** प्रति **न रुध्यते** विषयभोगादिना न प्रतिरुध्यते ।

**बहु कथितमिदं हि बुद्धिमद्भिः**
**कविभिरपि प्रथयद्भिरात्मकीर्तिम् ।**
**इदमिदमिति तत्र तत्र हन्त**
**स्वपरमतैर्गहनं प्रतर्कयद्भिः** ॥ ३५ ॥

---

१. BORI पृ. ९८७; '**उपगतमसुखार्थमीहनार्थैः**' इति कुं.पाठः ।
२. T,$G_{1,3}$,$M_{1,5,7}$; '**मनो वा**' इति कुं.पाठः । BORI पृ. ९८७

**तदहमनुनिशाम्य विप्रयातः[1]**
**पृथगभिपन्नमिहाबुधैर्मनुष्यैः ।**
**अनवसितमनन्तदोषपारं**
**नृषु विहरामि विनीतरोषतृष्णः** ॥ ३६ ॥

**इदमिदमिति** इत्यत्र तत्र तत्र स्वपरमतैर्निमित्तैः इदं मदीयमेव मतम्, इदं मदीयमेव मतम् इति गहनं तत्तन्मतं सङ्गृह्य **प्रतर्कयद्भिः** प्रतर्कं कुर्वद्भिः अबुधैः मनुष्यैः **अभिपन्नं** तत् वर्त्म, कलहेन क्लेशदायकं कर्म निशाम्य पृथक् विप्रयातः अहम् **अनवसितम्** अन्यैः अनिश्चितं यथा भवति तथा **अनन्तदोषपारम्** अनन्तदोषाणां पारो यथा भवति तथा नृषु विहरामि इत्येकान्वयः ।

॥ इति पञ्चमोऽध्यायः ॥

## ॥ अथ षष्ठोऽध्यायः ॥

**[2]पाणिमद्भ्यः स्पृहास्माकं यथा तव धनस्य वै ।**
**न पाणिलाभादधिको लाभः कश्चन विद्यते** ॥ १२ ॥

**पाणिमद्भ्यः स्पृहास्माकम्** इत्यत्र चतुष्पादानामस्माकं **पाणिमद्भ्यः** पाणिमन्तो ये पुरुषाः तेभ्यः **स्पृहा** तानुद्दिश्य स्पृहेत्यर्थः । स्पृहिधातुयोगाच्चतुर्थी ।

**मध्ये वै पापयोनीनां [3]सार्गालीयामहं गतः ।**
**पापीयस्यो बहुतरा इतोऽन्याः पापयोनयः** ॥ २२ ॥

---

१. 'विप्रयातं' इति कुं.पाठः । ; २. कुं. १७८ अध्यायः ।
३. BORI पृ. ९९१; **'सृगालीयामहं गतः'** इति कुं.पाठः ।

**सार्गालीयामहं गत** इत्यत्र सृगालसम्बन्धिनी सार्गालीया ताम् ।

**भवेस्त्वं यद्यपि त्वाढ्यो न[१] राज्यं न च दैवतम् ।**
**देवत्वं प्राप्य चेन्द्रत्वं नैव तुष्येस्तथा सति ॥ २५ ॥**

**न राज्यं न च दैवतम्** इत्यत्र दैवतं देवतासम्बन्धिलोकम् ।

[२] **न त्वं स्मरसि वारुण्यः लद्वाङ्गानां च पक्षिणाम् ।**
**ताभ्यां चाभ्यधिको भक्ष्यो न कश्चिद्विद्यते क्वचित् ॥ ३१ ॥**

**न त्वं स्मरसि वारुण्य** इत्यत्र **वारुण्यः** वारुणीः **लद्वाङ्गानां** लद्वाङ्गाः(काः) पक्षिविशेषाः, तेषाम् । होरसिनहकीत्यपभ्रंशभाषा, पक्षिणः न स्मरसीत्यर्थः ।

[३] **बलबन्धपरिक्लेशैः क्लिश्यन्ते च पुनः पुनः ।**
**ते खल्वपि रमन्ते च मोदन्ते च हसन्ति च ॥ ३५ ॥**

**बलबन्धपरिक्लेशैः** इत्यत्र बलाद् बन्धो **बलबन्धः** ।

[४] **दृष्ट्वा कुणान् पक्षहतान् मनुष्याणामयाचिनाम् ।**
**सुसन्तुष्टः स्वया योन्या लब्धलाभोऽसि काश्यप ॥ ३५ ॥**

**दृष्ट्वा कुणान् पक्षहतान्** इत्यत्र **कुणान्** व्रणादिषु उत्पन्नान् क्रिमीन् । **अयाचिनां** पशुवत् प्राण्यन्तरप्रार्थनाहीनानां, मनुष्याणां

---

१. **'न राजा न च दैवतम्'** इति कुं.पाठः ।

२. **'न त्वं स्मरसि वारुण्या लद्वाकानाम्'** इति कुं. पाठः ।

३. **'वधबन्धपरिक्लेशैः'** इति कुं.पाठः ।

४. G1,M5,7; **'दृष्ट्वा कुणीन् पक्षहतान् मनुष्यानामयाविनः । सुसम्पूर्णः-'** इति कुं. पाठः । BORI पृ. ९९३

**पक्षहतान्** पक्षस्थानीयहस्ताभ्यां हतान् । दृष्ट्वा **स्वया योन्या** मनुष्य-योन्या सन्तुष्टस्त्वं लब्धलाभोऽसि ।

**नास्तिकः सर्वशङ्की च मूर्खः पण्डितमानिकः ।**
**यस्येयं[1] फलनिर्वृत्तिः सृगालत्वं मम द्विज ॥ ४९ ॥**

**यस्येयं फलनिर्वृत्तिः** इत्यत्र हे द्विज, यस्य मम **इयं** पूर्वोक्तप्रकारेण दुर्मतिरासीत् तस्य मम **फलनिर्वृत्तिः** ईदृशदुर्बुद्धेः फलनिष्पत्तिरूपम् इदं सृगालत्वमभूदित्यर्थः ॥

ननु तर्हि 'अहमासं पण्डितकः' इत्यारभ्य 'मूर्खः पण्डितमानिकः' इत्यन्तं सार्धश्लोकद्वयोक्तातिनिकृष्टदोषाणाम् इन्द्रेण स्वात्मनि कथं कथनमिति चेत् सत्यम् । '[2]तमत्रिर्भगवानैक्षत् त्वरमाणं विहायसा । आमुक्तमिव पाषण्डं योऽधर्मे धर्मविभ्रमः ॥ [3]जटिलं भस्मना च्छन्नं तस्मै बाणं न मुञ्चति । [4]तदवद्यं हरे रूपं जगृहुर्ज्ञानदुर्बलाः ॥ यानि रूपाणि जग्राह इन्द्रो हयजिहीर्षया । तानि पापस्य षण्डानि लिङ्गं षण्डमिहोच्यते ॥ [5]तद्गृहीतविसृष्टेषु पाषण्डेषु मतिर्नृणाम् । [6]प्रायेण सज्जते भ्रान्त्या पेशलेषु सुवाग्मिषु ॥ क्रतुर्[7]विरमतामेषः देवेषु दुरवग्रहः । धर्मव्यतिकरो यत्र पाषण्डैरिह निर्मितैः ॥' इति भागवते पृथोर्यज्ञात् अश्वहरणे सति बहुविधपाषण्डरूपावद्यवृत्तीनां स्वेनैवाचरणात् तत्फलतया ईदृश-दुर्योनिप्राप्तिरिति पश्चात्तापवशात् इन्द्रस्यैवोक्तिसम्भवात् । तर्हि ईदृश-

---

१. $M_7$,$B_{6,9}$, $D_{a4}$; **'तस्येयम्'** इति कुं. पाठः । BORI पृ. ९९४
२. भाग. ४-१९-१२ ; ३. भाग. ४-१९-१४
४. भाग. ४-१४-१९/२३ ; ५. भाग. ४-१९-२४
६. भाग. ४-१९-२५; ७. भाग. ४-१९-३५

मिथ्याज्ञानस्य तम एव फलं वाच्यं, कथमिदमल्पफलमिति चेत् सत्यम् । 'आमुक्तमिव पाषण्डम्'[१] इति इवशब्देन स्वमनःपूर्वकम-करणस्य तत्रैवोक्तत्वात् असुरजनमोहनार्थं लीलया सकृत्करणेऽपि देवेन्द्रस्य मम ईदृशं फलमासीत् । मनःपूर्वकं सर्वदा ईदृशदुर्धर्माचरणे अन्धे तमसि पातः किं वाच्यः इति तात्पर्यसम्भवात् ।

**ततः सम्पूजयामास काश्यपो हरिवाहनम् ।**
**अनुज्ञातस्तु तेनाथ प्रविवेश स्वमालयम्** ॥ ५४ ॥

**काश्यपो हरिवाहनम्** इत्यत्र हरिवाहनः, हरिर्हयः,तद्वाहनः। इन्द्रः, तम् ।

**॥ शृगालकाश्यपसंवादो नाम षष्ठोऽध्यायः ॥**

## ॥ अथ सप्तमोऽध्यायः ॥

**[२]व्यालकुञ्जरदुर्गेषु सर्पचोरभयेषु च ।**
**[३]हस्तवामेन गच्छन्ति नास्तिकाः किमतः परम्** ॥ ६ ॥

**हस्तवामेन गच्छन्ति** इत्यत्र वामो हस्तः हस्तवामः तेन गच्छन्ति । तत्कृतोपद्रवं स्ववामहस्तेन प्राप्य प्राप्यैव गच्छन्ति । न तु दक्षिणहस्तेन तान् प्रति ताडयितुं शक्नुवन्ति इति भावः ।

**प्रियदेवातिथेयाश्च वदान्याः प्रियसाधवः ।**
**क्षेम्यमात्मवतां मार्गमास्थिता हस्तदक्षिणम्** ॥ ७ ॥

---

१. भाग. ४-१९-१२ ; २. कुं. १७९ अध्यायः ।
३. B8; **'हस्तावापेन'** इति कुं.पाठः । BORI पृ. ९९६

**आस्थिता हस्तदक्षिणम्** इत्यत्र दक्षिणहस्तमास्थिताः इति सम्बन्धः ।

**पुलाका इव धान्येषु पुत्तिका इव पक्षिषु ।**
**तद्विधास्ते मनुष्येषु येषां धर्मो न कारणम् ॥ ८ ॥**

**पुलाका इव धान्येषु** इत्यत्र **पुलाकाः** क्षुद्रधान्यानि । **पुत्तिकाः** (पूतीकाः) सदा शवभक्षणात् दुर्गन्धयुक्ताः पक्षिजातयः ॥

**सुशीघ्रमपि धावन्तं विधानमनुधावति ।**
**शेते सह शयानेन येन येन यथाकृतम् ॥ ९ ॥**

**विधानमनुधावति** इत्यत्र **विधानं** विधिः । कर्म कारणमित्यर्थः ।

**उपतिष्ठति तिष्ठन्तं गच्छन्तमनुगच्छति ।**
**करोति कुर्वतः कर्म छायेवाऽनुविधीयते ॥ १० ॥**

**करोति कुर्वतः कर्म** इत्यत्र कर्म कुर्वतः कुर्वाणान् पुरुषान् करोति ।

**अचोद्यमानानि यथा पुष्पाणि च फलानि च ।**
**स्वं कालं नातिवर्तन्ते तथा कर्म पुराकृतम् ॥ १३ ॥**

**अचोद्यमानानि यथा** इत्यत्र **अचोद्यमानानि** दण्डपाषाणादिना पतने प्रेरणारहितानि ।

**संस्विन्नमग्रतो वस्त्रं[१] पश्चाच्छुध्यति वारिणा ।**
**दुष्कर्मापि तथा पश्चात् पूयते पुण्यकर्मणा ॥ १८ ॥**

**संस्विन्नमग्रतो वस्त्रम्** इत्यत्र **संस्विन्नम्** अङ्गस्वेदेन मलिनम् ॥७॥

---

१. $M_{1,5,7}$; '**सङ्क्लिन्नमग्रतो**' इति कुं.पाठः । BORI पृ. ९९९

## ॥ अथ अष्टमोऽध्यायः ॥

[१] **अहङ्कार इति ख्यातः सर्वभूतात्मभूतकृत् ।**
**ब्रह्मा वै स महातेजा य एते पञ्चधातवः ॥ १८ ॥**

**अहङ्कार इति ख्यात** इत्यत्र अहंनामकं तत्त्वं करोतीत्यहङ्कारः ।

**शैलास्तस्यास्थिसञ्ज्ञास्तु मेदो मांसं च मेदिनी ।**
**समुद्रास्तस्य रुधिरमाकाशमुदरं तथा ॥ १९ ॥**

**शैलास्तस्यास्थिसञ्ज्ञा** इत्यत्र **तस्य** विश्वरूपाख्यपद्मनाभस्य ।

**पवनश्चैव निःश्वासस्तेजोऽग्निर्निम्नगाः सिराः ।**
**दिवाकरश्च सोमश्च नयने तस्य विश्रुते ॥ २० ॥**

**निम्नगाः सिरा** इत्यत्र **सिराः** नाड्यः । [२]'नाडी तु धमनिस्सिरा' इत्यमरः ।

**पठन्ति चैव मुनयः शास्त्रेषु विविधेषु च ।**
**त्रैलोक्यसागरे चैव प्रमाणं विहितं यथा ॥ ३३ ॥**
[३] **अदृश्याय त्वगम्याय कः प्रमाणमुदाहरेत् ॥ ३४ ॥**

**अदृश्याय त्वगम्याय** इत्यत्र **अदृश्यः** अप्रमेयश्च हरिरेव नत्वाकाशः । उपरिकथ्यमानदेहस्य असङ्गतिप्रसङ्गात् ।

**मानसस्येह या मूर्तिर्ब्रह्मत्वं समुपागता ।**
**तस्यासनविधानार्थं पृथिवी पद्ममुच्यते ॥ ३८ ॥**

---

१. कुं. १८० अध्यायः ।; २. अ.को. द्वि. मनुष्यवर्गः श्लो. ६५
३. BORI पृ. १००४; **'अदृश्यत्वादगम्यत्वात्'** इति कुं.पाठः ।

**मानसस्येह या मूर्तिर्ब्रह्मत्वम्** इत्यत्र **मानसस्य** भगवन्मनसो जातस्य आदिपुरुषनामकस्य भगवतः **ब्रह्मत्वं** ब्रह्मान्तर्यामित्वम् ।

**॥ इति अष्टमोऽध्यायः ॥**

## ॥ अथ नवमोऽध्यायः ॥

१
**भृगुरुवाच –**

**प्रजाविसर्गं पूर्वं स मानसो मनसाऽसृजत् ।**
**संरक्षणार्थं भूतानां सृष्टं प्रथमतो जलम्** ॥ २ ॥

**मानसो मनसाऽसृजत्** इत्यत्र **मानसः** नारायणसङ्कल्पात् अवतीर्णः, अण्डाद्बहिरावरणोदकशायी द्वितीयः पुरुषनामको विष्णुः ।

**अग्निः पवनसंयुक्तः खात्समुत्क्षिपते जलम् ।**
**सोऽग्निमारुतसंयोगाद्घनत्वमुपपद्यते** ॥ १९ ॥

**अग्निमारुतसंयोगाद्घनत्वमुपपद्यत** इत्यत्र पृथिव्युपादानत्रसरेणुभिः पङ्किलं जलं **घनत्वं** निबिडत्वम् **उपपद्यते** प्राप्नोति ।

**॥ इति भृगुभरद्वाजसंवादे नवमोऽध्यायः ॥**

## ॥ अथ दशमोऽध्यायः ॥

२
**यदाऽसृजत् सहस्राणि भूतानां स महामतिः ।**
**पञ्चानामेव भूतत्वं कथं समुपपद्यते** ॥ २ ॥

**अमितानां महाशब्दो भूतानां याति सम्भवम् ।**
**ततस्तेषां महाभूतशब्दोऽयमुपपद्यते** ॥ ३ ॥

---

१. कुं. १८१ अध्यायः ।; २. कुं. १८२ अध्यायः ।

**यदाऽसृजत्सहस्राणि भूतानां स महामतिः** इत्यत्र **भूतानां** प्राणिनाम् । अमितानां **भूतानां** प्राणिनां **सम्भवे** पञ्चभूतेभ्यः सम्भवे सति महाशब्दः **याति** आयाति । **ततः** अनन्तानन्तप्राणिदेहोपादानत्वात् ।

**चेष्टा वायुः खमाकाशमूष्माऽग्निः सलिलं द्रवः ।**
**पृथिवी चात्र सङ्घातः शरीरं पाञ्चभौतिकम्** ॥ ४ ॥

**चेष्टा वायुः खमाकाशम्** इत्यत्र **चेष्टा** पञ्चविधत्वस्वरूपेण (श्वासरूपेण) चेष्टा यस्मात् स वायुः । **खं** देहान्तश्छिद्रम् । **सङ्घातः** करचरणशिरोरूपाङ्गानाम् अङ्गिभूतमध्यस्य च समुदायः ।

**इत्येतैः पञ्चभिर्भूतैर्युक्तं स्थावरजङ्गमम् ।**
**श्रोत्रं घ्राणं रसः स्पर्शो दृष्टिश्चेन्द्रियसंज्ञिताः** ॥ ५ ॥

**अद्रवत्वादनग्नित्वादभूमित्वादवायुतः ।**
**आकाशस्याप्रमेयत्वाद् वृक्षाणां नास्ति भौतिकम्** ॥ ९ ॥

**रसः स्पर्श** इत्यत्र **रसः** रसना । **अवायुतः** अवायुत्वात् । **आकाशस्य** वृक्षादेरच्छिद्रस्य **अप्रमेयत्वात्** अदृश्यत्वात् । पृथिव्याः कठिनवृक्षदेहस्यावच्छेदे सति निर्यासरूपजलस्य, मथने सत्यग्नेः ।

**घनानामपि वृक्षाणामाकाशोऽस्ति न संशयः ।**
**तेषां पुष्पफलव्यक्तिर्नित्यं समुपपद्यते** ॥ १० ॥

वायोः स्पष्टत्वात्, पुष्पादीनाम् उद्गमनात् आकाशमेव दर्शयति **घनानामपि** इति । पुष्पफलैर्लिङ्गैः **व्यक्तिः** अन्तःस्थिताकाशज्ञानम् ।

**ऊष्मतो म्लायते वर्णं त्वक्फलं पुष्पमेव च ।**
**म्लायते शीर्यते चापि स्पर्शस्तेनात्र विद्यते ॥ ११ ॥**

**ऊष्मतो म्लायत** इत्यत्र **ऊष्मतः** सूर्यातपाद्यौष्ण्यात् । **स्पर्शः** त्वगिन्द्रियम् ।

**वाय्वग्न्यशनिनिष्पेषैः फलं पुष्पं विशीर्यते ।**
**श्रोत्रेण गृह्यते शब्दस्तस्माच्छृण्वन्ति पादपाः ॥ १२ ॥**

**शब्दः** वाय्वादीनां शब्दः ।

**पुण्यापुण्यैस्तथा गन्धैर्धूपैश्च विविधैरपि ।**
**अरोगाः पुष्पिताः सन्ति तस्माज्जिघ्रन्ति पादपाः ॥ १४ ॥**

**पुण्यापुण्यैस्तथा गन्धैः** इत्यत्र **पुण्यैर्गन्धैः** कस्तूर्यादिपरिमलैः **अपुण्यैः** मदिरादीनां दुर्गन्धैश्च ।

**पादैः सलिलपानाच्च व्याधीनां चापि दर्शनात् ।**
**व्याधिप्रतिक्रियत्वाच्च विद्यते रसनं द्रुमे ॥ १५ ॥**

**व्याधीनां चापि दर्शनात्** इत्यत्र अतिपानात् व्याधीनां, **व्याधिप्रतिक्रियत्वात्** व्याधीनां **प्रतिक्रिया** मूले लवणरसादिदानेन परिहारो येषां तेषां भावः व्याधिप्रतिक्रियत्वम् । तस्मात् ।

**वक्त्रेणोत्पलनालेन यथोर्ध्वं जलमाददेत् ।**
**तथा पवनसंयुक्तः पादैः पिबति पादपः ॥ १६ ॥**

**वक्त्रेणोत्पलनालेन** इत्यत्र **उत्पलनालेन** उत्पलनालाख्यकरणेन **जलं** श्वासेन ऊर्ध्वं नीतं जलं यथा वक्त्रेण पुरुषः आददेत् । **पवन-**

**संयुक्तः** पवनेति उपलक्षणम्, अन्तर्विवरसंयुक्तश्च । अनेन वाय्वाकाशयोरपि वृक्षान्तरवस्थानं सूचितम् ।

**[१]तेजोऽग्नितस्तथा क्रोधश्चक्षुरूष्मा तथैव च ।**
**अग्निर्जरयते यच्च पञ्चाग्नेयाः शरीरिणः ॥ २१ ॥**

**तेजोऽग्नितस्तथा** इत्यत्र तेजोऽप्यग्नितः । **तेजः** कान्तिः । क्रोधः अप्यग्नितः । चक्षुरिन्द्रियस्य तैजसत्वात् चक्षुः अपि अग्नितः । **ऊष्मा** देहौष्ण्यम् अग्नितः भवतः । तथा **अग्निः जरयते** भुक्तमन्नं जीर्णं करोति । **आग्नेयाः** अग्निसम्बन्धिव्यापाराः ।

**श्रोत्रं घ्राणं तथाऽऽस्यं च हृदयं कोष्ठमेव च ।**
**आकाशात् प्राणिनामेते शरीरे पञ्च धातवः ॥ २२ ॥**

**हृदयं कोष्ठमेव च** इत्यत्र **कोष्ठम्** उदरम् ।

**[२]प्राणान् प्राणयते प्राणो व्यानाद्व्यायच्छते तथा ।**
**गच्छत्यपाने वाक्चैव समानेन समः स्थितः ॥ २४ ॥**

**प्राणान् प्राणयत** इत्यत्र **प्राणान्** इन्द्रियगणान्। **व्यायच्छते** शरीरस्थद्वासप्ततिसहस्रनाडीः विकासयति ।

**[३]उदानादुच्छ्वसति च वृत्तिभेदात् प्रभाषते ।**
**इत्येते वायवः पञ्च चेष्टयन्तीह देहिनम् ॥ २५ ॥**

---

१. M1,5,7,T2,K2,7; '**तेजो ह्यग्निस्तथा**' इति कुं.पाठः । BORI पृ. १०१०
२. '**प्राणात् प्राणयते**' इति कुं.पाठः ।
३. T,G1,3,5,M5,6; '**उदानादुच्छ्वसिति च प्रतिभेदाच्च भापते**' इति कुं.पाठः । BORI पृ. १०१०

**उच्छ्वसति** ऊर्ध्वशिरोमध्ये श्वासान् प्रापयति । **वृत्तिभेदात्** उक्त-विधया पञ्चविधवृत्तिभेदात् । **प्रभाषते** वायुं श्रुतिः प्रभाषते ।

**भूमेर्गन्धगुणान्वेत्ति रसं चाद्भ्यः शरीरवान् ।**
**ज्योतिः पश्यति रूपाणि स्पर्शं वेत्ति च वायुतः ।**
**शब्दं शृणोति च तदैवाकाशात्तु शरीरवान् ॥ २६ ॥**

**भूमेर्गन्धगुणान्वेत्ति** इत्यत्र **भूमेः** भूम्यात्मकघ्राणात् । **अद्भ्यः** अबात्मकरसनेन्द्रियात् । **ज्योतिषः** तेजोरूपचक्षुषः । **आकाशात्** आकाशात्मकश्रोत्रात् ।

**इष्टश्चानिष्टगन्धश्च मधुरः कटुरेव च ।**
**निर्हारी संहतः स्निग्धो रूक्षो विशद एव च ॥ २८ ॥**

**इष्टश्चानिष्टगन्धश्च** इत्यत्र **इष्टः** तण्डुलादिधान्यगन्धः । **अनिष्टः** अमेध्यादिगन्धः । **मधुरः** गुडादिगन्धः । **निर्हारी** लवणादिगन्धः । **कटुः** मरीचिगन्धः । **संहतः** शर्करादिषु मिश्रितगन्धः । **स्निग्धः** घृतचन्दना-दिगन्धः । **रूक्षः** सर्षपादिगन्धः । **विशदः** कुसुमगन्धः ।

**ज्योतिः पश्यति रूपाणि रूपं च बहुधा स्मृतम् ।**
**ह्रस्वो दीर्घस्तथा स्थूलश्चतुरस्रोऽणुवृत्तवान् ॥ ३२ ॥**

**ह्रस्वो दीर्घ** इत्यत्र ह्रस्वादिवस्तुनिष्ठरूपमपि ह्रस्वादित्वेन उच्यते ।

॥ इति दशमोऽध्यायः ॥

* * *

## ।। अथ एकादशोऽध्यायः ।।

**[१] स जन्तुः सर्वभूतात्मा पुरुषः स सनातनः ।**
**मनो बुद्धिरहङ्कारो भूतानि विषयाश्च सः ।। ४ ।।**

जन्त्वादीनां वाय्वधीनत्वात् स जन्तुरित्याद्युक्तम् । सनातनपुरुषस्य तु वाय्वधीनत्वं तद्भक्तिवशात् ज्ञेयम् ।

**बस्तिमूलं गुदं चैव पावकं समुपाश्रितः ।**
**वहन्मूत्रं पुरीषं चाप्यपानः परिवर्तते ।। ६ ।।**

**बस्तिमूलं गुदम्** इत्यत्र **बस्तेः** नाभेरधोभागस्य मूलं गुदः । [२]'बस्ति-र्नाभेरधो द्वयोः' इत्यमरः ।

**आस्यं हि पायुसंयुक्तमन्ते स्याद्गुदसंज्ञितम् ।**
**[३] स्रोतसोऽस्मात् प्रजायन्ते सर्वस्रोतांसि देहिनाम् ।। ११ ।।**

**स्रोतसोऽस्मात् प्रजायन्त** इत्यत्र **अस्मात् स्रोतसः** क्षणे क्षणे जायमानात् । आस्यस्थितालपलालाजलाख्यजलप्रवाहात् **सर्वस्रोतांसि** देहिनां नाडीनां सन्धिषु स्रवन्ति इति स्रोतांसि । (नाडी नाडीषु स्रवन्तीति स्रोतांसि)

**पक्वाशयस्त्वधो नाभ्या ऊर्ध्वमामाशयः स्मृतः ।**
**नाभिमध्ये शरीरस्य सर्वे प्राणाः समाश्रिताः ।। १४ ।।**

---

१. कुं. १८३ अध्यायः ।

२. अ.को. द्वि. मनुष्यवर्गः श्लो. ७३

३. $M_{1,5,7}$,$D_9$; **'स्रोतस्तस्मात्'** इति कुं.पाठः । BORI पृ. १०१५

**पक्काशयस्त्वधो नाभ्या** इत्यत्र नाभ्याः अधः **पक्काशयः** जाठराग्निना पिष्टीकृतस्य मलरूपेण गुदं प्रति गच्छतः अन्नचूर्णस्य आश्रयः। नाभेरूर्ध्वम् **आशयः** हार्दच्छिद्रादागम्यमानान्नस्य आश्रयः।

**प्रसृता हृदयात् सर्वास्तिर्यगूर्ध्वमधस्तथा।**
**वहन्त्यन्नरसान्नाड्यो दशप्राणैः[1] प्रचोदिताः ॥ १५ ॥**

**दशप्राणैः प्रचोदिता** इत्यत्र **दशप्राणैः** प्राणापानव्यानोदानसमानकूर्मानन्त(नाग)कृकलदेवदत्तधनञ्जयाख्यैः दशप्राणैः।

**एष मार्गोऽथ योगानां येन गच्छन्ति तत्परम् ॥ १६ ॥**

**एषः** मुख्यः प्राणः।

॥ इति एकादशोऽध्यायः ॥

## ॥ अथ द्वादशोऽध्यायः ॥

**[2]श्लेष्मं वा यदि वा जीवः सह तेन प्रणश्यति।**
**[3]महार्णवविमुक्तत्वात् अन्यत्सलिलभाजनम् ॥ ५ ॥**

**महार्णवविमुक्तत्वात्** इत्यत्र महार्णवात् **विमुक्तत्वात्** तत्र तत्र सृष्टत्वात् **अन्यत्** नदीतटाकादिकं सलिलभाजनं भवति। तद्वन्महावायोः एकैकांशः नानादेहेषु प्रविश्य जीवाख्यां लभत इति भावः।

---

१. **'दशप्राणप्रचोदिताः'** इति कुं.पाठः।
२. कुं. १८४ अध्यायः।
३. BORI पृ. १०१७; **'महार्णववियुक्तत्वात्'** इति कुं.पाठः।

**यत् क्षिपेत् सलिलं कूपे प्रदीपं वा हुताशने ।**
**तन्नश्यत्युभयं तद्वज्जीवो वातानलात्मकः ॥ ६ ॥**

**जीवो वातानलात्मक** इत्यत्र जीवः नश्येत् ।

**पञ्च साधारणे ह्यस्मिन् शरीरे जीवितं कुतः ।**
**तेषामन्यतरत्यागाच्चतुर्णां नास्ति सङ्ग्रहः ॥ ७ ॥**

**पञ्चसाधारणे ह्यस्मिन् शरीर** इत्यत्र पञ्चानां भूतानां साधारणे पञ्चभूतमये इत्यर्थः । **सङ्ग्रहः** शरीररूपेण सङ्ग्रहः समुदायो नास्ति ।

**नश्यन्त्यापो ह्यनाधाराद्वायुरुच्छ्वासनिग्रहात् ।**
**नश्यते कोष्ठभेदात् खमग्निर्नश्यत्यभोजनात् ॥ ८ ॥**

**नश्यते कोष्ठभेदात्** इत्यत्र **कोष्ठम्** उदरं तस्य **भेदात्** भेदनात् ।

॥ इति द्वादशोऽध्यायः ॥

## ॥ अथ त्रयोदशोऽध्यायः ॥

**न शरीराश्रितो जीवस्तस्मिन्नष्टे प्रणश्यति ।**[1]
**यथा समित्सु दग्धासु न प्रणश्यति पावकः ॥ २ ॥**

**यथा समित्सु दग्धासु** इत्यत्र समिधामेव वायुना उन्नीतोऽग्निः सूक्ष्मरूपेण आकाशं प्रति गच्छति न तु नश्यति तद्वदित्यर्थः ॥

**समिधामुपयोगान्ते स्वलिङ्गैरुपलभ्यते ।**
**आकाशानुगतत्वाद्धि दुर्ग्रहः स निराश्रयः ॥ ५ ॥**

---

१. कुं. १८५ अध्यायः ।

**स्वलिङ्गैरुपलभ्यत** इत्यत्र **स्वलिङ्गैः** मथनरूपैः (मिथुनरूपैः) स्वज्ञापकैः। लीनम् अर्थं गमयति इति हि **लिङ्गम्**।

**प्राणान् धारयते योऽग्निः स जीव उपधीयते[1]।**
**वायुसन्धारणो ह्यग्निर्नश्यत्युच्छ्वासनिग्रहात् ॥ ७ ॥**

**स जीव उपधीयत** इत्यत्र **सः** अग्निः जीवे सति **उपधीयते** निश्चीयते।

**जङ्गमानां हि सर्वेषां स्थावराणां तथैव च।**
**आकाशं पवनोऽन्वेति ज्योतिस्तमनुगच्छति ॥ ९ ॥**

**स्थावराणां तथैव च** इत्यत्र सम्बन्धे षष्ठी स्थावरजङ्गमसम्बन्धी पवन इत्यर्थः।

**पञ्चात्मके पञ्चरतौ पञ्चविज्ञानसंयुते।**
**शरीरे प्राणिनां जीवं वेत्तुमिच्छामि यादृशम् ॥ १२ ॥**

**पञ्चात्मके पञ्चरतौ** इत्यत्र **पञ्चविज्ञानसंयुते** पञ्चेन्द्रियैः रूपादिपञ्च-विज्ञानसंयुते। अत एव **पञ्चरतौ** पञ्चविषयानुभवोत्पन्नाः **पञ्चरतयः** सुखानि यस्मिन्।

**यद्यजीवं शरीरं तु पञ्चभूतसमन्वितम्।**
**शरीरे मानसे दुःखे कस्तां वेदयते रुजम् ॥ १४ ॥**

**यद्यजीवं शरीरम्** इत्यत्र शरीरम् उक्तविधया यदि अजीवम्।

**शृणोति कथितं जीवः कर्णाभ्यां न शृणोति तत्।**
**महर्षे मनसि व्यग्रे तस्माज्जीवो निरर्थकः ॥ १५ ॥**

---

१. 'उपधार्यताम्' इति कुं.पाठः।

**शृणोति कथितम्** इत्यत्र यो जीवः शृणोतीति सर्वैः कथ्यते सः मनसि व्यग्रे सति न शृणोति । **तस्मात्** मन एव कारणम् । जीवः किमर्थम् इत्यर्थः ।

**न पश्यति न चाघ्राति न शृणोति न भाषते ।**
**न च स्पर्शरसौ वेत्ति निद्रावशगतः पुनः ॥ १७ ॥**

**हृष्यति क्रुध्यते कोऽत्र शोचत्युद्विजते च यः ॥**

**निद्रावशगतः पुन** इत्यत्र निद्रावशगतः यदा भवति जीवः मनसि उपरते सति न पश्यतीत्यादि, **पुनः** जाग्रदवस्थायाम् **अत्र** शरीरे, कः हृष्यतीत्यादि योजना । जाग्रदवस्थायां मनसि उद्बुद्धे सति जायमानो हर्षादिव्यापारः, न प्रागकिञ्चित्करस्य जीवस्य । किन्तु अन्वयव्यतिरेकाभ्यां मनस एवेत्याक्षेप्तुः अभिप्रायः । तदेव स्पष्टयति **मन एवेति** ॥

(*)[1]**एभ्यस्त्वन्यन्महामुने** इत्यत्र **एभ्यः** मनश्चक्षुरादिभ्यः । पश्चात् **तत्** तदुक्तं तथेति वक्ष्यामीति योजना ।

(*) **संसर्गजा गुणा** इत्यत्र **गुणाः** अधरोष्ठरागपरिमलादिगुणाः । **संसर्गजाः** क्रमुकतांबूलचूर्णानां संसर्गजाः दृश्यन्ते तथा अनुमेयाः । 'भूतसंसर्गः ज्ञानाख्योऽपूर्वगुणवान् । संसर्गविशेषत्वात् क्रमुकादिसंसर्गवत्' इत्यनुमानेन एकैकस्मिन् जडे अदृश्यमानं ज्ञानं पञ्चभूतसमुदायात्मके देहेऽपि भवतीत्यर्थः ।

(*) **न तदन्यत्र** इत्यत्र **तत्** ज्ञानाख्यगुणम् **अन्यत्र** जीवादन्यत्र न जानामि । यतः **भौतिकं** भूतेभ्यो जातं भूतेषु काप्यविद्यमानं ज्ञानं

१. (*)चिह्नितस्थलेषु तत्तत्प्रतीकघटितश्लोकाः मुद्रितकोशेषु नोपलभ्यते ।

तत्संसर्गेऽपि कथं स्यादिति सूचयितुं भौतिकम् इत्युक्तम् । रागस्तु तज्जातीये पद्मरागादावस्ति । अतः स्यादपि संसर्गे स इति भावः । तस्मात् **न,** ज्ञानवन्न, 'मनो न ज्ञानवत् भौतिकत्वात् घटवत्' इति त्वदीयानुमानस्य सत्प्रतिपक्षत्वात् ।

(*) **मनोयुक्तेन पश्यति** इत्यत्र मनोयुक्तेन चक्षुषा पश्यतीत्यर्थः । **अयं** चक्षुरादीन्द्रियसमूहः **गुणभूतः** करणरूपत्वेन परप्रयोज्यत्वात् अप्रधानम् ।

(*)**शृणोति कथितं जीव** इत्यत्र जीवः कर्णाभ्यां कदाचित् शृणोति कदाचित् न शृणोति इति त्वयैव पूर्वमुक्तम् । (श्लोकः १५) यत एवं कर्णस्यैव न श्रवणसामर्थ्यम् अतः भौतिकत्वेन **दोषवान्** ज्ञानायोग्य-त्वाख्यदोषवानिति ते प्रत्यक्षं तद्भौतिकत्वं मनस्यप्यस्ति । अतस्तदपि दोषवत् ।

(*) **भौतिकान्यपि जानन्ति** इत्यत्र भौतिकानि कानिचित् जानन्ति कानिचिन्न जानन्तीति कथम् ? तृतीयायाम् अवस्थायां मनोऽपि न । चक्षुरादिकरणमपि न । किन्तु अन्यदेवेति । तत्र जातः सः जीव एव । जीवस्य अन्यत्र आसक्तौ हि मनोऽपि तत्र व्यग्रं भवति । न तु स्वशक्त्या । विरक्ते पुंसि मनसः स्त्रीषु व्यग्रत्वादर्शनात् ।

**सर्वं पश्यति यद्दृश्यं मनोयुक्तेन चक्षुषा ।**
**मनसि व्याकुले तस्मिन् पश्यन्नपि न पश्यति** ॥ १६ ॥

**मनसि व्याकुल** इत्यत्र **निद्रावशगतः** निद्रायां वशं स्वरूपा-नन्दानुभववशं गतः जीवः **मनसि** स्वरूपभूते मनसि **तस्मिन्** स्वरूप-

सुख एव **व्याकुले** व्यग्रे सति **पश्यन्** अन्तः पश्यन्नपि **न पश्यति** बहिर्न पश्यति । हे महामुने, भरद्वाज **पुनः** जाग्रदवस्थायां चिद्रूपी जीव एव **जानाति** सामान्यतो जानाति **विजानाति** विशेषतो जानाति । इदं मे कृतं कर्मेति **वक्ष्यति** परान्प्रति वक्ष्यति च । **अविदे** अज्ञानिने विदितमपि किञ्चिदर्थं न निवेदयेच्च । तत् मे **वद** भवति न वेति वद ।

[१]**तदेवानुप्रवक्ष्यति** इत्यत्र यत् मनः **पूर्वं** निद्रातः पूर्वं **लिङ्गं** ज्ञापकं **तदेव** मन एव **अनु** निद्रासमनन्तरं प्रवक्ष्यति । इदं चोपलक्षणम् । जानातीत्यपि ग्राह्यम् । युक्तियुक्तमपि स्ववचनम् अनङ्गीकृत्य यत्किञ्चिज्जल्पतीति कोपात् भृगुस्तमाक्षिपति– **विद्वत्सु नो यथेति** । यथा **भावः** तव दुर्भावः तथा नः विद्वत्सु मध्ये क्वचिदपि नैवोपलभ्यते इति योजना । अतः प्रागुक्तमेव ज्ञानं स्थापयितुमनुवदति **मूर्धानमिति** । **जन्तुः** जन्तुनियामकः ।

**न पञ्चसाधारणमत्र किञ्चि-**
**च्छरीरमेको वहतेऽन्तरात्मा ।**
**स वेत्ति गन्धांश्च रसान् श्रुतीश्च**
**स्पर्शं च रूपं च गुणांश्च येऽन्ये** ॥ १९ ॥

**न पञ्चसाधारणम्** इत्यत्र **पञ्चसाधारणं** शरीरमपि **न** हर्षादिकर्तृ न । **अत्र** शरीरे विद्यमानं **किञ्चित्** मन आदिकमपि हर्षादिकर्तृ न । **अन्तः** शरीरस्य अन्तः एकः **आत्मा** जीवः वहते ।

**स वेत्ति गन्धांश्च रसान् श्रुतीश्च** इत्यत्र श्रूयते इति श्रुतिः ।

---

१. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।

**अम्मयं सर्वमेवेदमापो मूर्तिः शरीरिणाम् ।**
**[1]तत्रात्मा मानसो ब्रह्मन् सर्वभूतेषु लोककृत् ॥ २२ ॥**

**तत्रात्मा मानसो ब्रह्मन्** इत्यत्र **तत्र** देहे **मानसः** भगवत्सङ्कल्पाज्जातः । **आत्मा** पुरुषनामकः परमात्मा तिष्ठति ।

**[2]आत्मानं तं विजानीहि तं वै तस्य विधायकम् ।**
**स तस्मिन् संश्रितो देहे ह्यब्बिन्दुरिव पुष्करे ॥ २४ ॥**

**तं वै तस्य विधायकम्** इत्यत्र **तं** परमात्मानं **तस्य** जीवात्मनः **विधायकं** नियामकं विजानीहि ।

**क्षेत्रज्ञं तं विजानीहि नित्यं लोकहितात्मकम् ।**
**तमो रजश्च सत्त्वं च विद्धि जीवगुणानिमान् ॥ २५ ॥**

**क्षेत्रज्ञं तं विजानीहि** इत्यत्र **क्षेत्रज्ञं** मुख्यतः क्षेत्रज्ञम् ।

**सचेतनं जीवगुणं वदन्ति स चेष्टते चेष्टयते च सर्वम् ।**
**ततः परं क्षेत्रविदो वदन्ति प्रावर्तयद्यो भुवनानि सप्त ॥ २६ ॥**

**सचेतनं जीवगुणं वदन्ति** इत्यत्र **चेतना** ज्ञानं तेन सहितं **सचेतनं** भावप्रधाननिर्देशः, सचेतनत्वम् इति यावत् ।

**ततःपरं क्षेत्रविदो वदन्ति** इत्यत्र **ततः** जीवात् **परं** विलक्षणम् ।

**न जीवनाशोऽस्ति हि देहभेदे**
**मिथ्यैतदाहुर्मृत इत्यबुद्धाः ।**

---

१. **'तत्रात्मा मानसो ब्रह्मा'** इति कुं.पाठः ।
२. T.G.1.3.6: **'आत्मानं तं विजानीहि सर्वलोकविपाचकम्'** इति कुं. पाठः । BORI पृ. १०२२

**जीवस्तु देहान्तरितः प्रयाति**
**दशार्धतैवास्य शरीरभेदः ॥ २७ ॥**

**दशार्धतैवास्य शरीरभेद** इत्यत्र **अस्य** जीवस्य **शरीरभेदः** शरीरनाश एव **दशार्धता** पञ्चत्वं मरणमिति यावत्।

**चित् तस्य हि प्रसादेन हित्वा कर्म शुभाशुभम्।**
**प्रसन्नात्माऽऽत्मनि स्थित्वा सुखमव्ययमश्नुते ॥ ३० ॥**

**चित् तस्य हि प्रसादेन** इत्यत्र 'चिती सञ्ज्ञाने' इति धातोः भावे क्तप्रत्यये कृते चित्तमेव **चित्** अपरोक्षज्ञानमित्यर्थः। तस्य प्रसादेन ।

**मानसोऽग्निः शरीरेषु जीव इत्यभिधीयते।**
**सृष्टिः प्रजापतेरेषा भूताध्यात्मविनिश्चया ॥ ३१ ॥**

**मानसोऽग्निः शरीरेषु** इत्यत्र त्वदुक्तं मन एव जीवो न, किन्तु **मानसः** मनःसम्बन्धी **अग्निः**। अङ्गानि करचरणादीनि नयति चेष्टयतीत्यग्निशब्दवाच्यो यः स एव **जीव** इत्यर्थः।

**॥ भृगुभारद्वाजसंवादे जीवलक्षणं नाम त्रयोदशोऽध्यायः ॥**

## ॥ अथ चतुर्दशोऽध्यायः ॥

**न[१] विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत्।**
**ब्राह्मणाः पूर्वसृष्टा हि कर्मभिर्वर्णतां गताः ॥ १० ॥**

**सर्वं ब्राह्ममिदं जगत्** इत्यत्र **ब्राह्मम्** आदिब्राह्मणेन चतुर्मुखब्रह्मणा सृष्टम्।

---

१. कुं. १८६ अध्यायः।

**कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः ।**
**त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः ॥ ११ ॥**

**त्यक्तस्वधर्माः** त्यक्तब्राह्मणस्वभावाः ।

**इत्येते चतुरो वर्णा येषां ब्राह्मी सरस्वती ।**
**विहिता ब्रह्मणा पूर्वं लोभात्त्वज्ञानतां गताः ॥ १९ ॥**

**येषां ब्राह्मी सरस्वती** इत्यत्र **ब्राह्मी** परब्रह्मसम्बन्धिनी **सरस्वती** वेदपुराणादिरूपा विद्या ।

**आदिदेवसमुद्भूता ब्रह्ममूलाक्षयाव्यया ।**
**सा सृष्टिर्मानसी नाम धर्मतन्त्रपरायणा ॥ २० ॥**

**धर्मतन्त्रपरायणा** इत्यत्र **धर्मतन्त्रं** योगानुष्ठानं, तदेव अयनं विलय-स्थानं यस्याः सा तथा ।

॥ इति वर्णविभागयोगो नाम चतुर्दशोऽध्यायः ॥

## ॥ अथ पञ्चदशोऽध्यायः ॥

**[१]शौचाचारस्थितः सम्यग्विघसाशी [२]हरिप्रियः ।**
**नित्यव्रती सत्यपरः स वै ब्राह्मण उच्यते ॥ ३ ॥**

**विघसाशी हरिप्रिय** इत्यत्र **विघसाशी** विघसं यज्ञशेषम् अतिथ्यादिभिः भुक्तशेषं वा अश्नातीति विघसाशी । [३]'अमृतं विघसो यज्ञशेषभोजनशेषयोः' इत्यमरः ।

---

१. कुं. १८७ अध्यायः ।; २. 'गुरुप्रियः' इति कुं.पाठः ।
३. अ.को. द्वि. ब्रह्मवर्गः श्लो. २८

**क्षत्रजं सेवते कर्म वेदाध्ययनसङ्गतः ।**
**दानादानरतिर्यस्तु स वै क्षत्रिय उच्यते ॥ ५ ॥**

**दानादानरतिः** इत्यत्र विप्रेभ्यः दानं, प्रजाभ्यः आदानं दानादाने ।

**शूद्रे चैतद्भवेल्लक्ष्यं द्विजे तच्च न विद्यते ।**
**न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥ ८ ॥**

**शूद्रे चैतद्भवेल्लक्ष्यम्** इत्यत्र लक्षयितुं = व्यावर्तकतया दर्शयितुं योग्यं **लक्ष्यं** लक्षणमित्यर्थः ।

**न वै शूद्रो भवेत्** इत्यत्र **शूद्रः** शूद्रजातिमात्रजातः शूद्रो न वै ।

**निर्वेदादेव निर्वायान्न च किञ्चिद्विचिन्तयेत् ।**
**सुखं वै ब्राह्मणो ब्रह्म स वै तेनाधिगच्छति ॥ १७ ॥**

**निर्वेदादेव निर्वायात्** इत्यत्र **निर्वायात्** नितरां तीर्थादिषु गच्छेत्, 'वा गतिगन्धनयोः' इति धातुः । **सुखं** सुखस्वरूपं **ब्रह्म** परब्रह्म ।

**॥ इति पञ्चदशोऽध्यायः ॥**

## ॥ अथ षोडशोऽध्यायः ॥

**तत्र यत्सत्यं स धर्मो यो धर्मः स प्रकाशो**[१]
**यः प्रकाशस्तत्सुखमिति ॥ ५ ॥**

**तत्र यत्सत्यमिति** मध्ये गद्यरूपम् (आर्षम्) । यच्छारीरं तत् सुखमिति त्रिवर्गफलं तदनित्यम् । यदन्यत् लोलुप्तिविनाशवत् ।

---

१. कुं. १८८ अध्यायः ।

१
(*) **तदनीहमसाधीय** इत्यत्र **आर्थम्** अर्थाज्ज्ञातम् **अनीहम्** इच्छाया अयोग्यम् ।

(*) **अतो लभ्यम्** इत्यत्र **अतः** अर्थात् शरीराच्च । **मानसं** मनःप्रियम् ।

**।। इति भृगुभरद्वाजसंवादे षोडशोऽध्यायः ।।**

## ।। अथ सप्तदशोऽध्यायः ।।

२
**भृगुरुवाच–**

**पूर्वमेव भगवता ब्रह्मणा लोकहितमनुतिष्ठता धर्मसंरक्षणार्थमाश्रमाश्चत्वारोऽभिनिर्दिष्टाः । तत्र गुरुकुलवासमेव प्रथममाश्रममुदाहरन्ति ।**

**गुरुकुलवासमेव** इत्यत्र गुरुकुले वासो यस्य तम् ।

**धर्मार्थकामावाप्तिर्ह्यत्र त्रिवर्गसाधनमवेक्ष्यागर्हितेन कर्मणा धनान्यादाय स्वाध्यायप्रकर्षोपलब्धेन ब्रह्मर्षिनिर्मितेन वा अद्रिसारगतेन वा हन्यनियमाभ्यासदैवतप्रसादोपलब्धेन वा धनेन गृहस्थो गार्हस्थ्यं प्रवर्तयेत् ।।**

**अद्रिसारगतेन वा** इत्यत्र अद्रेः सारे हेमाद्रिस्थले **गतेन** प्राप्तेन वा ।

**।। इति भृगुभरद्वाजसंवादे सप्तदशोऽध्यायः ।।**

**।। इति अष्टादशोऽध्यायः ।।**

* * *

---

१. (*)एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।

२. कुं. १८९ अध्यायः ।

## ।। अथ एकोनविंशोऽध्यायः ।।

**[१] पञ्चार्द्रो भोजनं कुर्यात् प्राङ्मुखो मौनमास्थितः ।**
**न निन्द्यादन्नभक्ष्यांश्च स्वादु स्वादु च भक्षयेत् ।। ६ ।।**

**पञ्चार्द्रो भोजनं कुर्यात्** इत्यत्र द्वौ पादौ, द्वौ हस्तौ, एकं मुखं चेति **पञ्च, आर्द्राणि** जलपूतानि यस्य सः ।

**[२] नार्द्रपादः समुत्तिष्ठेन्नार्द्रपाणिः स्वपेन्निशि ।**
**देवर्षिर्नारदः प्राह एतदाचारलक्षणम् ।। ७ ।।**

**नार्द्रपादः समुत्तिष्ठेत्** इत्यत्र केनचित्सुप्तस्य पादयोः उदके दत्ते सति नोत्तिष्ठेदित्यर्थः ।

**तीर्थानां हृदयं तीर्थं शुचीनां हृदयं शुचिः ।**
**[३] सर्वमार्यकृतं धर्मं वालसंस्पर्शनानि च ।। १८ ।।**

**तीर्थानां हृदयं तीर्थम्** इत्यत्र तीर्थानां मध्ये **हृदयं** धर्मरतं मन एव मुख्यं तीर्थम् । **सर्वमार्यकृतं धर्मम्** इत्यत्र आर्यकृतं सर्वं **धर्मं** धर्ममाहुः । गवां वालसंस्पर्शनानि च धर्ममाहुः ।

**देवगोष्ठे गवां मध्ये ब्राह्मणानां क्रियापथे ।**
**स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत् ।। २० ।।**

---

१. कुं. १९१ अध्यायः । **'पञ्चार्द्रो भोजनं भुञ्ज्यात्प्राङ्मुखो मौनमास्थितः'** इति कुं. पाठः । BORI पृ. १०४३

२. $V_1, B_{0,6,9}, M_5$; **'नार्द्रपाणिः समुत्तिष्ठेत्'** इति कुं.पाठः । BORI पृ. १०४३.

३. $M_{1,5}, T, G_{2,6}$; **'सर्वमार्यकृतं धर्म्यम्'** इति कुं.पाठः । BORI पृ. १०४५

**स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत्** इत्यत्र दक्षिणेन पाणिना भूमिं स्पृष्ट्वा तत्रत्यपुण्यरेणुं मूर्ध्ना धर्तुं दक्षिणपाणिं शिरः-पर्यन्तमुद्धरेत् ।

**सायं प्रातश्च विप्राणां पूजनं च यथाविधि ।**
**पण्यानां[1] शोभनं पण्यं कृषीणामृद्ध्यतां कृषिः ।**
**बहुकारं च सस्यानां वाह्ये वाहो गवां तथा ॥ २१ ॥**

**सम्पन्नं भोजने नित्यं पानीये तर्पणं तथा ।**
**सुशृतं पायसे ब्रूयाद्यवाग्वां कृसरे तथा ॥ २२ ॥**

**श्मश्रुकर्माणि सम्प्राप्ते क्षुते स्नानेऽथ भोजने ।**
**व्याधितानां च सर्वेषामायुष्यमभिनन्दनम् ॥ २३ ॥**

**पण्यानां शोभनं पण्यम्** इत्यत्र **पण्यानां** वस्तूनां दर्शने सति 'शोभनं पण्यमस्तु' इति ब्रूयात् । कृषीणां दर्शने सति 'ऋध्यतां कृषिः' इति ब्रूयात् । सस्यानां दर्शने सति **बहुकारं** बहुकरोतीति बहुकारं 'बह्वस्तु' इति वचनं ब्रूयात् । वहतां गवां दर्शने सति 'सुवाह्यमस्तु' इति ब्रूयात् । भोजने 'सम्पन्नम्' इति ब्रूयात् । पानीये **तर्पणं** 'तृप्तिरभूत्' इति ब्रूयात् । पायसे च यवाग्वां **कृसरे** मुद्गान्ने च **सुशृतं** 'क्षीरघृतादिना सुशृतमभूत्' इति ब्रूयात् । श्मश्रुकर्मादिषु **अभिनन्दनं** सन्तोषकरम् 'आयुष्यमस्तु' इति ब्रूयात् ।

**हृदयं पापवृत्तानां पापमाख्याति वै कृतम् ।**
**ज्ञानपूर्वं विनश्यन्ति गूहमाना महाजने ॥ २६ ॥**

---

१. BORI पृ. १०४५; **'पण्यानां शोभते पण्यम्'** इति कुं.पाठः ।

**हृदयं पापवृत्तानाम्** इत्यत्र **पापवृत्तानां** पापिष्ठानां हृदयं कृतं पापमाख्याति वै ।

**पापं कृतं न स्मरतीह मूढो**
**विवर्तमानस्य तदेति कर्तुः ।**
**राहुर्यथा चन्द्रमुपैति चापि**
**तथाऽबुधं पापमुपैति कर्म　　　　॥ २९ ॥**

**विवर्तमानस्य तदेति कर्तुः** इत्यत्र **विवर्तमानस्य** विरुद्धतया वर्तमानस्य **तत्** पापम् । **कर्तुः एति** पुनः पुनरायाति ।

**॥ इति एकोनविंशोऽध्यायः ॥**

## ॥ अथ विंशोऽध्यायः ॥

[१] **आत्मानममलं राजन्नावृत्यैवं व्यवस्थितम् ।**
**तस्मिन् प्रकाशते नित्यं तमः सोमो यथैव तत्　　　　॥ ५ ॥**

**तद्विद्वान्नष्टपाप्मैष(व) ब्रह्मभूयाय कल्पते ।**
**अण्डावरणभूतानां पर्यन्तं हि यथा तमः　　　　॥ ६ ॥**

**आत्मानममलं राजन्** इत्यत्र प्रलयकाले अमलम् **आत्मानं** परमात्मानम् । **आवृत्य** मर्यादीकृत्य तमस्तिष्ठति । **तस्मिन्** तमसि तमःपारे इत्यर्थः । तत् परमात्मनः स्वरूपं सोमो यथा तथा प्रकाशते । 'आदित्यवर्णं तमसस्तु पारे'[२] इति हि श्रुतिः । अण्डावरणभूतानां (अबावरणभूतानां) चतुर्विंशतितत्त्वानाम् अवस्थितिः **यथा** यावत् तावत् पर्यन्तं

---

१. कुं. १९२ अध्यायः ।;　२. तै. आ. ३-३८-३९

तत् तमस्तिष्ठति । तस्य पारे भगवान् वटपत्रशायी । अत्र **तमः**पदेन दुर्गारूपम्, नीलवर्णम्, प्रलयसमुद्रजलं गृह्यते ।

**यतः सृष्टानि तत्रैव तानि यान्ति पुनः पुनः ।**
**महाभूतानि भूतेभ्यः सागरस्योर्मयो यथा** ॥ ८ ॥

**महाभूतानि भूतेभ्य** इत्यत्र **भूतेभ्यः** प्रकृत्यात्मकतत्त्वसूक्ष्मरूप-पञ्चभूतेभ्यः ।

**प्रसार्य च यथाङ्गानि कूर्मः संहरते पुनः ।**
**तद्वद्भूतानि भूतात्मा सृष्ट्वा संहरते पुनः** ॥ ९ ॥

**भूतात्मा** भूतान्तर्यामी ।

**महाभूतानि पञ्चैव सर्वभूतेषु भूतकृत् ।**
**अकरोत्तेषु वैषम्यं तत्तु जीवो न पश्यति** ॥ १५ ॥

**महाभूतानि पञ्चैव** इत्यत्र **भूतकृत्** परमात्मा यानि पञ्चमहाभूतानि तेषु **वैषम्यं** वैषम्यघटितं शरीरं **सर्वभूतेषु** सर्वप्राणिष्वकरोत् । पार्थिव-शरीरेषु पृथिव्या बहुलत्वात् । तैजसशरीरेषु तेजसो बहुलत्वात् । आप्ये अपां बहुलत्वात् । इतरेषाम् अल्पाल्पत्वात् वैषम्यमित्युक्तम् ।

**शब्दः श्रोत्रं तथा खानि त्रयमाकाशसम्भवम् ।**
**वायोः स्पर्शस्तथा चेष्टा त्वक्चैव त्रितयं स्मृतम्** ॥ १६ ॥

**शब्दः श्रोत्रम्** इत्यत्र **श्रोत्र**पदेन श्रोत्रशाष्कुल्यन्तर्हितं(तर्गतं) सूक्ष्मं नभो गृह्यते । **ख**पदेन श्रोत्रेन्द्रियं गृह्यते ।

**इन्द्रियाणि मनश्चैव विज्ञानान्यस्य भारत ।**
**सप्तमी बुद्धिरित्याहुः क्षेत्रज्ञः पुनरष्टमः ॥ १९ ॥**

**विज्ञानान्यस्य भारत** इत्यत्र विज्ञायन्ते एभिरिति **विज्ञानानि** ज्ञानकरणानि ।

**चिच्छक्त्याधिष्ठिता बुद्धिश्चेतनेत्यभिविश्रुता ।**
**चेतनानन्तरो जीवस्तद्[1] आवेत्ति च लक्ष्यते ॥ २१ ॥**

**चेतनानन्तरो जीव** इत्यत्र चेतनायाः **अनन्तरः** अन्तरमवकाशः यथा न भवति तथा विद्यमानः चेतनायाः समीपे विद्यमानः इति यावत् । जीवः **तत्** मनोबुद्धिरहङ्कारश्चित्तं चेतनेति पञ्चविधं मनः **आवेत्ति** स्वसाक्षिणा पश्यति स्वयं च तेन लक्ष्यते ।

**नोत्सृजन्विसृजंश्चैव शरीरं दृश्यते तमः ।**
**तस्मिंश्चेतोपलब्धिः[2] स्यात्तमेवाच्छादयत्युत ॥ २२ ॥**

**नोत्सृजन्विसृजंश्चैव** इत्यत्र शरीरं नोत्सृजन्विसृजंश्च जीवः । **चेता** परमात्मा यदा दृश्यते अथ अनन्तरं स्वयमपि उपलभ्यः स्यात् । तमः **तं** परमात्मानमेव आच्छादयति । अतस्तद्दर्शनमेव दुर्लभमिति भावः ।

**ऊर्ध्वं पादतलाभ्यां यदर्वाक्चोर्ध्वं च पश्यति ।**
**एतेन सर्वमेवेदं विद्ध्यभिव्याप्तमन्तरम् ॥ २३ ॥**

**ऊर्ध्वं पादतलाभ्याम्** इत्यत्र **पादतलाभ्यां** 'पातालमेतस्य हि पादमूलम्'[3] इति वचनात् स्वपादतलाभ्याम् ऊर्ध्वं विद्यमानं चतुर्दश-

---

१. **'जीवस्तदा वेत्ति'** इति कुं. पाठः ।
२. **'स्यात्तमो वा सारयन्त्युत'** इति कुं.पाठः ।
३. भाग. २-१-२६

लोकात्मकं जगत् त्रिविक्रमावतारे अर्वाक् पश्यति । अन्यदा ऊर्ध्वं पश्यति । अथवा अत्रस्थित्या स्वपादतलाभ्याम् ऊर्ध्वं पश्यति । महिम्ना तु अर्वाक् पश्यति यः परमात्मा तेन इदमन्तरम् अभिव्याप्तं विद्धि ।

**[1]गुणान्ते नीयते बुद्धिर्बुद्धिरेवेन्द्रियाण्यपि ।**
**मनःषष्ठानि सर्वाणि बुद्ध्यभावे कुतो गुणाः ॥ २९ ॥**

**गुणान्ते नीयते बुद्धिः** इत्यत्र बुद्धिः **गुणान्ते** रूपरसादि गुणसमीपे रागवशात् जीवेन नीयते । मनष्षष्ठानि सर्वाणि इन्द्रियाणि **बुद्धिरेव** बुद्ध्यधीनान्येव । इदं मम भवेदिति बुद्धौ जातायां हि चक्षुरादिकं तत्र गच्छति । **बुद्ध्यभावे** ईदृशबुद्धेरभावे बुद्धिजये सतीति यावत्, कुतो गुणाः । उपलक्षणं चैतत् । उक्तेन्द्रियाण्यपीति द्रष्टव्यम् ।

**अधिष्ठानानि बुद्धेर्हि पृथगर्थानि पञ्चधा ।**
**पञ्चेन्द्रियाणि यान्याहुस्तान्यदृश्योऽधितिष्ठति ॥ ३० ॥**

**पृथगर्थानि** इत्यत्र **पृथगर्थानि** रूपरसादीनि ।

**पुरुषाधिष्ठिता बुद्धिस्त्रिषु भावेषु वर्तते ।**
**कदाचिल्लभते प्रीतिं कदाचिदनुशोचति ॥ ३१ ॥**

**त्रिषु भावेषु वर्तत** इत्यत्र **त्रिषु भावेषु** उत्तमजीवानां सात्त्विकस्वभावेषु, मध्यमजीवानां राजसस्वभावेषु, अधमजीवानां तामसस्वभावेषु वर्तते इत्यर्थः। (धर्मगर्जीवानां तामसस्वभावेषु वर्तत इत्यर्थः न.)।

**कदाचिल्लभत** इत्यत्र **कदाचित्** मुक्तिकाले लभते उत्तमजीवः । कदाचित्तमसि अनुशोचति अधमजीवः ।

---

१. M5,G1,D4,6,7,9; **'गुणैर्नेनीयते'** इति कुं.पाठः । BORI पृ. १०५०

**न सुखेन न दुःखेन कदाचिदपि वर्तते ।**
**एवं नराणां मनसि त्रिषु भावेष्ववस्थिता ॥ ३२ ॥**

**न सुखेन** केवलसुखेन न केवलदुःखेन च । किन्तु उभाभ्यां मिश्रतया कदाचिन्मध्यमजीवो वर्तते ।

**अविभागगता बुद्धिर्भावे मनसि वर्तते ।**
**प्रवर्तमानं तु रजस्तद्भावमनुवर्तते ॥ ३४ ॥**

**अविभागगता** इत्यत्र पञ्चेन्द्रियद्वारा विभागेन पञ्चधा न गता अविभागगता ।

**प्रीतिः सत्त्वं रजः शोकस्तमो मोहस्तु ते त्रयः ।**
**ये ये च भावा लोकेऽस्मिन् सर्वेष्वेतेषु वै त्रिषु ॥ ३६ ॥**

**प्रीतिः सत्त्वम्** इत्यत्र 'सत्त्वं रजस्तमः' इति ते गुणास्त्रयः । 'प्रीतिः शोकः मोहः' इति तत्फलभूताश्च त्रयः ।

**सुखस्पर्शः सत्त्वगुणो दुःखस्पर्शो रजोगुणः ।**
**तमोगुणेन संयुक्तौ भवतोऽव्यावहारिकौ[1] ॥ ३९ ॥**

**तमोगुणेन संयुक्तौ** इत्यत्र तमोगुणेन संयुक्तौ तौ सत्त्वरजोगुणौ **अव्यावहारिकौ** स्वस्वफलभूतव्यवहारासाधकौ भवतः । निद्रया (सन्धी)स्तब्धीकृत्य किमपि द्रष्टुं न मुञ्चत इत्यर्थः ।

**अतुष्टिः परितापश्च शोको लोभस्तथाऽक्षमा ।**
**लिङ्गानि रजसस्तानि दृश्यन्ते हेत्वहेतुभिः ॥ ४४ ॥**

---

१. '**भवतो व्यावहारिकौ**' इति कुं. पाठः । BORI पृ. १०५२.

**दृश्यन्ते हेत्वहेतुभिः** इत्यत्र परलोकहेतोः पुण्यस्य अहेतुभिः ।

इदानीं 'द्वासुपर्णा' इति श्रुत्यर्थं सविस्तरमाह **सत्त्वक्षेत्रज्ञयोरिति ।**

**सत्त्वक्षेत्रज्ञयोरेतदन्तरं पश्य सूक्ष्मयोः ।**
**सृजते तु गुणानेक एको न सृजते गुणान् ॥ ४७ ॥**

**(पृथग्भूतौ प्रकृत्या तौ सम्प्रयुक्तौ च सर्वदा ।**
**यथा मत्स्यो जलं चैव सम्प्रयुक्तौ तथैव तौ ॥ ४९ ॥)**

**सत्त्वं** प्राणिसमूहः न तु सत्त्वगुणः । प्राक्प्रस्तावितगुणत्रयात् एकस्यैव ग्रहणे कारणाभावात् । **सम्प्रयुक्तौ च सर्वदा** इति वक्ष्यमाणनित्यसम्बन्धायोगाच्च, [१]'क्षेत्रज्ञं चापि मां विद्धि' इति गीतावचनात् **क्षेत्रज्ञः** परमात्मा ।

**न गुणा विदुरात्मानं स गुणान्वेत्ति सर्वशः ।**
**परिद्रष्टा गुणानां स संसृष्टान् मन्यते तथा ॥ ५० ॥**

**न गुणा विदुः** इत्यत्र **गुणाः** अप्रधानभूताः जीवाः ।

**इन्द्रियैस्तु प्रदीपार्थं कुरुते बुद्धिसप्तमैः ।**
**निर्विचेष्टैरजानद्भिः परमात्मा प्रदीपवत् ॥ ५१ ॥**

**इन्द्रियैस्तु प्रदीपार्थम्** इत्यत्र गुणभूतो जीवः **बुद्धिसप्तमैः** बुद्धिप्रधानैरिन्द्रियैः **निर्विचेष्टैः** बहिश्चेष्टारहितैः । अत एव रूपादिविषयानजानद्भिः । अन्तर्णीतो णिच् । अज्ञापयद्भिरिन्द्रियैः । **प्रदीपार्थं**

---

१. भ.गी. १३-२

प्रकर्षेण दीप्यत इति प्रदीपः परमात्मा तदर्थं तत्प्रसादसिद्ध्यर्थं **कुरुते** यत्नं कुरुते ।

**सृजते हि गुणान् सत्त्वं क्षेत्रज्ञः परिपश्यति ।**
**सम्प्रयोगस्तयोरेष सत्त्वक्षेत्रज्ञयोर्ध्रुवः ॥ ५२ ॥**

**सृजते हि गुणान्** इत्यत्र **क्षेत्रज्ञः** परमात्मा **सत्त्वं** प्राणिसमूहं **गुणान्** तत्तद्योग्यसत्त्वादिगुणान् सृजते परिपश्यति च । 'सम्प्रयोगस्तयोरेष सत्त्वक्षेत्रज्ञयोर्ध्रुवः' इति वचनेन मोक्षानन्तरमपि सत्त्वक्षेत्रज्ञयोः सम्यक् सम्बन्धकथनात् सत्त्वपदेनात्र सर्वत्र प्राणिसमूह एव गृह्यते । प्राकृत-सत्त्वगुणस्य मोक्षदशायाम् अभावेन नित्यसम्बन्धायोगात् ।

**आश्रयो नास्ति सत्त्वस्य क्षेत्रज्ञस्य च कश्चन ।**
**सत्त्वं[१] मनस्तु सृजति न गुणान् वै कदाचन ॥ ५३ ॥**
**रश्मीन् [२]तेषां समासाद्य यदा सम्यङ् नियच्छति ।**
**तदा प्रकाशतेऽस्यात्मा घटे दीपो ज्वलन्निव ॥ ५४ ॥**

**आश्रयो नास्ति** इत्यत्र मशकमत्स्ययोः औदुम्बरजलाश्रितत्ववत् सत्त्वस्यापि परमात्माश्रितत्वकथनात् **सत्त्वस्य** प्राणिसमूहस्य आश्रयः नास्ति, परमात्मानं विना नास्ति । क्षेत्रज्ञस्य तु **कश्चन न** स्वयमपि न, अन्योऽपि न, 'किंस्विदासीदधिष्ठानम्'[३] इति हि श्रुतिः ।

**सत्त्वं मनस्तु सृजति** इत्यत्र **सत्त्वं** जीवसमूहः **गुणान्** रूपादिगुणान् न सृजति । मनस्तु कदाचन न सृजति वै । अतः यदा परमात्मानं

---

१. **'सत्त्वं मनः संसृजते'** इति कुं. पाठः ।
२. **'तेषां स मनसा यदा'** इति कुं. पाठः । ; ३. ऋ.सं. १०-८१-२

**समासाद्य** सम्यगाश्रित्य स्वासृष्टतया स्वानधीनानां **तेषां** मन आदीन्द्रियाणाम् रूपादिगुणानां च **रश्मीन्** स्नेहपाशान् यदा नियच्छति तदा **अस्य** सत्त्वनामकजीवसमूहस्य **आत्मा** परमात्मा प्रकाशते ।

**प्रध्वस्ता न निवर्तन्ते निवृत्तिर्नोपलभ्यते ।**
**प्रत्यक्षेण परोक्षं तदनुमानेन सिद्ध्यति** ॥ ५९ ॥
**एवमेकेऽध्ययवस्यन्ति निवृत्तिरिति चापरे ।**
**उभयं सम्प्रधार्यैतद्व्यवस्येत यथामति** ॥ ६० ॥

**प्रध्वस्ता न निवर्तन्त** इत्यत्र **प्रध्वस्ताः** लिङ्गदेहात् प्रध्वस्ताः उत्तमा अधमाश्च पुनः संसारे न निवर्तन्ते, [१] 'न च पुनरावर्तते, न च पुनरावर्तते' इति श्रुतेः । 'अन्धेतमसि मग्नानां न तेषां पुनरुत्थितिः' इति स्मृतेश्च, निवृत्तिर्नोपलभ्यते । **अपरे** पण्डिताः लिङ्गदेहात् प्रध्वस्तानामपि मध्यम-जीवानां पुनः सुखदुःखात्मके संसारे निवृत्तिरस्तीति मन्यन्ते ।

**प्रतिगृह्य च निह्नोति ह्यन्यथा च प्रदृश्यते** ॥ ६८ ॥
**न सर्पेति च यं प्राहुः सर्वत्र प्रतिहन्यते ।**

**प्रतिगृह्य च निह्नोति** इत्यत्र संसारदशायां कश्चित्प्रतिगृह्य **निह्नोति** निराकरोति, कश्चित् **अन्यथा** तूष्णीमेव । **दृश्यते** निराकरणं प्रदृश्यते । यं कश्चित् **न सर्पेति प्राहुः** अत्र नागच्छेति वदन्ति । एवं सर्वत्र प्रतिहन्यते इति संसारदशावर्णनम् ।

**धूमेन चाप्रसन्नोऽग्निर्यथाऽर्कं न प्रवर्तयेत्** ॥ ६९ ॥
**धिष्ण्याधिपे प्रसन्ने तु स्थितिमेतां निरीक्षते ।**

---

१. छां. ८-१५-१

हर्यनुग्रहात् कुतोऽस्य न परिहारः इत्यत आह – **धूमेनेति** । धूमेन **अप्रसन्नः** आच्छादितः अग्निः **अर्कं** प्रकाशं यथा न प्रवर्तयेत् तथा जीवोऽपि अज्ञानावृतः परमात्मानं न जानाति । कदाप्यपरिहार इत्यत आह – **धिष्ण्याधिप इति** । **धिष्ण्याधिपे** वैकुण्ठलोकयात्राधिपे । **एतां** मुक्तौ भाविनीं स्थितिं निरीक्षते ।

**अतिक्षूराच्च सूक्ष्मत्वात् प्रस्थानं न प्रकाशते** ॥ ७० ॥

**प्रस्थानं** मुक्तिमार्गः ।

**प्रपद्य तत् श्रुताह्नानि चिन्मयं स्वीकृतं विना ।**
**विज्ञाय तद्धि मन्यन्ते कृतकृत्या मनीषिणः** ॥ ७१ ॥

**प्रपद्य** इत्यत्र **तत्** तस्मात् कारणात् **स्वीकृतं** ज्ञानिभिः स्वीयतया कृतं **चिन्मयं** ज्ञानरूपं परमात्मानं **विना** तद्ध्यानं विनेत्यर्थः । **श्रुताह्नानि** सच्छिद्रघटवत् **श्रुतानि** गतानि दिनानि **प्रपद्य** ज्ञात्वा 'एतावन्तं कालं वृथैव आयुर्गतम्' इति वैराग्यं प्राप्येत्यर्थः । **विज्ञाय** 'परलोकगमनोपायं गुरुमुखाद्विज्ञाय' कृतकृत्याः मनीषिणः **तत्** परमात्मस्वरूपं **मन्यन्ते** जानन्ति ।

**न भवति विदुषां ततो भयं**
**यदविदुषां सुमहद्भयं भवेत् ।**
**न हि गतिरधिकास्ति कस्यचित्**
**सति हि गुणे प्रवदन्त्यतुल्यताम्** ॥ ७२ ॥

**न हि गतिरधिका** इत्यत्र कस्यचित् **अधिका गतिः** ज्ञानादिगुणाभावे नास्ति । **सति** ज्ञानादिगुणे सति ।

**यः करोत्यनभिसन्धिपूर्वकं**
**तच्च निर्णुदति यत्पुरा कृतम् ।**
**नाप्रियं तदुभयं कुतः प्रियं**
**तस्य तज्जनयतीह कुर्वतः[1] ॥ ७३ ॥**

**यः करोति** इत्यत्र **अनभिसन्धिपूर्वकम्** अभक्तिपूर्वकम् । **नाप्रियं तदुभयम्** इत्यत्र **तत्** प्रसिद्धम् **उभयं** गुह्यम् ऐहिकामुष्मिकं प्रियं तस्य न । **कुर्वतः** अनभिसन्धिपूर्वकं कुर्वतः तस्य परमात्मा **प्रियं** परमप्रियं मुक्तिपदं कुतः जनयतीति ।

**लोक आतुरजनान्विराविणस्तत्तदेव बहु पश्य शोचतः ।**
**तत्र पश्य कुशलानशोचतो ये विदुस्तदुभयं पदं सताम् ॥७४॥**

**लोक आतुरजनान्** इत्यत्र लोके बहु **तत्तत्** तदा तदा जातं (ज्ञानं) सुखं प्राप्य शोचतः **विराविणः** विशेषेण रोदनध्वनियुक्तान् आतुरजनान् पश्य । **तदुभयम्** असारसारजन्माख्यमुभयं ये विदुः सारासारविवेकवन्त इति यावत् । तेषां **सतां पदं** मुक्तिस्थानं भवतीति योजना ।

**॥ इति विंशोऽध्यायः ॥**

* * *

## ॥ अथ एकविंशोऽध्यायः ॥

**[2] यथा स्वनुष्ठितं ध्यानं तथा कुर्वन्ति योगिनः ।**
**महर्षयो ज्ञानतृप्ता निर्वाणगतमानसाः ॥ २ ॥**

---

१. BORI पृ. १०५६; '**तज्जनयतीह सर्वतः**' इति कुं.पाठः ।
२. कुं. १९३ अध्यायः ।

**यथा स्वनुष्ठितं ध्यानम्** इत्यत्र ध्यानम् अनुष्ठितं यथा भवति तथा कुर्वन्ति ।

[१] **प्राणात्मनि तथा** इत्यत्र **प्राणात्मनि** श्वासाभिमानिनि मुख्य-प्राणे प्राणायामं कृत्वेत्यर्थः ।

**निर्द्वन्द्वा नित्यसत्त्वस्था विमुक्तिं नित्यमाश्रिताः ।**
**[२] असङ्गीन्यविभागीनि मनःशान्तिकराणि च ॥ ४ ॥**

**असङ्गीन्यविभागीनि** इत्यत्र असङ्ग्यादीनि यथा भवन्ति तथा चतुर्धा मुक्तिलक्षणं वक्ष्यामीति सम्बन्धः । **अविभागीनि** तैलधारावत् विभागाख्यविच्छेदरहितानि ।

**विसञ्चारि निरालम्बं [३] पञ्चद्वारं च लोचनम् ।**
**पूर्वं ध्यानपदे धीरः समादध्यान्मनो नरः ॥ १० ॥**

**पञ्चद्वारं च लोचनम्** इत्यत्र **लोचनं** 'लोकृ दर्शने' इति धातोः ज्ञान-कारणम् ।

**तस्य तत्पूर्वसंरुद्धमात्मषष्ठं मनोऽन्तरा ।**
**स्फुरिष्यति समुद्भ्रान्तं विद्युदम्बुधरे यथा ॥ १२ ॥**

**आत्मषष्ठं मनोन्त(रं)रा** इत्यत्र आत्मना स्वेन सह षष्ठम् ।

**जलबिन्दुर्यथा लोलः पर्णस्थः सर्वतश्चलः ।**
**एवमेवास्य तच्चित्तं भ्रमति [४] ज्ञानवर्त्मनि ॥ १३ ॥**

---

१. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
२. **'असङ्गीन्यविवादीनि'** इति कुं.पाठः ।; ३. **'पञ्चद्वारं चलाचलम्'** कुं.पाठः ।
४. $T_1$,$G_1$,$M_5$; **'ध्यानवर्त्मनि'** इति कुं.पाठः । BORI पृ. १०५८

**पर्णस्थः सर्वतश्चल** इत्यत्र **पर्णस्थः** पद्मपर्णस्थः **भ्रमति** 'भ्रमु अनवस्थाने' इति धातोः ज्ञानाख्योक्तस्वयोग्यगुणेषु सञ्चरति ।

**पांसुभस्मकरीषाणां यथा वै राशयश्चिताः ।**
**सहसा वारिणा सिक्ता न यान्ति परिभावनम् ॥ १८ ॥**

**पांसुभस्मकरीषाणाम्** इत्यत्र करीषपदेन शुष्कगोमयचूर्णमुच्यते ।

**किञ्चित्स्निग्धं यथा च स्याच्छुष्कचूर्णमभावितम् ।**
**क्रमशस्तु शनैर्गच्छेत्सर्वं तत्परिभावनम् ॥ १९ ॥**

**किञ्चित्स्निग्धम्** इत्यत्र **किञ्चित्स्निग्धम्** अल्पस्नेहयुक्तं **शुष्कचूर्णं** वायुना शुष्कं चूर्णम् **अभावितं** क्षणे क्षणे जलादिना अभावितम् ।

**न तत्पुरुषकारेण न च दैवेन केनचित् ।**
**सुखमेष्यति तत्तस्य न भवन्ति विपत्तयः ॥ २२ ॥**

**न तत्पुरुषकारेण** इत्यत्र केवलपुरुषकारेण केवलदैवेन उभाभ्यां **सुखं** ध्यानसुखं न एष्यति । एवञ्च विषयानास्वादनं ध्यानाङ्गत्वात् प्रथमम् । इन्द्रियाणां मनस्येव धारणं द्वितीयं, प्राणायामेन पापपुरुषस्य उच्चाटनं तृतीयं, निश्चलनिर्मलमनसा नानाशाखास्थभगवद्गुणानुसन्धानं चतुर्थम् इत्युक्तं भवति ।

**॥ इति एकविंशोऽध्यायः ॥**

**॥अध्यात्मं समाप्तम् ॥**

* * *

## ।। अथ द्वाविंशोऽध्यायः ।।

**[1]चातुराश्रम्यमुक्तं ते राजधर्मास्तथैव च ।**
**नानाश्रयाश्च भगवन्नितिहासाः पृथग्विधाः** ।। १ ।।

**ते** त्वया ।

**साङ्ख्ययोगौ तु यावुक्तौ मुनिभिः समदर्शिभिः ।**
**मार्गौ तावप्युभावेतौ संश्रितौ न च संश्रितौ** ।। ८ ।।

**संश्रितौ न च संश्रितौ** इत्यत्र वैदिकसाङ्ख्ययोगौ संश्रितौ । अवैदिकौ न च संश्रितौ इति विभागः ।

**विषयप्रतिसंहारो मितजल्पस्तथा शमः ।**
**एष प्रवर्तको धर्मो निवर्तकमथो शृणु** ।। १२ ।।

**एष प्रवर्तक** इत्यत्र **प्रवर्तकः** जपस्य कारणीभूतः आचारः ।

**[2]यथा निवर्तकं कर्म जपतो ब्रह्मचारिणः ।**
**न जपो न च वै ध्यानं नेच्छा [3]द्वेषणहर्षणे ।**
**युज्यते नृपशार्दूल [4]सुसंवेद्यं हितं किल** ।। १३ ।।

**यथा निवर्तकम्** इत्यत्र **कर्म** जपरूपं कर्म । येन दुर्जनसङ्गेन जपः कर्तुं न शक्यते तदेकं निवर्तकम् । येन पुत्रमित्रकलत्रादिषु स्नेहेन ध्यानं न शक्यते तदपि निवर्तकम् । येन धनादिषु इच्छाकरणेन **इच्छा** जपेच्छा न शक्यते तदपि निवर्तकम् । **द्वेषणहर्षणे** सत्सु द्वेषणं दुर्विषयेषु हर्षणं

---

१. कुं. १९४ अध्यायः । ;
२. **'यथा निवर्तते धर्मो'** इति कुं. पाठः ।
३. **'द्वेषणहर्षणौ'** इति कुं.पाठः ।
४. **'सुसंवेद्यं हि तत्किल'** इति कुं. पाठः

च निवर्तकम् । अनयोः प्रवर्तकनिवर्तकयोः मध्ये **हितं** हितमेव संवेद्यं किल ।

**यथा संश्रूयते जापो येन वै जापको भवेत् ।**
**संहिता प्रणवेनैव सावित्री च परा मता** ॥ १५ ॥

**संहिता प्रणवेनैव** इत्यत्र प्रणवेन सह ।

[१]**विषयेभ्यो मनः कुर्याद्विषयान्न च भावयेत् ।**
**साम्यमुत्पाद्य मनसा मनस्येव मनो दधत्** ॥ १८ ॥

**विषयेभ्यो मनः कुर्यात्** इत्यत्र विषयेभ्यो न मनः कुर्यात् इत्यर्थः ।

**स वै तस्यामवस्थायां सर्वत्यागकृतः सुखी ।**
**निरीह (निरीच्छ)स्त्यजति प्राणान् ब्राह्मीं [२]संविशते तनुम्** २५

**ब्राह्मीं संविशते तनुम्** इत्यत्र **ब्राह्मीं** ब्राह्मणसम्बन्धिनीम् ।

**॥ इति जापकोपाख्याने द्वाविंशोऽध्यायः ॥**

## ॥ अथ त्रयोविंशोऽध्यायः ॥

[३]**अवमानेन कुरुते न तुष्यति न शोचति ।**
**ईदृशो जापको याति निरयं नात्र संशयः** ॥ ४ ॥

**न तुष्यति न शोचति** इत्यत्र **न तुष्यति** जपेन न तुष्यति **न शोचति** जपहानौ न शोचति ।

---

१. $S_1$,$K_1$,$B_8$; '**विषयेभ्यो नमस्कुर्यात्**' इति कुं.पाठः । BORI पृ. १०६१
२. $V_1$,$B_{0,6,9}$,$D_{2,6,8}$; '**संश्रयते**' इति कुं.पाठः । BORI पृ. १०६२
३. कुं. १९९ अध्यायः ।

**अभिध्यापूर्वकं जप्यं कुरुते यश्च मोहितः ।**
**यत्रास्य रागः पतति तत्र तत्रोपपद्यते ॥ ६ ॥**

**अभिध्यापूर्वकम्** इत्यत्र **अभिध्या** अभितो विषयध्यानम् ।

**अथैश्वर्यप्रसक्तः सञ्जापको तत्र (यत्र) रज्यते ।**
**स एव निरयस्तस्य नासौ तस्मात् प्रमुच्यते ॥ ७ ॥**

**तत्र रज्यत** इत्यत्र **तत्र** ऐश्वर्ये ।

**अनिमित्तं परं यत्तदव्यक्तं ब्रह्मणि स्थितम् ।**
**तद्भूतो जापकः कस्मात् सशरीरमिहाविशेत् ॥ १२ ॥**

**अव्यक्तं ब्रह्मणि स्थितम्** इत्यत्र **ब्रह्मणि** वेदे, **तद्भूतः** तस्मिन् भूतः तद्ध्यायी ।

॥ इति जापके त्रयोविंशोऽध्यायः ॥

## ॥ अथ चतुर्विंशोऽध्यायः ॥

**ब्रह्मणः सदनं प्राप्य**[१] इत्यत्र जापकः **ब्रह्मणः** परब्रह्मणः सदनं प्राप्य रमते अथवा तस्य महद्भयं निरयं वा गतिरिति त्वया उदाहृतम् ।

**युधिष्ठिर उवाच**[२]–

**कीदृशं निरयं याति जापको वर्णयस्व मे ।**
**कौतूहलं हि राजन्मे तद्भवान् वक्तुमर्हति ॥ १ ॥**

**कीदृशं निरयम्** इत्यत्र **जापकः** किञ्चिदङ्गविकलतया दिव्य-

---

१. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
२. कुं. १९६ अध्यायः ।

मन्त्रजपं कुर्वन् जापकः **कीदृशं निरयं याति** । न तावत् कुम्भीपाकादिनरकम् । तस्य पापैकफलत्वात् । अतः त्वयोक्तो निरयः कः इति प्रश्नार्थः । सिद्धान्तस्तु साङ्गतया जपं कुर्वतां विष्णुलोकप्राप्तिः । मनोदोषाख्येन अल्पीयसा अङ्गवैकल्येन महामन्त्रजपं कुर्वतां जापकानां ब्रह्मलोकादिचललोकप्राप्तिरिति । अतस्तानेव पुण्यलोकान् निर्गतम् **अयः** अयनं नित्यावस्थानं येषु त इति व्युत्पत्त्या मुमुक्षूणां तेषु वैराग्यजननाय निरयत्वेन वर्णयति ।

**अमूनि यानि स्थानानि [१]देवानां परमात्मनाम् ।**
**नानासंस्थानवर्णानि नानारूपफलानि च** ॥ ३ ॥

**परमात्मनां** उत्तमजीवानाम् । तेषामेव परमात्मत्वे तल्लोकानाम् अपि विष्णुलोकत्वेन निरयत्वोक्तिविरोध इति ज्ञेयम् ।

**रुद्रादित्यवसूनां च तथाऽन्येषां दिवौकसाम् ।**
**एते वै निरयास्तात स्थानस्य परमात्मनः** ॥ ६ ॥

**एते वै निरयास्तात** इत्यत्र परमात्मनः स्थानस्य अपेक्षया **निरयाः** ।

**अभयं चानिमित्तं च न च क्लेशभयावृतम् ।**
**[२]द्वाभ्यां युक्तं त्रिभिर्मुक्तमष्टाभिस्त्रिभिरेव च** ॥ ७ ॥

**द्वाभ्यां युक्तम्** इत्यत्र **द्वाभ्यां** स्वाश्रितपुरुषसम्बन्धिजननमरणाभ्याम् । **त्रिभिः** सत्त्वरजस्तमोगुणैः **अष्टाभिः** अष्टमदैः **त्रिभिः** सृष्टिस्थितिसंहारैः तेजोबन्नात्मकैः त्रिभिरुपादानैर्वा ।

---

१. BORI पृ. १०६५; 'देवानाममरात्मनाम्' इति कुं.पाठः ।
२. $M_{1,6,7}$,$D_6$,$B_{0,9}$; 'द्वाभ्यां मुक्तम्' इति कुं.पाठः । BORI पृ. १०६६

**चतुर्लक्षणवर्जं तु चतुष्कारणवर्जितम् ।**
**अप्रहर्षमनानन्दमशोकं विगतक्लमम् ॥ ८ ॥**

**चतुर्लक्षणवर्जं** सारूप्यादिचतुर्विधमुक्तलक्षणवर्जितं **चतुष्कारण-वर्जितं** स्वप्राप्तौ चतुर्विधज्ञानाख्यकारणवर्जितम् **अप्रहर्षं** मोक्षवत् प्रकृष्टचित्तोल्लासरहितम् **अनानन्दं** स्वरूपानन्दानुभवरहितम् ।

**[१]कालं संवहते तत्र कालस्तत्र न वै प्रभुः ।**
**स कालस्य प्रभू राजन् सर्वस्यापि तथेश्वरः ॥ ९ ॥**

**कालं संवहत** इत्यत्र **सः** लोकः कालं सम्यक् वहते । **कालः** यमः तत्र प्रभुर्न ।

**स कालस्य** इत्यत्र **कालस्य प्रभुः** सर्वस्य च ईश्वरः सः नारायणः यत्र ।

**एतद्वै ब्रह्मणः स्थानं जापकस्य महात्मनः ॥ १० ॥**

एतद्वै ब्रह्मणः स्थानं महात्मनः जापकस्य ।

**तत्रस्थं परमात्मानं ध्यायन् वै सुसमाहितः ।**
**हिरण्यगर्भः सायुज्यं प्राप्नुयाद्वा नृपोत्तम ॥ १० ॥**

**हिरण्यगर्भः सायुज्यम्** इत्यत्र 'युजिर् योगे' इति धातोः **सायुज्यं** सहयुजोर्भावः सायुज्यं नित्यसम्बन्धमित्यर्थः ।

**आत्मकेवलतां प्राप्तस्तत्र गत्वा न शोचति ।**
**ईदृशं परमं स्थानं निरयास्ते च तादृशाः ॥ ११ ॥**

---

१. **'कालः सम्पच्यते'** इति कुं.पाठः ।

**आत्मकेवलतां** केवलमात्मा परमात्मा यस्य मनसि स आत्मकेवलः तस्य भावः । **ईदृशं** हिरण्यगर्भस्यापि सायुज्यप्राप्तिकारणम् ।

**एते ते निरयाः प्रोक्ताः सर्व एव यथातथम् ।**
**तस्य स्थानवरस्येह सर्वे निरयसञ्ज्ञिताः ॥ १२ ॥**

**तस्य स्थानवरस्य** अपेक्षया ।

[1] **चतुर्भिरक्षरैर्युक्ता सोमपानेऽक्षराष्टका ।**
**जगद्बीजसमायुक्ता चतुर्विंशाक्षरात्मिका ॥ ९ ॥**

**चतुर्भिरक्षरैः युक्ता सोमपाने अक्षराष्टका** चेति । जगद्बीजैः भूर्भुवस्वराख्यलोकत्रयवाचकत्वात् जगद्बीजरूपैः । गायत्र्यारम्भे पठ्यमानैः भूर्भुवःस्वरिति व्याहृतिमन्त्रात्मकपदत्रयैः भूरादिसत्यान्तसप्तलोकस्थितभूतैः सप्तव्याहृतिपादैर्वा समायुक्तानि यानि चतुर्विंशत्यक्षराणि तदात्मिकेति । उक्तानि त्रीण्यपि वाक्यानि वक्ष्यमाणगायत्र्याः विशेषणानि ।

राजनं यत्रोच्यते येन क्रियते वा तत्सोमपानम् । 'तत्सवितुर्वृणीमहे वयं देवस्य भोजनम् श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि'[2] इति श्रुतिवाक्यमित्यर्थः ।

सवितुर्देवस्य तत् **भोजनं** भोजनयोग्यसोमरसं वयं वृणीमहे । यस्य वरणात् पूतान्तःकरणा वयं **श्रेष्ठं** सकलजगच्छ्रेष्ठं **सर्वधातमम्** अतिशयेन सर्वधारकम् । **तुरम्** एकाहोरात्रमात्रेण मेरोः प्रदक्षिणीकरणात् त्वरया युक्तं **भगस्य** भाग्याधिकत्वात् भगनानामकसूर्यान्तर्गतनारायणस्य रूपं **धीमहि** ध्यायेमहि । यज्ञादिकर्मणोऽपि

---

१. कुं. १९७ अध्यायः । ;  २. ऋ. सं. ५-७२-२

भगवद्ध्यानाङ्गत्वात् इति श्रुतेस्तात्पर्यम् इत्यर्थपर्यालोचनायाम् अस्याः श्रुतेः सोमपानमन्त्रत्वं स्पष्टम् अवगम्यते । अतोऽस्मिन् **सोमपाने** सोमपानमन्त्रे प्रविष्टैः **चतुर्भिरक्षरैः** तत्सवितुरिति स्वस्याः चतुर्भिरक्षरैः युक्ता गायत्रीमन्त्राक्षरप्रवेशादेव साऽपि श्रुतिमन्त्रोऽभूत् इति सूचनायैवमुक्तम् । वयमितिपदं वरेण्यमितिपदस्य आद्यन्तभूतवकारयकाराख्याक्षरद्वयं देवस्येत्यक्षरत्रयं धीमहीत्यक्षरत्रयं चेत्याकारेण अस्मिन्नेव मन्त्रे अक्षराणामष्टकं यस्यास्सा । तन्मन्त्रादीषद्विकाररहितान्यक्षराणि उक्तप्रकारेण द्वादशैवेत्यतः **चतुर्भिः अक्षरैः** युक्ता **अक्षराष्टका** चेत्युक्तम् । णिकारात् णीकारस्य रेकारात् रमिति रेफस्य भर् इत्यक्षरात् केवलं भकारस्य गस् इति सकारान्तगकारात् गस्येति अकारान्तगकारस्य तुर् इति ऋकारान्ततृवर्णात् केवलं तुकारस्य च अतिविलक्षणत्वात् न गायत्र्यन्तर्गताक्षरत्वमिति ज्ञेयम् । अतः सुष्ठूक्तं सर्वज्ञेन भगवता व्यासेन ।

**नाददे[१] परदत्तं वै दत्तं वा चाफलं मया ।**
**वाक्यं प्रमाणं राजर्षे ममाद्य तव चैव हि** ॥ ५९ ॥

**नाददे परदत्तं वै** इत्यत्र परस्मै दत्तं परदत्तम् ।

**नाभिसन्धिर्मया जाप्ये[२] कृतपूर्वः कदाचन ।**
**जपस्य राजशार्दूल कथं वेत्स्याम्यहं फलम्** ॥ ६१ ॥

**नाभिसन्धिर्मया** इत्यत्र **जाप्ये** क्रियमाणे सति, अभितः सन्धिः **अभिसन्धिः** ।

---

१. **'नाददेऽपरदत्तम्'** इति कुं. पाठः ।
२. **'जप्ये'** इति कुं.पाठः ।

**सत्येन चाग्निर्दहति स्वर्गः सत्ये प्रतिष्ठितः ।**
**सत्यं यज्ञस्तपो वेदाः स्तोभा मन्त्राः सरस्वती ॥ ७४ ॥**

**स्तोभा मन्त्राः सरस्वती** इत्यत्र **स्तोभाः** सामगाने अध्याह्रियमाणाः हुं हा व (वु) इत्यादि पदविशेषाः ।

**बाल्ये यदि स्यादज्ञानान्मया हस्तः प्रसारितः ।**
**निवृत्तलक्षणं धर्ममुपासे संहितां जपन् ॥ ८५ ॥**

**हस्तः प्रसारित** इत्यत्र **हस्तः प्रसारितः** देहीति प्रसारितः ।

**न मे धारयसीत्येको धारयामीति चापरः ।**
**इहास्ति नौ विवादोऽयमयं राजानुशासकः ॥ ९१ ॥**

**न मे धारयसीत्येक** इत्यत्र **मे** मया दत्तं कुतो न **धारयसीत्येकः । न धारयामीति** नञावृत्या कुतः पदाध्याहारेण च योजना ।

**सत्यं ब्रवीम्यहमिदं न मे धारयते भवान् ।**
**अनृतं वदसीह त्वमृणं ते धारयाम्यहम् ॥ ९२ ॥**

**ऋणं ते धारयाम्यहम्** इत्यत्र तुभ्यं दत्तं वस्तु मद्वशे स्थितं चेत् ते **ऋणं धारयामि ।**

विरूप उवाच–

**[१]विकृतस्य नरव्याघ्र धारयामीह गोफलम् ।**
**ददतश्च न गृह्णाति विकृतो मे महीपते ॥ ९४ ॥**

**धारयामीह गोफलम्** इत्यत्र गोफलम् विकृतस्य धारयामि ।

---

१. 'धारयामि नरव्याघ्र विकृतस्येह गोः फलम्' इति कुं. पाठः ।

अनेन धर्मप्राप्त्यर्थं शुभा दत्ता पुराऽनघ ।
धेनुर्विप्राय राजर्षे तपःस्वाध्यायशीलिने ॥ ९८ ॥
तस्याश्चायं मया राजन् फलमभ्येत्य याचितः ।
विकृतेन च मे दत्तं विशुद्धेनान्तरात्मना ॥ ९९ ॥

**अनेन धर्मप्राप्त्यर्थम्** इत्यत्र **अनेन** विकृतेन **तपःस्वाध्यायशीलिने विप्राय** मह्यं धेनुर्दत्ता । विकृतेन तस्याः फलमहं याचितः **मे** मया दत्तं च ।

ततो मे सुकृतं कर्म कृतमात्मविशुद्धये ।
गावौ च कपिले क्रीत्वा वत्सले बहुदोहने ॥१००॥
[1]शिलोञ्छवृत्तये राजन्मया समपवर्जिते ।
यथाविधि यथाश्रद्धं एतस्यां च पुनः प्रभो ॥१०१॥

**गावौ च कपिले** इत्यत्र **गावौ** तद्दत्तधेनोः पुत्रीभूते बहुदोहने कृत्वा शिलोञ्छवृत्तये विकृताय **अपवर्जिते** दत्ते । **एतस्याम्** अवस्थायाम् ।

यदि नेच्छति मे दानं यथा दत्तमनेन वै ।
भवानत्र स्थिरो भूत्वा मार्गे स्थापयिताऽद्य नौ ॥ १०४ ॥

**यदि नेच्छति** इत्यत्र **अनेन** मया दत्तं मे दानम् अयं नेच्छति ।

विकृत उवाच–

स्वयं मयायाचितेन दत्तं कथमिहाद्य तत् ।
गृह्णीयां गच्छतु भवानभ्यनुज्ञां ददानि ते ॥ ११० ॥

---

१. 'ते चोञ्छवृत्तये राजन्मया समुपवर्जिते' इति कुं. पाठः ।

**स्वयं मयायाचितेन** इत्यत्र अयाचितेनेति पदच्छेदः ।

**विरूप उवाच–**

**कामक्रोधौ विद्धि नौ त्वमावाभ्यां कारितो भवान् ।**
**जिज्ञासमानौ युवयोर्मनो[१]ऽच्छन्तु द्विजोत्तम ॥ १२१ ॥**

**मनोऽच्छन्तु द्विजोत्तम** इत्यत्र हे **द्विज** हे **उत्तम** इक्ष्वाको **युवयोः अच्छं** मनः जिज्ञासमानौ स्वः ।

**कालो धर्मस्तथा मृत्युः कामक्रोधौ तथा युवाम् ।**
**सर्वमन्योन्यनिष्कर्षे निकृष्टं पश्यतस्तव ॥ १२३ ॥**

**निकृष्टं पश्यत** इत्यत्र **अन्योन्यनिष्कर्षे** युवयोः परस्परविवादे कालश्च **तव निष्कृष्टं** निश्चितमर्थं कालोऽपि पश्यते । यमोऽपि पश्यते । धर्मोऽपि पश्यते । मृत्युश्च पश्यते । **कामक्रोधौ** कामक्रोधाभिमानिनौ पश्येते । वयं च पश्यामः । **सर्वं** जगच्च पश्यते इति योजना ।

**अमृताच्चामृतं प्राप्तः शान्तीभूतो निरात्मवान् ।**
**ब्रह्मभूतः स निर्द्वन्द्वः सुखी शान्तो निरामयः ॥१३३॥**

**ब्रह्मभूतः स** इत्यत्र **ब्रह्मभूतः** ब्रह्मणिभूतः ।

**चतुर्भिर्लक्षणैर्हीनं तथा षड्भिः सषोडशैः ।**
**पुरुषं समतिक्रम्य[२] आकाशं प्रतिपद्यते ॥१३५॥**

**चतुर्भिर्लक्षणैर्हीनम्** इत्यत्र **चतुर्भिः** अण्डजस्वेदजोद्भिज्जजरा-

१. **'युवयोर्मनोत्थम्'** इति कुं.पाठः ।
२. BORI पृ. १०८२; **'तमतिक्रम्य'** इति कुं.पाठः ।

युजाख्यैश्चतुर्भिः **लक्षणैः** संसारिजीवलक्षणैः हीनं, **सषोडशैः** एकादशेन्द्रियपञ्चभूतात्मकषोडशकलासहितैः **षड्भिः** कामक्रोधादिभिः हीनं **पुरुषं** ब्रह्माणं **समतिक्रम्य आकाशम्** आसमन्तात् काशनादाकाशपदवाच्यं परमात्मानं **प्रतिपद्यते** । अप्रतीकालम्बनायोगात् ।

**॥ इति जापकोपाख्याने पञ्चविंशोऽध्यायः ॥**

## ॥ अथ षड्विंशोऽध्यायः ॥

**[१] तथेत्येवं प्रतिश्रुत्य धर्मं सम्पूज्य जापकः ।**
**यमं कालं च मृत्युं च स्वर्गं सम्पूज्य चार्हतः ॥ ३ ॥**

**स्वर्गं सम्पूज्य चार्हत** इत्यत्र **अर्हतः** पूज्यान् तान् सर्वान् ।

**साध्याश्च विश्वे मरुतो वाक्यानि सुमहान्ति च ।**
**नद्यः शैलाः समुद्राश्च तीर्थानि विविधानि च ॥ १० ॥**

**वाक्यानि सुमहान्ति च** इत्यत्र **वाक्यानि** भारतपुराणादिपौरुषेयवाक्याभिमानिदेवाः ।

**तपांसि संयोगविधिर्वेदास्तोभाः सरस्वती ।**
**नारदः पर्वतश्चैव विश्वावसुर्हहाहुहूः ॥ ११ ॥**

**संयोगविधिः** समीचीनो योगविधिः ।

**[२] उपस्थितिकृतौ तौ च नासिकाग्रमधो भ्रुवोः ।**
**भ्रुकुट्यक्ष्णोश्च मनसा शनैर्धारयतस्तदा ॥ १८ ॥**

---

१. कुं. १९८ अध्यायः ।
२. 'उपस्थितकृतौ' इति कुं.पाठः ।

**उपस्थितिकृतौ** इत्यत्र **उपस्थितिकृतौ** उपस्थानकारिणौ ।

**तालुदेशमथोद्दाल्य ब्राह्मणस्य महात्मनः ।**
**ज्योतिर्ज्वाला सुमहती जगाम त्रिदिवं तदा ॥ २० ॥**

**तालुदेशमथोद्दार्य(ल्य)** इत्यत्र **तालुः** मूर्धमध्यतलसम्बन्धिदेशः **तालुदेशः** । मातुरुदरे तस्यैव तालुप्रदेशत्वाद्वा तालुदेशः ।

**महास्मृतिं पठेद्यस्तु तथैवानुस्मृतिं शुभाम् ।**
**तावप्येतेन विधिना गच्छेतां मत्सलोकताम् ॥ ३० ॥**

**महास्मृतिं पठेद्यस्तु** इत्यत्र **महास्मृतिं** जापकब्राह्मणचरित्रस्मृतिर्महास्मृतिः । **अनुस्मृतिः** तदनुकूलतया स्थितराजचरितस्तुतिः अनुस्मृतिः ताम् ।

**॥ इति षड्विंशोऽध्यायः ॥**
**॥ जापकोपाख्यानं समाप्तम् ॥**

* * *

## ॥ अथ सप्तविंशोऽध्यायः ॥

**यत्कारणं मन्त्रविधिः प्रवृत्तो[१]**
**ज्ञाने फलं यत्प्रवदन्ति विप्राः ।**
**यन्मन्त्रशब्दैरकृत प्रकाशं**
**तदुच्यतां मे भगवन्यथावत् ॥ ४ ॥**

**यन्मन्त्रशब्दैरकृत** इत्यत्र **प्रकाशं** प्रसिद्धिम् अकृत ।

१. कुं. १९९ अध्यायः ।

**इष्टं च मे स्यादितरच्च न स्यात्**
**एतत्कृते कर्मविधिः प्रवृत्तः ।**
**इष्टं त्वनिष्टं च न मां भजेत**
**इत्येतत्कृते ज्ञानविधिः प्रवृत्तः ॥ ११ ॥**

**इष्टं त्वनिष्टं च न मां भजेत** इत्यत्र इष्टं सांसारिकमिष्टम् ।

**प्रजाः सृष्टा मनसा कर्मणा च**
**द्वावेवैतौ सुपथौ लोकजुष्टौ ।**
**दृष्टं**[१] **कर्म शाश्वतं चान्तवच्च**
**मनस्त्यागे कारणं नान्यदस्ति ॥ १५ ॥**

**दृष्टं कर्म शाश्वतम्** इत्यत्र शाश्वतं कर्म एवं दृष्टं चेत् तत्र **मनस्त्यागे** कर्मसु मनस्त्यागे कारणं भवति ॥

**नानाविधे कर्मफले सुखार्थी नरः प्रमत्तो न परं प्रयाति ।**
**फलं हि तत्कर्मफलादपेतं निराशिषो ब्रह्म परं ह्युपेतम् ॥१६॥**

**फलं हि तत्कर्मफलादपेतम्** इत्यत्र निराशिषः पुरुषस्य परं ब्रह्म उपेतमिति यत् तत् कर्मफलात् अपेतं फलम् ।

**स्वेनात्मना चक्षुरिव प्रणेता**
**निशात्यये तमसा संवृतात्मा ।**
**ज्ञानं तु विज्ञानगुणेन युक्तं**
**कर्माशुभं पश्यति वर्जनीयम् ॥ १७ ॥**

---

१. BORI पृ. १०९१ ; **'दृष्टं कर्माशाश्वतम्'** इति कुं.पाठः ।

**स्वेनात्मना** इत्यत्र पूर्वं तमसा संवृतात्मा निशात्यये सति **स्वेन आत्मना** स्वप्रयत्नेन चक्षुःप्रणेता पुरुष एव ज्ञानी ।

**गुणात्मकं कर्म वदन्ति वेदा-**
**स्तस्मान्मन्त्रो मन्त्रपूर्वं हि कर्म ।**
**विधिर्विधेयं मनसोपपत्तिः**
**फलस्य भोक्ता तु तथा शरीरी ॥ २० ॥**

**तस्मान्मन्त्रो मन्त्रपूर्वं हि कर्म** इत्यत्र **तस्मात्** पूर्वजन्मकृतकर्मणः **मन्त्रः** वेदः आयाति । पुनर्मन्त्रपूर्वं कर्म भवति ।

**शब्दाश्च रूपाणि रसाश्च पुण्याः**
**स्पर्शाश्च गन्धाश्च शुभास्तथैव ।**
**नरोऽत्र हि स्थानगतः प्रभुः स्या-**
**देतत्फलं सिद्ध्यति कर्मणोऽस्य ॥ २१ ॥**

**नरोऽत्र हि स्थानगत** इत्यत्र **स्थानगतः** स्वर्गादिस्थानगतः । **अत्र** रूपरसगन्धादिषु प्रभुः स्यात् ।

**यद्यच्छरीरेण करोति कर्म शरीरयुक्तः समुपाश्नुते तत् ।**
**शरीरमेवायतनं सुखस्य दुःखस्य चाप्यायतनं शरीरम् ॥२२॥**

**शरीरयुक्त** इत्यत्र दिव्यशरीरयुक्तः ।

**यतो जगत्सर्वमिदं प्रसूतं**
**ज्ञात्वाऽऽत्मवन्तो ह्युपयान्ति शान्तिम् ।**

**यन्मन्त्रशब्दैरकृतप्रकाशं**
**तदुच्यमानं शृणु मे परं यत्** ॥ २६ ॥

**यन्मन्त्रशब्दैरकृतप्रकाशम्** इत्यत्र **मन्त्रशब्दैः** मन्त्रस्थाकाशप्राणादिशब्दैः **अकृतप्रकाशम्** अकृतः प्रकाशो यस्य परब्रह्मणः तत्तथोक्तम् । 'शब्दानाम् अन्यत्र प्रसिद्धत्वात् ब्रह्ममीमांसां विना तैः शब्दैः ज्ञातुं न शक्यम्' इति यावत् ।

**रसैर्विमुक्तं विविधैश्च गन्धैरशब्दमस्पर्शमरूपवच्च ।**
**अग्राह्यमव्यक्तमवर्णमेकं पञ्चप्रकारान् ससृजे प्रजानाम्** ॥२७ ।

**रसैर्विमुक्तम्** इत्यत्र **रसैः** प्राकृतरसैः **गन्धैः** प्राकृतगन्धैः । **अशब्दं** प्राकृतानां संसारगोष्ठीशब्दातिदूरम् । **अस्पर्शं** प्राकृतैः हस्तादिना स्प्रष्टुमशक्यम् **अरूपवत्** प्राकृतरूपरहितम् । **अवर्णं** प्राकृतवर्णरहितम् । सर्वथा रूपाद्यभावे 'दर्शयामास पार्थाय परमं रूपमैश्वरम् । अनेकवक्त्रनयनमनेकाद्भुतदर्शनम्। अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम्। दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम्॥'[१] इत्यादि गीतावाक्यविरोधात् । **पञ्चप्रकारान्** रूपरसादिपञ्चविषयान् ।

**न स्त्री पुमान्नापि नपुंसकं च**
**न सन्न चासत्सदसच्च तन्न ।**
**पश्यन्ति यद्ब्रह्मविदो मनुष्या-**
**स्तदक्षरं न क्षरतीति विद्धि** ॥ २८ ॥

---

१. भ.गी. अ.११. श्लो. ९,१०,११

**न स्त्री** लौकिकस्त्रीष्वेको न, एवमुत्तरत्रापि । सत् कारणरूपं महदादिकम्, **असत्** कार्यरूपं ब्रह्माण्डादिकं, **सदसत्** कार्यकारण-रूपाभ्यां मिश्रं प्रधानं च तन्न । सकलजगतो विलक्षणमिति भावः । सर्वथा स्त्रीरूपं पुरुषरूपं च नास्तीत्यङ्गीकारे 'स्त्रियः सतीस्ताम् उ मे पुंस आहुः'[१] इत्यादि श्रुतिविरोधः ।

**॥ इति मनुबृहस्पतिसंवादे सप्तविंशोऽध्यायः ॥**

* * * *

## ॥ अथ अष्टाविंशोऽध्यायः ॥

इदानीं सृष्टिसंहारौ कथयति – **अक्षरादिति ।**

**[२]इमे शरीरैर्जलमेव गत्वा**
**जलाच्च तेजः [३]पवनोऽन्तरिक्षम् ।**
**खाद्वै [४]निवर्तन्ति च भाविन-**
**स्ते येऽभाविनस्ते परमाप्नुवन्ति ॥ २ ॥**

**इमे शरीरैः** इत्यत्र **इमे** स्थावरजङ्गमाः **शरीरैः** सङ्कर्षणमुखाग्निना भस्मीभूतस्वशरीरैः । 'ते तेजसः पवनं, स पवनो अन्तरिक्षम्' इति योग्यपदाध्याहारेण योजना । **भाविनः** पुनरुत्पत्तिमन्तः खात् पुन-र्निवर्तन्ते । ये **अभाविनः** मुक्ताः ।

---

१. ऋ.सं. १-१६४-१६
२. कुं. २०० अध्यायः ।
३. BORI पृ. १०९३; **'पवनान्तरिक्षम्'** इति कुं. पाठः ।
४. M1,7; **'निवर्तन्ति न भाविनस्ते ये भाविनस्ते परमाप्नुवन्ति'** इति कुं.पाठः । BORI पृ. १०९३

**नोष्णं न शीतं मृदु नापि तीक्ष्णं**
**नाम्लं कषायं मधुरं न तिक्तम्।**
**न शब्दवन्नापि च गन्धवत्त-**
**न्न रूपवत्तत् परमस्वभावम् ॥ ३ ॥**

**नोष्णं न शीतम्** इत्यादिकं प्राकृतौष्ण्यादिराहित्येनोक्तम्। **परम-स्वभावम्** इति अप्राकृतत्वेन अत्युत्तमगन्धरसादिस्वभावस्य मूल एवोक्तत्वात्।

**स्पर्शं तनुर्वेद रसं च जिह्वा**
**घ्राणं च गन्धाञ्छ्रवणे च शब्दान्।**
**रूपाणि चक्षुर्न च तत्परं यद्**
**गृह्णन्त्यनध्यात्मविदो मनुष्याः ॥ ४ ॥**

**स्पर्शं तनुः** इत्यत्र **तनु**पदेन सकलशरीरव्याप्तत्वगिन्द्रियमुच्यते।

**निवर्तयित्वा रसनां रसेभ्यो**
**घ्राणं च गन्धाच्छ्रवणे च शब्दात्।**
**स्पर्शात्तनुं रूपगुणात्तु चक्षु-**
**स्ततःपरं पश्यति तत्स्वभावम् ॥ ५ ॥**

**पश्यति तत्स्वभावम्** इत्यत्र **तत्स्वभावं**, तेषां दिव्यगन्धरसादीनां स्वभावो यस्य।

**यतो गृहीत्वा हि करोति यच्च**
**यस्मिंश्च यामारभते प्रवृत्तिम्।**

**यस्मै च यद्येन च यश्च कर्ता**
**यत्कारणं तं स्वमुपेयमाहुः ॥ ६ ॥**

**यतो गृहीत्वा** इत्यत्र **यतः** यस्य प्रेरणया **गृहीत्वा** हस्तादिना गृहीत्वा यत्कार्यं तत्करोति, यां प्रवृत्तिमारभते मनुष्यः तदपि यस्मिन् प्रसन्ने भवति यद्यत्कर्म तत्, तस्मै यमुद्दिश्य क्रियमाणं येन निर्मितं जगत् यः कर्ता **यत्** ब्रह्म **कारणं** सर्वप्रवृत्तिकारणं तत् **स्वं** स्वसम्बन्धिनम् **उपेयं** प्राप्यमाहुः। न तु तेनैकीभावमाहुरित्यर्थः।

**यद्वाऽप्यभूत् व्यापकं साधकं च**
**यन्मन्त्रवत्स्थास्यति चापि लोके।**
**यः सर्वहेतुः परमार्थकारी**
**तत्कारणं कार्यमतो यदन्यत् ॥ ७ ॥**

**मन्त्रवत्** सकलवेदप्रतिपाद्यं, **परमार्थकारी** परमार्थं जगत्करोतीति परमार्थकारी। **अतः** परमात्मनः **अन्यत्** भिन्नं **यत्** परमार्थं ब्रह्मादिजगत् तत्कार्यम्।

**यथा हि कश्चित्सुकृतैर्मनुष्यः**
**शुभाशुभं प्राप्नुते चाविरोधात्।**
**एवं शरीरेषु शुभाशुभेषु**
**स्वकर्मभिर्ज्ञानमिदं निबद्धम् ॥ ८ ॥**

**स्वकर्मभिर्ज्ञानम्** इत्यत्र **स्वकर्मभिः** निवृत्तरूपकर्मभिः॥

**यथा प्रदीप्तः पुरतः प्रदीपः प्रकाशमन्यस्य करोति दीप्यन्।**
**तथेह पञ्चेन्द्रियदीपवृक्षा ज्ञानप्रदीप्ताः परवन्त एव ॥ ९ ॥**

**पञ्चेन्द्रियदीपवृक्षा** इत्यत्र पञ्चेन्द्रियाख्यदीपैः सहिताः **वृक्षाः** देहाख्यवृक्षाः **परवन्तः** देहान्तःस्थितपरमात्मप्रकाशका इत्यर्थः ।

**तान्येव काष्ठानि यथा विमथ्य**
**धूमं च पश्येज्ज्वलनं च योगात् ।**
**तद्वत्सुबुद्धिः सममिन्द्रियार्थै-**
**र्बुद्धः परं पश्यति तत्स्वभावम्** ॥ १३ ॥

**तत्स्वभावम्** वह्निगूढस्वभावम् । (वह्निवन्निगूढस्वभावम् ) ।

**यथात्मनोऽङ्ग पतितं पृथिव्यां**
**स्वप्नान्तरे पश्यति चात्मनोऽन्यत् ।**
**श्रोत्रादियुक्तः सुमनाः सुबुद्धि-**
**र्लिङ्गात्तथा गच्छति लिङ्गमन्यत्** ॥ १४ ॥

**लिङ्गात्तथा** इत्यत्र **लिङ्गात्** पूर्वदेहात् ।

**उत्पत्तिवृद्धिक्षयसन्निपातै-**
**र्न युज्यतेऽसौ परमः शरीरी ।**
**अनेन लिङ्गेन तु लिङ्गमन्य-**
**द्गच्छत्यदृष्टः प्रतिसन्धियोगात्** ॥ १५ ॥

**न युज्यते असौ परमः शरीरी** इत्यत्र **उत्पत्तिवृद्धिक्षयसन्निपातैः** जीवस्थितविरुद्धधर्मैः **असौ** उत्पत्त्यादिरहितः । अत एव **परमः** उत्तमः नारायणः **शरीरी** जीव इति न युज्यते । जननादिदोषग्रस्तत्वतद्रहित-त्वाख्यविरुद्धधर्माक्रान्तयोः जीवपरमयोः ऐक्यायोगादिति भावः ।

**अनेन लिङ्गेन** पूर्वोक्तभेदाख्यज्ञापकेन **अदृष्टः** स्वोपान्तस्थितस्वबन्धुजनैरदृष्टः जीवः **प्रतिसन्धियोगात्** देहान्तरप्रतिसन्धानाख्योपायात् **अन्यल्लिङ्गं** देहान्तरं गच्छति । परमात्माभिन्नत्वे पूर्वदेहवियोगाख्यनाशस्य उत्तरदेहग्रहणाख्यजन्मनश्च अयोगादिति भावः ।

**न चक्षुषा पश्यति रूपमात्मनो**
**न चापि संस्पर्शमुपैति किञ्चित् ।**
**न चापि तैः साधयते स्वकार्यं**
**ते तं न पश्यन्ति स पश्यते तान् ॥ १६ ॥**

**न चक्षुषा पश्यति** इत्यत्र जीवः **आत्मनः** परमात्मनः रूपं चक्षुषा न पश्यति । **तैः** इन्द्रियैः स्वकार्यं न साधयते । **ते** जीवाः **तं** न पश्यन्ति । **सः** परमात्मा तान् पश्यते । अतस्तयोः सर्वज्ञत्वासर्वज्ञत्वाभ्यामपि भेद एवेति भावः ।

**यथा समीपे ज्वलतोऽनलस्य**
**सन्तापजं रूपमुपैति कश्चित् ।**
**[1]न चापरं रूपगुणं बिभर्ति**
**तथैव तद् दृश्यते रूपमस्य ॥ १७ ॥**

**यथा समीप** इत्यत्र कश्चित् अग्निस्तम्भनशक्तिमान् पुरुषः ज्वलतः अनलस्य समीपे गच्छति तदानीम् **अपरं** दाहादिना स्वाङ्गे नीलं रूपं न गच्छति । **अस्य** परमात्मनः रूपमपि तथैव दृश्यते । नानाक्लेशैः दह्यमानजीवसमीपे स्थितोऽपि स्वसामर्थ्यात् दाहं न प्राप्नोतीत्यर्थः ।

---

१. **'न चान्तरा रूपगुणम्'** इति कुं.पाठः ।

**खं वायुमग्निं सलिलं तथोर्वीं**
**समन्ततोऽभ्याविशते शरीरी ।**
**नान्याश्रयाः कर्मसु वर्तमानाः**
**श्रोत्रादयः पञ्चगुणाञ्श्रयन्ते ॥ १९ ॥**

**नान्याश्रयाः कर्मसु** इत्यत्र **नान्याश्रयाः** देहादन्याश्रयरहिताः **कर्मसु** स्वस्वव्यापारेषु ।

**श्रोत्रं नभो घ्राणमथो पृथिव्या-**
**स्तेजोमयं रूपमथो विपाकः ।**
**जलाश्रयः[1] स्वेद उक्तो रसश्च**
**वाय्वात्मकः स्पर्शकृतो गुणश्च ॥ २० ॥**

**रसः** रसना स्वेदश्च **जलाश्रयः** जलविकारः ।

**महत्सु भूतेषु च सन्ति पञ्च**
**पञ्चेन्द्रियार्थेषु तथेन्द्रियाणि ।**
**सर्वाणि चैतानि मनोनुगानि**
**बुद्धिं मनोऽन्वेति मतिः स्वभावम् ॥ २१ ॥**

**मतिः स्वभावम्** इत्यत्र **मतिः** बुद्धिः स्वां भावयतीति **स्वभावं** स्वकारणम् ।

**शुभाशुभं कर्म कृतं यदस्य**
**तदेव प्रत्याददतेऽन्यदेहे ।**

---

१. BORI पृ. १०९७; **'जलाश्रयः तेज उक्तं रसं च'** इति कुं. पाठः ।

**मनोऽनुवर्तन्ति परावराणि**
**जलौकसः स्रोत इवानुकूलम् ॥ २२ ॥**

**कृतं** पूर्वदेहकृतम् ।

**चलं यथा दृष्टिपथं परैति**
**सूक्ष्मं महद्रूपमिवावभाति ।**
**तातप्यमानो न पतेच्च धीरः**
**परं तथा बुद्धिपथं परैति ॥ २३ ॥**

**चलं यथा** इत्यत्र **चलं** चरं सूक्ष्मं जीवस्य रूपं प्रकाशेन महदिव आभाति । **धीरः** अपरोक्षज्ञानी । 'धीरो मनीषी ज्ञः प्राज्ञः' इत्यमरः[१] । **परं** परमात्मनः स्वरूपं **बुद्धिपथं** ज्ञानिनः बुद्धिमार्गं **परैति** प्राप्नोति ।

॥ इति अष्टाविंशोऽध्यायः ॥

* * *

## ॥ अथ एकोनत्रिंशोऽध्यायः ॥

**[२]रजस्तमः सत्त्वमथो तृतीयं**
**गच्छत्यसौ ज्ञानगुणान्विरूपान् ।**
**न तैर्निबद्धः स तु बध्नाति विश्वं**
**न चानुयातीह गुणान् परात्मा ।**
**तथेन्द्रियाण्याविशते शरीरी**
**हुताशनं वायुरिवेन्धनस्थम् ॥ ३ ॥**

---

१. अ.को. द्वि. ब्रह्मवर्गः श्लो. ५
२. कुं. २०१ अध्यायः ।

**रजस्तम** इत्यत्र **विरूपान्** विविधप्रकारान् **ज्ञानगुणान्** रूपरसादि-ज्ञानाख्यगुणान् इन्द्रियाणि रजआदिगुणांश्च गच्छति ।

**न चक्षुषा पश्यति रूपमात्मनो**
**न पश्यति [1]स्पर्शनमिन्द्रियाणाम् ।**
**न श्रोत्रलिङ्गं श्रवणेन दर्शनं**
**तथा कृतं पश्यति तद्विनश्यति ॥ ४ ॥**

**न पश्यति स्पर्शनमिन्द्रियाणाम्** इत्यत्र इन्द्रियाणां मध्ये चक्षुषा **आत्मानं** परमात्मानं न पश्यति । **स्पर्शनं** त्वगिन्द्रियश्च न पश्यति । **श्रवणेन श्रोत्रलिङ्गं दर्शनं** श्रवणजनितज्ञानं परमात्मानं न पश्यति । **तथा कृतम्** इन्द्रियैः कृतं कर्म पश्यति। **तत्** तस्मात् कारणात् विनश्यति ।

**श्रोत्रादीनि न पश्यन्ति स्वं स्वमात्मानमात्मना ।**
**सर्वज्ञः सर्वदर्शी च क्षेत्रज्ञस्तानि पश्यति ॥ ५ ॥**

**स्वं स्वमात्मानं** स्वस्वरूपं न पश्यति ।

**यथा हिमवतः पार्श्वं पृष्ठं चन्द्रमसो यथा ।**
**न दृष्टपूर्वं मनुजैर्न च तन्नास्ति तावता ॥ ६ ॥**

**यथा हिमवत** इत्यत्र **चन्द्रमसः** चन्द्रमण्डलस्य **पृष्ठम्** उपरिभागः ।

**पश्यन्नपि यथा लक्ष्म [2]जगत्सोमे न विन्दति ।**
**एवमस्ति [3]न वेत्यन्यः न च तन्न परायणम् ॥ ८ ॥**

---

१. K6,B9,D2,3; **'स्पर्शनमिन्द्रियेन्द्रियम्'** इति कुं.पाठः । BORI पृ. १०९९
२. BORI १०९९; **'जनः सोमेन'** इति कुं.पाठः ।
३. **'न चोत्पन्नम्'** इति कुं.पाठः ।

**पश्यन्नपि यथा लक्ष्म** इत्यत्र **जगत्** जगति सोमे लक्ष्म **पश्यन्नपि** पुरुषः यदा **न विन्दति** आन्तं न जानाति तथा उत्तमज्ञानी परमात्मानं पश्यति । **अन्यः** मध्यमजीवः अस्ति न वेति **वेत्ति । परायणं** मुक्ताधारं नारायणम् **अन्यः** मिथ्याज्ञानी न वेत्ति ।

**रूपवन्तमरूपत्वादुदयास्तमये बुधाः ।**
**धिया समनुपश्यन्ति तद्गताः सवितुर्गतिम्** ॥ ९ ॥

**रूपवन्तम्** इत्यत्र **अरूपत्वात्** लौकिकरूपरहितत्वात् **तद्गताः** तन्निष्ठाः **रूपवन्तं** सवितारं सवितुर्गतिं च धिया पश्यन्ति ।

**तथा बुद्धिप्रदीपेन दूरस्थं सुविपश्चितः ।**
**प्रत्यासन्नं निषीदन्ति ज्ञेयं ज्ञानाभिसंहितम्** ॥ १० ॥

**प्रत्यासन्नं निषीदन्ति** इत्यत्र **निषीदन्ति** जानन्ति ।

**क्षीणकोशो ह्यमावास्यां चन्द्रमा न प्रकाशते ।**
**तद्वन्मूर्तिविमुक्तोऽसौ शरीरी नोपलभ्यते** ॥ १६ ॥

**क्षीणकोशो ह्यमावास्याम्** इत्यत्र **क्षीणकोशः** क्षीणमण्डलः ।

**जन्मवृद्धिः क्षयश्चास्य प्रत्यक्षेणोपलभ्यते ।**
**सा तु चन्द्रमसो व्यक्तिर्न तु तस्य शरीरिणः** ॥ १८ ॥

**सा तु चन्द्रमस** इत्यत्र **चन्द्रमसश्च**न्द्रमण्डलस्य ।

॥ इति एकोनत्रिंशोऽध्यायः ॥

* * *

## ॥ अथ त्रिंशोऽध्यायः ॥

[1]**तर्षच्छेदो न भवति पुरुषस्येह कल्मषात् ।**
[2]**निवर्तते तथा तर्षः पापमन्तर्गतं यदा ॥ ६ ॥**

**निवर्तते तथा तर्ष** इत्यत्र **तर्षः** अभिलाषः । **निवर्तते** पुनःपुनरावर्तते ।

**अन्तर्गतेन पापेन दह्यमानेन चेतसा ।**
**शुभाशुभविकारेण न स भूयोऽभिजायते ॥ ७ ॥**

**न स भूयोऽभिजायत** इत्यत्र **भूयः** भूयान् = श्रेष्ठः न जायते ।

**इन्द्रियेभ्यो मनः पूर्वं बुद्धिः परतरा ततः ।**
**बुद्धेः परतरं ज्ञानं ज्ञानात् परतरं परम् ॥ ११ ॥**

**इन्द्रियेभ्यो मनः पूर्वम्** इत्यत्र **इन्द्रियेभ्यः** इन्द्रियाभिमानिदेवेभ्यः । **मनः** मनोभिमानी रुद्रः । **बुद्धिः** सरस्वती । **ज्ञानं** विज्ञानतत्त्वं ब्रह्मा । **परं** परब्रह्म ।

**अव्यक्तात् प्रसृतं ज्ञानं ततो बुद्धिस्ततो मनः ।**
**मनः श्रोत्रादिभिर्युक्तं शब्दादीन् साधु पश्यति ॥ १२ ॥**

**अव्यक्तात्** प्रकृतेः ।

**यस्तांस्त्यजति शब्दादीन् सर्वांश्च व्यक्तयस्तथा ।**

---

१. कुं. २०२ अध्यायः ।
२. BORI पृ. ११०२; **'निवर्तते तदा'** इति कुं.पाठः ।

**प्रसृतानीन्द्रियाण्येव प्रतिसंहरति कूर्मवत् ।**
**विमुञ्चत्याकृतिग्रामांस्तान् मुक्त्वाऽमृतमश्नुते ॥ १३ ॥**

**सर्वाश्च व्यक्तयस्तथा** इत्यत्र **व्यक्तयः** व्यक्तीः = शब्दादीनां ज्ञानानि । **ग्रामान्** इन्द्रियग्रामान् ।

**ग्रस्तं ह्युद्गिरते नित्यमुद्गीथं वेत्ति नित्यशः ।**
**बाल्ये रथाभ्यां योगेन तत्त्वज्ञानं तु सम्मतम् ॥ १५ ॥**

**बाल्ये रथाभ्याम्** इत्यत्र **बाल्ये रथाभ्यां** रथस्थानीयाभ्यां स्थूलदेहलिङ्गदेहाभ्याम् ।

**स एवास्तमुपागच्छंस्तदेवात्मनि यच्छति ।**
**अपेतः[1] सर्वभूतानां रसभूतं विकोशवान्[2] ॥ १६ ॥**

यः अपेतः **विकोशवान्** प्राकृतदेहरहितः ।

**विषया विनिवर्तन्ते निराहारस्य देहिनः ।**
**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ १९ ॥**

**विषया विनिवर्तन्त** इत्यत्र **रसः** आकाङ्क्षा तस्य **वर्जो** वर्जनं यथा भवति । विषयनिवृत्तावपि तत्र रागो न निवर्तते । एतादृशः रसः **परं** परमात्मानं दृष्ट्वा निवर्तते ।

**बुद्धिः कर्मगुणैर्हीना यदा मनसि वर्तते ।**
**तदा सम्पद्यते ब्रह्म तत्रैव प्रलयं गतम् ॥ २० ॥**

---

१. **'आदत्ते सर्वभूतानाम्'** इति कुं.पाठः ।
२. **'विकासवान्'** इति कुं. पाठः ।

**तत्रैव प्रलयं गतम्** इत्यत्र **तत्र** गुणेषु **प्रलयं** प्रकर्षेण लयः सम्बन्धो यस्य तम् । 'लीङ् श्लेषणे' इति धातुः ।

**अस्पर्शनमशृण्वानमनास्वादमदर्शनम् ।**
**अघ्राणमवितर्कं च सत्त्वं प्रविशते परम् ॥ २१ ॥**

**अस्पर्शनम्** इत्यत्र स्पर्शादिविषयरहितम् । **सत्त्वं** चित्तम् । **परं** परमात्मानं विशते ।

**अव्यक्तात् प्रसृतं ज्ञानं ततो बुद्धिस्ततो मनः ।**
**[१]आत्मनः प्रसृतावादिरव्यक्तं ज्ञानमुच्यते ॥ २२ ॥**

**आत्मनः प्रसृतौ** इत्यत्र **आत्मनः** परमात्मनः **प्रसृतौ** प्राप्तौ । **आदिः** आदिकारणम् । **ज्ञानं** विज्ञानतत्त्वं ब्रह्म । **अव्यक्तं** विषयव्यक्तिरहितम् ।

**तस्माद्बुद्धिः स्मृता तज्ज्ञैर्मनस्तस्मात्ततः स्मृतम् ।**
**तस्मादाकृतयः पञ्च मनः परममुच्यते ॥ २३ ॥**

**तस्मादाकृतय** इत्यत्र **आकृतयः** व्यञ्जकनासाद्याकारवन्ति पञ्चेन्द्रियाणि ।

**तस्मात् परतरा बुद्धिर्ज्ञानं तस्मात् परं स्मृतम् ।**
**ततः सूक्ष्मस्ततो ह्यात्मा तस्मात् परतरं न च ।**
**इन्द्रियाणि निरीक्षन्ते मनसैतानि सर्वशः ॥ २४ ॥**

**ततः सूक्ष्मस्तत** इत्यत्र **ततः** तस्मात् विज्ञानतत्त्वात् सूक्ष्मः । **ततः** व्याप्तः । **आत्मा** परमात्मा ।

---

१. 'आत्मनः प्रसृता बुद्धिरव्यक्तम्' इति कुं. पाठः ।

**नेन्द्रियैर्मनसः सिद्धिर्न बुद्धिं बुध्यते मनः ।**
**न बुद्धिर्बुद्ध्यतेऽव्यक्तं सूक्ष्मं त्वेतानि पश्यति ॥ २६ ॥**

**न बुद्धिः** इत्यत्र व्यक्तिषु दृश्यमानदेहिदेहेषु स्थितम् ।

**॥ इति मनुबृहस्पतिसंवादे त्रिंशोऽध्यायः ॥**

## ॥ अथ एकत्रिंशोऽध्यायः ॥

**भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत् ।**[१]
**चिन्त्यमानं हि चाभ्येति भूयश्चापि प्रवर्तते ॥ २ ॥**

**यदेतन्नानुचिन्तयेत्** इत्यत्र एतत् दुःखम् ।

**न जानपदिकं दुःखमेकः शोचितुमर्हति ।**
**अशोचन् प्रतिकुर्वीत यदि पश्येदुपक्रमम् ॥ ५ ॥**

**यदि पश्येदुपक्रमम्** इत्यत्र **उपक्रमं** दुःखपरिहारोपक्रमम् ।

**दुःखमर्था हि युज्यन्ते पालने न[२] च ये सुखम् ।**
**दुःखेन चाधिगम्यन्ते नाशमेषां न चिन्तयेत् ॥ ८ ॥**

**दुःखेन चाधिगम्यन्त** इत्यत्र **ये** धनधान्यगेहादयः **दुःखेन अधिगम्यन्ते** एषामिति सम्बन्धः ।

**सेयं गुणवती बुद्धिर्गुणेष्वेवाभिवर्तते ।**
**अपरा[३] त्वभिनिःस्रौति गिरेः शृङ्गादिवोदकम् ॥ ११ ॥**

**अपरा त्वभिनिःस्रौति** इत्यत्र **अपरा** गुणेष्वासङ्गरहिता ।

---

१. कुं. २०३ अध्यायः । २. 'न च ते सुखम्' इति कुं. पाठः ।
३. 'अपरादभिनिःस्रौति' इति कुं.पाठः ।

**यदा निर्गुणमाप्नोति ध्यानं मनसि पूर्वजम् ।**
**तदा प्रज्ञायते ब्रह्म निकषं निकषे यथा ॥ १२ ॥**

**निकषं निकषे यथा** इत्यत्र **निर्गुणं** रूपादिगुणासक्तिरहितं यथा भवति तथा । **निकषे** निकषाश्मनि **निकषं** नितरां कषणं प्राप्तं सुवर्णं यथा **प्रज्ञायते** तथेत्यर्थः ।

**मनस्त्वसंहृतं बुद्ध्या हीन्द्रियार्थनिदर्शकम् ।**
**न समर्थं गुणापेक्षि [१]निर्गुणस्य निदर्शनम् ॥ १३ ॥**

**निर्गुणस्य निदर्शनम्** इत्यत्र **निर्गुणस्य** प्राकृतरूपरसादिगुण-रहितस्य **निदर्शनं** ज्ञापकम् ।

**यथा महान्ति भूतानि निवर्तन्ते गुणक्षये ।**
**तथेन्द्रियाण्युपादाय बुद्धिर्मनसि वर्तते ॥ १५ ॥**

**निवर्तन्ते गुणक्षय** इत्यत्र **गुणक्षये** रूपादिगुणपञ्चकाख्यतन्मात्र-नाशे ।

**गुणवद्भिर्गुणोपेतं [२]यदा ध्यानगुणं मनः ।**
**तदा सर्वान् गुणान् हित्वा निर्गुणं प्रतिपद्यते ॥ १७ ॥**

**गुणवद्भिः** इत्यत्र **गुणवद्भिः** इन्द्रियैः । **गुणोपेतं** प्रत्याहाराख्य-गुणोपेतम् । मनः यदा ध्यानगुणं भवेत् । **निर्गुणं** प्राकृतरूपादिगुण-रहितं परमात्मानं प्रतिपद्यते ।

१. BORI पृ. ११०६; **'निर्गुणस्य निदर्शने'** इति कुं.पाठः ।
२. BORI पृ. ११०६; **'यदा ध्यानगतं मनः'** इति कुं.पाठः ।

**तपसा चानुमानेन गुणैर्जात्या श्रुतेन च ।**
**निनीषेत्परमं ब्रह्म विशुद्धेनान्तरात्मना ॥ १९ ॥**

**तपसा चानुमानेन** इत्यत्र **गुणैः** भगवन्निष्ठसर्वज्ञत्वाद्यसाधारणगुणैः **जात्या** सर्वेश्वरत्वजात्या । अतः पूर्वमपि निर्गुणपदेन प्राकृतगुणराहित्यमेव वक्तव्यम् । अन्यथा पूर्वोत्तरविरोध इति भावः ।

**गुणहीनो हि तं मार्गं बहिः समनुवर्तते ।**
**गुणाभावात् प्रकृत्या वा निस्तर्क्यं ज्ञेयसंमितम् ॥ २० ॥**

**गुणहीनो हि** इत्यत्र बहिः **गुणाः** रूपरसादिगुणाः तैर्हीनः । **गुणाभावात्** रूपरसादिगुणेष्वासङ्गाभावात् । **प्रकृत्या** योग्यतया ।

**नैर्गुण्याद्ब्रह्म चाप्नोति सगुणत्वान्निवर्तते ।**
**गुणप्रसारिणी बुद्धिर्हुताशन इवेन्धने ॥ २१ ॥**

**नैर्गुण्यात्** स्वान्य(बाह्य)रूपादिगुणेषु आसक्तिशून्यत्वात् । **सगुणत्वात्** बाह्यगुणेषु आसक्तिमत्वात् ।

**गुणप्रसारिणी** इत्यत्र **गुणप्रसारिणी** रूपरसादिगुणप्रसारिणी ।

**यदा पञ्च विमुक्तानि[१] इन्द्रियाणि स्वकर्मभिः ।**
**तदा तत्परमं ब्रह्म संमुक्तं प्रकृतेः परम् ॥ २२ ॥**

**स्वकर्मभिः** स्वविषयैः रूपरसादिभिः, पञ्चेन्द्रियाणि विमुक्तानि यदा भवन्ति । उपसंहारे स्वकर्मभिः इति पञ्चेन्द्रियविषयभूतरूपरसादिप्राकृतगुणानां स्पष्टमुक्तत्वात् प्रागपि गुणशब्देन रूपाण्येवोच्यन्ते ।

---

१. BORI पृ. ११०७ ; '**वियुक्तानि**' इति कुं.पाठः ।

[१] **एकस्याद्या प्रवृत्तिस्तु प्रधानात् सम्प्रवर्तते ।**
**द्वितीया मिथुनव्यक्तिमविशेषान्नियच्छति ॥ २५ ॥**

**प्रधानात्सम्प्रवर्तत** इत्यत्र **एकस्य** सकलजीवप्रधानस्य चतुर्मुखब्रह्मणः **आद्या प्रवृत्तिः** सृष्टिः **प्रधानात्** केवलं मूलप्रकृतेः सम्प्रवर्तते ।

[२] (*)**अन्यथा सम्प्रवृत्तिम्** इत्यत्र **अन्यथा** प्रकृतेर्या विकृतिः । सा अन्यथेत्युच्यते ।

(*)**एका शोचति** इत्यत्र एका प्रसवकर्त्री नारी **नित्यशः** । गर्भोत्पत्तेरुपरि दशमासपर्यन्तं गर्भधारणेन पुनः प्रसवेन पश्चात् तत् पोषणादिना शोचति । अत एव नित्यशः इत्युक्तम् ।

॥ इति एकत्रिंशोऽध्यायः ॥

* * *

## ॥ अथ द्वात्रिंशोऽध्यायः ॥

[३] **यथा हि सारं जानाति न कथञ्चन संस्थितम् ।**
**परकायच्छविस्तद्वद्देहेऽयं चेतनस्तथा ॥ २ ॥**

**यथा हि सारं जानाति** इत्यत्र **यथा हि** यथावत् न जानाति ।

**इदं विना परं नास्ति नेदमस्ति परं विना ।**
**जीवात्मना त्वसौ भिन्नस्त्वेष चैव परात्मना ॥ ४ ॥**

---

१. BORI पृ. ११०७; **'एतस्याद्या'** इति कुं.पाठः ।
२. (*)एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
३. कुं. २०४ अध्यायः ।

**इदं विना परम्** इत्यत्र **इदम्** इहलोके क्रियमाणं पुण्यम् । **परं** परलोकस्थदेवताकृपां विना **इदं** पुण्यं **नास्ति** ।

**जीवात्मना त्वसौ भिन्नः एष चैव परात्मना** इत्यत्र जीवात्मना **असौ** परमात्मा भिन्नः । **एषः** जीवात्मा परमात्मना भिन्नो वै । **वै** इत्यनेन 'द्वासुपर्णा'[१] इति श्रुति(द्वैत)प्रसिद्धिं सूचयति ।

**तत्तथेति विदुः केचिदतथ्यमिति चापरे ।**
**उभयं मे मतं विद्वन्मुक्तिहेतौ समाहितम् ॥ ५ ॥**

**उभयं मे मतम्** इत्यत्र **उभयं** जीवप्रतियोगिकपरमात्मनिष्ठभेदः । परमात्मप्रतियोगिकजीवनिष्ठभेदश्चेत्युभयम् । न तु सत्यत्वं मिथ्यात्वं च विरोधात् ।

**विमुक्तैश्च मृगः सोऽपि दृश्यते संयतेन्द्रियः ।**
**सर्वेषां न हि दृश्यो हि तटिद्वत् स्फुरति ह्यसौ ॥ ६ ॥**

**विमुक्तैश्च मृग** इत्यत्र विमुक्तैरपि **मृग्यते** विचार्यते इति **मृगः** ।

**ब्राह्मणस्य समादृश्यो वर्तते सोऽपि किं पुनः ।**
**विद्यते परमः शुद्धः साक्षिभूतो विभावसुः ॥ ७ ॥**

**ब्राह्मणस्य** इत्यत्र **ब्राह्मणस्य** चतुर्मुखब्रह्मणः **समादृश्यः** सं सम्यक् आसमन्तादृदृश्यः । समतया दृश्यो वा । **सः** परमात्मा, अन्येषां किं पुनः ? **विभावसुः** विशेषेण **भा** प्रभैव **वसु** द्रव्यं यस्य ।

**श्रुतिरेषा ततो नित्या तस्मादेकः परो मतः ।**
**न प्रयोजनमुद्दिश्य चेष्टा तस्य महात्मनः ॥ ८ ॥**

---

१. आ.उ. ५-१

**श्रुतिरेषा** इत्यत्र **एषा** 'द्वासुपर्णा'[१] इत्यादिका, 'यत्तदद्रेश्यमग्राह्यम्'[२] इत्यादिका, 'एष सर्वेश्वरः'[३] इत्यादिका। **चेष्टा** जगत्सृष्ट्यादिचेष्टा।

**नानासंस्थेन भेदेन सदा गतिविभेदवित्[४]।**
**तस्य भेदः समाख्यातो भेदो ह्यस्ति तथाविधः ॥ ९ ॥**

**नानासंस्थेन भेदेन** इत्यत्र नानाविधजीवेषु संस्थेन **भेदेन** निमित्तेन **गतिविभेदवित्** गतिः मोक्ष-नित्यसंसार-तमोरूपा तस्याः विभेदवित्। भेदोऽपि **तथाविधः** परमात्मसदृशोऽस्ति। स यथा परमार्थः, एवं भेदोऽपि परमार्थ इत्यर्थः। धर्मिसत्तासमानसत्ताक (समसत्ताक) इति भावः।

**एवं विद्वन्विजानीहि परमात्मानमव्ययम्।**
**तत्तद्गुणविशेषेण सञ्ज्ञानामानुसंयुतम्[५] ॥ १० ॥**

**सञ्ज्ञानामानुसंयुतम्** इत्यत्र **सञ्ज्ञानामानि** कर्ता हर्ता (भर्ता) (पिता) पाता नियन्तेत्यादिसञ्ज्ञारूपाणि नामानि मुख्यनामानीत्यर्थः। तैः **अनु** अनुकूलतया **संयुतम्**।

**सर्वेश्वरः सर्वमयः स च सर्वप्रवर्तकः।**
**सर्वात्मकः सर्वशक्तिः सर्वकारणकारणम् ॥ ११ ॥**
**सर्वसाधारणः सर्वैरुपास्यश्च महात्मभिः।**

---

१. आ.उ. ५-१; २. आ.उ. १-६
३. बृ.उ. ६-४-२९
४. '**गतिविभेदवत्**' इति कुं. पाठः।
५. '**सञ्ज्ञानामनुसंयुतम्**' इति कुं.पाठः।

तान्येव नामान्याह **सर्वेश्वर इत्यादिना**। अतः पूर्वोक्तं निर्गुणत्वमपि प्राकृतगुणराहित्येनैव न तु सर्वथा गुणराहित्येन। सर्वेश्वरत्वादिगुणानां मयैव वर्ण्यमानत्वादिति बृहस्पतेर्हृदयम्। **सर्वमयः** सर्वप्रधानः, **सर्वात्मकः** सर्वान्तर्यामी **सर्वसाधारणः सर्वेषु** हीनोच्चप्राणिषु, **साधारणः** स्वयमेकः प्रधानः (प्रकारः)।

**यदा ते पञ्चभिः पञ्च युक्तानि मनसा सह।**
**अथ तद्द्रक्ष्यते ब्रह्म मणौ सूत्रमिवार्पितम्** ॥ १३ ॥

**यदा ते पञ्चभिः** इत्यत्र **पञ्चभिः** रूपादिविषयैः **युक्तानि** पञ्चेन्द्रियाणि मनसा सह यदा ते तव वशगाः।

**तद्वद्गोऽश्वमनुष्येषु तद्वद्धस्तिमृगादिषु।**
**तद्वत्कीटपतङ्गेषु प्रसक्तात्मा स्वकर्मभिः** ॥ १५ ॥

**प्रसक्तात्मा स्वकर्मभिः** इत्यत्र **स्वकर्मभिः** स्वस्य प्रेरकत्व-साक्षित्व-सञ्जीवकत्वादिकर्मभिर्निमित्तैः **प्रसक्तः** सम्बद्धः **आत्मा** स्वरूपं यस्य परमात्मनः स तथोक्तः। यद्वा **स्वैः कृतानि** पुण्यपापादिकर्माणि येषां ते जीवाः **स्वकर्माणः**, तैः सह **प्रसक्तात्मा** अन्तर्यामितया प्रकर्षेण सम्बद्धस्वरूपो नारायणः।

पूर्वं परमात्मस्वरूपमुक्त्वा इदानीं जीवस्वभावमाह **येन येनेति**।

**येन येन शरीरेण यद्यत् कर्म करोत्ययम्।**
**तेन तेन शरीरेण तत्तत्फलमुपाश्नुते** ॥ १६ ॥
**यथा ह्येकरसा भूमिरोषध्यात्मानुसारिणी।**[१]
**तथा कर्मानुगा बुद्धिरन्तरात्माऽनुदर्शिनी** ॥ १७ ॥

---

१. BORI पृ ११०८; **'भूमिरोषध्यर्थानुसारिणी'** इति कुं. पाठः।

**ओषध्यात्मानुसारिणी** इत्यत्र **एकरसा** भिन्नभिन्नरसा एकीभूत नानारसा वा । [1]'एके मुख्यान्यकेवलाः' इत्यमरः । **ओषधीनां** वनस्पतीनाम् **आत्मा** स्वभावः तदनुसारिणी । तिक्तेषु तिक्तरसदायिनी, मधुरेषु मधुररसदायिनी, आम्लेषु आम्लरसदायिनीत्यानुरूप्येणा**नुसारिणी** तथा बुद्धिः त्रिगुणात्मिका **बुद्धिः** बुद्धितत्त्वं **कर्मानुगा** तत्तत्कृतकर्मानुगा **अन्तरात्मानुदर्शिनी अन्तरात्मा अन्तः** देहान्तर्विद्यमानो जीवः । तस्य **आत्मा** स्वभावः । **अनुदर्शिनी** तस्य आनुकूल्येन दर्शयति परतत्त्वमिति अनुदर्शिनी । उत्तमेषु सात्त्विकी । मध्यमेषु राजसी । अधमेषु तामसीत्यर्थः ।

**ज्ञानपूर्वोद्भवा लिप्सा लिप्सापूर्वाभिसन्धिता ।**
**अभिसन्धिपूर्वकं कर्म कर्ममूलं ततः फलम्** ॥ १८ ॥

**ज्ञानपूर्वोद्भवा** इत्यत्र ज्ञानपूर्वः **उद्भवः** उत्पत्तिः यस्याः सा **लिप्सा** लब्धुमिच्छा । ज्ञानात् तत्रेच्छा भवतीत्यर्थः । **अभिसन्धिता** अभितः सन्धिर्विषयसन्निधानं यस्य तस्य भावः, अभिसन्धिता । **कर्म** तद्योगाख्यकर्म । **फलं** सुखफलम् ।

**फलं कर्मात्मकं विद्यात् कर्म ज्ञेयात्मकं तथा ।**
**ज्ञेयं ज्ञानात्मकं विद्याज्ज्ञानं सदसदात्मकम्** ॥ १९ ॥

**फलं कर्मात्मकम्** इत्यत्र **कर्मात्मकं** कर्मानुकूलम् । **ज्ञेयात्मकं** ज्ञेयो ज्ञानयोग्यो जीवः । **तदात्मकं** तदनुकूलम् । **सदसदात्मकं सत्** उत्तमं ज्ञानम् **असत्** अधमं, सदसत् मिश्रं चेति त्रिविधमित्यर्थः ।

---

१. अ.को. तृ. नानार्थवर्गः श्लो. १६

**[1] तदेवमिष्यते ब्रह्म शासनाद्विनिभिद्यते ।**
**ज्ञानानां च फलानां च ज्ञेयानां कर्मणां तथा ॥ २० ॥**

**तदेवमिष्यत** इत्यत्र **तत्** तस्मात् कारणात् **तत्** ब्रह्म **एवं** मदुक्तरीत्या **इष्यते** सज्ज्ञानैः प्राप्यते, प्राप्त्यनन्तरं मुक्तावपि **शासनात्** । मुक्तानाम् अनुशासनात् **विनिभिद्यते** विशेषेण भिद्यते ।

**[2] ज्ञेयान्ते यत्फलं विद्याज्ज्ञानं ज्ञेये प्रतिष्ठितम् ॥ २० ॥**

**ज्ञेयान्ते यत्फलम्** इत्यत्र **ज्ञेयं** ज्ञातुं योग्यं शास्त्रं तस्य **अन्ते** निश्चये सति **यत्फलं** फलभूतं दिव्यं ज्ञानं तत् **ज्ञेये** ज्ञानयोग्ये जीवे सम्यक् तिष्ठति न त्वन्यत्र ।

**महद्धि परमं भूतं युक्ताः पश्यन्ति योगिनः ।**
**अबुधास्तं न पश्यन्ति ह्यात्मस्थः गुणबुद्धयः ॥ २१ ॥**

**गुणबुद्धयः** रूपादिविषयलम्पटाः ।

इदानीं हरेः सर्वोत्तमत्वं वक्तुं देवतातारतम्यमाह– **पृथिव्याः इति** ॥

**[3] पृथिव्या रूपतो रूपमपामिह महत्तरम् ।**
**अद्भ्यो महत्तरं तेजस्तेजसः पवनो महान् ॥ २२ ॥**

**पृथिव्याः** पृथिव्यभिमानिदेवतायाः **रूपतः** स्वरूपात् अपां रूपं महत्तरम् ।

---

१. **'तदेवमिष्यते ब्रह्म सङ्ख्यानाद्विनिभिद्यते'** इति कुं. पाठः ।

२. $V_1, B_{0.6.8.9}$; **'क्षयान्ते यत्फलं विद्याज्ज्ञानं ज्ञेयप्रतिष्ठितम्'** इति कुं. पाठः । BORI पृ ११०७.

३. **'पृथिवीरूपतो'** इति कुं.पाठः ।

**पवनाच्च महद्व्योम तस्मात् परतरं मनः।**
**मनसो महती बुद्धिर्बुद्धेः कालो महान् स्मृतः ॥ २३ ॥**

**कालः** 'कल ज्ञाने' इति धातोः **कालः** नित्यापरोक्षज्ञानी ब्रह्मा।

**अनादित्वादमध्यत्वादनन्तत्वाच्च सोऽव्ययः।**
**अत्येति सर्वदुःखानि दुःखं ह्यन्तवदुच्यते ॥ २५ ॥**

**दुःखं ह्यन्तवदुच्यत** इत्यत्र **अन्तवत्** नाशवत्। जीवजातं दुःखं हि दुःखवद्धि।

**तद्ब्रह्म परमं प्रोक्तं तद्धाम परमं पदम्।**
**तद्गत्वा कालविषयाद्विमुक्ता मोक्षमाश्रिताः ॥ २६ ॥**

**कालविषयात्** मृत्युविषयात्।

**गुणेष्वेते प्रकाशन्ते निर्गुणत्वात्ततः परम्।**
**निवृत्तिलक्षणो धर्मस्तथाऽऽनन्त्याय कल्पते ॥ २७ ॥**

**गुणेष्वेत** इत्यत्र **एते** जीवाः **गुणेषु** रूपादिगुणपञ्चकेषु **प्रकाशन्ते**। **निर्गुणत्वात्** गुणलांपट्यरहितत्वात् **ततः** जीवसमूहात् **परं** विलक्षणं ब्रह्म प्रकाशते।

**ऋचो यजूंषि सामानि शरीराणि व्यपाश्रिताः।**
**जिह्वाग्रेषु प्रवर्तन्ते यज्ञसाध्याविनाशिनः[१] ॥ २८ ॥**

**यज्ञसाध्याविनाशिन** इत्यत्र **यज्ञेन** परमात्मना, साध्यः अविनाशी मोक्षो यस्य तस्य जिह्वाग्र इति सम्बन्धः।

---

१. $K_7, D_{4,9}$; **'यत्नसाध्याविनाशिनः'** इति कुं.पाठः। BORI पृ १११०

**न चैवमिष्यते ब्रह्म शरीराश्रयसम्भवम् ।**
**न यत्नसाध्यं तद्ब्रह्म नादिमध्यं न चान्तवत् ॥ २९ ॥**

**शरीराश्रयसम्भवं** शरीराश्रयाणां जीवानां **सम्भवः** उत्पत्तिर्यस्मात् तत् ब्रह्म, एवं जीववत् **नेष्यते** नाङ्गीक्रियते सज्ज्ञानैः (सज् ज्ञानैः) ।

**गुणान्यदिह पश्यन्ति तदिच्छन्त्यपरे जनाः ।**
**परं नैवाभिकाङ्क्षन्ति निर्गुणत्वाद्गुणार्थिनः ॥ ३४ ॥**

**गुणान्यदिह** इत्यत्र **गुणान्** रूपादिविषयान् । **निर्गुणत्वात्** विषयाणामतिदूरत्वात् । **गुणार्थिनः** विषयार्थिनः ।

**गुणैर्यस्त्ववरैर्युक्तः कथं विद्याद्गुणानिमान्[2] ।**
**अनुमानाद्धि[1] मन्तव्यं गुणैरवयवैः सह ॥ ३५ ॥**

**गुणैर्य** इत्यत्र **अवरैः** अधमैः **गुणैः** रूपरसादिभिः **इमान्** उत्तमान् **गुणान्** सर्वेश्वरत्वादिभगवद्गुणान् । सर्वथा निर्गुणत्वं निराकारत्वं च न विद्वज्जनमतम् इति भावेनाह – **अनुमानाद्धि मन्तव्यं गुणैरवयवैः सहेति ॥ अनुमानात्** सकलजगत्कर्तृत्वाख्यानुमानात् परब्रह्म**गुणैः** सर्वज्ञत्वादिगुणैः **अवयवैः** ज्ञानानन्दमयकरचरणाद्यवयवैः सह **मन्तव्यं** ज्ञातव्यम् । सर्वज्ञत्वाभावे सकलभुवनाश्रयविश्वरूपाख्यमहादेहाभावे च जगत्कर्तृत्वायोगादिति भावः ।

**सूक्ष्मेण मनसा विद्मो वाचा वक्तुं न शक्नुमः ।**
**मनो हि मनसा ग्राह्यं दर्शनेन च दर्शनम् ॥ ३६ ॥**

---

१. $T_1, G_{1,3,6}$; '**अनुमानाद्धि गन्तव्यम्**' इति कुं.पाठः । BORI पृ ११११
२. '**परम्**' इति कुं. पाठः ।

**मनो हि मनसा** इत्यत्र मनः **मनसा** अवबोधेन **ग्राह्यं** निग्राह्यम्। **दर्शनेन** विषयेषु दोषदर्शनेन **दर्शनं** विषयदर्शनं **ग्राह्यं** निग्राह्यम्।

**ज्ञानेन निर्मलीकृत्य बुद्धिं बुद्ध्या मनस्तथा।**
**मनसा चेन्द्रियग्राममक्षरं प्रतिपद्यते** ॥ ३७ ॥

ज्ञानेन **बुद्ध्या** निश्चयेन च मनः बुद्धिं च निर्मलीकृत्य।

**बुद्धिप्रहीणो मनसा समृद्ध-**
**स्तथाऽनिराशीर्गुणतामुपैति।**
**परं त्यजन्तीह विलोभ्यमाना**
**हुताशनं वायुरिवेन्धनस्थम्** ॥ ३८ ॥

**बुद्धिप्रहीणः** बुद्धिहीनः (दुर्बुद्धिहीनः) **मनसा** भगवद्विषयकमनसा समृद्धः, अनिराशीरिति गुणो यस्य सः **अनिराशीर्गुणः** तस्य भावः **अनिराशीर्गुणता**। नैराश्यं इति यावत् ताम्। **विलोभ्यमानाः** विषयैः वञ्च्यमानाः।

**गुणादाने विप्रयोगे च तेषां मनः सदा विद्धि परावराभ्याम्।**
**अनेनैव विधिना सम्प्रवृत्तौ गुणादाने ब्रह्मशरीरमेति** ॥ ३९ ॥

**गुणादान** इत्यत्र **परावराभ्यां** हीनोच्चविषयाभ्यां निमित्ताभ्यां **तेषां** विषयलम्पटानां **गुणादाने** समीचीनरूपादिगुणादाने **विप्रयोगे** असमीचीनरूपादिगुणविप्रयोगे च विद्धि। **अनेनैव विधिना गुणादाने** अप्राकृतदिव्यरूपरसज्ञानादिब्रह्मणः गुणानाम् **आदाने** अङ्गीकारे उपलक्षणं चैतत्। अधमानां रूपादिप्राकृतगुणानां वियोगाच्च। अन्यथा

अनैनेव विधिनेत्यस्य अनन्वयप्रसङ्गात् । **ब्रह्मशरीरं** वैकुण्ठादिलोकस्थितपरब्रह्मणः शरीरम्, **एति** प्राप्नोति । निर्गुणनिराकारब्रह्मावाप्तिर्मोक्षो नेति सूचयितुं **ब्रह्मशरीरम्** इत्युक्तम् ।

**अव्यक्तात्मा पुरुषोऽव्यक्तकर्मा**
**सोऽव्यक्तत्वं गच्छति ह्यन्तकाले ।**
**तैरेवायं चेन्द्रियैर्वर्धमानै-**
**र्गायद्भिर्वा [1] वर्तते कर्मरूपः ॥ ४० ॥**

**अव्यक्तात्मा** अव्यक्ते परमात्मनि **आत्मा** चित्तं यस्य, **अव्यक्ते** परमात्मनि **कर्म** निवृत्तिरूपं कर्म यस्य । **अव्यक्तत्वं** व्यक्तसांसारिकदेहराहित्यं गच्छति ।

[2] **सुपुष्पितैः** सुष्ठु पुष्पस्थानीयस्वर्गसहितैः **कर्मभिः** प्रवृत्तिकर्मभिरिति यावत् ।

**सर्वैरयं चेन्द्रियैः सम्प्रयुक्तो**
**देहं प्राप्तः पञ्चभूताश्रयः स्यात् ।**
**न सामर्थ्याद्गच्छति कर्मणेह**
**हीनस्तेन परमेणाव्ययेन ॥ ४१ ॥**

**न सामर्थ्याद्गच्छति** इत्यत्र इह संसारे अव्ययेन तेन परमेण हीनः **कर्मणा** केवलप्रवृत्तिकर्मणा सहितः **सामर्थ्यात्** तत्सामर्थ्यात् **न गच्छति** परलोकं न गच्छति ।

---

१. BORI पृ. १११२; **'वर्ततेऽकामरूपः'** इति कुं.पाठः ।
२. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।

पृथ्व्या नरः पश्यति नान्तमस्या
ह्यन्तश्चास्या भविता चेति विद्धि ।
परं न यातीह विलोभ्यमानो
यथा प्लवोऽवायुरिवार्णवस्थः[१] ॥ ४२ ॥

**यथा प्लवोऽवायुरिवार्णवस्थ** इत्यत्र **अवायुः** अनुकूलवायुरहितः ।

दिवाकरो गुणमुपलभ्य निर्गुणो
यथा भवे व्यपगतरश्मिमण्डलः ।
तथा ह्यसौ मुनिरिह निर्विशेषान्
स निर्गुणः प्रविशति ब्रह्म चाव्ययम् ॥ ४३ ॥

**दिवाकरो गुणम्** इत्यत्र **गुणं** घटपटादीनां रूपादिगुणम् **उपलभ्य** स्वकिरणैः स्पृष्ट्वा अस्तमयसमये **व्यपगतरश्मिमण्डलः** । **निर्गुणः** घटादिगुणसङ्गरहितः । एवं **निर्गुणः** गुणाशारहितः **सः** ज्ञानी । निर्गुणमिति पाठे सूर्यवत् प्राकृतगुणस्पर्शरहितः ।

अनागतं सुकृतवतां परां गतिं
स्वयंभुवं प्रभवनिधानमव्ययम् ।
सनातनं यदमृतमव्ययं ध्रुवं
निचाय्य तत्परममृतत्वमश्नुते ॥ ४४ ॥

**अनागतम् आ** सम्यक् **गतं** ज्ञातं न भवतीत्यनागतम् ।

॥ इति मनुबृहस्पतिसंवादे द्वात्रिंशोऽध्यायः ॥

॥ मनुबृहस्पति संवादः समाप्तः ॥

---

१. 'यथा प्लवं वायुरिवार्णवस्थम्' इति कुं.पाठः ।

## ।। अथ त्रयस्त्रिंशोऽध्यायः ।।

**मया[1] तु तद्धनं देयं तव दास्यामि चेच्छसि ।**
**तस्य च प्रार्थितः सोऽथ दत्वा मुक्तिमवाप सः ।। १८ ।।**

**मया तु तद्धनं देयम्** इत्यत्र **मया तद्धनं** तव देहाख्यं धनं देयमिति **प्रार्थितः सः** ब्राह्मणः **तस्य** मे तद्धनं दत्वा मुक्तिमवाप । इदमेव पैतृकं धनम् । तद्धनं यदीच्छसि तर्हि तव दास्यामीति योजना ।

इत्थमन्यापदेशेन वदतो निबन्धस्य अयमभिप्रायः । महाकान्तार-मध्यस्थकूपे अधोमुखतया लम्बते इत्यनेन संसाराख्यवने गृहाख्यान्ध-कूपे अधोमुखतया पतितं स्वपितरम् अभिप्रैति । 'आत्मा वै पुत्रनामासि'[2] इति श्रुतेः तत्कृतकर्मद्वारा तस्मात् प्रापितो देहः तद्रेतोविकारः । पुत्ररूपेण स्वदेहं मयि दत्वा मम पिता स्वर्गं गतः । अहमिदानीं तद्वत् गृहान्धकूपे पतितोऽस्मि । अहमपि क्लेशकरमिदं शरीरं तुभ्यं दत्वा स्वर्गं यास्यामीति ।

**द्विषट्कपदसंयुक्तो यो हस्ती षण्मुखाकृतिः ।**
**स च संवत्सरः प्रोक्तः [3]पादा मासर्तवो मुखाः ।। २९ ।।**

**पादा मासर्तवो मुखा** इत्यत्र पादाः मुखाश्च मासर्तवः इति योजना ।

**धत्ते धारयते चैव एतस्मात् कारणाद्धनम् ।**
**तद्गच्छ चामृतं शुद्धं हिरण्यममृतं तपः ।। ३२ ।।**

---

१. कुं. २०५ अध्यायः ।
२. कौण्ठरव्य श्रुति. (२०-११)
३. 'पाशमासर्तवो मुखाः' इति कुं.पाठः ।

**धत्ते धारयते च** इत्यत्र **धत्ते** अधःपतन्तं धत्ते । **धारयते** ज्ञान-भक्त्यादिगुणान् धारयते च एतस्माद् कारणात् **धनं** धनसञ्ज्ञितं तपः गच्छ इत्युत्तरेण अन्वयः ।

**वीक्षमाणं तमाज्ञाय सा कन्या चारुवासिनी ।**
**विजजृम्भे महाभागा स्मयमाना पुनः पुनः** ॥ ४२ ॥

**विजजृम्भे महाभागा** इत्यत्र **विजजृम्भे** वक्त्रविजृम्भणं कृतवती ।

**तस्मात् समभवद्वक्त्रात् पुरुषाकृतिसंयुतः ।**
**रत्नबिन्दुचिताङ्गस्तु सर्वाभरणभूषितः** ॥ ४३ ॥

**आदित्यसदृशाकारः शिरसा धारयन्मणिम् ।**
**पुनरेव तदाकारसदृशः समजायत** ॥ ४४ ॥

**पुनरेव तदाकारः** इत्यनेन 'शिरसा धारयन् मणिम्' इत्येतदन्तं य आकार उक्तः सः त्रयाणामपि समानः इति भावः ।

**ततः सर्वेण विप्रर्षिः कन्यां प्रपच्छ तां शुभाम्** ॥ ४६ ॥

**ततः सर्वेण** इत्यत्र **सर्वेण** प्रकारेण ।

**वेदाश्च बिन्दुसंयुक्ता यज्ञस्य फलसंश्रिताः ।**
**तत्तद्दृष्टं[१] परंज्योतिर्ज्योतिरित्युच्यते बुधैः** ॥ ५२ ॥

**वेदाश्च बिन्दुसंयुक्ता** इत्यत्र **बिन्दुः** प्रणवः । **तत्तद्दृष्टम्** इत्यत्र त्रयाणां वेदानां शिरसि तत्तद्वेदोपनिषत्स्थानीये यज्ज्योतिर्दृष्टं **तत् ज्योतिः** परंज्योतिरित्युच्यते ।

---

१. **'यत्तद्दृष्टं महज्ज्योतिः'** इति कुं.पाठः ।

**ऋषे ज्ञेयं मया चाऽपीत्युक्त्वा चान्तरधीयत ।**
**ततः स विस्मयाविष्टो नारदः पुरुषर्षभ ।**
**ध्यानयुक्तः स तु चिरं न बुबोध महामतिः ॥ ५३ ॥**

**मया चाऽपि** ज्ञेयमेव, न तु स्पष्टं वक्तुं शक्यमित्युक्त्वा अन्तरधीयत ।

**वैनतेयपदस्पर्शकणशोभितजानुकम्[1] ।**
**पीताम्बरलसत्काञ्चीदामबद्धकटीतटम् ॥ ५७ ॥**

**वैनतेयपदस्पर्श** इत्यत्र वैनतेयेन स्वपदस्पर्शे क्रियमाणे सति **कणाः** ये पादारविन्दरजःकणाः उत्थिताः गरुडपक्षवातोद्धूतैः, तैः शोभित-जानुकम् ।

**नम्रचापानुकरणनम्रभ्रूयुगशोभितम् ।**
**नानारत्नमणीवज्रस्फुरन्मकरकुण्डलम् ॥ ५९ ॥**

**नानारत्नमणीवज्र** इत्यत्र **मणीनां** मुक्तामणीनाम् । ईः लक्ष्मीः । 'ईकारोऽब्जदले लक्ष्म्यां वाण्यां कमलकेसरे' इति रत्नमाला ।

**विवक्षितं जगन्नाथ मया ज्ञातं त्वयाऽच्युत ।**
**तत्प्रसीद हृषीकेश श्रोतुमिच्छामि तद्धरे ॥ ६५ ॥**

**मया ज्ञातम्** इत्यत्र मया विवक्षितं त्वया ज्ञातम् इति सम्बन्धः ।

**ये योगिनो महाप्राज्ञा मदंशा ये व्यवस्थिताः ।**
**तेषां प्रसादं देवर्षे मत्प्रसादमवैहि तत् ॥ ६८ ॥**

**मदंशा ये व्यवस्थिता** इत्यत्र मम अंशः येषु ते **मदंशाः** ।

---

१. '**-किणशोभित-**' इति कुं. पाठः । BORI पृ. २०२४

**इत्युक्त्वा स जगामाथ भगवान् भूतभावनः ।**
**तस्माद् व्रज हृषीकेशं कृष्णं देवकिनन्दनम् ॥ ६९ ॥**

**व्रज** शरणं व्रज ।

॥ इति त्रयस्त्रिंशोऽध्यायः ॥

## ॥ अथ चतुस्त्रिंशोऽध्यायः ॥

**[१]केशवो भरतश्रेष्ठ भगवानीश्वरः प्रभुः ।**
**पुरुषः सर्वमित्येव श्रूयते बहुधा विभुः ॥ ६ ॥**

**पुरुषः सर्वम्** इत्यत्र 'सुपां सुलक्' इति वचनात् **पुरुष** इति प्रथमा सप्तम्यर्थे ।

**तस्मिन्नपि महाबाहौ प्रादुर्भूते महात्मनि ।**
**तमसः पूर्वजो जज्ञे मधुर्नाम महासुरः ॥ १७ ॥**

**तमसः पूर्वज** इत्यत्र **तमसः** तमोगुणात् ।

**तस्मात्सञ्जज्ञिरे देवा ब्रह्मविष्णुमहेश्वराः ।**
**[२]सृष्टिस्थित्यन्तकर्माणस्त्रयस्ते सुमहौजसः ॥ १४ ॥**

**ब्रह्मविष्णुमहेश्वरा** इत्यत्र ब्रह्मसृष्टेः रुद्रसृष्टेश्च उपरि वक्ष्यमाणत्वात् सृष्ट्यर्थं ब्रह्मणि स्थितः ब्रह्मनामकः अवतारः एकः, पालनाय निरधिष्ठानः विष्णुनामकः अवतारः एकः । संहाराय रुद्रनामकः अवतार

---

१. कुं. २०६ अध्यायः ।
२. **'लयस्थित्यन्तकर्माणः'** इति कुं. पाठः ।

इति त्रयोऽप्यवताराः **तस्मात्** पद्मनाभमूर्तेः संजज्ञिरे इति योजना। अत एव

'स्थित्यादये हरिविरिञ्चिहरेति सञ्ज्ञाः धत्ते।'
'प्रचोदिता येन पुरा सरस्वती
वितन्वता यस्य सतीं स्थितिं हृदि॥'
'सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः।
विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक्॥'
'तथाऽसुरानाविशदासुरेण रूपेण तेषां बलवीर्यमीरयन्।
उद्दीपयन् देवगणांश्च विष्णुर्दैवेन नागेन्द्रमथापरेण॥'[1]
इत्यादि भागवते।

**एष कृष्णो महायोगी तत्तत्कार्यानुरूपिणम्[2]।**
**हिरण्यकशिपुं दैत्यं हिरण्याक्षं तथैव च** ॥ ५३ ॥

**तत्तत्कार्यानुरूपिणम्** इत्यत्र अवतारं करोतीति योग्यपदाध्याहारः।

**अक्षरं तत्परं नित्यं वैरूप्यं जगतो हरेः।**
**तद्विद्धि रूपमतुलममृतत्वं भवज्जितम्** ॥ ५९ ॥

**वैरूप्यं जगतो हरेः** इत्यत्र जगतः हरेश्च **वैरूप्यम्** क्षराक्षरत्वाभ्यां वैलक्षण्यं विद्धि।

**देहवानिव यो विष्णुरसौ मायामयो हरिः।**
**आत्मनो लोकरक्षार्थं ध्याहि नित्यं सनातनम्** ॥ ६१ ॥

---

१. भाग ८-७-११
२. 'तत्तत्कार्यानुरूपणम्' इति कुं. पाठः।

**देहवानिव यो विष्णु** इत्यत्र **देहवानिव** प्राकृतदेहवान् इव । माया-मयः इच्छाप्रधानः ।

**आत्मनो लोकरक्षार्थम्** इत्यत्र **आत्मनो लोकः** स्वभक्तलोकः ॥

**नारदोऽप्यथ कृष्णस्य परं मेने नराधिप ।**
**शाश्वतत्वं महाबाहो यथावद्भरतर्षभ ॥ ६६ ॥**

**परं मेने** इत्यत्र **परम्** उत्तमं सामर्थ्यम् ।

**॥ इति चतुस्त्रिंशोऽध्यायः ॥**

## ॥ अथ पञ्चत्रिंशोऽध्यायः ॥

**[१]शीलयौवनयोस्त्वन्यस्तथाऽन्ये सिद्धसाध्ययोः ।**
**ऋभवो मरुतश्चैव देवानां चोदितो गणः ॥ २४ ॥**

**शीलयौवनयोस्त्वन्य** इत्यत्र शीलनामकः यौवननामकश्चेति द्वौ देवानां गणौ ।

**॥ इति दिशां स्वस्तिकथनं नाम पञ्चत्रिंशोऽध्यायः ॥**

## ॥ अथ षट्त्रिंशोऽध्यायः ॥

**[२]गृहीत्वा पृथिवी देवी पाताले न्यवसत्तदा ।**
**ततस्त्रैलोक्यमखिलं निरोषधिगणान्वितम् ।**
**निःस्वाध्यायवषट्कारमभूत् सर्वं समन्ततः ॥ १३ ॥**

---

१. कुं. २०७ अध्यायः ।
२. कुं. २०८ अध्यायः ।

**गृहीत्वा पृथिवी देवी** इत्यत्र **गृहीत्वा** ओषधिवनस्पतीन् गृहीत्वा। अत्रायं भावः। हिरण्याक्षेण सर्वा पृथिवी जले निमज्जिता। तत्रापि ओषधीनामुत्पत्तौ दैत्याः सर्वे भक्षयिष्यन्ति इति भीत्या अभिमानिभूता **देवी** सूक्ष्मं रूपमास्थाय अदृश्या सती पाताले कचित्कोणे न्यवसदिति।

**तथेति चोक्त्वा भगवन् कालानलसमद्युतिः।**
**ध्यायञ्जलादनिवहान्[१] क्षणेन पपौ जलम्।**
**इति भूयः समाचक्ष्व किं करिष्यामहे विभो ॥ १८ ॥**

**ध्यायन् जलादनिवहान्** इत्यत्र समुद्रात् जलम् अदन्तीति **जलादाः** मेघाः।

तद्रूपेण **जलं पपौ** इत्यत्राप्ययमभिसन्धिः। अधुना रसातलं यावत् अधस्तात् षष्टिसहस्रयोजनात्मके प्रदेशे तिष्ठति तावदधस्तात् महीमहीधरादिभिः मिलिता इयं भूमिरेव हिरण्याक्षेण नीता। घनोदकान्तः लक्षयोजनपर्यन्तं अधस्तात् इयं भूमिर्निमज्जिता च भवति। भूमेरूर्ध्वभागस्तु इतः षष्टिसहस्रयोजनेभ्यः अधस्तात् तिष्ठति। अत एव रसातलं गतेति वार्ता। अन्यथा बहुकोटिविस्तृतभूमेः दशसहस्रयोजनात्मके भूगर्तरूपे रसातलविवरे कथं प्रवेशः स्यात्? तदा अधस्तात् विद्यमानं घनोदकं भूमेरुपरि षष्टिसहस्रयोजनोच्छ्रिते किञ्चिदधिकसप्तकोटियोजनप्रमाणभूम्यवस्थानोचितविस्तारवति च प्रदेशे सर्वत्र व्याप्तं भवति। तस्मिंश्च जले मेघरूपेण अगस्त्येन पीत्वा बहिर्घनोदक एव निक्षिप्ते सति श्रीवराहः तस्मिन्नेव प्रदेशे अधो गत्वा, भूमेरुद्धारायाधःस्थितघनोदकसमुद्रमेव प्रविश्य तस्मिन्नेव जले विहृत्य जलात् स्व-

---

१. **'ध्यायञ्जलादनिवहं स'** इति कुं.पाठः।

दंष्ट्रया भूमेरुद्धारसमये कदनार्थमागतं भूम्यन्तर्गतं हिरण्याक्षं तदनुगांश्च दैत्यान् हत्वा तामेव भूमिं यथापूर्वं स्वस्थाने संस्थाप्य विष्वक्स्थित-घनीभूततमसा सह अतिसुदृढतया सन्दधे। तस्माद्वराहस्य समुद्रे विहारः अगस्त्यजलपानं च न विरुद्धमिति।

**नादेन तेन महता सनातन इति स्मृतः।**
**पद्मनाभो महायोगी भूतात्मा भूतभावनः ॥ ३६ ॥**

**सनातन इति स्मृत** इत्यत्र नादेन सहितः सनादनः। सनादन एव **सनातनः**। निरुक्तत्वात् दकारस्य तकारः।

**एवमुक्त्वा ततो ब्रह्मा नमश्चक्रे पितामहः।**
**देवता मुनयश्चैव विष्णुं वै मुक्तिहेतवे ॥ ३४ ॥**

**विष्णुं वै मुक्तिहेतव** इत्यत्र नेमुरिति योग्यक्रियाध्याहारः॥

॥ इति षट्त्रिंशोऽध्यायः॥

## ॥ अथ सप्तत्रिंशोऽध्यायः॥

**कस्माद्भवानद्य[1] बिभेद मध्ये**
**समास्थितौ वाक्यमुदीरयन् माम्।**
**न रूपमन्यत्तव दृश्यते वै**
**ईदृग्विधस्त्वं समधिष्ठितोऽसि ॥ १ ॥**

**कस्माद्भवानद्य** इत्यत्र **भवान्** ध्यानं बिभेद।

---

१. कुं. २०९ अध्यायः। **'कस्त्वं भवानण्डं बिभेद'** इति कुं.पाठः।

**अत्रावृत्य स्थितं ह्येतत्तच्छुद्धमितरन्मृषा ।**
**एतत्ते सर्वमाख्यातं सङ्क्षेपान्मुनिसत्तम** ॥ १५ ॥

**इतरन्मृषा** इत्यत्र **मृषा** वृथा ।

**ततः प्रहस्य भगवान् मेघगम्भीरया गिरा ।**
**प्राहेशः सर्वभूतानां न मे चास्यं श्रुतिर्न च** ॥ १७ ॥

**न मे चास्यं श्रुतिर्न च** इत्यत्र प्राकृतश्रवणादिकं नास्तीत्यर्थः । सर्वथा आस्याद्यभावे **ततः प्रहस्य भगवान् मेघगम्भीरया गिरा प्राह** इति पूर्ववाक्योक्तहासप्रतिवचननारदवाक्यश्रवणादिविरोधात् ।

'आकाशे च स्थितः पूर्वमुक्तवान् अहमेव ते' इति वक्ष्यमाणत्वात् देवकीनन्दनः कृष्ण एव अयं वक्ता । तस्य च साकारत्वात् बाह्याकाररहित्यमेव **न मे चास्यं श्रुतिर्न च** इत्यादेरर्थः ।

'दिव्या बाह्या अशरीरिणी' इति प्राक् बाह्यशरीरमात्रनिषेधेन अलौकिकशरीरस्य सूचितत्वाच्च ।

**पुनस्तमाह भगवांस्तवाप्यक्षाणि सन्ति वै ।**
**त्वमेनं ब्रूहि चात्मानं यदि शक्नोषि नारद** ॥ २० ॥

**त्वमेनं ब्रूहि चात्मानम्** इत्यत्र एनं तव हृदि ध्येयतया स्थितम् **आत्मानम्** अन्तर्यामिणं परमात्मानम् ।

**आश्चर्योऽसि च धन्योऽसि ह्यनन्तोऽसि बृहत्तरः ।**
**भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय** ॥ ३४ ॥

(४३, ४६ इत्यादिश्लोकेषु)**आश्चर्योऽसि च धन्योऽसि** इत्यादिना उपर्युपरि कथ्यमानाः पृथिवीगन्धजलरसाद्याः सर्वेऽपि उत्तरप्रत्युत्तर-

दानात् तत्तदभिमानिनः तरतमभावेन स्थिता देवाः इति ज्ञेयाः । प्रश्नप्रतिवचनव्याजेन एतेषां पृथिव्यादिदेवानां तारतम्यं, परमात्मनः सकाशादत्यन्तभिन्नत्वम्, अन्ततः श्रीहरेरेव सर्वोत्तमत्वं च ज्ञापयितुं नारदस्य प्रयत्न इति समुदायाभिप्रायः । 'नाहं बृहत्तरः' इति सर्वैरपि स्वस्वरूपाणां सर्वोत्तमत्वाभावकथनेन सर्वोत्तमान्नारायणादत्यन्तभेदस्य स्पष्टमुक्तत्वात् ।

**वेदात्मा प्रत्युवाचेदं नारदं मुनिपुङ्गवम् ।**
**मया कारणभूतेन सर्ववेत्ता पितामहः ॥ ५४ ॥**

**वेदात्मा प्रत्युवाचेदम्** इत्यत्र **वेदात्म**पदेन शब्दाभिमानिनी सरस्वती कथ्यते ।

**मद्रूपं च समास्थाय जगत्सृष्टिं करोति सः ।**
**ऐशानमास्थाय[1] श्रीमान् हन्ति नित्यं हि पाति च ॥ ६४ ॥**

**मद्रूपं च समास्थाय** इत्यत्र **मद्रूपं** मम रूपम् **आस्थाय** आश्रित्य अन्तःस्थित्वेत्यर्थः । **ऐशानम्** ईशानसम्बन्धिरूपम् **आस्थाय** आश्रित्य, अन्तःस्थित्वेत्यर्थः ।

**विष्णुः स्वरूपरूपोऽसौ कारणं स हरिर्मम ।**
**तं पृच्छ मुनिशार्दूल स चानन्तो बृहत्तरः ॥ ६५ ॥**

**विष्णुः स्वरूपरूप** इत्यत्र **विष्णुः स्वरूपरूपः** केवलं कृष्णस्य स्वरूपरूप एव न तु ब्रह्मशिवयोरिव अन्तर्यामी इति सूचयितुम् अत्र स्वरूपरूप इत्युक्तम् । तत्र **मद्रूपम्** ऐशानं रूपमास्थायेत्युक्तम् । ब्रह्म-

१. **'ऐशानमास्थितः'** इति कुं.पाठः ।

शिवयोरपि विष्णुस्वरूपवत् स्वरूपत्वे, 'नाहं बृहत्तरः स हरिर्मम कारणम्' इत्याद्युक्तिविरोधात्।

॥ इति सप्तत्रिंशोऽध्यायः ॥

## ॥ अथ अष्टत्रिंशोऽध्यायः ॥

**अक्षरं परमं ब्रह्म निर्गुणं तमसः परम्।[1]**
**आहुर्वेद्यं परं धाम ब्रह्मादिकमलोद्भवम्** ॥ ५ ॥

**ब्रह्मादिकमलोद्भवम्** इत्यत्र चतुर्मुखब्रह्मणः आदिभूत कमलस्य उद्भवो यस्मात्तम् ।

**चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च।**
**हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु** ॥ २५ ॥

**चतुर्भिश्च चतुर्भिश्च** इत्यत्र 'आश्रावय' इति चतुरक्षरम् । अस्तु श्रौषट् इति चतुरक्षरम् । 'यज' इति द्व्यक्षरम् । 'ये यजामहे' इति पञ्चाक्षरम् । 'द्व्यक्षरो वषट्कारः' इति श्रुतिवचनादेवम् अर्थोऽवगन्तव्यः।

**पर्जन्यः पृथिवी सस्यं कालो धर्मः क्रियाक्रिये।**
**गुणाकरः स मे बभ्रुर्वासुदेवः प्रसीदतु** ॥ २६ ॥

**बभ्रुर्वासुदेवः प्रसीदतु** इत्यत्र **बभ्रुः** कनकवर्णः।

**सूर्यमध्ये स्थितः सोमस्तस्य मध्ये च या स्थिता।**
**भूतबाह्या च या दीप्तिः स महात्मा प्रसीदतु** ॥ ४१ ॥

---

१. कुं. २१० अध्यायः।

**सूर्यमध्ये स्थितः सोम** इत्यत्र **सूर्यमध्ये** हृत्पद्मस्थित सूर्यमण्डलमध्ये **सोमः** मण्डलरूपी सोमः । तस्य मध्ये **च या दीप्तिः** वह्निमण्डलरूपा दीप्तिः स्थिता । तस्याः मध्ये **भूतबाह्या** अप्राकृतज्ञानानन्दमयी या दीप्तिः सः आत्मा मम प्रसीदतु ।

**अव्यक्तं बुद्ध्यहङ्कारमनोभूतेन्द्रियाणि च ।**
**त्वयि तानि च तेषु त्वं न तेषु त्वं न ते त्वयि ॥ ४७ ॥**

**एकत्वान्यत्वनानात्वं ये विदुर्यान्ति ते परम् ।**
**समोऽसि सर्वभूतेषु न ते द्वेष्योऽस्ति न प्रियः ॥ ४८ ॥**

**न तेषु त्वं न ते त्वयीति** निर्लेपत्वात् उक्तम् । **एकत्वं** सर्वोत्तमत्वम् । **अन्यत्वं** सकलजगद्भिन्नत्वं, **नानात्वं** नानावतारत्वम् ।

**समत्वमभिकाङ्क्षेऽहं भक्त्या वै नान्यचेतसा ।**
**चराचरमिदं सर्वं भूतग्रामं चतुर्विधम् ।**
**त्वया त्वय्येव तत्प्रोतं सूत्रे मणिगणा इव ॥ ४९ ॥**

**त्वया त्वय्येव** इत्यत्र **त्वया** सृष्टम् ।

**स्रष्टा भोक्तासि कूटस्थो[१]ऽतत्त्वस्तत्त्वसञ्ज्ञकः ।**
**अकर्ता हेतुरचलः पृथगात्मन्यवस्थितः ॥ ५० ॥**

**अतत्त्वस्तत्त्वसञ्ज्ञक** इत्यत्र **अतत्त्वः** चतुर्विंशतितत्त्वभिन्नः । **तत्त्वसञ्ज्ञकः** स्वतन्त्रतत्त्वसञ्ज्ञकः ।

* * *

---

१. **'कूटस्थो ह्यतत्त्वं तत्त्वसञ्ज्ञिकः'** इति कुं.पाठः ।

**वायुराकाशमप्येतु मनश्चाकाशमेव[1] तु ।**
**अहङ्कारं मनो यातु मोहनं सर्वदेहिनाम् ॥ ५७ ॥**

**मनश्चाकाशमेव तु** इत्यत्र मनः आकाशश्च अहङ्कारं यातु ।

**निष्केवलं पदं तात काङ्क्षेऽहं परमं तव ।**
**एकीभावस्त्वया मेऽस्तु न मे जन्म भवेत् पुनः ॥ ६० ॥**

**एकीभावस्त्वया** इत्यत्र **एकीभावः** गोष्ठे गाव एकी भवन्तीतिवत् एकस्थानगतत्वम् ।

**ममायमिति यस्याहं येन सर्वमिदं ततम् ।**
**आत्मनाऽऽत्मनि संयोज्य एतैरात्मा[2] ह्यनुस्मरेत् ।**
**ततो बुद्धेः परं बुद्ध्वा लभते न पुनर्भवम् ॥ ६८ ॥**

**एतैरात्मा ह्यनुस्मरेत्** इत्यत्र **आत्मा** जीवः। **एतैः** पूर्वोक्तप्रकारैः ।

(*)[3]**जपन् भिन्नम्** इत्यत्र **भिन्नं** जीवाद् भिन्नम् ।

**नारायणमृषिं देवं दशवर्षाण्यनन्यभाक् ।**
**इदं जपन्वै प्राप्नोति तद्विष्णोः परमं पदम् ॥ ८५ ॥**

**दशवर्षाण्यनन्यभाक्** इत्यत्र न विद्यते अन्यो यस्य सः **अनन्यः** । नारायणं देवम् अनन्यः सन् **भाक्** भजन् इति योजना ।

॥ इति अष्टत्रिंशोऽध्यायः ॥

---

१. G₁; **'मनश्चाकाश एव च'** इति कुं.पाठः । BORI पृ २०३०
२. **'परमात्मन्यनुस्मरेत्'** इति कुं.पाठः ।
३. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।

## ।। अथ एकोनचत्वारिंशोऽध्यायः ।।

**[१] आगच्छ गरुडेत्येव ततोऽहं यानमास्थितः ।**
**परार्ध्यं च ततो गत्वा योजनानां शतं पुनः ।**
**तत्रापश्यमहं यो वै ब्रह्माणं परमेष्ठिनम् ।। ६१ ।।**

**ततोऽहं यानमास्थित** इत्यत्र **यानं** गमनं वा । गरुडस्य गर्वपरिहाराय गरुडं विहाय स्वशक्त्यैव भगवानागतोऽग्रतोऽगमत् । अन्धन्तमः अतीत्य अनन्तानां मुक्तब्रह्मगरुडादीनाम् आवासस्थानम् अनन्तासनाख्यं स्वलोकं गत्वा तत्र स्ववाहनभूताननेकान् गरुडान् दर्शयित्वा ईदृशब्रह्माण्डानाम् अनन्तानामपि अहमेव आधारभूतः इति स्वमहामाहात्म्यं दर्शयामासेति समस्ताध्यायतात्पर्यं ज्ञातव्यम् ।

**महाकुलं ततोऽपश्यं प्रमाणानि तमव्ययम् ।**
**[२] कपित्थफलसङ्काशैः अन्धकारैः समाश्रितम् ।। ६३ ।।**

**कपित्थफलसङ्काशैः** इत्यत्र कपित्थपदेन संसाराख्यवृक्ष उच्यते, **फलसङ्काशैरन्धकारैः** (फलसङ्काशैरण्डाकारैः) अन्धासाम् (अण्डानाम्) आकारैः ।

**एवं मयाऽनुभूतं हि तत्त्वान्वेषणकाङ्क्षिणा ।**
**शिबिकासदृशं मां वै पश्यध्वं मुनिसत्तमाः ।। ६६ ।।**

**शिबिकासदृशम्** इत्यनेन स्वस्य भगवत्प्रेरणां विना गन्तुं शक्तिरेव नास्तीति सूचयति । **।। इति एकोनचत्वारिंशोऽध्यायः ।।**

---

१. कुं. २१० अध्यायः ।

२. '**कपित्थफलसङ्काशम्**' इति कुं. पाठः ।

## ।। अथ चत्वारिंशोऽध्यायः ।।

**न[1] सन्त्येते गुणास्तस्मिंस्तथा तस्मात् प्रवर्तते ।**
**शीतलोऽयमनुप्राप्तः कालो ग्रीष्मस्तथैव च ।। २२ ।।**

**न सन्त्येते गुणा** इत्यत्र **एते गुणाः** स्पर्शरूपादि प्राकृतगुणाः ।

**न[2] गच्छति महानात्मा** इत्यत्र **महानात्मा** परमात्मा न गच्छति । नागच्छति च । सदा सर्वत्र व्याप्य तिष्ठति इत्यर्थः ।

**अव्यक्तकर्मजा बुद्धिरहङ्कारं प्रसूयते ।**
**आकाशं चाप्यहङ्काराद्वायुराकाशसम्भवः ।। ४० ।।**

**अव्यक्तकर्मजा बुद्धिः** इत्यत्र **अव्यक्तं** मूलप्रकृतिः तस्य **कर्मणा** विकारेण **जा** जाता **बुद्धिः** विज्ञानाख्यं महत्तत्वं प्रसूयते ।

**विद्यात्तु षोडशैतानि दैवतानि विभागशः ।**
**देहेषु ज्ञानकर्तारमुपासीनमुपासते ।। ४८ ।।**

**विद्यात्तु षोडशैतानि** इत्यत्र **एतानि** मनसा सह दशेन्द्रियाणि पञ्चतन्मात्राश्चेति **षोडश** ।

**तत्र सोमगुणा जिह्वा गन्धस्तु पृथिवीगुणः ।**
**श्रोत्रे शब्दगुणे चैव चक्षुरग्नेर्गुणस्तथा ।**
**स्पर्शं वायुगुणं विद्यात् सर्वभूतेषु सर्वदा ।। ४९ ।।**

**तत्र सोमगुणा जिह्वा** इत्यत्र **सोमः** जलम् ।

---

१. कुं. २१२ अध्यायः ।; २. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।

**नवद्वारं पुरं पुण्यमेतैर्भावैः समन्वितम् ।**
**व्याप्य शेते महानात्मा तस्मात् पुरुष उच्यते ॥ ५२ ॥**

**व्याप्य शेते महानात्मा** इत्यत्र **महानात्मा** परमात्मा ।

**दूरहारी न तद्वाच्यात्**[१] इत्यत्र **आब्रह्मस्तम्बसङ्कुलम्** आब्रह्मस्तम्बपर्यन्तं जीवेषु **सङ्कुलं** सम्बद्धं, तेजः । तद्वत् न स्यात् दीपप्रकाशवन्न दृश्यते अज्ञानिभिर्न दृश्यते ।

॥ इति चत्वारिंशोऽध्यायः ॥

## ॥ अथ एकचत्वारिंशोऽध्यायः ॥

**गुरुरुवाच–**[२]

**चतुर्विधानि भूतानि स्थावराणि चराणि च ।**
**अव्यक्तप्रभवान्याहुरव्यक्तनिधनानि च ।**
**अव्यक्तलक्षणं विद्यादव्यक्तात्मकमेव च**[३] **॥ १ ॥**

**अव्यक्तलक्षणं विद्यादव्यक्तात्मकमेव च** इत्यत्र अव्यक्तात्मकं जगदिति योग्यपदाध्याहारः ।

**यथाऽश्वत्थकणीकायामन्तर्भूतो महाद्रुमः ।**
**निष्पन्नो दृश्यते व्यक्तमव्यक्तात् सम्भवस्तथा ॥ २ ॥**

**अश्वत्थकणीकायाम्** अश्वत्थबीजे ।

---

१. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
२. कुं. २१३ अध्यायः ।
३. '**विद्यादव्यक्तात्मात्मकं मनः**' इति कुं. पाठः ।

**आत्मानमनुसंयाति बुद्धिरव्यक्तजा तथा ।**
**तामन्वेति मनो यद्वल्लोहवन्मणिसन्निधौ[1] ॥ ३ ॥**

**मणिसन्निधौ** इत्यत्र **मणिः** अयस्कान्तमणिः ।

**तद्वदव्यक्तजा भावाः कर्तुः कारणलक्षणाः ।**
**अचेतनाश्चेतयितुः कारणादभिसङ्गताः ॥ ५ ॥**

**कारणादभिसङ्गता** इत्यत्र **कारणात्** कालादृष्टादिकारणात् ।

**न भूर्न खं द्यौर्भूतानि नर्षयो न सुरासुराः ।**
**नान्यदासीदृते जीवम् आसेदुर्न तु संहतिम् ॥ ६ ॥**

**जीवं** जीवयतीति जीवो नारायणः तम् **ऋते** तस्यानुग्रहमृते ।

**[2]पूर्वं नित्यं सर्वगतं मनोहेतुत्वलक्षणम् ।**
**अज्ञानकर्म निर्दिष्टमेतत्कारणलक्षणम् ॥ ७ ॥**

**पूर्वं नित्यम्** इत्यत्र **नित्यं** प्रवाहतो नित्यं, **मनोहेतुत्वलक्षणं** मन एव हेतुर्यस्य तस्य भावः मनोहेतुत्वम् । तदपि लक्षणं यस्य । **अज्ञानं** ज्ञानभिन्नम् । **कर्म** पुण्यपापाख्यं कर्म । **एतत् कारणलक्षणम्** अस्य संसारचक्रस्य कारणत्वमपि **लक्षणं** यस्य तत्तथोक्तम् । मनोजन्यत्वं संसारकारणत्वं चेति द्वयमपि कर्मणो लक्षणमिति भावः ।

**तत् कारणेन संयुक्तं कार्यसङ्ग्रहकारकम् ।**
**येनैतद्वर्तते चक्रमनादिनिधनं महत् ॥ ८ ॥**
**[3]येन स्वभावसद्भावः हेतुभूताः सकारणाः ।**

---

१. **'लोहवर्मणि सन्निधौ'** इति कुं.पाठः ।
२. Ds2,D2,3,5,8; **'सर्वं नित्यम्'** इति कुं.पाठः । BORI पृ ११३५
३. **'येन स्वभावसद्भावम्'** इति कुं. पाठः ।

**तत् कारणेन** इत्यत्र **तत्** मनः **कारणेन** योग्यतापरपर्यायस्वभावाख्यकारणेन । हेतुभूतस्वभावसद्भावः **येन** परमात्मना भवति सोऽपि जगत्कारणम् ।

**एवं प्राकृतविस्तारो ह्याश्रित्य पुरुषं परम्** ॥ ९ ॥

**एवं प्राकृतविस्तार** इत्यत्र **एवं** पूर्वोक्तप्रकारेण प्राकृतविस्तारः । परं पुरुषमाश्रित्य हि कर्म तत्तज्जीवस्वभावाधीनम् । स च स्वभावः परमपुरुषाधीनः । अतः स एव सर्वस्यापि मूलकारणभूत इति भावः ।

**अव्यक्तनाभं व्यक्तारं विकारपरिमण्डलम् ।**
**क्षेत्रज्ञाधिष्ठितं चक्रं स्निग्धाक्षं वर्तते ध्रुवम्** ॥ १० ॥

**अव्यक्तनाभम्** इत्यत्र **अव्यक्तं** मूलप्रकृतिः तदेव **नाभिः** नाभिस्थानीयछिद्रं यस्य, **व्यक्तारं** व्यक्तानि महत्तत्वाहङ्कारतत्त्वबुद्धितत्त्वाख्यानि अराणि यस्य, **विकारपरिमण्डलं** विकाराः एकादशेन्द्रियपञ्चभूताख्यषोडशविकाराः परितो मण्डलाकारो यस्य तम्, **क्षेत्रज्ञाधिष्ठितं** क्षेत्रज्ञेन नारायणेन धृतम् । **स्निग्धाक्षं** स्निग्धं मनोहरं कालाख्यम् अक्षं यस्य ।

**स्निग्धत्वात् तिलवत्सर्वं चक्रेऽस्मिन् पीड्यते जगत्** ॥ ११ ॥

**स्निग्धत्वात्** अन्योन्यस्नेहभरितत्वात् ।

**प्राणो[१] नायं हि शान्ते तु विरोधात् प्रति पालनम् ।**
**देहस्येषून्य आस्ते यः शुद्धोऽचिन्त्यः सनातनः** ॥ १२ ॥

---

१. **'प्राणेनायम्'** इति कुं.पाठः ।

**प्राणो नायं हि शान्ते तु** इत्यत्र **शान्ते** नित्यसुखस्वरूपे परमात्मनि । **पालनम्** अनाद्यनन्तकालेष्वपि निर्विकारतया विद्यमानं रक्षणं प्रति **विरोधात् अयं प्राणः** पूर्वोक्तः कालचक्रस्य प्रकृष्टचेष्टारूपः जनन-मरणादिहेतुर्व्यापारः **न** न प्रभवति । **देहस्य** प्राकृतदेहस्य **इषुः** इच्छा, तया **ऊनं** न्यूनं शून्यमिति यावत् यज्ज्ञानं तत्सम्बन्धि देहस्येषून्यः, **यः आस्ते** सः, **शुद्धः अचिन्त्यः सनातनः** परमात्मा इति सम्बन्धः ।

**स्नेहद्रव्यसमायोगे क्षेत्रपाचं न वस्तुषु ।**
**तिलवत् पीडिते चक्रे ह्याधियन्त्रनिपीडिते ।**
**बडिशाधिष्ठिते[१] यद्वज्ज्ञानिनां कर्मसम्भवम् ॥ १४ ॥**

**स्नेहद्रव्यसमायोगे** स्नेहाख्यद्रवणयोग्यगुणसमायोगे सति जीवः **आधियन्त्रनिपीडिते** आध्याख्ययन्त्रैः नितरां पीडिते **चक्रे** संसारचक्रे, **तिलवत्पीड्यते**, बडिशाधिष्ठिते मांसे **ज्ञानिनाम्** इष्टसाधनमिदमिति ज्ञानवतां मत्स्यानां **यद्वत्** तद्वत् मूढजीवानां कर्मसम्भवः भवति ।

**यथा[२] चाकर्ण्य तच्छिष्यस्तत्त्वज्ञानमनुत्तमम् ।**
**नात्येति कारणं कार्यं न कार्यं कारणं तथा ।**
**कार्याण्यमूनि करणे कालो भवति हेतुमान् ॥ १६ ॥**

**यथा चाकर्ण्य** इत्यत्र तद्वत् ज्ञानं कार्यमाकर्ण्य **कारणं** गुरुं नात्येति । **कालो भवति हेतुमान्** इत्यत्र हेतुर्नारायणो यस्य स **हेतुमान्** ।

**स[३] रजस्तामसैर्भावैश्च्युतो हेतुबलान्वितः ।**
**क्षेत्रज्ञमेवानुयाति पांसुर्वातेरितो यथा ॥ १८ ॥**

---

१. **'बहिश्चाधिष्ठिते'** इति कुं. पाठः ।; २. **'यथाऽऽकर्ण्य च'** इति कुं.पाठः ।
३. **'सत्त्वरजस्तामसैः'** इति कुं.पाठः ।

**स रजस्तामसैः** इत्यत्र रजस्तामसैर्भावैः च्युतः **हेतुबलान्वितः** (अध्यात्मबलान्वितः) परमात्मबलान्वितः **सः** ज्ञानी **क्षेत्रज्ञं** नारायणम् अनुयाति ।

[१]
**न च तैः स्पृश्यते भावो न ते तेन महात्मना ।**
**सरजस्कोऽरजस्कश्च स वै वायुर्भवेद्यथा** ॥ १९ ॥

**भावः** ज्ञानिनां स्वभावः । **तैः** विकारैः न **स्पृश्यते** । **ते** च विकाराः तेन महात्मना न संस्पृश्यन्ते । **सः वायुः** भौमः **सरजस्को** भवति, आकाशगस्तु अरजस्को यथा भवेत्तथा ।

**तथैतदन्तरं विद्यात् सत्त्वक्षेत्रज्ञयोर्बुधः ।**
**अभ्यासात् स तथा युक्तो न गच्छेत् प्रकृतिं पुनः** ॥ २० ॥

**सत्त्वक्षेत्रज्ञयोः सत्त्वस्य** जीवराशेः क्षेत्रज्ञस्य च एतदन्तरं विद्यात् । सर्वदा रजःपदोपलक्षितत्रिगुणवर्जितः परमात्मा । जीवस्तु तद्बद्ध इति अन्तरं विद्यादिति भावः ।

**॥ इति एकचत्वारिंशोऽध्यायः ॥**

## ॥ अथ द्विचत्वारिंशोऽध्यायः ॥

[२]
**नाशुद्धमाचरेत्तस्मादभीप्सन् देहयापनम् ।**
**कर्मणां विवरं कुर्वन्न लोकानाप्नुयाच्छुभान्** ॥ ५ ॥

**कर्मणां विवरं कुर्वन्** इत्यत्र **विवरम्** अवकाशम् ।

---

१. BORI पृ. ११३६; '**न च तैः भावैर्न ते तेन महात्मना**' इति कुं. पाठः ।
२. कुं. २१४ अध्यायः ।

**केचिदात्मगुणं प्राप्तास्ते मुक्ताश्चक्रबन्धनात् ।**
**इतरे दुःखसद्वन्द्वास्तथा दुःखपरायणाः ॥ ७ ॥**

**केचिदात्मगुणम्** इत्यत्र **आत्मगुणं** परमात्मज्ञानम् ।

**यथा वृक्षस्य सञ्छाया नास्ति नित्यतया परा ।**
**गुणानेव तथा चिन्त्या सन्त्येति च विदुर्बुधाः ॥ ९ ॥**

**गुणानेव** इत्यत्र **गुणान्** रूपादिगुणान् ।

**स्पर्शरूपरसाद्येषु सङ्गं गच्छन्ति बालिशाः ।**
**नावगच्छन्ति विज्ञानात् [1] आत्मजं पार्थिवं गुणम् ॥ १४ ॥**

**आत्मजं पार्थिवं गुणम्** इत्यत्र **आत्मजं** देहेन सह जातम् ।

**यथेह नियतः कालो दर्शयत्यार्तवान् गुणान् ।**
**तद्वद्भूतेष्वहङ्कारं विद्याद्भूतप्रवर्तकम् ॥ २८ ॥**

**दर्शयत्यार्तवान् गुणान्** इत्यत्र **आर्तवान्** ऋतुसम्बन्धिनः ॥

**एतन्मे सर्वमाचक्ष्व यथा विद्यामहं विभो ।**
**मह्यं शुश्रूषवे विद्वन् [2] वक्षि तद्बुद्धिनिश्चितम् ॥ ४० ॥**

**वक्षि तद्बुद्धिनिश्चितम्** इत्यत्र **वक्षि**– ब्रूहि । 'वच परिभाषणे' इति धातोः लोटि मध्यमपुरुषवचनम् ।

**शान्तत्वादपरान्ताच्च आरम्भादपि चैकतः ।**
**प्रोक्तो ह्यत्र यथा हेतुरेवमाहुर्मनीषिणः ॥ ४१ ॥**

---

१. BORI पृ. ११३८; **'आत्मानं पार्थिवं गुणम्'** इति कुं.पाठः ।
२. **'वक्ष्ये तद्बुद्धिनिश्चितम्'** इति कुं.पाठः ।

**शान्तत्वादपरान्ताच्च** इत्यत्र **शान्तत्वात्** सहनशीलत्वात् । **अत्र** दोषपरिहारे हेतुः प्रोक्तः । **अपरान्तात्** अपरेषां ज्ञानिनाम् **अन्तात्** समीपात् तेषां समीपे वासादित्यर्थः । अत्र हेतुः प्रोक्तः । **आरम्भात्** पुण्यकर्मणाम् आरम्भाच्च । अत्र हेतुः प्रोक्तः ।

**गुरुरुवाच–**

**दोषैर्मूलादवच्छिन्नैर्विशुद्धात्मा विमुच्यते ।**
**विनाशयति सम्भूतमयस्मयमयो यथा ।**
**तथा कृतात्मा सहजैर्दोषैर्नश्यति राजसैः ॥ ४२ ॥**

**विनाशयति सम्भूतम्** इत्यत्र **सम्भूतं** मध्ये प्रमादवशात् सम्भूतं दोषम् । **अयस्मयम्** अयोमयशृङ्खलादिकम् । **अयः** अयोमयकारुकृत-शस्त्रविशेषः यथा छिनत्ति तथा ।

**तत्सर्वं देहिनां बीजं सत्त्वमात्मवतः समम् ।**
**तस्मादात्मवता वर्ज्यं रजश्च तम एव च ॥ ४५ ॥**

**तत्सर्वं देहिनां बीजम्** इत्यत्र **आत्मवतः** जितमनस्कस्य । **समं** जितसमम् ।

**रजस्तमोभ्यां निर्मुक्तं सत्त्वं निर्मलतामियात् ।**
**आहारान् वर्जयेन्नित्यं राजसांस्तामसानपि ॥ ४६ ॥**

**सत्त्वं निर्मलतामियात्** इत्यत्र **सत्त्वं** चित्तम् ।

**ते ब्रह्म पुनरायान्ति न मोहादचला इव ।**
**अथवा मन्त्रवद्ब्रूयुर्मांसादीनां यजुष्कृतम् ॥ ४७ ॥**

**अथवा मन्त्रवद्भूयुर्मांसादीनां यजुष्कृतम्** इत्यत्र यजुःपदेन यज्ञः कथ्यते ।

(*)[1]**ज्ञात्वा कर्माणि कारयेत्** इत्यत्र **कर्माणि** सांसारिक-व्यापारान् अविरागेण संवीक्ष्य ह्यवदत् ।

(*)**ज्ञानदुर्गतिम्** इत्यत्र ज्ञानस्य **दुर्गतिं** दुर्गम्यत्वं **सैव** काम-कलिला बुद्धिरेव ।

**॥ इति द्विचत्वारिंशोऽध्यायः ॥**

* * *

## ॥ अथ त्रिचत्वारिंशोऽध्यायः ॥

**गुरुरुवाच–**

**[2]रजसा साध्यते मोहस्तमश्च भरतर्षभ ।**
**क्रोधलोभौ भयं दर्प एतेषां सादनाच्छुचिः ॥ १ ॥**

**एतेषां सादनाच्छुचिः** इत्यत्र **सादनात्** नाशात् शुचिर्भवति 'सादनं शेफनिधनसिध्युपायनिवृत्तिषु' इति वैजयन्ती ।

**तस्य मायापिनद्धाङ्गा ज्ञानभ्रष्टा निराशिषः ।**
**[3]माननाज्ञानसम्मोहात्ततः कामं प्रयान्ति वै ॥ ३ ॥**

**माननाज्ञानसम्मोहात्** इत्यत्र **माननं** मानः अहङ्कारः ।

---

१. (*)एतत्प्रतीकघटितश्लोकः नोपलभ्यते ।
२. कुं. २१५ अध्यायः ।
३. **'मानवा'** इति कुं.पाठः ।

**वार्धक्यमनुलङ्घेत तत्र कर्मारभेत् पुनः ।**
**भगवान् संस्तुतः पश्चात् किं प्रवक्ष्यामि ते भृशम् ॥ ११ ॥**

**भगवान् संस्तुतः पश्चात्** इत्यत्र **संस्तुतः** सकलश्रुतिस्मृतिभिः सम्यक् स्तुतः । **भगवान्** नारायणः । येन पश्चात् पृष्ठत एव कृतः तं **ते किं प्रवक्ष्यामि** मम वक्तुमपि लज्जेति भावः ।

**तस्मात् तर्षात्मकाद्रागाद्बीजाज्जायन्ति जन्तवः ।**
**[१]स्वदेहजातास्वसञ्ज्ञान् यद्वदङ्गात् कृमींस्त्यजेत् ।**
**स्वसञ्ज्ञानस्वकांस्तद्वत् सुतसञ्ज्ञान्कृमींस्त्यजेत् ॥ १४ ॥**

**स्वदेहजातास्वसञ्ज्ञान्** इत्यत्र **अस्वसञ्ज्ञान्** स्वकीयाः न भवन्तीत्यस्वाः । अस्वा इति सञ्ज्ञा येषां ते अस्वसञ्ज्ञाः, तान् ।

**रमत्ययं यथा स्वप्ने मनसा देहवानिव ।**
**कर्मगर्भैर्गुणैर्देही गर्भे [२]तदुपपद्यते ॥ १८ ॥**

**गर्भे तदुपपद्यत** इत्यत्र **उपपद्यते** उपपन्नतया प्राप्नोति ।

**सञ्जातैर्जायते गात्रैः [३]कर्मजैर्वर्ष्मणा वृतः ।**
**दुःखाद्यन्तैर्दुःखमध्यैर्नरः शारीरमानसैः ॥ २२ ॥**

**सञ्जातैर्जायते गात्रैः** इत्यत्र **गात्रैः** अवयवैः **वर्ष्मणा** शारीरेण **दुःखाद्यन्तैः दुःखमध्यैः** शारीरमानसैर्व्यापारैः सह **नरः जायते** इति पूर्वेणान्वयः ।

---

१. **'स्वदेहजानस्वसञ्ज्ञान्'** इति कुं.पाठः ।
२. BORI पृ. ११४४; **'तदुपलभ्यते'** इति कुं.पाठः ।
३. $B_0, D_S, D_{3,5,8}$; **'कर्मजैर्ब्रह्मणा'** इति कुं.पाठः । BORI पृ ११४५

**दुःखं विद्यादुपादानादभिमानाच्च वर्धते ।**
**त्यागात्तेभ्यो निरोधः स्यान्निरोधज्ञो विमुच्यते ॥ २३ ॥**

**दुःखं विद्यात् उपादानात्** इत्यत्र एकस्य वस्तुनः परिग्रहात् दुःखं **विद्यात्** प्राप्नुयात् । **अभिमानात्** तस्मिन् वस्तुनि क्षणे क्षणे अभिमानात् दुःखं **वर्धते** ।

**ज्ञानेन्द्रियाणीन्द्रियार्थान्नोपसर्पन्त्यतर्षुलम् ।**
**हीनैश्च**[१] **करणैर्देही न देहं पुनरर्हति ॥ २५ ॥**

**हीनैश्च करणैर्देही** इत्यत्र करणैरिन्द्रियैः **हीनैः** हानैः । **कृतैः** धिक्कृतैरित्यर्थः ॥

**॥ इति त्रिचत्वारिंशोऽध्यायः ॥**

## ॥ अथ चतुश्चत्वारिंशोऽध्यायः ॥

**इन्द्रियाणां**[२] **तुलानित्यम्** इत्यत्र इन्द्रियाणाम् **अस्य** परमात्मनः बुद्धौ विबोधनं नाम **तुला** तुलाया आरोहणमिव । इन्द्रियाणाम् औन्नत्यमिति भावः ।

**तांस्तानुपासते**[३] **धर्मान् धर्मकामा यथागमम् ।**
**न त्वेषामर्थसामान्यमन्तरेण गुणानिमान् ॥ ५ ॥**

**न त्वेषामर्थसामान्यम्** इत्यत्र **इमान् गुणान्** वक्ष्यमाणगुणान्

---

१. M5.6,V1; 'ज्ञानैश्च' इति कुं.पाठः । BORI पृ ११८५

२. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।

३. कुं. २१६ अध्यायः ।

**अन्तरेण** विना **एषां** धर्माणाम् **अर्थसामान्यं** सामान्यतः अर्थः अर्थ-सामान्यः तं न तु ।

**यदिदं ब्रह्मणो रूपं ब्रह्मचर्यमिति स्मृतम् ।**
**परं तत्सर्वधर्मेभ्यस्तेन यान्ति परां गतिम्** ॥ ७ ॥

**यदिदं ब्रह्मणो रूपम्** इत्यत्र **ब्रह्मचर्यं ब्रह्मणा** वेदेन **चरितुं** ज्ञातुं योग्यं ब्रह्मचर्यम् । 'चर गतिभक्षणयोः' इति धातुः ।

**[१]लिङ्गं संयोगहीनं यच्छरीरस्पर्शवर्जितम् ।**
**श्रोत्रेण श्रवणं चैव चक्षुषा चैव दर्शनम्** ॥ ८ ॥

**लिङ्गं संयोगहीनम्** इत्यत्र **लिङ्गं** लिङ्गदेहं, **शरीरं** स्थूलदेहः ।

**श्रोत्रेण श्रवणं चैव** इत्यत्र **श्रवणं** शृणोतीति श्रवणम्, पश्यतीति **दर्शनम्** ।

**वाक्सम्भाषाप्रवृत्तं यत्तन्मनःपरिवर्जितम् ।**
**बुद्ध्या चाध्यवसीयीत ब्रह्मचर्यमकल्मषम्** ॥ ९ ॥

**मनःपरिवर्जितम्** इत्यत्र संशयकारणभूतमनसा **परिवर्जितम्** ।

**सम्यग्वृत्तिर्ब्रह्मलोकं प्राप्नुयान्मध्यमः सुरान् ।**
**द्विजाग्र्यो जायते [२]विद्वान् संन्यसीं वृत्तिमास्थितः** ॥ १० ॥

**संन्यसीं वृत्तिमास्थित** इत्यत्र **सम्यक्** सर्वं न्यस्यतीति सन्यसी, तां वृत्तिम् आस्थितः इति योजना ।

---

१. $G_2$, BORI; **'लिङ्गसंयोगहीनं यच्छब्दस्पर्शविवर्जितम्'** इति कुं.पाठः । BORI पृ ११४६

२. $M_6$; **'विद्वान् कन्यसीम्'** इति कुं.पाठः । BORI पृ ११४७

**रागोत्पन्नश्चरेत्कृच्छ्रमह्नस्त्रिः प्रविशेदपः ।**
**[1] मग्नःस्वप्ने च मनसा त्रिर्जपेदघमर्षणम् ॥ १३ ॥**

**मग्नःस्वप्ने च मनसा** इत्यत्र **मनसा** स्त्रीषु मनसा ।

**दश विद्याद्धमन्योऽत्र पञ्चेन्द्रियगुणावहाः ।**
**याभिः सूक्ष्माः प्रजायन्ते धमन्योऽन्याः सहस्रशः ॥ २१ ॥**

**पञ्चेन्द्रियगुणावहा** इत्यत्र पञ्चेन्द्रियाणां पोषकान्नरसाख्यगुणानावहन्तीति तथोक्ताः । **धमन्यः** नाड्यः अत्रेति विद्यात् । एकैकेन्द्रियस्य द्वे द्वे नाड्याविति भावः ॥

**॥ इति चतुश्चत्वारिंशोऽध्यायः ॥**

## ॥ अथ पञ्चचत्वारिंशोऽध्यायः ॥

**[2] एवं पश्यंस्तमात्मानमनुस्यूतं हि बन्धुषु ।**
**[3] अयथात्वेन जानाति भेदरूपेण संस्थितम् ॥ ५ ॥**

**एवं पश्यंस्तमात्मानम्** इत्यत्र **एवं** पूर्वोक्तप्रकारेण **पश्यन्** ज्ञानी बन्धुषु अनुस्यूतं **तं** रागकलिलम् **आत्मानं** संसारिजीवम् अयथात्वेन स्थितं जानाति, स्वयं तु **भेदरूपेण** ततो विलक्षणविरक्तस्वरूपेण स्थितो भवतीति योजना ।

* * *

---

१. BORI पृ. ११४७; **'मग्नस्त्वपस्वेव'** इति कुं.पाठः ।
२. कुं. २१७ अध्यायः । **'एवं पश्यन्तमात्मानमनुध्यातम्'** इति कुं.पाठः ।
३. **'अयथात्वेन जानामि'** इति कुं.पाठः ।

[१] अथवा मनसः सङ्गं पश्येद्भूतादिकं यथा ।
तत्राप्युपेक्षां कुर्वीत ज्ञात्वा कर्मफलं जगत् ॥ ६ ॥

**अथवा मनसः सङ्गम्** इत्यत्र मनसः सङ्गं भूतादिकश्च यथास्ति तथा **पश्येत्**, अनित्यत्वेन पश्येदिति भावः ।

[२] विवेकज्ञानवान् मिश्रः ह्यासुरूपेण संस्थितः ।
वैकारिकात् प्रदृश्येते गैरिके मधुधारवत् ॥ १० ॥

**विवेकज्ञानवान् मिश्र** इत्यत्र **मिश्रः** सर्वजगद्व्याप्तः । आसमन्तात् **सु** सुखशीलं रूपं तेन ।

अथवा न प्रवर्तेत योगतन्त्रैरुपक्रमेत् ।
[३] योगतन्त्रमयैस्तन्त्रैर्वृत्तिः स्यात्तां तदाचरेत् ॥ २७ ॥

**योगतन्त्रमयैस्तन्त्रैर्वृत्तिः स्यात्तां तदाचरेत्** इत्यत्र **योगतन्त्रमयैः** योगतन्त्रप्रधानैः । योगतन्त्रसाधनैरिति यावत् । **तन्त्रैः** उपायैः । **वृत्तिः** जीवनोपायः स्यात् **तां** वृत्तिं **तदा** योगप्राप्तिदशायाम् आचरेत् ।

कणकुल्माषपिण्याकशाकयावकसक्तवः ।
तथा मूलफलं भैक्ष्यं पर्यायेणोपयोजयेत् ॥ २८ ॥

**कणकुल्माषपिण्याक** इत्यत्र क्षेत्रे अवहननादौ पतिता व्रीह्यादयः **कणाः**, **कुल्माषो** वनमाषः ।

---

१. **'अथवा मनसः सङ्गं पश्येद्भूतानुकम्पया'** इति कुं. पाठः ।

२. **'विवेकज्ञानवाचिस्थो ह्याशुरूपेण'** इति कुं.पाठः ।

३. $D_{3,6,8}$; **'योगतन्त्रमयं तन्त्रं वृत्तिः स्यात्तत्तदाचरेत्'** इति कुं. पाठः । BORI पृ ११५३

**पृथक्त्वासम्प्रयोगाच्च नासूयुर्वेद शाश्वतम् ।**
**स तयोरपवर्गज्ञो वीतरागो विमुच्यते ॥ ३२ ॥**

**नासूयुर्वेदशाश्वतम्** इत्यत्र **नासूयुः** अनसूयुः ।
**स तयोरपवर्गज्ञ** इत्यत्र **तयोः** ज्ञानाज्ञानयोः मध्ये ।

॥ इति पञ्चचत्वारिंशोऽध्यायः ॥

## ॥ अथ षट्चत्वारिंशोऽध्यायः ॥

**ज्ञानाभ्यासाज्जागरिता[1] जिज्ञासार्थमनन्तरम् ।**
**विज्ञानाभिनिवेशात्तु स जागर्त्यनिशं सदा ॥ ३ ॥**

**स जागर्त्यनिशं सदा** इत्यत्र **अनिशं** निशाभावो यथा भवति तथा सदा जागर्ति ।

**अत्राह कोऽन्वयं भावः स्वप्ने विषयवानिव ।**
**प्रलीनैरिन्द्रियैर्देही वर्तते देहवानिव ॥ ४ ॥**

**अत्राह कोऽन्वयं भाव** इत्यत्र **अत्र** स्वप्ने । अयम्भावः, स्वप्ने विद्यमानस्वभावः कः ? न कोऽपीति **आह** योगवान् ऋषिः ।

**अत्रोच्यते यथा ह्येतद्वेद योगेश्वरो हरिः ।**
**तथैतदुपपन्नार्थं वर्णयन्ति महर्षयः ॥ ५ ॥**

**अत्रोच्यते यथा ह्येतत्** इत्यत्र **अत्र** स्वप्ने **एतत्** करितुरगादिकम् । **यथा** श्रुतौ 'अथ रथान् रथयोगान् पथस्सृजते'[2] इति उच्यते, तथा

---

१. कुं. २१८ अध्यायः ।
२. छा.उ. ६-३-१०

योगेश्वरः हरिः **वेद** सृष्टं वेद 'सन्ध्ये सृष्टिराह हि'[१] इति वक्तुं च वेद। तथा हरिसृष्ट्या **एतत्** स्वप्नस्थानम् **उपपन्नार्थम्** उपपन्नाः युक्ताः अर्थाः यस्मिन् तत् वर्णयन्ति इति योजना।

**इन्द्रियाणां श्रमात् स्वप्नमाहुः सर्वगतं मनः।**
**[२]अन्यथा हीन्द्रियाण्याहुस्तावद्गच्छन्ति तानि वै ॥ ६ ॥**

**अन्यथा हीन्द्रियाण्याहुः** इत्यत्र **अन्यथा** स्वप्नाभावे तानि इन्द्रियाणि **तावत्** यावदपेक्षितं तावद्गच्छन्तीत्याहुः।

**अत्राहुस्त्रितयं नित्यमतथ्यमिति चेच्च न।**
**प्रथमे वर्तमानोऽसौ [३]त्रितयं वेत्ति सर्वदा ॥ ७ ॥**
**[४]मनसस्तु प्रलीनत्वात्तत्तदाहुर्निदर्शनम्।**
**कार्ये चासक्तमनसः सङ्कल्पो जाग्रतो ह्यपि ॥ १० ॥**

**अत्राहुस्त्रितयं नित्यम्** इत्यत्र **त्रितयम्** अर्थज्ञानप्रयत्नाख्यं सुख-दुःखतद्भोगाख्यं वा आकाशाख्यं वा **नित्यं** सत्यं आहुः। **प्रथमे** प्रथमे पक्षे, सत्यत्वपक्षे **वर्तमानः**। अनेन **असौ** परमात्मा **त्रितयं वेत्ति** सत्यमिति वेत्ति। चेतनां चेतनाख्यां मनसः पञ्चमीमवस्थां **मनसः प्रलीनत्वात्** जानाति, साक्षिणैव स्वरूपसुखं जानाति, **तदा** सुप्तौ **तत्** अवस्थानं **निदर्शनं** मुक्तेर्दृष्टान्तमाहुः।

---

१. ब्र.सू. ३-२-१
२. **'तन्मयानीन्द्रियाण्याहुः'** इति कुं.पाठः।
३. **'त्रितयं चेति'** इति कुं.पाठः।
४. BORI पृ ११५५; **'मनसस्त्वप्रलीनत्वात्'** इति कुं. पाठः।

**गुणानामपि यद्येतत् कर्मणा चाप्युपस्थितम् ।**
**तत्तच्छंसन्ति भूतानि मनो यद्भावितं यथा ॥ १२ ॥**

**गुणानामपि यद्येतत्** इत्यत्र **एतत् कर्म** उत्तममध्याधमरूपं कर्म । **गुणानां** सत्त्वादिगुणानां सकाशात् **उपस्थितिम्** उत्पत्तिं जानाति ।

**ततः पश्यन्त्यसम्बन्धान् वातपित्तकफोत्तरान् ।**
**रजस्तमोभवैर्भावैस्तदप्याहुर्दुरत्ययम् ॥ १४ ॥**

वातपित्तकफोत्तरान् **असम्बन्धान्** पूर्वोत्तरसम्बन्धरहितान् स्वप्नान् पश्यति ।

**प्रसन्नैरिन्द्रियैर्यद्यत् सङ्कल्पयति मानसम् ।**
**तत्तत्स्वप्नेप्युपरते मनोदृष्टिर्निरीक्ष्यते ॥ १५ ॥**

**मनोदृष्टिः** मन एव दृष्टिर्यस्य स तथोक्तः ।

**मनस्यन्तर्हितं द्वारं देहमास्थाय मानुषम् ।**
**यत्तत्सदसदव्यक्तं स्वपित्यस्मिन्निदर्शनम् ॥ १७ ॥**

**मनस्यन्तर्हितं द्वारम्** इत्यत्र **मनसि अन्तर्हितं द्वारं** देहादेः कारणं कर्म यस्य तं देहम् ।

**यत्तत्सदसदव्यक्तम्** इत्यत्र **सत्** उत्तमम् **असत्** अज्ञेयम् **अव्यक्तं** सूक्ष्मं **निदर्शनं** नितरां दर्शनं यस्य तत् सर्वज्ञं यद्ब्रह्म तस्मिन् **स्वपिति** । 'प्राज्ञेनात्मना सम्परिष्वक्तः'[१] इति हि श्रुतिः ।

---

१ बृ.उ. ६-३-२१

**व्यक्तभेदमतीतोऽसौ चिन्मात्रं परिदृश्यते ।**
**सर्वभूतात्मभूतत्वं[१] तमध्यात्मगुणं विदुः ॥ १८ ॥**

**व्यक्तभेदमतीतोऽसौ** इत्यत्र **अतीतः** निद्रातीतः **असौ** परमात्मा **व्यक्तभेदं** जीवात् स्पष्टीभूतभेदं **चिन्मात्रं** केवलचिदात्मककरचरणादिमत् ब्रह्म **परिदृश्यते** ज्ञानिभिः । सर्वभूतानाम् **आत्मभूतत्वम्** अन्तर्यामित्वं यस्य तम् **अध्यात्मगुणम्** आत्मनः जीवात् अधिकः **गुणः** ज्ञानादिगुणो यस्य तं विदुः ।

**लिप्सेत मनसा यद्वत्[२] सङ्कल्पादैश्वरं गुणम् ।**
**आत्मप्रसादात्तं विद्यात् सर्वा ह्यात्मनि देवताः ॥ १९ ॥**

**लिप्सेत मनसा यद्वत्** इत्यत्र **ऐश्वरम्** ईश्वरसम्बन्धिस्वरूपं **यद्वत्** निर्दुःखत्वनित्यसुखित्वाख्यगुणं मोक्षमिति यावत्, मनसा सङ्कल्पात् यः लिप्सेत तत् **आत्मप्रसादात्** परमात्मप्रसादादिति विद्यात् । **सर्वा देवताः** ब्रह्मादिदेवताः आत्मनि हि परमात्माधारास्तिष्ठन्ति ।

**एवं हि तपसा युञ्ज्यादर्कवत्तमसः परम् ।**
**त्रैलोक्यप्रकृतिं[३] देही तमसोऽन्ते महेश्वरम् ॥ २० ॥**

**त्रैलोक्यप्रकृतिं** त्रैलोक्यकारणं महेश्वरं यान्तीति योग्यपदाध्याहारेण योजना ।

---

१. $M_5, T_2, B_{0,6,9}$; BORI पृ.११५७'**सर्वभूतात्मभूतस्थम्**' इति कुं. पाठः ।
२. $B_0, D_3, M_6$; BORI पृ.११५७; '**यश्च**' इति कुं.पाठः ।
३. $T, G_{1,3,6}, M_7, D_{4,7,9}$; BORI पृ.११५७'**त्रैलोक्यप्रकृतिः**' इति कुं.पाठः ।

**तपो ह्यधिष्ठितं देवैस्तपोघ्नमसुरैस्तमः ।**
**एतद्देवासुरैर्गुप्तं तदाहुर्ज्ञानलक्षणम् ॥ २१ ॥**

**तपो ह्यधिष्ठितं देवैः** इत्यत्र 'तप आलोचने' इति धातोः **तपो** ज्ञानम् । **तमः** अज्ञानम् ।

**[1]निद्रां विकल्पेत सतां मनो विशति लोकवत् ।**
**स्वस्थो भवति गूढात्मा कलुषैः परिवर्जितः ॥ २४ ॥**

**निद्रां विकल्पेत** इत्यत्र या निद्रा लोकवत् सतां मनसि विशति तां **निद्रां विकल्पेत** विरुद्धतया कुर्यात्, त्यजेदित्यर्थः ।

**तैर्हीनं यत्परं शुद्धं बाह्याभ्यन्तरवर्तिनम् ।**
**सदानन्दमयं नित्यं भूत्वा तत्परमन्वियात् ॥ २५ ॥**

**नित्यं भूत्वा तत्परमन्वियात्** इत्यत्र **सदानन्दमयं** नित्यश्च भूत्वा **यद्** ब्रह्म वर्तते परं तद् ब्रह्म अन्वियात् ।

**एवमाख्यातमत्यर्थं ब्रह्मचर्यमकल्मषम् ।**
**[2]सर्वस्थं योगहीनं तद्विष्ण्वाख्यं परमं पदम् ।**
**अचिन्त्यमद्भुतं लोके ज्ञानेन परिवर्तते ॥ २६ ॥**

**सर्वस्थं योगहीनं तत्** इत्यत्र **योगहीनं** लेपरहितम् ।

**हेतुमच्छक्यमाख्यातुमेतावाञ्ज्ञानचक्षुषा ।**
**प्रत्याहारेण वा शक्यमव्यक्तं ब्रह्म वेदितुम् ॥ २८ ॥**

---

१. **'निद्रा विकल्पेन'** इति कुं.पाठः ।
२. **'सर्वसंयोगहीनम्'** इति कुं.पाठः ।

**प्रत्याहारेण** विषयेभ्यो निवृत्त्या ।

**॥ इति षट्चत्वारिंशोऽध्यायः ॥**

## ॥ अथ सप्तचत्वारिंशोऽध्यायः ॥

**गुरुरुवाच –**

**[१]न स वेद परं ब्रह्म यो न वेद चतुष्टयम् ।**
**व्यक्ताव्यक्तं च यत्तत्त्वं सम्प्रोक्तं परमर्षिणा ॥ १ ॥**

**न स वेद परं ब्रह्म** इत्यत्र **चतुष्टयं** वेदचतुष्टयम् ।

**तदेवमेतौ विज्ञेयावव्यक्तपुरुषावुभौ ।**
**अव्यक्तपुरुषाभ्यां तु यत्स्यादन्यन्महत्तरम् ॥ ६ ॥**

**अव्यक्तपुरुषाभ्याम्** इत्यत्र **अव्यक्तं** जडप्रकृतिः, **पुरुषो** जीवः ।

[२](*)**आत्मानं तमलक्षणम्** इत्यत्र **अलक्षणं** जडत्वादिप्रकृतिलक्षणरहितम् **आत्मानं** जीवम् ।

(*)**यस्त्वज्ञानाकृतिस्तथा** इत्यत्र **अज्ञानाकृतिः** अज्ञानादागता आकृतिः प्राकृतशरीराख्य आकारः ।

**तं विशेषमवेक्षेत विशेषेण विचक्षणः ।**
**अनाद्यनन्तावुभावेतावलिङ्गौ चाप्युभावपि ॥ ७ ॥**

**अलिङ्गौ चाप्युभावपि** इत्यत्र **अलिङ्गौ** स्पष्टलिङ्गरहितौ **उभौ** प्रकृतिजीवौ ।

---

१. कुं. २१९ अध्यायः ।

२. (*) एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।

**भेदवस्तु त्वभेदेन जानाति स यदा पुमान् ।**
**तदा[१] परः परात्माऽसौ भवत्येव निरञ्जनः ॥ १५ ॥**

**भेदवस्तु त्वभेदेन जानाति** इत्यत्र **भेदवस्तु** पञ्चभेदभिन्नं जीवेश्वरजडरूपं वस्तु, **परात्मा** उत्तमस्वभावः **असौ परः** जीवः **निरञ्जनः** मुक्तो भवति ।

**क्रियायोगे च भेदाख्ये बहु सङ्क्षिप्यते क्वचित् ।**
**वसुरुद्रगणाद्येषु स्वानुभोगेन भोगतः ॥ १६ ॥**

**क्रियायोगे च भेदाख्य** इत्यत्र **भेदाख्ये क्रियायोगे** जीवानां नियमनरूपक्रियायाः **योगः** उपायो यस्मात्तस्मिन् **भेदाख्ये** जीवेश्वरभेदाख्ये वस्तुनि सत्येव **वसुरुद्रगणाद्येषु** वसुगणः रुद्रगणश्चाद्यो येषां तेषु जीवेषु **बहु** सर्वत्र व्याप्तम् । नारायणाख्यं परं ब्रह्म **क्वचित्** सृष्टिकाले **सङ्क्षिप्यते** सूक्ष्मरूपेण तिष्ठति । **स्वानुभोगेन** स्वानुकूलभोगेन, **भोगतः** भोगात् स्वेच्छया सुखमात्रभोगादिति यावत् ।

**एवमेष परस्तत्त्वो[२] नानारूपेण संस्थितः ।**
**सङ्क्षिप्तो दृश्यते पश्चादेकरूपेण विष्ठितः ॥ १७ ॥**
**तस्माच्चतुष्टयं वेद्यमेतैर्हेतुभिरावृतम् ॥ १८ ॥**

**परस्तत्त्वः** स्वतन्त्रतत्त्वरूपः । **नानारूपेण** अनन्तजीवहृदयेषु अनन्तरूपेण । **पश्चात्** प्रलयकाले **एकरूपेण** तानि सर्वाण्यन्तर्यामिरूपाणि एकीकृत्य स्थितेन वटपत्रशायिरूपेण । **एतैर्हेतुभिः** सृष्टिसंहारादिहेतुभगवद्व्यापारैः आवृतं **चतुष्टयं** वेदचतुष्टयम् ।

---

१. **'तदा परं परात्माऽसौ'** इति कुं. पाठः ।; २. **'परः सत्त्वो'** इति कुं.पाठः ।

**तथासञ्ज्ञो ह्ययं सम्यगन्तकाले न मुह्यति ।**
**वायुर्विधो यथा भानुर्विप्रकाशं गमिष्यति ॥ १८ ॥**

**तथासञ्ज्ञो ह्ययम्** इत्यत्र सम्यक् जानातीति व्युत्पत्त्या सम्यक् ज्ञानवान् **सञ्ज्ञः** ।

**[१] परप्रत्ययसर्गे तु नियमात् नातिवर्तते ।**
**[२] एवं प्रज्ञां धारयन्तो आसते ये विपर्यये ॥ ३० ॥**

**परप्रत्ययसर्गे तु** इत्यत्र **परप्रत्ययसर्गे** परमात्मज्ञानोदये सति भूतानां सर्गः प्रलयश्च **नियमात्** भगवदाज्ञाख्यनियमात् **नातिवर्तते**, अतिक्रम्य न वर्तते ।

**एवं प्रज्ञां धारयन्त** इत्यत्र **विपर्यये** मरणादिसङ्कटेऽपि ।

**धृत्या देहान् धारयन्तो बुद्धिसङ्क्षिप्तचेतसः ।**
**स्थानेभ्यो ध्वंसमानाश्च सूक्ष्मत्वात्तदुपासते ॥ ३१ ॥**

**सूक्ष्मत्वात्** सूक्ष्मबुद्धित्वात् ।

**[३] यथागमं च तत्सर्वं बुद्ध्वातोऽन्यन्नैव बुद्ध्यति ।**
**देहान्तं कश्चिदन्वास्ते भावितात्मा निराश्रयः ॥ ३२ ॥**

**यथागमं च तत्सर्वं बुद्ध्वा तन्नैव बुद्ध्यति** इत्यत्र **तत्सर्वं** परमात्मनश्चरितं यथागमं बुद्ध्वा **अतः** ततोऽन्यन्न बुद्ध्यति ।

---

१. **'परप्रत्ययसर्गे तु नियमो'** इति कुं. पाठः ।
२. **'एवं तत्प्रभवां प्रज्ञामासते ये विपर्यये'** इति कुं.पाठः ।
३. **'यथागमं च तत्सर्वं बुद्ध्या तन्नैव बुद्ध्यते'** इति कुं. पाठः ।

**युक्तो धारणया कश्चित्सत्तां[१] केचिदुपासते ।**
**अभ्यस्यन्ति परं देवं विद्यासंशब्दिताक्षरम् ॥ ३३ ॥**

**युक्तो धारणया** इत्यत्र **धारणया** धारयति अवधारयति परमात्मानमिति **धारणा** प्रतिभा । **सत्तां** सर्वत्र भगवतः सत्ताम् ।

**विद्यासंशब्दिताक्षरम्** इत्यत्र **विद्यया** वेदविद्यया **संशब्दितानि** अक्षराणि स्वनामाक्षराणि यस्य। 'वेदाक्षराणि यावन्ति' इति वचनात् ।

**सूक्ष्मं विशेषणं तेषामवेक्षेच्छास्त्रचक्षुषा ।**
**देहं तु परमं विद्याद्विमुक्तमपरिग्रहम् ॥ ३९ ॥**

**सूक्ष्मं विशेषणं तेषाम्** इत्यत्र **तेषां** भगवद्गुणानां मध्ये **सूक्ष्मं विशेषणम्** अणुत्वमहत्त्वकर्तृत्वनिर्लेपत्वादिकम् । विमुक्तम् **परमम्** उत्तमम् । **अपरिग्रहं देहं** स्वदेहं मौक्तदेहमित्यर्थः ।

**अन्तरिक्षादन्यतरं धारणासक्तमानसम् ।**
**मर्त्यलोकाद्विमुच्यन्ते विद्यासंसक्तचेतसः ॥ ३६ ॥**

**अन्तरिक्षादन्यतरम्** इत्यत्र अन्तरीक्ष्यत इति **अन्तरिक्षः** बिम्बभूतः परमात्मा, तस्मात् **अन्यतरम्** अतिशयेन भिन्नं विद्यात् ।

**ज्ञात्वाऽऽत्मस्थं हरिं चैव न निवर्तन्ति तेऽव्ययात्[२] ।**
**प्राप्य तत्परमं स्थानं मोदन्तेऽक्षरमव्ययम् ॥ ४० ॥**

**न निवर्तन्ति तेऽव्ययात्** इत्यत्र **अव्ययात्** मुक्तेः ।

---

१. BORI पृ ११६२; **'कश्चित्सतः'** इति कुं.पाठः ।
२. D1.5.9,K7; BORI पृ . ११६३; **'अव्ययाः'** इति कुं. पाठः ।

(*)[१]**स्वतृप्तहानिर्नास्ति** इत्यत्र **स्वे** स्वतन्त्रे परमात्मनि तृप्तस्य हानिर्नास्ति । स परमात्मैव, स परमात्मा न तु जीवोऽपि परमात्मेति एवकारार्थः। सर्वं तु जगत्तथा परमात्मसदृशं सत्यत्वादिना सममित्यर्थः ।

(*)**जलादर्शे यथा लोक** इत्यत्र लोके **जलादर्शे** जल आदर्शे च वर्तमानस्य प्रतिबिम्बस्य मुखं बिन्दुमात्रेण यथा वर्तते । परः पुमान् तादृगेव **अर्थः** जगद्रूपोऽर्थः **तथा** प्रतिबिम्बवत्, तथापि बिम्बतया जीवदेहान्तर्विद्यमानोऽपि **परः** सर्वोत्तमः असौ **परः** परमः **पुमान्** परम-पुरुषः **सर्वभूतान्यः** सर्वजीवेभ्योऽत्यन्तभिन्नः ।

**॥ इति सप्तचत्वारिंशोऽध्यायः ॥**
**॥ इति वार्ष्णेयाध्यात्मं समाप्तम् ॥**

## ॥ अथ अष्टचत्वारिंशोऽध्यायः ॥

[२]**तस्य स्म शतमाचार्या वसन्ति सततं गृहे ।**
**दर्शयन्तः पृथग्धर्मान्नानापापण्डवादिनः** ॥ ४ ॥

**तस्य स्म शतमाचार्या** इत्यत्र **शतमाचार्याः** शतसङ्ख्याताचार्याः पञ्चशिखाचार्यशिक्षया **पृथक् धर्मान्** पृथक् पृथक् धर्मान् 'भस्मीभूतस्य देहस्य पुनरागमनं कुतः' इत्यादिविपरीतधर्मान् दर्शयन्तः । **नानापाषण्ड-वादिनः** चार्वाकादिपाषण्डमतवादिनः । **तत्र** जनकगृहे निवसन्ति ।

[३]**स तेषां प्रेत्यभावेन प्रेत्य जातो विनिश्चये ।**
**आगमस्थः स भूयिष्ठमात्मतत्त्वेन तुष्यति** ॥ ५ ॥

---

१. (*) एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
२. कुं. २२० अध्यायः । ; ३. **'स तेषां प्रेत्यभावेन प्रेत्य जातौ'** इति कुं. पाठः

**तेषां** परलोको नास्तीति तदुक्तवचनानां **विनिश्चये** कर्तव्ये **स** जनकः योगजशक्त्या **प्रेत्यभावेन** मरणेन **प्रेत्य** परलोकं गत्वा **जातः** पुनः स्व-देहं प्राप्तः सन् तद्वचनानि न मानयामासेति भावः । **आत्मतत्त्वेन** परमात्मतत्त्वेन **भूयिष्ठं** बहुशः ।

**ऋषीणामाहुरेकं यं कामादवसितं नृषु ।**
**शाश्वतं सुखमत्यन्तमन्विच्छन्तं सुदुर्लभम् ॥ ८ ॥**

**कामात्** स्वेच्छया ।

**आसुरेः प्रथमं शिष्यं यमाहुश्चिरजीविनम् ।**
**पञ्चस्रोतसि यः सत्रमास्ते वर्षसहस्रकम्[1] ॥ १० ॥**

**आसुरेः** आसुरिनामकस्य भगवद्रूपकपिलशिष्यस्य प्रथमशिष्यम् । **पञ्चस्रोतसि यः सत्रम्** इत्यत्र **यः** आसुरिः ।

**आसुरिर्मण्डले तस्मिन् प्रतिपेदे तदव्ययम् ॥ १४ ॥**

**मण्डले** यज्ञमण्डले ।

**दृश्यमाने विनाशे च प्रत्यक्षे लोकसाक्षिके ।**
**आगमात्परमस्तीति ब्रुवन्[2] यदपराजितः ॥ २४ ॥**

**दृश्यमाने विनाशे च प्रत्यक्षे लोकसाक्षिक** इत्यत्र **आगमात्** प्रमाणात् **परं** परलोकोऽस्तीति ब्रुवन् **यत्** यस्मात् **अपराजितः** तस्मा-च्चार्वाकादिमतमबद्धम् इति पञ्चशिखः जनकं प्रति बोधयामास ।

---

१. $G_{1,3,6}$,$M_{5,6}$,T,$D_7$; BORI पृ ११६५; **'वर्षसहस्रिकम्'** इति कुं.पाठः ।
२. $M_6$; BORI पृ ११६७; **'ब्रुवन्नपि पराजितः'** इति कुं.पाठः ।

**आत्मानं मन्यते मोहात्तदसम्यक्परं मतम्** ॥ २५ ॥

**परं** केवलम् असम्यक् ।

**अथ चेदेवमप्यस्ति यल्लोके नोपपद्यते ।**
**अजरोऽयममृत्युश्च राजाऽसौ मन्यते तथा** ॥ २६ ॥

**अथ चेदेवमप्यस्ति** इत्यत्र लोकः **यत्** जीवतत्त्वं परमात्मतत्त्वं च **नोपपद्यते** न जानाति एवं चेदपि **अजरः अमृत्युः** अयं जीवात्मा परमात्मा च अस्ति इत्यसौ राजा जनकः मन्यते ।

**अस्ति नास्तीति चाप्येतत्तस्मिन्नसति लक्षणे ।**
**किमधिष्ठाय तद्ब्रूयाल्लोकयात्राविनिश्चयम्** ॥ २७ ॥

**लक्षणे** परलोकनिदर्शके **तस्मिन्** प्रत्यक्षाख्यप्रमाणे असति सति **एतत्** परलोकादिकं कश्चिदस्तीति मन्यते । कश्चिन्नास्तीति मन्यते ।

**प्रत्यक्षं ह्येतयोर्मूलं कृतान्तैतिह्ययोरपि ।**
**प्रत्यक्षेणागमो भिन्नः कृतान्तो वा न कश्चन** ॥ २८ ॥

**प्रत्यक्षं ह्येतयोः** इत्यत्र **एतयोः कृतान्तैतिह्ययोः** सिद्धान्तैतिह्ययोः प्रत्यक्षं मूलम् । प्रत्यक्षेण भिन्नः **आगमोऽपि नास्ति** सिद्धान्तोऽपि नास्ति । अतः किमधिष्ठाय **लोकयात्राविनिश्चयं** परलोकयात्राविनिश्चयं ब्रूयात् ॥ इति चार्वाकमतानुवादः ।

**यत्र तत्रानुमानेऽस्मिन् कृतं भावयतोऽपि च ।**
**नान्यो जीवः शरीरस्य नास्तिकानां मते स्मृतः** ॥ २९ ॥

**यत्र तत्रानुमान** इत्यत्र **कृतं** सम्पूर्णम् ।

**रेतोधातुर्वटकणिका[१] घृतधूमाधिवासनम् ।**
**जातिस्मृतिरयस्कान्तः सूर्यकान्तोऽम्बुभक्षणम् ॥ ३० ॥**

**प्रेत्य भूताप्ययश्चैव देवताभ्युपयाचनम् ।**
**मृते कर्मनिवृत्तिश्च प्रमाणमिति निश्चयः ॥ ३१ ॥**

**रेतो धातुः** इत्यत्र रेतः स्त्रीशरीरे सिक्तम् अन्तर्गर्भो जायते । तस्य अप्रत्यक्षत्वात् स्थूलोदरत्वाख्यानुमानप्रामाण्यसिद्धिः । न मृतशरीरे गर्भो जायते, अतः शरीरभिन्नजीवसिद्धिः । न सर्वस्त्रीशरीरेषु अतः अदृष्टेश्वरादिसिद्धिः । एवञ्च रेतः **प्रमाणं** चार्वाकमतखण्डने प्रमाणमिति निश्चयः इत्यादिरूपेण प्रत्येकं योजना । **धातुः** वातपित्थादि धातुः अपथ्याद्विक्रियते । तस्य चाप्रत्यक्षत्वादनुमानप्रामाण्यसिद्धिः । न मृतशरीरे । अतः शरीरातिरिक्तजीवसिद्धिः । न सर्वशरीरे, तेनादृष्टेश्वरादिसिद्धिः । **वटकणिका** वटबीजम् । तस्मात् वटो जायते । न भर्जितायाः, नापि सर्वत्र । घृतेन अङ्गपुष्टिः जायते, न मृते, नापि सर्वत्र । धूमाधिवासनात् वृक्षे पुष्पादिकं जायते, न शुष्के, नापि सर्वत्र । **जातिस्मृतिः** तपआदिसाधनविशेषात् जातिस्मृतिः जायते । न मृते, नापि सर्वत्र । अयस्कान्तस्य लोहभ्रामकत्वं दृश्यते, न च केवलाचेतनस्य तद्युक्तम् । अतस्तस्मिन् शक्तिविशेषाधायकेश्वरसिद्धिः । एवं सूर्यकान्तेन अग्निर्जायते । तच्च न केवलाचेतनस्य । अतस्तत्प्रेरकेश्वरसिद्धिः । अम्बुभक्षणात् तृण्णिवृत्या सुखं जायते, न मृतशरीरे । अतः जीवसिद्धिः । **प्रेत्य** मरणानन्तरं **भूताप्ययः** देहस्थितपञ्चभूतानां नाशो जायते । न जीवच्छरीरे । देवताभ्युपयाचनात् भाग्यं जायते, तस्मादतीन्द्रिय-

---

१. 'रेतो वटकणीकायां घृतपाकाधिवासनम्' इति कुं.पाठः ।

देवतासिद्धिः, न मृतस्य देवतायाचनम्, अतो जीवसिद्धिः । मृते शरीरे कर्मनिवृत्तिः हस्तचालनादिकर्मनिवृत्तिः, तेन जीवसिद्धिरित्यर्थः ।

**न त्वेते हेतवः सन्ति ये केचिन्मूर्तिसंस्थिताः ।**
**अमूर्तस्य हि मूर्तेन सामान्यं नोपपद्यते ॥ ३२ ॥**

**न त्वेते हेतवः सन्ति** इत्यत्र **एते हेतवः** कचित् रेतो-धात्वादीनां तत्तत्कार्योत्पत्तेरनुत्पत्तेश्च हेतवो ये केचित्ते **मूर्तिसंस्थिताः** देहसंस्थिताः न सन्ति । तस्माद्देहातिरिक्तमदृष्टादिकं नियामकमस्तीति वक्तव्यमिति भावः । **अमूर्तस्य** देहव्यतिरिक्तादृष्टादेः **मूर्तेन** देहेन **सामान्यं** साम्यं नोपपद्यते । तस्य शक्तिर्भिन्ना, अस्य च शक्तिर्भिन्नेति भावः ।

**यतः[1] स्वरूपतश्चान्यो जातितः श्रुतितोऽर्थतः ।**
**कथमस्मिन् स इत्येवं[2] सम्बन्धः स्यादसंहितः ॥ ३६ ॥**

**यतः स्वरूपतश्चान्य** इत्यत्र **स्वरूपतः** अणुरूपत्वतः स्थूलरूपत्वतः, **जातितः** चेतनत्वजडत्वजातितः, **श्रुतितः** जीवदेहभेदप्रतिपादकश्रुतितः, **अर्थतः** सुखभोक्तृत्वतदभावाख्यप्रयोजनाच्च, **अन्यः** जीवादन्यो देहो **यतः** अतः कारणात् **स** देहः अहमस्मीति **असंहितः** अयुक्तः सम्बन्धः कथं स्यात् इति योजना ।

**यदा हि मुसलैर्हन्युः शरीरं न पुनर्भवेत् ।**
**पृथग्ज्ञानं यदन्यस्य[3] तेनैवं नोपपद्यते ॥ ३९ ॥**

---

१. **'यदा स्वरूपतः'** इति कुं. पाठः । $S_1,K_{1.2}$; BORI पृ. ११६९.
२. BORI पृ. ११६९; **'इत्येवं सम्बोधः'** इति कुं.पाठः ।
३. **'यदन्यच्च येनैतन्नोपपद्यते'** इति कुं.पाठः ।

**यदा(था) हि मुसलैर्हन्युः** इत्यत्र **अन्यस्य** देहादन्यस्य तस्यैव प्रेतयोनिं प्राप्तस्य **ज्ञानं** मामयं हिंसितवान् इति ज्ञानं पृथगस्ति **तेन** कारणेन **एवं** देह एव जीव इति मतं नोपपद्यते ।

**[१]ऋतुः संवत्सराः तिथ्यः शीतोष्णेऽथ प्रियाप्रिये ।**
**[२]यथाऽतीता न नश्यन्ति तादृशः सत्त्वसङ्क्षयः ॥ ४० ॥**

**ऋतुः संवत्सरा** इत्यत्र ऋतुत्वाद्यवस्था गच्छन्ति कालस्तु न नश्यति । तथा जीव इति भावः । **सत्त्वसङ्क्षयः** जीवसङ्क्षयः ।

**[३]विवादादेव सिद्धोऽसौ कारणस्येव वेदना ।**
**चेतनो विद्यते ह्यत्र हैतुकं च मनोगतम् ॥ ३ ॥**

**हैतुकं च मनोगतम्** इत्यत्र **हैतुकं** पुण्यपापादिहेतुसमूहः ।

**स्वभावं पौरुषं कर्म ह्यात्मानं तमुपाश्रिताः ।**
**तमाश्रित्य प्रवर्तन्ते देहिनो देहबन्धनाः ॥ ५ ॥**

**आत्मानं तमुपाश्रिता** इत्यत्र **आत्मानं** परमात्मानम् **आश्रिताः** तदधीना इत्यर्थः ।

**गुणज्ञानमभिज्ञानं तस्य [४]लिङ्गानि शब्दवत् ।**
**पृथिव्यादिषु भूतेषु तत्तदाहुर्निदर्शनम् ॥ ६ ॥**

---

१. $T_2,M_{1,5,7},D_9$; **'ऋतुसंवत्सरौ'** इति कुं. पाठः । BORI पृ ११७०
२. $D_8,G_2$; **'यथाऽतीता न दृश्यन्ते'** इति कुं.पाठः । BORI पृ ११७०
३. कुं. २२१ अध्यायः ।
४. **'लिङ्गानुशब्दवत्'** इति कुं. पाठः ।

**गुणज्ञानमभिज्ञानम्** इत्यत्र **तस्य** परमात्मनः, **शब्दवत्** श्रुतिवत्, **गुणज्ञानं** प्रकाशादिगुणज्ञानम्, **अभिज्ञानं** प्रत्यभिज्ञा प्रत्यक्षं च । **लिङ्गानि** ज्ञापकानि ।

**आत्माऽसौ वर्तते भिन्नस्तत्रतत्र समन्वितः ।**
**परमात्मा तथैवैको देहेऽस्मिन्निति वै श्रुतिः ॥ ७ ॥**

**आत्मा** जीवः तथा एकः परमात्मा च अस्मिन् देहे तिष्ठति इति **श्रुतिर्वै** 'द्वासुपर्णा'[१] इति श्रुतिरस्ति वै ।

**आकाशं वायुरूष्मा च स्नेहे यच्चापि पार्थिवम् ।**
**यथा त्रिधा प्रवर्तन्ते तथाऽसौ पुरुषः स्मृतः ॥ ८ ॥**

**यथा त्रिधा प्रवर्तन्त** इत्यत्र आप्यतैजसपार्थिवशरीरेषु **त्रिधा** त्रिः प्रकारेण । पार्थिवदेहेषु पृथिव्याः बाहुल्यम्, आप्ये अपां, तैजसे तेजसः इति त्रिधा ।

**पयस्यन्तर्हितं यद्वत्तद्वद् व्याप्तं महात्मकम् ।**
**पूर्वं नैश्वर्ययोगेन तस्मादेतन्न शेषवान् ॥ ९ ॥**

**पयस्यन्तर्हितं यद्वत्** इत्यत्र **पयसि अन्तर्हितं** घृतमिति योग्यपदाध्याहारः ।

**शब्दः कालः क्रिया देहो ममैकस्यैव कल्पना ।**
**स्वभावं तन्मयं त्वेतत्[२] मायारूपं तु भेदवत् ॥ १० ॥**

---

१. आथर्वणोपनिषत् ५-१
२. 'त्वेदम्' इति कुं. पाठः । BORI पृ २०३४

**स्वभावं** नानास्वभावम्, **एतत् मायारूपं** प्रकृतिरूपं जगत् **तन्मयं** तेन नारायणेन व्याप्तम् । **भेदवत्** भेदयुक्तम् ।

**[१]अनुबन्धान्न विज्ञानं ज्ञानतो ध्रुवमव्ययम् ।**
**नानाभेदविकल्पेन येषामात्मा स्मृतः सदा ॥ १४ ॥**
**प्रकृतेरपरस्तेषां [२]बहवो ह्यात्मवादिनः ।**

**अनुबन्धान्न विज्ञानं ज्ञानत** इत्यत्र **अनुबन्धात्** देह एव स्नेहात्, **विज्ञानं** विशिष्टज्ञानं ज्ञानतो (भवेत्) ध्रुवम्, **अव्ययं** मोक्षश्च न । तेषां मतेऽपि प्रकृतेरपरः जीवो वाच्यः । **हि** यस्मादात्मवादिनः बहवः ।

**एकानेकात्मकं तेषां प्रतिषेधो हि भेदनुत् ।**
**तस्माद्भेदस्य [३]हृदयं न द्वैध्यमिति विद्धि तत् ॥ १६ ॥**

**भेदनुत्** जीवभेदनुत् साधकः । 'नुद प्रेरणे' इति हि धातुः ।

**न द्वैध्यम्** इत्यत्र **द्वैध्यं** द्विप्रकारसम्बन्धि, चार्वाकमतसम्बन्धि अन्यमतसम्बन्धि च नेत्यर्थः ।

**न यन्न साध्यं तद्ब्रह्म नादिमध्यं न चान्तवत् ।**
**[४]इन्द्रियाणि सभूतानि परा च प्रकृतिर्मनः ॥ १८ ॥**

**इन्द्रियाणि सभूतानि** इत्यत्र इन्द्रियाणीत्यारभ्य आत्मान्तः जडाजडप्रपञ्चश्च प्रोक्तः ।

---

१. **'अबन्धनमविज्ञानात् ज्ञानम्'** इति कुं.पाठः । BORI पृ २०३४
२. **'बहवोऽप्यात्मवादिनः'** इति कुं. पाठः । BORI पृ २०३४
३. **'हृदयमद्वैध्यमिति'** इति कुं.पाठः । BORI पृ २०३४
४. **'इन्द्रियाणि च भूरीणि'** इति कुं.पाठः । BORI पृ २०३४

**आत्मा च परमः शुद्धः प्रोक्तोऽसौ परमः पुमान् ॥ १९ ॥**

**शुद्धः असौ परमः पुमान्** परमपुरुषश्च । **परमः** जडाजडप्रपञ्चादुत्तम इति च वेदे प्रोक्तः ।

**उत्पत्तिलक्षणं चेदं विपरीतमथोभयोः ।**
**यो वेत्ति प्रकृतिं नित्यं तथा चैवात्मनस्तु ताम् ।**
**प्रदहत्येष कर्माख्यं दावोद्भूत इवानलः ॥ २० ॥**

**उत्पत्तिलक्षणं चेदम्** इत्यत्र **उभयोः** जडजीवयोः जगद्ब्रह्मणोर्वा उत्पत्तिलक्षणं, **विपरीतम्** अनुत्पत्तिलक्षणञ्च यो वेत्ति, तथा **ताम्** अनुत्पत्तिम् **आत्मनः** जीवात्मनः परमात्मनश्च प्रकृतिं च नित्यं यो वेत्ति इति योजना ।

**आकाशकल्पं विमलं नानाशक्तिसमन्वितम् ।**
**तापनं सर्वभूतानां ज्योतिषां मध्यमस्थितिम् ।**
**दुःखमास्ते[1] स निर्दुःखः तद्विद्वान्न च लिप्यति ॥ २२ ॥**

**दुःखमास्ते स निर्दुःख** इत्यत्र **निर्दुःखः स** परमात्मा **दुःखं** दुःख-भरितं देहम्, **आस्ते** साक्षितया आस्ते ।

**असावश्नाति यद्वत्तद्भ्रमरोऽश्नाति यन्मधु ।**
**एवमेष महानात्मा [2]नात्मा तमवबुध्यते ॥ २३ ॥**

**असावश्नाति यद्वत्** इत्यत्र **भ्रमरः यन्मधु यद्वदश्नाति** तद्वत् असौ

---

१. **'दुःखमस्ति न निर्दुःखम्'** इति कुं.पाठः । BORI पृ २०३४
२. **'नात्मानमवबुध्यते'** इति कुं.पाठः । BORI पृ २०३४

परमात्मा शुभं सुखमश्नाति । एवम् एषः **आत्मा** परमात्मा **महान्** सर्वोत्तमः । **आत्मा** जीवात्मा तं नावबुध्यते ।

**एवंभूतस्त्वमित्यत्र स्वाधितो बुद्ध्यते परम् ।**
**बुधस्य बोधनं तत्र क्रियते सद्भिरित्युत ।**
**नबुधस्येति वै कश्चिन्न तथावच्छृणुष्व मे ॥ २४ ॥**

**एवंभूतः त्वम्** इति । **अत्र** जीवात्मपरमात्मनोर्मध्ये **स्वाधीतः स्वैः** स्वकीयैः गुरुभिः अधीतः परं बुध्यते । कश्चित् **नबुधस्य** बुधो न भवतीति नबुधो मिथ्याज्ञानी, तस्य **तथावत्** यथास्थितवत्, तथापि **मे** मत्तः तं शृणुष्वेति बोधनं कश्चिदपि न कुरुते ।

**एवं तस्य विभोः कृत्यं धातुरस्य महात्मनः ।**
**क्षमन्ति ते महात्मानं सर्वद्वन्द्वविवर्जिताः ॥ २६ ॥**

**एवं तस्य विभोः कृत्यं धातुरस्य** इत्यत्र हे **विभो** जनक, **तस्य** दुर्जनस्य एवं कृत्यम् अस्य **धातुः** नारायणस्य **सर्वद्वन्द्वविवर्जिताः** भक्ताः क्षमन्ति ।

**अतोऽन्यथा महात्मानमन्यथा प्रतिपद्यते ।**
**किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥ २७ ॥**

**अतः** कारणात् **अन्यथा** सर्वोत्तमत्वभिन्नत्वादिप्रकारेण सन्तं **महात्मानं** नारायणम् **अन्यथा** ततो वैपरीत्येन ।

**तस्य संयोगयोगेन शुचिरप्यशुचिर्भवेत् ।**
**अशुचिश्च शुचिश्चापि ज्ञानज्ञेयादयो[१] यथा ॥ २८ ॥**

१. **'ज्ञानदेहादयो'** इति कुं.पाठः ।

**अशुचिश्च शुचिश्च** इत्यत्र ज्ञानज्ञेयादयो यथा भवन्ति तथा अशुचिः शुचिश्च भवति । **आदिपदेन** कर्मोच्यते । अशुद्धस्य ज्ञानज्ञेयादेर्लाभे अशुचिः भवति, शुद्धस्य ज्ञानज्ञेयादेर्लाभे शुचिर्भवतीत्यर्थः । तदेव क्रमेण दर्शयति – **दृश्यमिति** ॥

**दृश्यं न चैव दृष्टं स्याद् दृष्टं दृश्यं तु नैव च ॥ २९ ॥**

अशुचेः पुरुषस्य **दृश्यं** दर्शनयोग्यं शुद्धं ब्रह्म दृष्टं न चैव स्यात्, किन्तु अशुद्धं देहगेहकलत्रादिकमेव दृष्टं स्यात् । शुचेस्तु **दृष्टम्** अशुद्धं देहगेहकलत्रादिकं **दृश्यं** दर्शनयोग्यं नैव भवेत् किन्तु शुद्धं ब्रह्मैव **दृश्यं** दर्शनयोग्यं भवेदिति योजना ।

**अतीतत्रितयः[१] सिद्धो ज्ञानरूपेण सर्वदा ।**
**एवं न प्रतिपद्यन्ते रागमोहमदान्विताः ॥ ३० ॥**

**अतीतत्रितयः** गुणत्रयातीतः सर्वदा ज्ञानरूपेण तिष्ठति ।

**वेदबाह्या दुरात्मानः संसारे दुःखभागिनः ।**
**आगमानुगतज्ञाना बुद्धियुक्ताः भवन्ति ते ॥ ३१ ॥**

**बुद्धियुक्ता भवन्ति ते** इत्यत्र **ते** ज्ञानिनः ।

**[२]बुद्ध्या भवति बुद्ध्यात्तं यद्बुद्धं चात्मरूपवत् ।**
**तमस्यन्धे नसन्देहात् परं यान्ति न संशयः ॥ ३२ ॥**

**बुद्ध्या भवति बुद्ध्यात्तम्** इत्यत्र **आत्मरूपवत्** परमात्मरूपवत्

---

१. **'अतीतत्रितयाः सिद्धा'** इति कुं.पाठः । BORI पृ २०३५
२. **'बुद्ध्या भवति बुद्ध्या त्वं'** इति कुं.पाठः । BORI पृ २०३५

**यद् बुद्धं** शुद्धज्ञानात्मकं यद्रूपं तेनैव रूपेण तं परमात्मानं, **भवति** जायमाने जीवे, अन्तर्यामितया स्थितं, **बुद्ध्या** विवेकेन, बुद्ध्यात् । **नसन्देहात्** असन्देहात् निश्चयादिति यावत् ।

**तमेवं सर्वदुःखात्तु मोचयेत् परमात्मवान् ।**
**ब्रह्मचर्यव्रतोपेतः सर्वसङ्गबहिष्कृतः ।**
**लघ्वाहारो विशुद्धात्मा परं निर्वाणमृच्छति ॥ ३७ ॥**

**मोचयेत्परमात्मवान्** इत्यत्र **परमात्मवान्** परमात्मज्ञानवान् परमात्मभक्तः ।

**कारणानुगतं कार्यं यदि तच्च विनश्यति ।**
**अलिङ्गस्य कथं लिङ्गं युज्यते तन्मृषा दृढम् ॥ ३९ ॥**

**अलिङ्गस्य कथं लिङ्गम्** इत्यत्र **अलिङ्गस्य** स्वभावतो लिङ्गदेह-वर्जितस्य ।

**अमर्त्यस्य च मर्त्येन सामान्यं नोपपद्यते ॥ ४० ॥**

**मर्त्येन** देहेन ।

**लोकदृष्टो यथा जातेः स्वेदजः पुरुषः स्त्रियाम् ।**
**कृतानुस्मरणात् सिद्धो वेदगम्यः परः पुमान् ॥ ४१ ॥**

**कृतानुस्मरणात्** इत्यत्र **कृतानुस्मरणात्** एवमेव भगवतः स्रष्टृत्वादि-कर्मानुस्मरणात् ।

**श्रुत्या तथापरोप्यात्मा दृश्यते सोऽप्यलिङ्गवान् ।**
**अलिङ्गसाध्यं तद्ब्रह्म बहवः सन्ति हेतवः ॥ ४३ ॥**

**बहवः सन्ति हेतव** इत्यत्र अलिङ्गसाध्यत्वे **बहवः** युगपदणुत्व-महत्त्वादयः सन्ति ।

**इति सम्यङ्ग्नस्येते बहवः सन्ति हेतवः ।**
**एतदस्तीदमस्तीति न किञ्चित् प्रतिदृश्यते ॥ ४९ ॥**

**एतदस्तीदमस्ति** इत्यत्र **एतत्** पारलौकिकम् । **इदम्** ऐहिकम् ।

**॥ इति अष्टचत्वारिंशोऽध्यायः ॥**

## ॥ अथ एकोनचत्वारिंशोऽध्यायः ॥

**भीष्म उवाच–**

**जनको[१] नरदेवस्तु ज्ञापितः परमर्षिणा ।**
**पुनरेवानुपप्रच्छ साम्पराये भवाभवौ ॥ १ ॥**

**साम्पराये भवाभवौ** इत्यत्र **साम्पराये** मोक्षविषये मोक्षसाधनाय मोक्षबोधनविषये चेत्यर्थः । **भवाभवौ** शोभनाशोभनव्यापारौ ।

**जनक उवाच–**

**भगवन् यदि न प्रेत्य सञ्ज्ञा भवति कस्यचित् ।**
**एवं सति किमज्ञानं ज्ञानं वा किं करिष्यति ॥ २ ॥**

**सञ्ज्ञा भवति कस्यचित्** इत्यत्र **सञ्ज्ञा** ज्ञानम् ।

**सर्वमुच्छेदनिष्ठं स्यात् पश्य चैतद् द्विजोत्तम ।**
**अप्रमत्तः प्रमत्तो वा किं विशेषं करिष्यति ॥ ३ ॥**

---

१. कुं. २२२ अध्यायः ।

**उच्छेदनिष्ठम्** इत्यत्र ज्ञानाभावे **सर्वं** कर्म **उच्छेदनिष्ठं** सुखदुःख-भोगादेरुच्छेदनिष्ठं स्यात् ।

परलोकफलाभावेऽपि पुत्रमित्रकलत्राख्य(दीनां) संसर्गाख्यफलाय कर्म स्यात् इत्यत आह – **असंसर्गो हि** इति ॥

**असंसर्गो हि भूतेषु संसर्गो वा विनाशिषु ।**
**कस्मै क्रियेत तत्त्वेन निश्चयः कोऽत्र तत्त्वतः** ॥ ४ ॥

विनाशिषु भूतेषु असंसर्गः संसर्गो वा अत्र **कस्मै** प्रयोजनाय क्रियते ।

**उच्छेदनिष्ठा नेहास्ति भावनिष्ठा न विद्यते ।**
**अयं ह्यपि समाहारः शरीरेन्द्रियचेतसाम् ।**
**वर्तते पृथगन्योन्यमप्यपाश्रित्य कर्मसु** ॥ ६ ॥

**उच्छेदनिष्ठा नेहास्ति** इत्यत्र **इह** सत्कर्मणि दुष्कर्मणि उत्कर्मणि तद्वत् ज्ञाने मिथ्याज्ञाने च अर्जिते सति परत्र मुक्तौ तमसि सुख-दुःखभोगयोः उच्छेदनिष्ठा नास्ति, किन्तु मुक्तौ नित्यं सुखभोगोऽस्ति, तमसि नित्यं दुःखभोगोऽप्यस्ति । **भावनिष्ठा भावस्य** भवतीति व्युत्पत्त्या अनित्यज्ञानस्यैव निष्ठा **न विद्यते** । 'न प्रेत्य सञ्ज्ञास्ति'[१] इति श्रुत्या अनित्यज्ञानमेव निषिद्ध्यत इति भावः ।

**आकाशो वायुरूष्मा च स्नेहो यश्चापि पार्थिवः ।**
**एष पञ्चसमाहारः शरीरमपि नैकधा** ॥ ८ ॥

**शरीरमपि नैकधा** इत्यत्र पार्थिवादिभेदेन बहुविध इति भावः ।

---

१. बृ.उ. ६-५-१२

**अहं वाच्यं द्विजानां यद्विशिष्टं बुद्धिरूपवत् ।**
**वाचामगोचरं नित्यं ज्ञेयमेवं भविष्यति ॥ ९ ॥**

**अहं वाच्यं द्विजानाम्** इत्यत्र अहेयत्वात् **अहम्** इति शब्देन वाच्यम् । द्विजानां **विशिष्टं,** विशिष्टं दैवम् ।

**ज्ञानं ज्ञेयं तथाज्ञानं त्रिविधं ज्ञानमुच्यते ।**
**ज्ञानमूष्मा च वायुश्च त्रिविधः कर्मसङ्ग्रहः ॥ १० ॥**

**ज्ञानं ज्ञेयं तथाज्ञानम्** इत्यत्र **ज्ञानं** सामान्यज्ञानं परोक्षज्ञानं च । **ज्ञेयं** ज्ञानविषयं ब्रह्म । **आ** सम्यक् **ज्ञानं** विशिष्टज्ञानम् अपरोक्षज्ञानं च ।

**ज्ञानमूष्मा च वायुश्च** इत्यत्र **ज्ञानं** कर्मकाण्डज्ञानम् । **ऊष्मा** अग्निः । **वायुः** अग्नेरुत्थापकः ।

**तत्र विज्ञानसंयुक्ता त्रिविधा चेतना ध्रुवा ।**
**सुखदुःखेति यामाहुरदुःखेत्यसुखेति च ॥ १४ ॥**

**त्रिविधा चेतना ध्रुवा** इत्यत्र **विज्ञानसंयुक्ता** विविधज्ञानसंयुक्ता, अत एव **त्रिविधा** सात्त्विकराजसतामसभेदेन त्रिविधा **चेतना** चित्तस्यावस्थाविशेषः। सुखदुःखमिश्रजीवेषु सुखं दुःखं च यया सा तथोक्ता । उत्तमजीवेषु न दुःखं यया सा तथोक्ता । अधमजीवेषु न सुखं यया सा तथोक्ता ।

**शब्दः स्पर्शश्च रूपं च रसो गन्धश्च मूर्तयः ।**
**एते ह्यामरणात् पञ्च षड्गुणा ज्ञानसिद्धये ॥ १५ ॥**

**एते ह्यामरणात् पञ्च षड्गुणा ज्ञानसिद्धय** इत्यत्र मनसा सह षण्णां ज्ञानेन्द्रियाणां गुणभूतं यत् ज्ञानं तस्य सिद्धये **एते** ज्ञान-विषयभूताः पञ्च आमरणात् तिष्ठन्ति ।

**तेषु कर्मविसर्गश्च सर्वतत्त्वार्थनिश्चयः ।**
**तमाहुः परमं शुक्रं पारे च रजसः प्रभुम्** ॥ १६ ॥

**तेषु कर्मविसर्गश्च** इत्यत्र **तेषु** कर्मेन्द्रियेषु ।

**विरागाद्वर्तते तस्मिन् मनो रजसि नित्यगम् ।**
**तस्मिन् प्रसन्ने सम्पश्येद्बुद्धिरित्यव्ययं महत्** ॥ १७ ॥

**तस्मिन् प्रसन्न** इत्यत्र तस्मिन् प्रसन्ने सति । **बुद्धिः इति** पूर्वोत्तरोक्त-गुणवत्तया तं पश्येत् ।

**इमं गुणसमाहारमात्मभावेन पश्यतः ।**
**असम्यग्दर्शिनो दुःखमनन्तं नोपशाम्यति** ॥ १८ ॥

**इमं गुणसमाहारम्** इत्यत्र **गुणसमाहारं** ज्ञानादिगुणसमाहारवन्तम् इमं परमात्मानम्, **आत्मभावेन** आत्मत्वेन स्वस्वरूपत्वेनेत्यर्थः ।

**तस्मादेतेषु मेधावी न प्रसज्येत बुद्धिमान् ।**
**अनात्मेति च यद् दृष्टं तन्नाहं न ममेत्यपि ।**
**वर्तते किमधिष्ठाना प्रसक्ता दुःखसन्ततिः** ॥ १९ ॥

**तस्मादेतेषु** इत्यत्र **एतेषु** ब्रह्मैक्यज्ञानिषु ।

**अनात्मेति च यद् दृष्टम्** इत्यत्र **आत्मा** जीवः स्वयं न भवतीत्य-नात्मेति **यद् दृष्टं** द्वासुपर्णेत्यादि श्रुतिषु दृष्टं **तत्** ब्रह्मस्वरूपम् अहं न ।

**मम** स्वरूपमपि तन्न । इति यो वेद तस्मिन् प्रसक्ता दुःखसन्ततिः किमधिष्ठाना वर्तते । सः दुःखस्य अधिष्ठानमेव न भवतीति भावः ।

**यत्र सम्यङ्नो नाम त्यागमात्रमनुत्तमम् ।**
**शृणु यत्तव मोक्षाय भाष्यमाणं भविष्यति ॥ २० ॥**

**त्यागमात्रमनुत्तमम्** इत्यत्र मात्राणां विषयाणां त्यागो यस्य **तत्त्यागमात्रम्** ।

**त्याग एव हि सर्वेषां युक्तानामपि कर्मणाम् ।**
**नित्यदुःखविनीतानां श्लेषो दुःखवहो हतः ॥ २१ ॥**

**त्यागः** फलत्यागः सुखकरः । **श्लेषः** फलसंश्लेषः ।

**द्रव्यत्यागे तु कर्माणि भोगत्यागे व्रतान्यपि ।**
**सुखत्यागे तपोयोगं सर्वत्यागे समापना ॥ २२ ॥**

**द्रव्यत्याग** इत्यत्र द्रव्यत्यागे **कर्माणि** यज्ञादिकर्माणि भवन्ति । **सर्वत्यागे** ऐहिकामुष्मिकसकलभोगाशात्यागे, **समापना** सम्यगापना आप्तिः भगवत्प्राप्तिर्भवति ।

**तस्य मार्गोऽयमद्वैधः सर्वत्यागस्य दर्शितः ।**
**विप्रहाणाय दुःखस्य दुर्गतिस्त्वन्यथा भवेत् ॥ २३ ॥**

**अद्वैधः**, **द्वैधं** द्विधा सम्बन्धि, **द्वैधं** विरुद्धप्रकारद्वयावलम्बि ।

**शेते जरामृत्युभयैर्विमुक्तः**
**क्षीणे पुण्ये विगते च पापे ।**

**तपोनिमित्ते विगते च निष्ठे**
**फले यथाऽऽकाशमलिङ्ग एव** ॥ २४ ॥

**अलिङ्गः** लिङ्गशरीररहितः, **शेते** इति पूर्वेणान्वयः ।

**अथ यन्मोहसंयुक्तं काये मनसि वा भवेत् ।**
**अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत्** ॥ ३६ ॥

**अविज्ञेयं** ज्ञातुमनर्हम् ।

**श्रोत्रं व्योमाश्रितं भूतं शब्दः श्रोत्रं समाश्रितः ।**
**नोभयं शब्दविज्ञाने विज्ञानस्येतरस्य वा** ॥ ३७ ॥

**नोभयं शब्दविज्ञान** इत्यत्र **उभयं** शब्दः श्रोत्रं चेत्युभयं, **शब्दविज्ञाने** शब्दविज्ञान एव कारणं न, किन्तु कदाचित् **विज्ञानस्य** कदाचित् **इतरस्य** अज्ञानस्य । सुषुप्तिदशायाम् अज्ञानस्य जाग्रदवस्थायां विज्ञानस्येति भावः ।

**एवं त्वक् चक्षुषी जिह्वा नासिका चेति पञ्चमी ।**
**स्पर्शे रूपे रसे गन्धे वाचि[१] चेतो मनश्च यत्** ॥ ३८ ॥

**वाचि चेतो मनश्च यत्** इत्यत्र **यच्चेतः** तच्च **मनः** सर्वत्र सङ्कल्पविकल्पकारणम् ।

**स्वकर्मयुगपद्भावो दशस्वेतेषु तिष्ठति ।**
**चित्तमेकादशं विद्धि बुद्धिर्द्वादशमी भवेत्** ॥ ३९ ॥

---

१. $S_1$,$K_{1,2,7}$; **'तानि चेतो मनश्च तत्'** इति कुं.पाठः । BORI पृ १११७

**स्वकर्मयुगपद्भाव** इत्यत्र **स्वकर्मसु** स्वव्यापारेषु **युगपद्भावः** यौगपद्यं शृणोमि, पश्यामि, गच्छामि, गृह्णामि पिबामीत्यादिरूपेण युगपदाशां जनयन्ति जीवस्येत्यर्थः।

**तेषामयुगपद्भाव उच्छेदो नास्ति तामसः।**
**आस्थितो युगपद्भावे व्यवहारः स लौकिकः ॥ ४० ॥**

**उच्छेदः** क्लेशः।

**यत्तमोपहतं चित्तमाशु सञ्चारमध्रुवम्।**
**करोत्युपरमं काये तदाहुस्तामसं सुखम् ॥ ४२ ॥**

**करोत्युपरमम्** इत्यत्र **उपरमं** रतिम्।

**यद्यदागमसंयुक्तं न कृच्छ्रादुपशाम्यति।**
**अथ तत्राप्युपादत्ते तमो[1] व्यक्तमिवावृतम् ॥ ४३ ॥**

**तमो व्यक्तमिवावृतम्** इत्यत्र **आवृतम्** अव्यक्तम् **इव** अन्धकारमिव, **तमः** तमोगुणम्, उपादत्ते जीवः।

**अहमित्येष वै भावो नान्यत्र प्रतितिष्ठति।**
**यस्य भावो[2]ऽजे नित्यं स वै विद्वांस्तथेतरः ॥ ४५ ॥**

**अहमित्येष वै भाव** इत्यत्र **नान्यत्र** स्वस्मादन्यत्र जीवान्तरे परब्रह्मणि च यस्य अहमिति भावः न तिष्ठति। 'ब्रह्माहं सर्वे जीवाश्चाहम्' इति यस्य बुद्धिर्नेत्यर्थः। **अजे** परमात्मनि **यस्य** पुरुषस्य **नित्यं भावः** भक्तिः अस्ति।

---

१. M5; **'तमो व्यक्तमिवानृतम्'** इति कुं.पाठः। BORI पृ ११७८
२. **'यस्य भावो दृढो नित्यम्'** इति कुं. पाठः।

**देहधर्मस्तथा नित्यं सर्वभूतेषु वै दृढः ।**
**एतेनैवानुमानेन त्याज्यो धर्मस्तथा ह्यसौ ॥ ४६ ॥**

**देहधर्मस्तथा** इत्यत्र सर्वभूतेषु **देहधर्मः** देहनिमित्तकः सुखदुःखादिः यथा वैचित्र्येण दृश्यते तथा दृढो वै । **एतेन अनुमानेन** सुखदुःख-वैचित्र्याख्यानुमानेन **असौ धर्मः** अभेदाख्यो धर्मः **तथा** दहनतुहिना-भेदवत् त्याज्यो हि ।

**सर्वार्थजनकश्चैव धर्मः सर्वस्य कारणम् ।**
**सर्वो हि दृश्यते लोके न सर्वार्थः कथञ्चन ॥ ४८ ॥**

**न सर्वार्थः कथञ्चन** इत्यत्र **सर्वार्थः** सर्वस्माद्यस्य पुरुषार्थः ।

**सर्वत्यागे कृते तस्मात् परमात्मा प्रसीदति ।**
**व्यक्तादव्यक्तमतुलं लोकेषु परिवर्तते ॥ ४९ ॥**

**व्यक्तादव्यक्तम्** इत्यत्र **व्यक्तात्** क्षित्यादिकार्यात् **अव्यक्तम्** अदृश्यं कर्तृ ब्रह्म ।

**एतदाहुः समाहारं क्षेत्रमध्यात्मचिन्तकाः ।**
**स्थितो मनसि यो भावः स वै क्षेत्रज्ञ उच्यते ॥ ५० ॥**

**क्षेत्रमध्यात्मचिन्तका** इत्यत्र **क्षेत्रमधि** स्वस्वदेहमधिकृत्य **आत्म-चिन्तकाः** । **भावः** भावयति सर्वं देहव्यापारमिति भावः साक्षी ।

**एवं सति क उच्छेदः शाश्वतो वा कथं भवेत् ।**
**स्वभावाद्वर्तमानेषु सर्वभूतेषु हेतुषु ॥ ५१ ॥**

**एवं सति** इत्यत्र **उच्छेदः** सुखदुःखभोगयोरुच्छेदकः को वा जीवः **शाश्वतः** शश्वदेकप्रकारः नारायणः कथं भवेत् ? **सर्वभूतेषु स्वभावात्** स्वस्वरूपभूतज्ञानस्वभावात् **हेतुषु** सुखादीनां भोगहेतुषु सत्सु क उच्छेदः इति पूर्वेणान्वयः ।

**एवं सति कुतः सञ्ज्ञा प्रेत्यभावे पुनर्भवेत् ।**
**प्रतिसंमिश्रिते जीवे गृह्यमाणे च सर्वतः ॥ ५३ ॥**

**एवं सति** इत्यत्र **प्रेत्यभावे** मोक्षे **सञ्ज्ञा** प्राकृतज्ञानं **प्रतिसम्मिश्रिते** परमात्मनः उदरे संश्रिते सति **सर्वतः** सकलप्राकृतदेहेन्द्रियादिभ्यः **गृह्यमाणे** निगृह्यमाणे च सति । ल्यब्लोपनिमित्ता पञ्चमी । सर्वं देहेन्द्रियादिकं संहृत्य भगवता **गृह्यमाणे** अनुगृह्यमाणे सति सञ्ज्ञा कुतो भवेदिति पूर्वेणान्वयः ।

**श्रुतिप्रमाणागममङ्गलैश्च**
**शेते जरामृत्युभयादभीतः ।**
**क्षीणे च पुण्ये विगते च पापे**
**ततो निमित्ते च फले विनष्टे ।**
**अलेपमाकाशमलिङ्गमेव-**
**मास्थाय पश्यन्ति महत्यसक्ताः ॥ ५६ ॥**

**अलेपम्** इत्यत्र **अलिङ्गं** लिङ्गदेहरहितम्, **आकाशम्** आकाशवदलेपं स्वस्वरूपम् आस्थाय **महति** संसारे **असक्ताः पश्यन्ति** । मुक्ताः स्वरूपेन्द्रियैः सर्वं पश्यन्ति ।

**इमान् स्वलोकाननुपश्य सर्वान्**
**[1]व्रजत्यथाऽऽकाशमिवाप्तुकामः ।**
**इमां हि गाथां प्रलपन्यथाऽस्ति**
**समस्तसङ्कल्पविशेषमुक्तः ॥ ६० ॥**

**व्रजत्यथाऽऽकाशम्** इत्यत्र **आकाशम्** आसमन्तात् काशनात् आकाशनामानं परमात्मानम् ।

**[2]अयं हि सर्वं किल सर्वभावः**
**ह्यहं तदन्तर्ह्यहमेव भोक्ता ॥ ६०॥**

**अयं हि सर्वम्** इत्यत्र **अयं** मदाधारभूतः परमात्मा सर्वं किल । **सर्व-भावः** सर्वं भावयति उत्पादयतीति सर्वभावः । सर्वव्याप्तत्वात् **सर्वं** सर्वशब्दवाच्यं ब्रह्म च अहम् । मुक्तावपि **तदन्तः तस्य** परमात्मनः उदरान्तः विद्यमानः किल । न तु तेनैकीभूतः अहम् । **भोक्ता** स्वयोग्य-भोगभोक्ता किल ।

**॥ इति एकोनपञ्चाशोऽध्यायः ॥**
**॥ पञ्चशिखवाक्यं समाप्तम् ॥**

## ॥ अथ पञ्चाशोऽध्यायः ॥

**[3]त्वमेवं पद्मनाभस्य नित्यं पक्षपदाहितः ।**
**अहो सिद्धार्थरूपोऽसि गमिष्ये स्वस्ति तेऽस्तु वै ॥ १४ ॥**

---

१. **'व्रजन् यथाकाशम्'** इति कुं.पाठः ।
२. **'अहं हि सर्वं किल सर्वभावे'** इति कुं.पाठः ।; ३. कुं. २२३ अध्यायः ।

**नित्यं पक्षपदाहित** इत्यत्र **पक्षे पदं** स्थानम् **आहितं** कृतं येन सः। पद्मनाभस्य पक्षपातीत्यर्थः।

**अनन्तं बत मे वित्तं भाव्यं मे नास्ति किञ्चन।**
**मिथिलायां प्रदीप्तायां न मे किञ्चन दह्यते ॥ १७॥**

**भाव्यं मे नास्ति किञ्चन** इत्यत्र **मे भाव्यं** मम भवितुं योग्यम्।

**आत्मानं दर्शयामास वरं चास्मै ददौ पुनः।**
**धर्मे तिष्ठतु सद्भावो बुद्धिस्तेऽर्थे नराधिप ॥ १९॥**

**धर्मे तिष्ठतु सद्भाव** इत्यत्र ते बुद्धिः धर्मे तिष्ठतु, **सद्भावः सतः** परमात्मनः भवतीति सद्भावः। अर्थे सद्भाव इति बुद्धिस्तिष्ठतु॥

**॥ इति पञ्चादशोऽध्यायः॥**

## ॥ अथ एकपञ्चादशोऽध्यायः॥

**[1]अस्याः पतिः कुतो वेति ब्राह्मणः श्रोत्रियः परः।**
**विद्वान् विप्रो [2]ह्यकूटुम्बः प्रियवादी महातपाः ॥ ५॥**

**विद्वान् विप्रो ह्यकूटुम्ब** इत्यत्र **अकूटुम्ब** अकुटुम्बः, 'अपि माषं मषं कुर्यात् छन्दोभङ्गं न कारयेत्' इति वचनात्॥

**अनुमान्य यथान्यायं मुनीन् मुनिकुमारकान्।**
**अभ्यर्च्य विधिवत्तत्र [3]कन्या प्राह पिता महान् ॥ १७॥**

१. कुं. २२४ अध्यायः।; २. **'ह्यकुटुम्ब'** इति कुं.पाठः।
३. **'कन्यामाह'** इति कुं.पाठः।

**कन्या प्राह पिता महान्** इत्यत्र **महान् पिता** इति सम्बन्धः ।

**तत् श्रुत्वा मुनयस्तत्र वीक्षमाणाः परस्परम् ।**
**नोचुर्विप्रा महाभागाः कन्यां मत्त्वा ह्यवेदिकाम् ॥ २२ ॥**

**कन्यां मत्त्वा ह्यवेदिकाम्** इत्यत्र **अवेदिकाम्** अजानतीम् ।

**एतेऽपि मुनयो वत्से स्वपुत्रैकमता इह ।**
**वेदवेदाङ्गसम्पन्नाः कुलीनाः शीलसम्मताः ॥ १८ ॥**

**स्वपुत्रैकमताः** स्वपुत्रैः एकं मतं येषां ते तथोक्ताः ।

**अन्धोऽहमत्र तत्त्वं हि तथा मन्ये च सर्वदा ।**
**विशालनयनं विद्धि तथा मां हीनसंशयम् ॥ ३१ ॥**

**अन्धोऽहमत्र** इत्यत्र **अत्र** संसारे ।

**येनेदं वीक्षते नित्यं वृणोति स्पृशतेऽथवा ।**
**घ्रायते वक्ति सततं येनेदं सार्यते पुनः ॥ ३२ ॥**

**येनेदं वीक्षत** इत्यत्र **येन** परमात्मना **वीक्षते** जीवः ।

**येनेदं मन्यते तत्त्वं येन बुध्यति वा पुनः ।**
**न[1] चक्षुर्विद्यते ह्येषः स वै भूतान्ध उच्यते ॥ ३३ ॥**

**न चक्षुर्विद्यत** इत्यत्र एषः **चक्षुः**, चष्ट इति व्युत्पत्त्या चक्षुःपद-वाच्यः परमात्मा यस्य न विद्यते स वै **भूतान्धः** भूतेष्वन्धः उच्यते ।

---

१. **'न चक्षुर्विद्यते ह्येतत्स वै भूतान्ध'** इति कुं. पाठः ।

लोकन्यायमुक्त्वा स्वस्याप्यन्धतामुपपादयति– **यस्मिन् इति।**

**यस्मिन् प्रवर्तते चेदं पश्यन् शृण्वन् स्पृशन्नपि।**
**जिघ्रंश्च रसयंस्तद्वद्वर्तते येन चक्षुषा** ॥ ३४ ॥

**यस्मिन्** चक्षुषि परमात्मनि सति **इदं** जगत्प्रवर्तते, **तद्वत्** जगद्वत् पश्यन्नित्यादिनोक्तो जीवोऽपि येन चक्षुषा वर्तते तच्चक्षुः मुनेर्मम नास्ति। अतः अहमपि अन्ध इति योजना।

**आत्मदृष्ट्या च तत्सर्वं विलिप्यामि च नित्यशः।**
**स्थितोऽहं निर्भरः शान्तः कार्यकारणभावनः** ॥ ३६ ॥

**विलिप्यामि च नित्यश** इत्यत्र **विलिप्यामि** विलिप्ययामि। अन्तर्णीतो णिच्। (विर्निषेधे इति वचनात्।) अलिप्यं लेपायोग्यं यथा भवति तथा करोमि।

**अविद्यया तरन्मृत्युं विद्यया तं तथाऽमृतम्।**
**यथाप्राप्तं तु सन्दृश्य वसामीह विमत्सरः।**
**क्रीते व्यवसितं भद्रे भर्ताऽहं ते वृणीष्व माम्** ॥ ३७ ॥

**अविद्यया तरन्मृत्युम्** इत्यत्र **अविद्यया** निन्दितया। **अविद्या**पदेनात्र दुःशास्त्रमुच्यते। दुःश्शास्त्रनिन्दनजनितभगवत्प्रसादेन मृत्युं तरन्तीत्यर्थः।

**हृत्पुण्डरीकनिलयः सर्वभूतात्मको हरिः।**
**श्वेतकेतुस्वरूपेण स्थितोऽसौ मधुसूदनः** ॥ ४१ ॥

**श्वेतकेतुस्वरूपेण** इत्यत्र श्वेतकेतुसदृशास्वरूपेण इत्यर्थः।

**अहमित्येव भावेन स्थितस्त्वमतथैव च।[1]**
**तस्मात्कर्माणि कुर्वीथाः कुर्यां ते च ततः परम् ॥ ४६ ॥**

**अहमित्येव भावेन** इत्यत्र **अहमित्येव भावेन स्थितः** अहङ्कारेण स्थितः इति यावत्। अहं तु पितुरुद्दालकस्योपदेशात् **अतथा** तथा परमात्मवत् सार्वज्ञादिगुणविशिष्टो नास्मीत्येव स्थितः। तस्मात् त्वञ्च अतथा स्थिताऽहमस्मीति भावेन कर्माणि कुर्वीथाः। ततःपरं **ते कुर्यां** प्रियं कुर्याम्।

**न ममेति च भावेन ज्ञानाग्निनिलयेन च।**
**अनन्तरं तथा कुर्यास्तानि कर्माणि भस्मसात् ॥ ४७ ॥**

**न ममेति च भावेन** इत्यत्र इदं कर्म न मम किन्तु हरेरेव इति भावेन। **ज्ञानाग्निनिलयेन** 'लीङ् लेप्ये' इति धातोः ज्ञानाग्निसम्बन्धेन च तानि कर्माणि भस्मसात्कुर्याः।

**एवं त्वया च कर्तव्यं सर्वदा दुर्भगा मया।**
**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।**
**तस्माल्लोकस्य सिद्ध्यर्थं कर्तव्यं चात्मसिद्धये ॥ ४८ ॥**

**सर्वदा दुर्भगा** इत्यत्र सर्वदा **दुर्भगा** दुष्टो भगो भाग्यं यस्याश्चेतसि सा **दुर्भगा**। मया सह भस्मसात् कुर्या इति पूर्वेण अन्वयः।

**आत्मयोगपरो नित्यं निर्द्वन्द्वो निष्परिग्रहः।**
**भार्यां तां सदृशीं प्राप्य बुद्धिं क्षेत्रज्ञयोरिव ॥ ५० ॥**

---

१. **'स्थितोऽहं त्वं तथैव'** इति कुं. पाठः।

**बुद्धिं क्षेत्रज्ञयोरिव** इत्यत्र **क्षेत्रज्ञयोः** जीवपरमयोः **सदृशीं बुद्धिमिव** भेदबुद्धिमिवेत्यर्थः ।

**नामगोत्रसमायुक्तमात्मानं मन्यसे यदि ।**
**तन्मिथ्या गोत्रसद्भावे वर्तते देहबन्धनम्** ॥ ५५ ॥

**तन्मिथ्या गोत्रसद्भाव** इत्यत्र **तत्** गोत्रादिकं **मिथ्या** अनित्यं व्यर्थं वा ।

**अहमित्येष भावोऽत्र त्वयि चापि समाहितः ।**
**त्वमप्यहमहं सर्वमहमित्येव वर्तते ।**
**नात्र तत्परमार्थं वै किमर्थमनुपृच्छसि** ॥ ५६ ॥

**अहमिति भावः** अहङ्कारः ।

**त्वमप्यहम्** इत्यत्र त्वमपि अहमित्येव **वर्तते** वर्तसे, अहमपि अहमित्येव वर्तामि । सर्वञ्च जगत् अहमिति भावेनैव वर्तते । वयं सर्वेऽप्यहङ्कारिण इत्यर्थः । परमार्थं **तत्** ब्रह्म । **अत्र** अहङ्कारिषु । **न** न प्रतिब्रूते ।

**सङ्कीर्णे च तथा धर्मे वर्णः सङ्करमेति च ।**
**सङ्करे च प्रवृत्ते तु मात्स्यो न्यायः प्रवर्तते** ॥ ६० ॥

**मात्स्यो न्यायः प्रवर्तत** इत्यत्र **मात्स्यः** मत्स्यसम्बन्धी न्यायः, अन्योन्यभक्षणशील इत्यर्थः ।

**यावत् पांसव उद्दिष्टास्तावत्योऽस्य विभूतयः ।**
**तावत्यश्चैव मायास्तु तावत्योऽस्याश्च शक्तयः** ॥ ६२ ॥

**तावत्यश्चैव मायास्तु** इत्यत्र **मायाः** माहात्म्यानि ।

**एवं सुगह्वरे युक्तो यत्र मे तद्भवाभवम् ।**
**छित्वा ज्ञानासिना गच्छेत् स विद्वान् स च मे प्रियः ।**
**सोऽहमेव न सन्देहः प्रतिज्ञा इति तस्य वै ॥ ६३ ॥**

**सुगह्वरे** संसारे युक्तः ।

**सोऽहमेव न सन्देहः प्रतिज्ञा इति तस्य वै** इत्यत्र **तस्य** परमात्मनः । **सः** उक्तानन्तैश्वर्यसम्पन्नः **अहमेव**, नान्य इति प्रतिज्ञा । अत्र सन्देहो न ।

यद्वा तत्त्वंपदयोः **सः** तदितिपदवाच्यः अहमेव । जीवस्तु अतत्पद-वाच्य एव । न तु मदभेदेन तत्पदवाच्यः ।

**सुवर्चलोवाच–**

**शब्दः कोऽत्र इति ख्यातस्तथार्थं च महामुने ।**
**आकृत्या पतयो ब्रूहि लक्षणेन पृथक् पृथक् ॥ ६७ ॥**

**शब्दः कोऽत्र इति ख्यात** इत्यत्र **अं** परमात्मानं त्रायते दुर्जनेभ्यः इति त्रः । परमात्ममहिमप्रतिपादकः इत्यर्थः । तादृशः शब्दः कः ?

**व्यत्ययेन च वर्णानां परिवादिकृतो हि यः ।**[१]
**स शब्द इति विज्ञेयस्तन्निपातोऽर्थ उच्यते ॥ ६८ ॥**

**व्यत्ययेन च वर्णानां परिवादिकृतो हि य** इत्यत्र **व्यत्ययेन वर्णानाम्** ऊर्ध्वाधःकरणेन **परिवादिकृतः** परितः परमात्मरूपार्थमेव वदतीति

१. BORI पृ २०३८; **'परिवादकृतो'** इति कुं.पाठः ।

परिवादी, तेन कारणेन **कृतः** ब्रह्ममीमांसायां साधितः। कचटतपादि-वर्णमालाव्यावृत्त्यर्थं परिवादीत्युक्तम्। **तन्निपातः** तस्माच्छब्दात् **निपतनं** प्राप्तिर्यस्य सः।

**सुवर्चलोवाच–**

**शब्दार्थयोर्हि सम्बन्धस्त्वनयोरस्ति वा न वा।**
**तन्मे ब्रूहि यथा तत्त्वं शब्दस्थानेऽर्थ एव चेत्॥ ६९॥**

**शब्दस्थानेऽर्थ एव चेत्** इत्यत्र शब्दस्थाने अर्थोऽप्यायात्येव चेदित्यर्थः।

**श्वेतकेतुरुवाच–**

**शब्दार्थयोर्न चैवास्ति सम्बन्धोऽत्यन्त एव हि।**
**पुष्करे च यथा तोयं तथाऽस्मीति च वेत्थ तत्॥ ७०॥**

**शब्दार्थयोर्न चैवास्ति सम्बन्धोऽत्यन्त** इत्यत्र **शब्दार्थयोः** वेद-रूपशब्दस्य अर्थरूपब्रह्मणश्च **अत्यन्तसम्बन्धः** सामस्त्येन प्रतिपादक-प्रतिपाद्यरूपः **सम्बन्धः**। **पुष्करे** पद्मपत्रे **तोयं** बिन्दुरूपतोयम्।

**श्वेतकेतुरुवाच–**

**स संसर्गोऽतिमात्रस्तु वाचकत्वेन वर्तते।**
**अस्ति चेद्वर्तते नित्यं विकारोच्चारणेन वै॥ ७२॥**

**अस्ति चेद्वर्तते नित्यम्** इत्यत्र **अस्ति चेत्** अर्थोऽस्ति चेत् **विकारोच्चारणेन** विविधाकारोच्चारणेन शब्दोऽपि वर्तते।

सुवर्चलोवाच–

**शब्दस्थानोऽत्र इत्युक्तस्तथाऽर्थ [१]इति मे कृतम्।**

**[२]अर्थास्थितो न तिष्ठेच्च विरूढमिह भाषितम् ॥ ७३ ॥**

**शब्दस्थानोऽत्र इत्युक्त** इत्यत्र **अत्र** वेदादिरक्षकनिरपेक्षः **अर्थः** परब्रह्मरूपोऽर्थः, **शब्दस्थानः** शब्दस्य वेदस्य स्थानः आधारभूतः इति **उक्तः** त्वया उक्तः। ततो **मे** मया **कृतम्** अङ्गीकृतम्।

**अर्थास्थितो न तिष्ठेच्च** इत्यत्र **अर्थास्थितः** अर्थेनास्थितः। **विरूढं** निश्चितम्।

श्वेतकेतुरुवाच–

**न विकूलोऽत्र कथितो नाकाशं हि विना जगत्।**

**सम्बन्धस्तत्र नास्त्येव तद्वदित्येष मन्यताम् ॥ ७४ ॥**

**न विकूलोऽत्र कथित** इत्यत्र **अत्र** त्वया पृष्टप्रमेयविषये **विकूलः** दृष्टान्ताननुकूलः परिहारो न कथितः। **सम्बन्धः** कार्त्स्न्येन सम्बन्धः। **एषः** परमात्मा।

सुवर्चलोवाच–

**सदाऽहङ्कारशब्दोऽयं व्यक्तमात्मनि संश्रितः।**

**न वाचस्तत्र वर्तन्ते इति मिथ्या भविष्यति ॥ ७५ ॥**

**सदाऽहङ्कारशब्दोऽयम्** इत्यत्र **अयमहङ्कारशब्दः** अहङ्कार इत्या-[illegible]यमाणः शब्दः, अहंशब्द इति यावत्। **व्यक्तं** स्पष्टम् **आत्मनि**

१. BORI पृ २०३९; 'इति मे कृतः।'

२. BORI पृ २०३९; 'अर्थः स्थितो-' इति कुं.पाठः।

परमात्मस्वरूपे **संश्रितः** सर्वत्र श्रितः इति यावत् । अतः कारणात् **वाचः तत्र न वर्तन्ते** सामस्त्येन न वर्तन्ते इति मिथ्या भविष्यति । अहमिति शब्दस्य स्वप्रकाशे आत्मस्वरूपे सर्वत्र वर्तनादिति भावः ।

**श्वेतकेतुरुवाच–**

**अहंशब्दो ह्यहंभावो नात्मभावे शुभव्रते ।**
**न वर्तते[1] परेऽचिन्त्ये वाचः सगुणलक्षणाः ॥ ७६ ॥**

**अहंशब्दो ह्यहम्भाव** इत्यत्र **अहम्भावे** अहमिति भावनामात्रे, **आत्मभावे** आत्मनः परमात्मनः स्वभावभूते अनन्तकल्याणगुणसमुदाये। **न** न वर्तते । अतः अहंशब्दोऽपि सामस्त्येन भगवत्प्रतिपादको न भवतीति भावः ।

**वाचः सगुणलक्षणा** इत्यत्र यः शब्दः यद्गुणवाचकत्वेन योग्यः स तमेव गुणं वक्ति । यथा आकाशशब्दः आसमन्तात् काशनम् । आनन्दमयशब्दः आनन्दपूर्णत्वम् । गुणान्तरप्रतिपादने तु न तस्य शक्तिः । अतः सर्वगुणप्रतिपादकः शब्द एकोऽपि नास्ति । अनन्त-शब्दात्मको वेदोऽपि वेदानुक्तगुणान् वक्तुं न शक्नोति, इति सूचयितुम् **अचिन्त्य** इत्युक्तम् ।

**सुवर्चलोवाच–**

**अहं गात्रैकतःश्यामा भवानपि तथैव च ।**
**तन्मे ब्रूहि यथान्यायमेवं चेन्मुनिसत्तम ॥ ७७ ॥**

**अहं गात्रैकतः श्यामा** इत्यत्र **गात्रैकतः** एकस्मिन् गात्रे **श्यामा** श्यामलवर्णा, पुनर्जन्मान्तरे वर्णान्तरवती । रेतोविकारदेहे इदमित्थ-

१. BORI पृ २०३९; 'न वर्तन्ते' इति कुं.पाठः ।

मेवेति नियमायोगात् भवानपि तथैव । **एवं चेन्मुनिसत्तम** इत्यत्र **एवं** परमात्मा **चेत्** एवं ब्रूहि । एवं न चेत् तथा ब्रूहि ।

**श्वेतकेतुरुवाच–**

**मृण्मये हि घटे भावस्तादृग्भाव इहेष्यते ।**
**अयं भावः परेऽचिन्त्ये ह्यात्मभावो यथा च मृत्[१] ॥ ७८ ॥**

**मृण्मये हि घटे भाव** इत्यत्र यादृगिति योग्यपदाध्याहारः । **इह** अस्मदादिषु, अचिन्त्ये परे अयम् आत्मभाव एव परमात्मस्वभाव एव (शश्वत्) शश्वदेकप्रकारत्वमिति यावत् । यथा **मृत्** मृत्तिका ।

**अहं त्वमेतदित्येव परे *सङ्कल्पनाम या ।**
**तस्माद्वाचो न वर्तन्त इति नैव विरुद्ध्यते ॥ ७९ ॥**

**अहं त्वमेतदित्येव परे सङ्कल्पनाम या** इत्यत्र **अहम्** 'अहं कृत्स्नस्य जगतः प्रभवः'[२] इत्यादौ यः परमात्मनि अहंशब्दः 'अनन्तवीर्यामितविक्रमस्त्वम्'[३] इत्यादौ यस्त्वमिति शब्दः, 'एष आत्मेति हो वाच'[४] इत्यादौ यः एतच्छब्दः इत्यनेन प्रकारेण **या** या सञ्ज्ञा तत्सर्वं **परे** परमात्मनि **सङ्कल्पनाम** ईषदीषद्गुणप्रतिपादकं नाम, न तु सर्वगुणप्रतिपादकम् ।

**तस्माद्वाचो न वर्तन्ते इति नैव विरुद्ध्यते ।**
**तस्माद्वामेन वर्तन्ते मनसा भीरु सर्वशः ॥ ८० ॥**

**सर्वशः** सामस्त्येन ।

---

१. BORI पृ २०३९; **'यथा च तत्'** इति कुं.पाठः । * **'सङ्कल्पना मया'** कुं.पा.
२. भ.गी. अ. ७ श्लो. ६ ; ३. भ.गी. ११/४०; ४. छां.उ. ४-१५-१

**संसर्गे सति सम्बन्धात्तद्विकारं भविष्यति ।**
**अनाकाशगतं सर्वं विकारे च सदा गतम् ॥ ८१ ॥**

**संसर्गे सति सम्बन्धात् तद्विकारः भविष्यति** इत्यत्र **संसर्गे सति** आकाशे संसक्तमिव लक्ष्यते । अन्यत्र न । **तत्** तस्मात् कारणात् **विकारं** विलक्षणाकारम् ।

**सुवर्चलोवाच–**

**निर्विकारं ह्यमूर्तिं च निरयं सर्वगं तथा ।**
**दृश्यते च वियन्नित्यं दृगात्मा तेन दृश्यते ॥ ८३ ॥**

**निरयं सर्वगं तथा** इत्यत्र निर्गतम् **अयम्** अयनं नाशो यस्य तत् तथोक्तः । **दृगात्मा** ज्ञानस्वरूपी ।

**आकाशस्याप्यथाकाशं सद्रूपमिति निश्चितम् ।**
**तदर्थे कल्पिता ह्येते तत्सत्यो विष्णुरेव च ॥ ८६ ॥**

**आकाशस्याप्यथाकाशं सद्रूपम्** इत्यत्र **सद्रूपं** सतः परमात्मनो रूपम् । आकाशस्यापि **आकाशम्** अवकाशप्रदम् ।

**यानि नामानि गौणानि ह्युपचारात् परात्मनि ॥ ८७ ॥**

**यानि नामानि गौणानि ह्युपचारात् परात्मनि** इत्यत्र **उप** चारात् स्वेन वक्तुमुपपन्ने गुणे **चारात्** चरणात् ।

**एतत्प्रपन्नमखिलं तस्मिन् सर्वं प्रतिष्ठितम् ।**[1]
**महाघटोऽल्पकश्चैव यथा मह्यां प्रतिष्ठितौ ॥ ८८ ॥**

---

१. BORI पृ २०३९; 'एतत्प्रपञ्चमखिलम्' इति कुं.पाठः ।

**एतत्प्रपन्नम्** इत्यत्र **प्रपन्नं** शरणागतम् ।

**न च स्त्री न पुमांश्चैव यथैव न नपुंसकः ।**
**केवलज्ञानमात्रं तत् तस्मिन् सर्वं प्रतिष्ठितम् ॥ ८९ ॥**

**न च स्त्री** इत्यत्र स्त्र्यादिपदं जात्येकवचनम् । लोके दृश्यमानाः स्त्रियः पुरुषाः, **नपुंसकः** नपुंसकवर्गोऽपि परमात्मा न ।

**भूमिसंस्थानयोगेन वस्तुसंस्थानयोगतः ।**
**रसभेदा यथा तोये प्रकृत्यामात्मनस्तथा ॥ ९० ॥**

**प्रकृत्यामात्मनस्तथा** इत्यत्र **आत्मनः प्रकृत्यां** परमात्माधीन-जडप्रकृत्याम् ।

**तद्वाक्यस्मरणान्नित्यं तृप्तिं वारि पिबन्निव ।**
**प्राप्नोति ज्ञानमखिलं तेन तत्सुखमेधते ॥ ९१ ॥**

**तद्वाक्यस्मरणान्नित्यम्** इत्यत्र तन्नामस्मरणादित्यर्थः ।

सुवर्चलोवाच–

**अनेन साध्यं किं स्याद्वै शब्देनेति मतिर्मम ।**
**वेदगम्यः परोऽचिन्त्य इति पौराणिका विदुः ॥ ९२ ॥**

**अनेन साध्यं किं स्यात्** इत्यत्र **अनेन** उक्तविधया एकैकगुणवाचकेन ।

**निरर्थको यथा लोके तद्वत्स्यादिति मे मतिः ।**
**निरीक्ष्यैवं यथान्यायं वक्तुमर्हसि मेऽनघ ॥ ९३ ॥**

**निरर्थको यथा लोक** इत्यत्र **निरर्थकः** उदरपूर्त्यजनकत्वात् व्यर्थः [illegible]कवलग्रासः ।

**श्वेतकेतुरुवाच–**

**वेदगम्यं परं शुद्धमिति सत्या परा श्रुतिः ।**
**[१] व्यावृत्त्या नैतदित्याह तूपलिङ्गे च वर्तते ॥ ९४ ॥**

**परा श्रुतिः व्यावृत्त्या नैतदित्याह** इत्यत्र **परा श्रुतिः** [२] 'यतो वाचो निवर्तन्ते' इति श्रुतिः **व्यावृत्त्या** अप्राप्य **एतत्** वेदगम्यत्वम् **उपलिङ्गे** उपपन्नगुणे वर्तते ।

**निरर्थको न चैवास्ति शब्दो लौकिक उत्तमे ।**
**[३] अनन्वयाः स्मृताः शब्दा निरर्था इति लौकिकैः ॥ ९५ ॥**

**गृह्यन्ते तद्वदित्येव न वर्तन्ते परात्मनि ।**
**अगोचरत्वं वचसां युक्तमेवं तथा शुभे ॥ ९६ ॥**

**अनन्वयाः स्मृताः शब्दा** इत्यत्र **अनन्वयाः** गौरश्वः पुरुषो हस्तीत्यादिवत् सर्वथा अन्वयरहिताः । **तद्वत्** निरर्थकशब्दवत् परमात्मनि वैदिकाः **शब्दाः** न वर्तन्ते, किन्तु **इति** पूर्वोक्तप्रकारेण एकैकगुणलाभायेति यावत् ।

**गृह्यन्ते** ब्रह्ममीमांसाकर्तृभिर्व्यासाद्यैः ।

**साधनस्योपदेशाच्च ह्युपायस्य च सूचनात् ।**
**उपलक्षणयोगेन व्यावृत्त्या च प्रदर्शनात् ।**
**वेदगम्यः परः शुद्ध इति मे धीयते मतिः ॥ ९७ ॥**

---

१. **'व्याहत्या नैतदित्याह व्युपलिङ्गे'** इति कुं.पाठः ।
२. तै. उ. २-२२
३. BORI पृ २०४०; **'अनन्वयास्तथा'** इति कुं. पाठः ।

**साधनस्योपदेशाच्च** इत्यत्र **साधनस्य** एकैकशब्दवाच्यत्वे हेतोः । **उपदेशात्** 'आकाशस्तल्लिङ्गात्'[१] इत्यादौ उपदेशात् । **सूचनात्** भूतान्तरे तेनैव सूत्रेण सूचनात् । **उपलक्षणयोगेन**[२] 'अदृश्यत्वादि-गुणको धर्मोक्तेः' इत्यत्र। आदिपदेन गुणान्तरस्यापि सङ्ग्राहकत्वोपायेन। **व्यावृत्त्या**[३] 'नेति नेत्यात्माऽगृह्यः' इति श्रुतौ जडवन्न, जीववन्न इति सकलजगद्व्यावृत्त्या च **प्रदर्शनात्** व्यासेनैव प्रदर्शनात् वेदगम्यः ।

**अध्यात्मध्यानसम्भूतमभूतं भूतवत् स्फुटम् ।**
**ज्ञानं विद्धि शुभाचारे तेन यान्ति परां गतिम् ॥ ९८ ॥**

**अध्यात्मध्यानसम्भूतमभूतम्** इत्यत्र **अभूतम्** औपनिषदत्वात् परमात्मनः स्वशक्त्या अभूतम् । **भूतवत्** ब्रह्मादिषु यद्भूतम् अपरोक्षज्ञानं तद्वत् । **अध्यात्मध्यानात्** अधिकः आत्मा परमात्मा तस्य ध्यानात् निदिध्यासनात् सम्भूतं ज्ञानं विद्धि ।

**नानारूपवदस्यैवमैश्वर्यं दृश्यते शुभे ।**
**न वायुस्तं न सूर्यस्तं नाग्निस्तत्तु[४] परं पदम् ॥ १०० ॥**

**नाग्निस्तत्तु परं पदम्** इत्यत्र दर्शयतीति योग्यपदाध्याहारः ।

॥ इति एकपञ्चाशोऽध्यायः ॥

* * *

---

१. ब्र.सू. १-१-२२
२. ब्र.सू. १-२-२१
३. बृ. उ. ६-४-२१
४. BORI पृ २०४०; **'नाग्निस्तत्तत्परम्'** इति कुं.पाठः ।

## ।। अथ द्विपञ्चाशोऽध्यायः ।।

**सुखं दान्तः प्रस्वपिति सुखं च प्रतिबुध्यते ।[1]**
**सुखं लोकं विपर्येति मनश्चास्य प्रसीदति ।। ५ ।।**

**सुखं लोकं विपर्येति** इत्यत्र **वि** विशेषेण पर्येति ।

**तेजो दमेन ध्रियते न[2] तत्तीक्ष्णोऽधिगच्छति ।**
**अमित्रांश्च बहून्नित्यं पृथगात्मनि पश्यति ।। ६ ।।**

**न तत्तीक्ष्णोऽधिगच्छति** इत्यत्र तीक्ष्णः पुरुषः ।

**कामक्रोधौ च लोभश्च परस्यार्थे[3] विकत्थना ।**
**अतुष्टिरनृतं मोह एष मार्गो दुरात्मनाम् ।। १९ ।।**

**परस्यार्थे विकत्थना** इत्यत्र अर्थे प्राप्ते सति परस्य विकत्थनेति सम्बन्धः ।

**।। इति द्विपञ्चाशोऽध्यायः ।।**

## ।। अथ त्रिपञ्चाशोऽध्यायः ।।

**भीष्म उवाच –**

**मासपक्षोपवासेन मन्यन्ते यत्तपो जनाः ।[4]**
**आत्मतन्त्रोपघातस्य[5] न तपस्तत्सतां मतम् ।। ४ ।।**

---

१. **कुं. २२५ अध्यायः ।**
२. BORI पृ ११८२; **'तत्र तीक्ष्णोऽधिगच्छति'** इति कुं.पाठः ।
३. **'परस्येर्ष्या विकत्थना'** इति कुं.पाठः ।; ४. **कुं. २२६ अध्यायः ।**
५. **'आत्मतन्त्रोपघातस्तु'** इति कुं.पाठः ।

**आत्मतन्त्रोपघातस्य** इत्यत्र आत्मनः **तन्त्रेण** उपायेन **उपघातस्य** परघातकस्य । **आत्मनः** परमात्मनः, **तन्त्रं** पूजा, तस्य **उपघातस्य** उपघातकस्य । उपवासव्याजेन देवब्राह्मणपूजादिनित्यनैमित्तिककर्म-त्यागिनः इत्यर्थः ।

**विघसाशी सदा च स्यात् सदा चैवातिथिप्रियः ।**
**श्रद्दधानः सदा च स्याद्देवताद्विजपूजकः ॥ ८ ॥**

**विघसः** यज्ञशेषः ।

**॥ इति त्रिपञ्चाशोऽध्यायः ॥**

## ॥ अथ चतुःपञ्चाशोऽध्यायः ॥

**युधिष्ठिर उवाच–**

**[१]केचिदाहुर्द्विधा लोके त्रिधा राजन्ननेकधा ।**
**न प्रत्ययो न चान्यच्च दृश्यते ब्रह्म नैव तत् ॥ १ ॥**

**केचिदाहुर्द्विधा लोक** इत्यत्र **द्विधा** जीवजडात्मकतया, **त्रिधा** जीवे देवासुरमनुष्यत्वेन, जडे तेजोबन्नात्मकत्वेन, **अनेकधा** पञ्चभूतात्मकतया। न प्रत्ययः एकस्मिन्नर्थेऽपि **प्रत्ययः** विश्वासो न दृश्यते । **अन्यत्** सर्वथा अविश्वासोऽपि न दृश्यते । **तत्** उक्तं सर्वं, ब्रह्म नैव ।

**नानाविधानि शास्त्राणि उक्ताश्चैव पृथग्विधाः ।**
**किमधिष्ठाय तिष्ठामि तन्मे ब्रूहि पितामह ॥ २ ॥**

**उक्ताश्चैव** इत्यत्र देवाश्च पृथग्विधाः उक्ताः ।

---

१. कुं. २२७ अध्यायः ।

**प्राकृतं कारणं नास्ति सर्वं नैवमिदं जगत् ।**
**अनेन चापरे विप्राः स्वभावं कर्म चापरे ॥ ७ ॥**

**प्राकृतं कारणं नास्ति** इत्यत्र **प्राकृतं** प्रकृतिसम्बन्धि कारणं **नास्ति** किन्त्वज्ञानमेवेति केचित् । इदं सर्वं जगत् एवं न, किन्तु शून्यमेवेति केचित् । **अनेन** प्राकृतकारणेन ।

**पौरुषं कर्म दैवं च यः[१] स्वभावादिरेव तम् ।**
**नानाहेतुशतैर्युक्ता नानाशास्त्रप्रवर्तकाः ॥ ८ ॥**

**पौरुषं** पुरुषप्रयत्नः । **कर्म** पुण्यपापे । यः स्वभावादिः एतच्चेति त्रितयं केचित् ।

**स्वभावाद्ब्राह्मणा राजञ्जिगीषन्तः परस्परम् ।**
**ततस्तु मूलमुद्भूतं वादिप्रत्यर्थिसंयुतम् ॥ ९ ॥**

**प्रत्यर्थी** प्रतिवादी ।

**को विद्वानिह लोकेऽस्मिन्न मोहोऽमृतमद्भुतम् ।**
**तच्च ते शुश्रुवुर्वाक्यं ब्राह्मणा ह्यशरीरिणः ॥ १४ ॥**

**ब्राह्मणा ह्यशरीरिण** इत्यत्र **अशरीरिणः** कस्यचित् ।

**सनद्धाम द्विजा गत्वा पृच्छध्वं स च वक्ष्यति ॥ १५ ॥**

**सनद्धाम द्विजा गत्वा** इत्यत्र **सनद्धाम** सनत्कुमारस्य धाम । सनदिति सनत्कुमारस्य नाम ।

---

१. **'यत् स्वभावादिः'** इति कुं.पाठः ।

तमाह कश्चिद् द्विजवर्यसत्तमो
विभाण्डको मण्डितवेदराशिः ।
कस्त्वं भवानर्थविभेदमध्ये
न दृश्यते वाक्यमुदीरयंश्च ॥ १६ ॥

**कस्त्वं भवानर्थविभेदमध्य** इत्यत्र **अर्थस्य** शास्त्रार्थस्य निमित्तेन **विभेदः** कलहः तस्य मध्ये ।

अथाहेदं तं भगवान् सनन्तं
महामुने विद्धि मां पण्डितोऽसि ॥ १६ ॥

**सनन्तं** सनत्कुमारम् ।

तं पर्वतं समारुह्य ददृशुर्ध्यानमाश्रिताः ।
कुमारं देवमर्हन्तं वेदपाराविवर्जितम् ॥ २३ ॥

**वेदपाराविवर्जितम्** इत्यत्र **पारा** पारायणम् ।

प्रसीद नो भगवञ्ज्ञानलेशं
मधुप्रयाताय सुखाय सन्तः ।
यत्तत्पदं विश्वरूपं महामुने
तद् ब्रूहि किं[१] कुत्र महानुभाव ॥ २७ ॥

**किं कुत्र महानुभाव** इत्यत्र **किं** कीदृशम् ।

**अहन्यहनि पाकविशेषो दृश्यते । तेन मिश्रं सर्वं मिश्रयते ॥३०॥**

---

१. BORI पृ २०४१; '**किं तत्र**' इति कुं.पाठः ।

**अहन्यहनि पाकविशेपो दृश्यत** इत्यत्र **पाकविशेषः** धनधान्य-फलादौ देहे च, परिपाकविशेषः दृश्यते। **तेन** पाकेन।

**यथा मण्डली दृशि सर्वेषामस्ति निदर्शनम् । अस्ति चक्षुष्मतामस्ति ज्ञाने स्वरूपं पश्यति । यथा दर्पणान्तं निदर्शनम्। ॥ ३० ॥**

**यथा मण्डली दृशि** इत्यत्र यथा **चक्षुष्मतां मण्डली** समूहः **दृशि** दर्शनविषये **यत्स्वरूपं** जीवस्वरूपमस्ति तद्यथा पश्यति तथा आत्म-दृशां मण्डलीम्। **ज्ञाने** ज्ञानविषयतया, यत्**स्वरूपं**, स्वतन्त्रपरमात्मनः, स्वरूपमस्ति तत् पश्यति । यथा दर्पणान्तः अविवेकी प्रतिमुखमेव पश्यति । विवेकी तु प्रतिमुखनियामकं बिम्बभूतं मुखं पश्यति तन्नि-दर्शनम्।

**स एव सर्वं विद्वान्न बिभेति न गच्छति। कुत्राहं कस्य नाहं केन केनेत्यवर्तमानो विजानाति ॥ ३१ ॥**

सर्वमेव विद्वान् **सः** परमात्मैव न बिभेति, न गच्छति व्याप्तत्वात् न गच्छति। **अहं कुत्र** कस्मिन् आधारे तिष्ठामि ? '[1]किंस्विदासीदधि-ष्ठानम्' इति श्रुतेर्न कुत्रापि । अहं कस्य न ? '[2]न ऋतेत्वत्क्रियते किञ्चन' इति श्रुतेः सर्वस्याप्यपेक्षित एव । **केन** केन वा साधनेन जगत्करोमि ? 'आरम्भणं कतमत्स्वित्' इति श्रुतेः न केनापि।

**स युगतो व्यापी। स पृथक् स्थितः। तदपरमार्थम् ॥ ३२ ॥**

१. ऋ.सं. ८-३-१६
२. ऋ.सं. १०-११२-९

**स युगतः** युगे युगे **व्यापी** 'युग्मन्तु युगलं युगम्'[1] इति वचनात् । जगतः दक्षिणतो वामतश्च व्यापी वा । **स** एव परमात्मैव **पृथक्** जीवजडात्मकात् प्रपञ्चादत्यन्तभिन्नतया स्थितः । **तदपरं** तस्मान्नारायणादपरं जगत् **न आर्थं** स्वस्वपुरुषार्थवशाज्जातं, न तु तद्वत् पूर्णम् ।

**यथा वायुरेकः सन् बहुधेरितः आश्रयविशेषो वा यस्याश्रयो वा । यथावद्द्विजे मृगे व्याघ्रे च मनुजे वेणुसंश्रयो भिद्यते वायुरथैकः । आत्मा तथाऽसौ परमात्माऽसावन्य इव भाति ।।३३।।**

तथा वायोरिव **अस्य** परमात्मनः आश्रयविशेषः **आश्रयो वा** आश्रय इव । 'वा विकल्पोपमानयोः'[2] इति हलः । **द्विजे** पक्षिणि । तथा **असौ** परमात्मा **आत्मा सन्** अन्तर्यामी सन् अन्य इव **भाति** आभाति । स्थानभेदादन्य इवाभाति ।

**एवमात्मा स एव गच्छति सर्वमात्मा**
**पश्यन् शृणोति न[3] जिघ्राति न भाषते । ।। ३४ ।।**

**स आत्मा** अन्तर्यामी **एवमेव** वायुवदेव गच्छति । सर्वं पश्यन्नात्मा शृणोति, **न जिघ्रति** दुर्गन्धं, **न भाषते** दुर्जनैः ।

**चक्रेऽस्य तं महात्मानं परितो दश रश्मयः ।**
**विनिष्क्रम्य यथा सूर्यमनुगच्छन्ति तं प्रभुम् ।। ३५ ।।**

**चक्रेऽस्य तम्** इत्यत्र **अस्य** परमात्मनः । **चक्रे** सुदर्शनचक्रे ।

---

१. अ.को. द्वि. सिंहादिवर्गः श्लो. ३८ ; २. ह.को. ५/८७३
३. BORI पृ २०४२; **'न च घ्राति'** इति कुं.पाठः ।

**दिने दिनेऽस्तमभ्येति पुनरुद्गच्छते दिशः ।**
**तावुभौ न रवौ चास्तां तथा वित्त शरीरिणम् ॥ ३६ ॥**

**तावुभौ** उदयास्तमयौ । **रवौ न चास्ताम्** । मनुष्यदृष्ट्यैव उदयास्तमयौ सूर्यस्त्वेकप्रकार एव । तद्वत् परमात्मापीति भावः । **शरीरिणं,** शरीरमस्य वशो वर्तत इति **शरीरिणं** शरीरान्तर्गतं नारायणं वित्त ।

**पतिते[1] वित्त विप्रेन्द्राः भक्षणे चरणे परः ।**
**ऊर्ध्वमेकस्तथाऽधस्तादेकस्तिष्ठति चापरः ॥ ३७ ॥**

**पतिते वित्त विप्रेन्द्रा** इत्यत्र पतन-भक्षण-सञ्चरण-ऊर्ध्वगमन-अधोगमन-अवस्थानाख्यषड्विधजीवव्यापारेषु षड्भिर्मूर्तिभिर्भगवान् प्रेरयतीति भावः । **तिष्ठति** तूर्ष्णीं स्थिते ।

**हिरण्यसदनं ज्ञेयं समेत्य परमं पदम् ।**
**आत्मना ह्यात्मदीपं तमात्मनि ह्यात्मपूरुषम् ॥ ३८ ॥**

**हिरण्यसदनं ज्ञेयम्** इत्यत्र 'हिरुक् सुखं समुद्दिष्टम्' इति वचनात् **हिरण्यस्य** सुखस्य, म(मु)कुटाद्यलङ्कारसुवर्णस्य वा सदनम् । **आत्मना** स्वेन **आत्मदीपं** जीवानां दीपस्थानीयम् । **आत्मनां** जीवानाम् **आत्मपूरुषम्** अन्तर्यामिपुरुषाभिधं, **पदं** स्वस्वरूपम् ।

**सञ्चितं सञ्चितं पूर्वं भ्रमरो वर्तते भ्रमन् ।**
**योऽभिमानीव जानाति न मुह्यति न हीयते ॥ ३९ ॥**

**सञ्चितं सञ्चितं पूर्वम्** इत्यत्र यः भ्रमन् भ्रमरो वर्तते सः पूर्वं

---

१. BORI पृ २०४२; '**पतिते वित्त विप्रेन्द्रम्**' इति कुं.पाठः ।

सञ्चितं **सञ्चितं** मधु **अभिमानी** भ्रमर इव वेत्ति । न मुह्यति । न हीयते तथा परमात्मापि ।

**न चक्षुषा पश्यति कश्चनैनं**
**हृदा मनीषा पश्यति रूपमस्य ।**
**न शुक्लं न कृष्णं परमार्थभावं**
**गुहाशयं ज्ञानदेवीकरस्थम् ॥ ४० ॥**

**मनीषा** बुद्धिः । [१]'बुद्धिर्मनीषा धिषणा' इत्यमरः । **न शुक्लं न कृष्णं** प्राकृतशुक्लकृष्णरूपरहितम् ।

**एवमेष जगत्सृष्टिं कुरुते मायया प्रभुः ।**
**न जानाति [२]विरूढात्मा कारणं चात्मनो ह्यसौ ॥ ४३ ॥**

**विरूढात्मा** विशेषेण प्रादुर्भूतस्वरूपः । **असौ** परमात्मा **न जानाति** कारणस्यैव अभावान्न जानाति । शश्वदेकप्रकारः इति भावः ।

॥ इति चतुःपञ्चाशोऽध्यायः ॥

## ॥ अथ पञ्चपञ्चाशोऽध्यायः ॥

**[३]येऽपि कर्ममयं प्राहुस्ते द्विजा ब्राह्मणाः स्मृताः ।**
**रमन्ते दिव्यभोगैश्च पूजिता ह्यप्सरोगणैः ॥ ९ ॥**

**येऽपि कर्ममयं प्राहुः** इत्यत्र **कर्ममयं** नित्यनैमित्तिककर्मप्रधानम् ।

---

१. अ.को. प्र. धीवर्गः श्लो. १
२. BORI पृ २०४२; **'विमूढात्मा'** इति कुं.पाठः ।
३. कुं. २२८ अध्यायः ।

**ज्ञानात्मकं तपश्शब्दं ये वदन्ति विनिश्चिताः ।**
**ते ह्यन्तराऽऽत्मसद्भावं प्रपन्ना नृपसत्तम ॥ १० ॥**

**अन्तराऽऽत्मसद्भावम्** इत्यत्र **अन्तरात्मनः** अन्तर्नियामकपरमात्मनः **सद्भावं** विद्यमानत्वं सद्भक्तिं वा ।

**एतत्ते नृपशार्दूल प्रोक्तं यत्पृष्टवानसि ।**
**यथावस्तूनि सञ्ज्ञानि विविधानि भवन्त्युत ॥ ११ ॥**

**यथावस्तूनि सञ्ज्ञानि** इत्यत्र यथावस्तूनि **सं** सम्यक् **ज्ञानि** ज्ञानानि ।

**प्रतियोगीनि वै तेषां छन्नान्यस्तमितानि च ।**
**दृढं सर्वं प्राकृतकमिदं सर्वत्र पश्य वै ॥ १३ ॥**

**छन्नान्यस्तमितानि च** इत्यत्र प्रतियोगीनि नामानि स्नुह्यादेः महातरुनामादीनि **छन्नानि** निगूढार्थानि गुह्यभाषाप्रोक्तानि, **अस्तमितानि** बालयुवस्थविरादिनामानि, उत्तरोत्तरदशायां पूर्वपूर्वनाम्नः अस्तमितत्वात् ।

**कन्या सुवर्चला नाम योगभावितचेतना ।**
**हेतुना केन जाता सा निर्द्वन्द्वा नष्टसंशया ॥ १६ ॥**

**हेतुना केन** इत्यत्र **केन** केनचित् ।

**तच्चक्षुर्विद्यते मह्यं येन पश्यति वै स्फुटम् ।**
**सुलोचनोऽहं भद्रे वै पृच्छ वा किं वदामि ते ।**
**सर्वमस्मिन्न [१] मेऽविद्या विद्वान् हि परमार्थतः ॥ ३२ ॥**

---

१. **'मे विद्या'** इति कुं. पाठः । BORI पृ. २०४३

**तच्चक्षुर्विद्यते मह्यम्** इत्यत्र पूर्वमान्तं ज्ञातुमशक्यत्वात् तच्चक्षुर्न विद्यते। तेनान्धत्वम्। अन्यत्र चक्षुरस्ति, तेनान्धत्वमित्युक्तम्। इदानीं विषयेषु चक्षुर्नास्ति, यथायोग्यं हरिरूपचक्षुरस्ति। तेनानन्धत्वमुच्यत इति विभागो द्रष्टव्यः। अत एव पुनरारम्भः।

**सर्वस्मिन्न मेऽविद्या** इत्यत्र **अस्मिन्** परमात्मनि सर्वं जगदस्ति। **मे अविद्या** अहंममतारूपा नास्ति।

॥ इति पञ्चपञ्चाशोऽध्यायः ॥

## ॥ अथ षट्पञ्चाशोऽध्यायः ॥

**यैः कैश्चित् संमतो लोके गुणैः स्यात् पुरुषो नृषु।[1]**
**भवत्यनपगान् सर्वांस्तान् गुणाँल्लक्षयामहे ॥ ११ ॥**

**भवत्यनपगान्** इत्यत्र **भवति** त्वयि।

**प्रह्लाद उवाच–**

**प्रवृत्तिं च निवृत्तिं च भूतानां यो न बुध्यते।**
**तस्य स्तम्भो भवेद्बाल्यान्नास्ति स्तम्भोऽनुपश्यतः ॥ १६ ॥**

**तस्य स्तम्भो भवेद्बाल्यात्** इत्यत्र **स्तम्भः** गर्वः।

**स्वभावात् सम्प्रवर्तन्ते निवर्तन्ते तथैव च।**
**सर्वे भावास्तथाऽभावाः पुरुषार्थो न विद्यते ॥ २० ॥**

**पुरुपार्थो न विद्यत** इत्यत्र एतैः पुरुषार्थो न विद्यते इत्यर्थः।

---

१. कुं. २२९ अध्यायः।

**यस्तु कर्तारमात्मानं मन्यते साध्वसाधु वा ।**
**तस्य दोषवती प्रज्ञा अतत्त्वज्ञेति मे मतिः ॥ २२ ॥**

**यस्तु कर्तारमात्मानम्** इत्यत्र **कर्तारं** स्वातन्त्र्येण कर्तारम् ।

**यदि स्यात् पुरुषः कर्ता शक्रात्मश्रेयसे ध्रुवम् ।**
**आरम्भास्तस्य सिद्ध्येयुर्न तु जातु पराभवेत् ॥ २३ ॥**

**यदि स्यात्पुरुषः कर्ता** इत्यत्र **पुरुषः** परमपुरुषः **कर्ता** स्वतन्त्रकर्ता **यदि स्यात्** तर्हि इत्यन्वयः ।

**अनिष्टस्य हि निर्वृत्तिरनिवृत्तिः प्रियस्य च ।**
**लक्ष्यते यतमानानां पुरुषार्थस्ततः कुतः ॥ २४ ॥**

**अनिष्टस्य हि निर्वृत्तिः** इत्यत्र **निर्वृत्तिः** नितरां प्रवृत्तिः । प्रियस्य अनिवृत्तिर्लक्ष्यते । ततः पुरुषार्थः **कुतः** स्वेच्छया कुतः ?

**अनिष्टस्याभिनिर्वृत्तिमिष्टसंवृतिमेव च ।**
**अप्रयत्नेन पश्यामः केषाञ्चित्[1] तत्स्वभावतः ॥ २५ ॥**

**अनिष्टस्याभिनिर्वृत्तिम्** इत्यत्र अभितः **निर्वृत्तिं** निवृत्तिं **तत् स्वभावतः** तस्येश्वरस्य स्वातन्त्र्याख्यस्वभावतः ।

**[2]तथा वेदयते कश्चिदोदनं पायसं त्वदन् ।**
**एवं सर्वाणि कर्माणि स्वभावस्यैव लक्षणम् ॥ ३० ॥**

**तथा वेदयते कश्चिदोदनं पायसं त्वदन्** इत्यत्र **वेदयते** जिह्वा-

१. 'केषां चित्तस्वभावतः' इति कुं. पाठः ।
२. 'यथा वेदयते कश्चिदोदनं पायसं ह्यदन्' इति कुं.पाठः ।

दंशादिना वेदनां प्राप्नोति **स्वभावस्यैव** स्वातन्त्र्यं परमात्मनः **लक्षणं** लक्षयतीति **लक्षणम्** निदर्शनम् ।

**विकारानेव यो वेद न वेद प्रकृतिं पराम् ।**
**तस्य स्तम्भोऽभवेद्बाल्यान्नास्ति स्तम्भोऽनुपश्यतः ॥ ३१ ॥**

**न वेद प्रकृतिं पराम्** इत्यत्र **प्रकृतिं** मूलप्रकृतिं नारायणम् ।

**नोर्ध्वं नावाङ् तिर्यक्च न कचिच्छक्र कामये ।**
**न हि ज्ञेये न विज्ञाने नाज्ञाने विद्यतेऽन्तरम् ॥ ३७ ॥**

**न हि ज्ञेये न विज्ञान** इत्यत्र **ज्ञेये** रूपरसादौ तस्य ज्ञाने च ।

**स्वभावाल्लभते प्रज्ञां शान्तिमेति स्वभावतः ।**
**स्वभावादेव तत्सर्वं यत्किञ्चिदनुपश्यति ॥ ४० ॥**

**स्वभावाल्लभते प्रज्ञाम्** इत्यत्र **स्वभावात्** स्वतन्त्रनारायणात् ।

**न शास्त्राणि शृणोत्येव मानदर्पसमन्वितः ।**
**स्वतःसिद्धं न भोगस्तं स्वतःसिद्धं न वेत्ति च ।**
**चिद्रूपधारणं चैव परसृष्टिमथाव्ययम् ॥ ५० ॥**

**चिद्रूपधारणम्** इत्यत्र **परं**[1] वस्तु **स्पष्टं** सम्यक् ज्ञातं न ।

**एवं युक्तसमाचारः संसारविनिवर्तकः ।**
**अनुकूलवृत्तिं सततं छिनत्त्येव भृगुर्यथा ॥ ५४ ॥**

**छिनत्त्येव भृगुर्यथा** इत्यत्र **भृगुर्यथा** शापेन अग्निं नाशितवान् तथा ज्ञानी भवाग्निं छिनत्ति ।

---

१. **'परं स्पष्टम्'** इति पाठः सम्भाव्यते ।

**येन[1] चायं समापन्नो वैतृष्ण्यं नाधिगच्छति ।**
**अभ्यन्तरः स्मृतः शक्र तत्साम्यं परिवर्जयेत्   ॥ ५५ ॥**

**येन चायं समापन्न** इत्यत्र **येन समापन्नो** सम्यगापदं प्राप्तः । **अयं** जीवः वैतृष्ण्यं नाधिगच्छति ।

**अभ्यन्तरः** अन्तर्यामी नारायणः, तत् साम्यं परिवर्जयेत् ।

**एतैरक्षैः समापन्नः प्रत्यक्षोऽसौ समास्थितः ।**
**सुषुम्याख्यस्तुरीयोऽसौ न च ह्यावरणान्वितः   ॥ ५७ ॥**

**समापन्नः** सम्यक् ज्ञातः, **सुषुम्याख्यः** सुषुप्तिम् **आ सम्यक् ख्यापयति** ज्ञापयतीति सुषुम्याख्यः, **तुरीयः** अवस्थात्रयातीतः, **असौ** परमात्मा, **आवरणान्वितो न च** अज्ञानावृतो न च ।

**लोकवृत्त्या तमीशानं यजन् जुह्वन् यमी भवेत् ।**
**आत्मन्यायासयोगेन निष्क्रियं स परात्परम्   ॥ ५८ ॥**

**आत्मन्यायासयोगेन निष्क्रियम्** इत्यत्र **आयासयोगेन** क्लेश-सम्बन्धेन । **निष्क्रियः** क्रियारहितः ।

**आयामे तां विजानाति मायैषा परमात्मनः ।**
**प्रातिभासिकसामान्याद्बुद्धेर्या संविदात्मिका   ॥ ५९॥**

**प्रातिभासिकसामान्यात्** इत्यत्र **प्रातिभासिकं** प्रतिभासयोग्यं वस्तु **तत्सामान्यात्** तत्साम्यात् बुद्धेर्या संविदात्मिका अवस्था भवेत् ।

---

१. BORI पृ २०४४; **'येन चायं समापन्नम्'** इति कुं.पाठः ।

**स्फुलिङ्गसत्त्वसदृशादग्निभावो यथा भवेत् ।**
**शिशूनामेवमज्ञानामात्मभावोऽन्यथा स्मृतः ॥ ६० ॥**

**स्फुलिङ्गसत्त्वसदृशात्** तृणादेः **अग्निभावः** गृहादेरप्यग्नित्वं यथा भवेत् ।

**आत्मभावोऽन्यथा स्मृत** इत्यत्र **अन्यथा** अनात्मतया स्थितेषु देहादिषु आत्मभावः भवति ।

**तदन्ते यं प्रयात्येव न विद्वानिति मे मतिः ।**
**यदस्य वाचकं वक्ष्ये[१] तस्मादेतद्भवेत् सदा ॥ ६४ ॥**

**यदस्य वाचकं वक्ष्य** इत्यत्र **अस्य** परमात्मनः **वाचकं** कृष्ण-रामादिनाम्नां वाचकं यदिन्द्रियं तद्वक्ष्ये, तस्मात् **एतत्** संसार-निस्तारोपायः सदा भवेत् ।

**गुणानुरूपं स च कर्मरूपं ददाति सर्वस्य समस्तरूपम् ।**
**न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चिदेनम् ॥६८॥**

**न संदृशे तिष्ठति रूपमस्य** इत्यत्र **संदृशे** सम्यक् दर्शनाय ।

**॥ इति मोक्षधर्मे षट्पञ्चाशोऽध्यायः ॥**

## ॥ अथ सप्तपञ्चाशोऽध्यायः ॥

**[२]पितामहमुपागम्य प्रणिपत्य कृताञ्जलिः ।**
**सर्वानेवासुरान् जित्वा बलिं पप्रच्छ वासवः ॥ ३ ॥**

---

१. BORI पृ २०४४; **'वक्ष्ये संस्मरे तद्भवेत् तदा'** इति कुं.पाठः ।
२. कुं. २३० अध्यायः ।

**बलिं पप्रच्छ वासव** इत्यत्र **बलिं पप्रच्छ** स्वराज्यकाले बलेरदर्शनात्, बलिः कुत्रास्तीति पप्रच्छ ।

**यदा च पृथिवीं सर्वां यजमानोऽनुपर्यगाः ।**
**शम्याक्षेपेण विधिना तदाऽऽसीत्किं नु ते हृदि ॥ २४ ॥**

**शम्याक्षेपेण विधिना** इत्यत्र शमीसमिधां यज्ञरक्षार्थं दशदिक्षु आक्षेपो यत्र तेन विधिना ।

**ततः प्रहस्य स बलिर्वासवेन समीरितम् ।**
**[1]निशाम्य मानं गम्भीरं सुरराजमथाब्रवीत् ॥ २६ ॥**

**निशाम्य मानं गम्भीरम्** इत्यत्र **मानं** गर्वम् । **निशाम्य** दृष्ट्वा ।

॥ इति मोक्षधर्मे सप्तपञ्चाशोऽध्यायः ॥

## ॥ अथ अष्टपञ्चाशोऽध्यायः ॥

**भीष्म** उवाच–

**[2]पुनरेव तु तं शक्रः प्रहसन्निदमब्रवीत् ।**
**निःश्वसन्तं यथा नागं प्रत्याहाराय भारत ॥ १ ॥**

**प्रत्याहाराय भारत** इत्यत्र **प्रत्याहाराय** पुनः संस्मरणाय ।

**को हि लोकस्य कुरुते विनाशप्रभवावुभौ ।**
**कृतं हि तत्कृतेनैव कर्ता तस्यापि चापरः ॥ १८ ॥**

---

१. **'निशम्य मानगम्भीरम्'** इति कुं.पाठः ।
२. कुं. २३१ अध्यायः ।

**कृतं हि तत्कृतेनैव** इत्यत्र **कृतेन** स्वस्वकृतकर्मणा । **कर्ता** नारायणः ।

**नास्य द्वीपः कुतः पारो नावारः सम्प्रदृश्यते ।**
**नान्तमस्य प्रपश्यामि विधेर्दिव्यस्य चिन्तयन् ॥ २३ ॥**

**नास्य द्वीपः कुतः पार** इत्यत्र **अस्य** संसारसमुद्रस्य **पारः** अपरतीरम् **अवारः** अर्वाचीनतीरम् । [१] 'पारावारे परार्वाची तीरे पात्रं तदन्तरम्' इत्यमरः ।

**विधेर्दिव्यस्य चिन्तयन्** इत्यत्र **दिव्यस्य** देवसम्बन्धिनः **विधेः** विधानस्य अन्तं न पश्यामि ।

**आहुः सर्वमिदं चिन्त्यं जनाः केचिन्मनीषया ।**
[२] **अनित्यं पञ्चवर्षाणि षष्ठो दृश्यति देहिनाम् ॥ ४९ ॥**

**अस्याः पञ्चैव चिन्तायाः [३] पर्येष्याणि च पञ्चधा ।**
**ततस्तानि न पश्यामि काले तमपि वृत्रहन् ॥ ५० ॥**

**अनित्यं पञ्चवर्षाणि** इत्यत्र जननानन्तरं पञ्चवर्षाणीत्येतदपि **अनित्यं** नियतं न । तन्मध्येऽपि दैवान्मरणं भवति इति भावः । तदुपरि देहिनां षष्ठं वर्षं **दृश्यति** दृश्यते । तदुपरि **अस्याः चिन्तायाः** उदर-चिन्तायाः पञ्चवर्षाणि, षड्वर्षपर्यन्तं स्वस्योदरचिन्ता नास्ति । माता-पित्रोरेव भवः(भरः)। तदुपरि उदरभरणस्य कः उपायः इति चिन्ता भवति इति भावः ।

---

१. अ.को. प्र. वारिवर्गः श्लो. ८
२. BORI पृ १२०२; **'अनित्यपञ्चवर्पाणि'** इति कुं. पाठः ।
३. BORI पृ १२०२; $T_2$,$G_{1,3}$,$M_{5,7}$; **'पर्येष्यामि'** इति कुं.पाठः ।

पुनः **पञ्चधा** वर्षाणि **पर्येष्याणि,** परितः कन्योद्वहनधनादेः पर्येषण-योग्यानि । **ततः** षोडशवर्षानन्तरं **तानि** वर्षाणि **न पश्यामि** कथं गच्छन्तीति न पश्यामि, उन्मत्तदशा कथं गच्छतीति न जानामि इति भावः ।

**गम्भीरं गहनं ब्रह्म [1]महत्तोयार्णवे यथा ।**
**अनादिनिधनं चाहुरक्षरं क्षरमेव च ॥ ५१ ॥**

**गम्भीरं गहनं ब्रह्म** इत्यत्र **ब्रह्म** कालनियामकं परं ब्रह्म **महत्तोयार्णवे यथा,** ह्रदे यथा ।

**सत्त्वेषु लिङ्गमाविश्य निर्लिङ्गमपि तत्स्वयम् ।**
**[2]मन्यन्तेऽध्रुवमेवैनं ये जनास्तत्त्वदर्शिनः ॥ ५२ ॥**

**मन्यन्तेऽध्रुवमेवैनम्** इत्यत्र **एनं** जीवम् अध्रुवं मन्यन्ते ।

**यमिन्द्रियाणि सर्वाणि नानुपश्यन्ति पञ्चधा ।**
**तं कालमिति जानीहि यस्य सर्वमिदं वशे ॥ ५३ ॥**

**यमिन्द्रियाणि सर्वाणि** इत्यत्र **पञ्चधा इन्द्रियाणि** पञ्चेन्द्रियाणि इत्यर्थः ।

**भूतानां तु विपर्यासं कुरुते भगवानिति ।**
**[3]न ह्येतावद्भवेद्ग्राह्यं [4]न यस्याः प्रभवेत् पुनः ॥ ५४ ॥**

---

१. **'महत्तोयार्णवम्'** इति कुं. पाठः ।; २. **'मन्यन्ते ध्रुवमेवैनम्'** इति कुं.पाठः ।
३. BORI पृ १२०३; T,$G_{1,2,3}$; **'न ह्येतावद् भवेद् ग्राम्यम्'** इति कुं.पाठः ।
४. BORI पृ १२०३; $G_{1,3,6}$,; **'न यस्मात् प्रभवेत् पुनः'** इति कुं. पाठः ।

**न ह्येतावद्भवेद्ग्राह्यम्** इत्यत्र **यस्याः** प्रकृतेः पुनः न, नोत्पद्यते ।

॥ इति मोक्षधर्मे अष्टपञ्चाशोऽध्यायः ॥

## [१]॥ अथ एकोनषष्टिशोऽध्यायः ॥

**बले केयमपक्रान्ता रोचमाना शिखण्डिनी ।**
**त्वत्तः स्थिता सकेयूरा दीप्यमाना स्वतेजसा ॥ ३ ॥**

**रोचमाना शिखण्डिनी** इत्यत्र **शिखण्डिनी** रम्यचूडावती । [२]'बालानां तु शिखा चूडा काकपक्षः शिखण्डकः' इति हलः ।

**श्रीरुवाच–**

**सत्ये स्थिताऽस्मि दाने च व्रते तपसि चैव हि ।**
**पराक्रमे च धर्मे च पराचीनस्ततो बलिः ॥ १२ ॥**

**धर्मे च पराचीनस्ततो बलिः** इत्यत्र **पराचीनः** पूर्वकालीनः ।

**श्रीरुवाच–**

**स्थास्यामि नित्यं देवेन्द्र यथा त्वयि निबोध तत् ।**
**विधिना वेददृष्टेन चतुर्धा विभजस्व माम् ॥ १९ ॥**

**चतुर्धा विभजस्व माम्** इत्यत्र वक्ष्यमाणचतुःस्थानेषु विभजस्वेत्यर्थः ।

**यं क्रियाभिः सुरक्ताभिर्हेतुयुक्ताः समाहिताः ।**
**ज्ञानवन्तो विवत्सायां लब्धा माद्यन्ति योगिनः ॥ ३० ॥**

---

१. कुं. २३२ अध्यायः ।; २. ह.को. २/५३२

**लब्धा माद्यन्ति योगिन** इत्यत्र **माद्यन्ति** सन्तोषं कुर्वन्ति । 'मदी हर्षे' इति धातुः ।

**तथेति चोक्त्वा सा[1] वत्सा सर्वलोकनमस्कृता ।**
**वासवं पालयामास सा देवी कमलालया ॥ ३२ ॥**

**तथेति चोक्त्वा सा वत्सा** इत्यत्र **वत्सा** कुमारी श्रीवत्सरूपा वा ।

**[2]तथा मध्यन्दिने सूर्योऽथास्तमेति यदा तदा ।**
**पुनर्देवासुरं युद्धं भावि जेताऽस्मि वस्तदा ॥ ३५ ॥**

**तथा मध्यन्दिने सूर्य** इत्यत्र **तथा** उदयमारभ्य अस्तमयपर्यन्तं चतुर्दिक्षु तपन् सूर्यः यदा मध्यन्दिने **अस्तं** प्रभायाः अल्पताम् एति **तदा** काले । स कालः विपरीतत्वादसुरजयकालः इति भावः ।

**सर्वलोकान् [3]यदाऽऽदित्यो ह्येकस्थस्तापयिष्यति ।**
**तदा देवासुरे युद्धे जेताऽहं त्वां शतक्रतो ॥ ३६ ॥**

**यदाऽऽदित्यो ह्येकस्थस्तापयिष्यति** इत्यत्र **एकस्थः** उदयास्तमयमध्याह्नकालेषु एकप्रकारेण स्थितः । मध्याह्नकालेऽपि रक्तमण्डल एव स्थित इत्यर्थः । अयमपि उत्पातरूपत्वात् असुरजयकालः इत्यर्थः । सुरपराजयकाल इति भावः ।

॥ इति एकोनषष्टितमोऽध्यायः ॥

---

१. **'सा भ्रष्टा'** इति कुं.पाठः ।
२. BORI पृ १२०९; T,G1,3,M1,5,7; **'तथा मध्यन्दिने सूर्यो नास्तमेति'** इति कुं.पाठः ।
३. **'यदादित्यो मध्यस्थ'** इति कुं. पाठः ।

## ॥ अथ षष्टितमोऽध्यायः ॥

[१] **पर्यायैर्हन्यमानानामभिषङ्गो न विद्यते ।**
**दुःखमेतत्तु यद्द्वेष्टा कर्ताऽहमिति मन्यते ॥ १४ ॥**

**पर्यायैर्हन्यमानानामभिषङ्गो न विद्यत** इत्यत्र **अभिषङ्गः** एक-स्थान एव सम्बन्धः ।

॥ इति षष्टितमोऽध्यायः ॥

## ॥ अथ एकषष्टितमोऽध्यायः ॥

[२] **यदि कर्ता भवेत् कर्ता न क्रियेत कदाचन ।**
**यस्मात्तु क्रियते कर्ता तस्मात्कर्ताऽप्यनीश्वरः ॥ ३४ ॥**

**यदि कर्ता भवेत् कर्ता** इत्यत्र **कर्ता** जीवः । **तस्मात्** विक्रियमाणत्वात् **कर्ता** जीवः ईश्वरो न हि ।

**कालेन त्वाऽहमजयं कालेनाहं जितस्त्वया ।**
**गन्ता गतिमतां कालः कालः कलयति प्रजाः ॥ ३५ ॥**

**गन्ता गतिमतां काल** इत्यत्र **गन्ता** गमयिता ।

**त्रियोनिषु विमोक्ष्यन्ति बीजानि पुरुषा यदा ।**
**सङ्करं कांस्यभाण्डैश्च बलिं चैव कुपात्रकैः ॥ ११४ ॥**

**सङ्करं कांस्यभाण्डैश्च** इत्यत्र **कांस्यभाण्डैः** भोजनपात्रादिकांस्य-

---

१. कुं. २३३ अध्यायः ।
२. कुं. २३४ अध्यायः ।

भाण्डैः । **सङ्करं** नानावर्णानाम् अन्नदानादिकम् । **कुपात्रकैः** भोजन-पात्राद्यपवित्रपात्रकैः । **बलिं** देवपूजाम् ।

**चातुर्वर्ण्यं यदा कृत्स्नममर्यादं भविष्यति ।**
**एकैकस्ते तदा पाशः क्रमशः परिमोक्ष्यते ॥ ११५ ॥**

**एकैकस्ते तदा पाश** इत्यत्र **एकैकः पाशः** कालपाशः धनविरोधी, धान्यविरोधी, भाग्यविरोधी, राज्यविरोधी चेत्यादिरूपेण विद्यमानः ।

**महर्षयस्तुष्टुवुरञ्जसा च तं**
**वृषाकपिं सर्वचराचरेश्वरम् ।**
**हिमापहो हव्यमुवाह चाध्वरे**
**तथाऽमृतं चार्पितमीश्वरोऽपि हि ॥ ११८ ॥**

**तुष्टुवुरञ्जसा च तं वृषाकपिम्** इत्यत्र **तम्** इन्द्रं **वृषाकपिं च** तद्धृदिस्थं स्वर्गस्थं विष्णुं वा ।

**॥ इति एकषष्टितमोऽध्यायः ॥**

## ॥ अथ द्विषष्टितमोऽध्यायः ॥

**युधिष्ठिर उवाच–**

**पूर्वरूपाणि[१] मे राजन् पुरुषस्य भविष्यतः ।**
**पराभविष्यतश्चैव तन्मे ब्रूहि पितामह ॥ १ ॥**

**पूर्वरूपाणि मे राजन् पुरुषस्य भविष्यतः पराभविष्यतश्चैव** इत्यत्र हे राजन् **भविष्यतः** उपरि भाग्याधिकतया भविष्यतः पुरुषस्य **परा-**

१. कुं. २३५ अध्यायः ।

**भविष्यतः** पराभवं प्राप्स्यतश्च, **पूर्वरूपाणि पूर्वाणि** पूर्वभावीनि कारणानि तेषां **रूपाणि** स्वरूपाणि यथा यथा तिष्ठन्ति तन्मे ब्रूहि इति योजना । कैः कारणैः जयो भवति । कैश्च कारणैः पराजयो भवति । तदुभयञ्च वदेति भावः ।

दोषान्विहाय केवलं गुणेष्वेवाभिरतं यस्य मनो वीक्ष्य, गुणान् विहाय केवलं दोषेष्वेव अभिरतं यस्य मनो वीक्ष्य यस्य श्रियः कटाक्षो भवति स भविष्यति, श्रीरुपेक्षते स पराभविष्यतीति सविस्तरं वक्तुमारभते– **मन एवेति** ।

**भीष्म उवाच–**

**मन एव मनुष्यस्य पूर्वरूपाणि शंसति ।**
**भविष्यतश्च च भद्रं ते तथैव न भविष्यतः** ॥ ३ ॥
**महतस्तपसो[१] व्युष्ट्या पश्यँल्लोकौ परापरौ ।**
**सामान्यमृषिभिर्गत्वा ब्रह्मलोकनिवासिभिः** ॥ ४ ॥

**महतस्तपसो व्युष्ट्या** इत्यत्र **व्युष्टिः** व्यूहः तया ।
**सामान्यमृषिभिर्गत्वा** इत्यत्र **सामान्यं** समं सहेत्यर्थः ।

**कदाचित्प्रातरुत्थाय पिस्पृक्षुः सलिलं शुचि ।**
**ध्रुवद्वारभवां गङ्गां जगामावततार च** ॥ ६ ॥

स्प्रष्टुम् इच्छुः **पिस्पृक्षुः** ।

**नदीपुलिनमासाद्य स्नात्वा सन्तर्प्य देवताः ।**
**जजाप जप्यं धर्मात्मा तन्मयत्वेन भास्वता** ॥ १० ॥

१. BORI पृ १२२८ ; **'महतस्तपसो व्यष्ट्या'** इति कुं. पाठः ।

**तन्मयत्वेन भास्वता** इत्यत्र **तन्मयत्वेन** तत्प्रधानत्वेन । **भास्वता** मनसा ।

**ज्योतिर्ज्वालसमाकीर्णं ज्योतिषां गणमण्डितम् ।**
**अभितस्तूदयन्तं तमर्कमर्कमिवापरम्** ॥ १६ ॥

**अर्कमर्कमिवापरम्** इत्यत्र आ समन्तात् **रुक्** कान्तिर्यस्य तत् विमानम् ।

**तत्सुपर्णार्करचितमास्थितं वैष्णवं पदम् ।**
**भाभिरप्रतिमं भाति त्रैलोक्यमवभासयत्** ॥ १८ ॥

**आस्थितं वैष्णवं पदम्** इत्यत्र **वैष्णवं पदं** विष्णुपदमाकाशम् ।

**पुण्येषु त्रिषु लोकेषु सर्वे स्थावरजङ्गमाः ।**
[१] **मामात्मभावमिच्छन्तो यतन्ते परमात्मना** ॥ २७ ॥

**मामात्मभावम्** इत्यत्र **आत्मभावम्** आत्मसु सन्निधानम् । **परमात्मना** परमप्रयत्नेन ।

[२] **कृत्यास्त्रीशयना नासन्नोदक्यास्त्रीषु शायिनः ।**

**उदक्यास्त्रीषु शायिन** इत्यत्र **उदक्या** रजस्वला । [३] 'ऋतुमत्यप्युदक्यापि स्याद्रजःपुष्पमार्तवम्' इत्यमरः ।

[४] **आकाशे च तथा तस्मिन्** इत्यत्र उत्थाय हस्ते गृहीत्वा एष्यन्ति ते आकाशे सन्ति । **एतस्मिन्** भोजनायोग्यस्थले अयोग्यकाले वा ।

---

१. BORI पृ १२३० ; $D_{4,9}$,$K_{4,7}$; **'ममात्मभावम्'** इति कुं. पाठः ।
२. BORI; पृ. २१७७; ३. अ.को. द्वि. मनुष्यवर्गः श्लो २१
४. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।

**यज्ञियाश्च तथा [१]वृश्च्यास्तेषामासन् दुरात्मनाम् ।**
**कूपस्नानरता नित्यं पर्वमैथुनगामिनः ॥ ७२ ॥**

**यज्ञियाश्च तथा वृश्च्यास्तेषामासन्** इत्यत्र **यज्ञियाः** यज्ञयोग्याश्चाश्वत्थाद्याः **वृश्च्याः** छेद्याः । वृश्च्या 'ओ व्रश्चू छेदने' इति धातुः ।

**न भोक्ष्यन्ति तथा नित्यं दैत्याः कालेन मोहिताः ।**
**निन्दन्ति स्तवनं विष्णोस्तस्य नित्यद्विषो जनाः ॥ ७५ ॥**

**न भोक्ष्यन्ति तथा नित्यम्** इत्यत्र **न भोक्ष्यन्ति** अतिथीन् न भोजयन्ति ।

**श्वश्रूश्वशुरयोर्मध्ये भर्तारं कृतकं यथा ।**
**प्रेक्षयन्ति च निर्लज्जा नार्यः कुलजलक्षणाः ॥ ८३ ॥**

**प्रेक्षयन्ति कृतकं यथा** इत्यत्र **कृतकं** कृत्रिमप्रतिमाम् ।

**उत्सूर्यशायिनश्चासन् [२]सर्वे चासन्नहर्निशाः ।**
**आवृत्तकलहाश्चात्र दिवारात्रं गृहे गृहे ॥ ८६ ॥**

**सर्वे चासन्नहर्निशा** इत्यत्र **अहः** सूर्योदयसमः निशा येषां ते **अहर्निशाः** ।

**मित्रेणाभ्यर्थितं द्रव्यमर्थी संश्रयते क्वचित् ।**
**[३]पालकाभ्यग्रमात्रेण स्वार्थेनाघ्नत तद्वसु ॥ ९२ ॥**

---

१. **'वृक्षास्तेपामासन्'** इति कुं. पाठः ।
२. **'सर्वे चासन्प्रगेशयाः'** इति कुं. पाठः ।
३. **'यालकोट्यग्रमात्रेण'** इति कुं.पाठः ।

**पालकाभ्यग्रमात्रेण** इत्यत्र **पालकाः** कृषीवलाः । तेभ्योऽपि **अभ्यग्रमात्रेण** अधिकमात्रेण ।

**आशा श्रद्धा धृतिः क्षान्तिर्विजितिः सन्नतिः क्षमा ।**
**अष्टमी वृत्तिरेतासां पुरोगा पाकशासन ॥ १०६ ॥**

**आशा श्रद्धा धृतिः** इत्यत्र **आशा** पुण्येष्वाशा प्रवर्तिका ।

**अथेङ्गितं वज्रधरस्य नारदः**
**श्रियश्च देव्या मनसा विचारयन् ।**
**श्रियै शशंसामरदृष्टपौरुषः**
**[1]शिवेन तत्रागमनं महर्द्धिमत् ॥ ११२ ॥**

**शिवेन तत्रागमनं महर्द्धिमत्** इत्यत्र **शिवेन** इन्द्रकृतपुण्येन **तत्र** इन्द्रगेहे । तव आगमनं महर्द्धिमत् इति शशंस ।

॥ इति द्विषष्टितमोऽध्यायः ॥

* * *

## ॥ अथ त्रिषष्टितमोऽध्यायः ॥

**[2]महादेवान्तरे वृत्तं देव्याश्चैवान्तरे तथा ।**
**यथावच्छृणु राजेन्द्र ज्ञानदं पापनाशनम् ॥ ४ ॥**

**महादेवान्तरे वृत्तं देव्याश्चैवान्तरे तथा** इत्यत्र **महादेवान्तरे** महादेवस्य अवकाशे देव्याश्च **अन्तरे** अवकाशे सति, **वृत्तं** प्रवृत्तम्

१. BORI पृ १२४१; '**शिवेन तत्रागमनं महर्षिभिः**' इति कुं.पाठः ।
२. कुं. २३६ अध्यायः ।

उभाभ्यामप्यवकाशं कृत्वा क्वचित् स्थिते सति ताभ्यामेव पूर्वं प्रवर्तितमित्यर्थः ।

**निन्दत्सु च समा नित्यं प्रशंसत्सु च देवल ।**
**निह्नुवन्ति च ये तेषां समयं सुकृतं[1] च यत् ॥ ९ ॥**

**निह्नुवन्ति च ये तेषां समयं सुकृतं च यत्** इत्यत्र **तेषां** निन्दकानां मध्ये **निह्नुवन्ति** अपलपन्ति । 'अपलापस्तु निह्नवः'[2] इत्यमरः ।

निरपेक्षा मुनयः तत्त्वविषये मद्वचनमप्युपेक्षयन्तीति दर्शयन् महादेवः तन्मुखेन तत्त्ववादं वाचयितुं स्वयं मायावादमनुवदति –**अर्थोऽहमर्थशक्तिस्त्वमित्यादिना** ॥

**अर्थोऽहमर्थशक्तिस्त्वं भोक्ताऽहं भोज्यमेव च ।**
**रूपं विद्धि महाभागे प्रकृतिस्त्वं परो ह्यहम् ॥ ३८ ॥**

**अहं विष्णुरहं ब्रह्मा ह्यहं यज्ञस्तथैव च ।**
**आवयोर्न च भेदोऽस्ति परमार्थस्ततोऽबले ।**
**तथापि विभ्रस्ते भेदं किं मां त्वं परिपृच्छसि ॥ ३९ ॥**

**एवमुक्ता ततः प्राह ह्यधिकं ह्येतयोर्वद ।**
**श्रेष्ठं वेद महादेव नम इत्येव भामिनी ॥ ४० ॥**

**अधिकं ह्येतयोर्वद** इत्यत्र **एतयोः** अर्थार्थशक्त्योर्मध्ये ।

---

१. BORI पृ १२४३; G1,3,6,K6,B7,T; 'सुकृतं च तत्' इति कुं.पाठः ।
२. अ.को. प्र.शब्दादिवर्गः श्लो. १७

**तदन्तरे स्थितो विद्वन् वसुरूपो महामुनिः ।**
**जैगीषव्यः स्मयन्प्राह ह्यर्थ इत्येव नादयन्** ॥ ४१ ॥

**श्रेष्ठोऽन्योऽस्मान्महीपिण्डा तल्लीना शक्तिरापरा ।**
**मुद्रिकादिविशेषेण विस्तृता सम्भृतेति च** ॥ ४२ ॥

**तदन्तरे** प्रश्नप्रतिवचनयोर्मध्ये **वसुरूपः, वसु** तत्त्वज्ञानाख्यधनं रूपयतीति वसुरूपः । **समयन्** सम्यक् अपहास्यकथाश्रवणात् अट्टहासं कुर्वन् । **अर्थः** सकलवेदार्थभूतः । **अन्यः** अहमेवार्थ इति असुरजन-मोहनार्थं ब्रुवाणादस्माच्छिवाद्भिन्नः । **श्रेष्ठः** सर्वोत्तमो नारायण एव हीति **नादयन्** सर्वेषामपि स्वोक्तवचनं श्रावयितुम् उच्चस्वरं कुर्वन् **महीपिण्डा** मह्याख्यबाह्यदेहवती, **तल्लीना** मह्यां लीना **आपरा** परमात्मा नारायणः यावत्पर्यन्तं तिष्ठति तावत्पर्यन्तं विद्यमाना, प्रलयेऽपि पत्या सह स्थितेत्यर्थः, लक्ष्मीः **शक्तिः** अर्थशक्तिः । प्रलयेऽपि विद्यमानस्य वेदस्य अर्थो नारायण एव । अर्थशक्तिश्च श्रीरेव । युवयो-स्तु प्रलये निद्रितत्वात् **नार्थत्वं** नाप्यर्थशक्तित्वम् । अतो विप्रलम्भार्थं कथितं शिववाक्यं भवद्भिर्न विश्वसनीयमिति भावः । **मुद्रिकादि-विशेषेण विस्तृता** मुद्रिकाभरणादिभगवदाभरणरूपेण विस्तृता । **सम्भृता सं** सम्यक् स्पष्टमित्यर्थः, वक्षसि धृता लक्ष्मीरिति पूर्वेणान्वयः ।

**तच्छ्रुत्वा वचनं देवी कोऽसावित्यब्रवीद्रुषा ।**
**वाक्यमस्याद्य सम्भङ्क्त्वा प्रोक्तवानिति शङ्करम्** ॥ ४३ ॥

**वाक्यमस्याद्य सम्भङ्क्त्वा** इत्यत्र **अस्य** तव वाक्यं **सम्यक् भङ्क्त्वा** सम्यक् भग्नं कृत्वा **प्रोक्तवान्** 'अयं क' इति शङ्करमब्रवीत् ।

**भक्तो मम सखा चैव शिष्यश्चात्र महामुनिः ।**
**जैगीषव्य इति ख्यातः प्रोक्त्वाऽसौ निर्गतः शुभे ॥ ४६ ॥**

**शिष्यश्चात्र महामुनिः** इत्यनेन मत्तो वेदान्तश्रवणसमये इदं ज्ञानं मयैव उपदिष्टं तान् प्रति असुरजनमोहनार्थं कथितां तु कथां कथं स सहेतेति सूचयति ।

**तच्छ्रुत्वा साऽथ सङ्क्रुद्धा न न्याय्यं तेन वै कृतम् ।**
**विकृताऽहं त्वया देव मुनिना च तथाकृता ॥ ४७ ॥**

**विकृताऽहं त्वया देव** इत्यत्र **विकृता** विशिष्टीकृता । **तथाकृता** व्यर्थीकृता ।

**अजरामरशुद्धात्मा यत्रास्ते स महामुनिः ।**
**इतस्ततः समाहृत्य वीरसङ्घैर्महायशाः ॥ ५३ ॥**

**अजरामरशुद्धात्मा** इत्यत्र **अजरामरे** नारायणे, **शुद्धः आत्मा** चित्तं यस्य सः ।

**प्रहसंस्तु पुनः शर्वो वृणीष्वेति तमब्रवीत् ।**
**अवश्यं हि वरो मत्तः श्राव्यं वरमनुत्तमम् ॥ ५७ ॥**

**श्राव्यं वरमनुत्तमम्** इत्यत्र **श्राव्यं** श्रोतुं योग्यम् अनुत्तमम् इदं वक्ष्यमाणं वरं दातव्यमिति तमाहेति सम्बन्धः ।

**एतत्ते कथितं राजन् यस्मात्त्वं परिपृच्छसि ।**
**निर्द्वन्द्वा योगिनो नित्याः सर्वशास्ते स्वयम्भुवः ॥ ६० ॥**

**स्वयम्भुवः** स्वयं स्वेच्छयैव सन्मार्गे भवन्ति न तु परप्रियार्थमपि दुर्मार्गे भवन्तीति **स्वयम्भुवः** योगिनः ।

॥ इति त्रिपष्टितमोऽध्यायः ॥

## ॥ अथ चतुःषष्टितमोऽध्यायः ॥

**[१]दास्यमैश्वर्यवादेन ज्ञातीनां च करोम्यहम् ।**
**द्विषन्ति सततं ऋद्धा ज्ञातिसम्बन्धिबान्धवाः ॥ ३३ ॥**

**दास्यमैश्वर्यवादेन** इत्यत्र **ईश्वरः** अधिपतिः, तस्य भावः **ऐश्वर्यम्** । तस्य वादेन ।

**[२]कार्यादि कारणान्तं यत्कार्यान्तं कारणादिकम् ।**
**ज्ञानं तदुभयं वित्त्वा सत्यं च परमं शुभम् ॥ १५ ॥**

**ज्ञानं तदुभयं वित्त्वा** इत्यत्र **वित्त्वा** विदित्वा ।

**ब्रह्मेति चाभिविख्यातं तद्वै पश्यन्ति सूरयः ।**
**ब्रह्मतेजोमयं भूतं भूतकारणमद्भुतम् ॥ १६ ॥**

**ब्रह्मतेजोमयं भूतम्** इत्यत्र **ब्रह्मतेजोमयं** परब्रह्मसामर्थ्यमेव प्रधानं यस्य तादृशं **भूतं** जातम् । (**ब्रह्मान्ते** च परब्रह्मणः नारायणस्य समीपे तदाज्ञयेति यावत् ।)

**तदीदृशमनाद्यन्तमव्यक्तमजरं ध्रुवम् ।**
**अप्रतर्क्यमविज्ञेयं [३]ब्रह्माग्रे विकृतं च तत् ॥ १८ ॥**

१. कुं. २३७ अध्यायः ।; २. कुं. २३८ अध्यायः ।
३. BORI पृ २०४७; 'ब्रह्माग्रे वैकृतं च तत्' इति कुं.पाठः ।

**तत्** प्रधानम् । **विकृतं** कार्याकारेण परिणतमभूत् ।

**तद्वै प्रधानमुद्दिष्टं त्रिसूक्ष्मं त्रिगुणात्मकम् ।**
**सम्यग्योगगुणं स्वस्थं तदिच्छाक्षोभितं महत् ॥ २९ ॥**

**त्रिसूक्ष्मम् तिस्रः** श्रीभूदुर्गात्मिकाः देव्यः **सूक्ष्माः** त्रिविधाणूनामभिमानिन्यो यस्य तत् । **त्रिविधा** भूताभिमानिन्यो (महीमानिन्यो) यस्य तत् **त्रिसूक्ष्मम्** । **तदिच्छाक्षोभितं** तस्य नारायणस्येच्छया क्षोभितम् ।

**शब्दलक्षणमाकाशं शब्दमात्रं समावृणोत् ।**[1]
**तेन सम्पीड्यमानस्तु स्पर्शमात्रं ससर्ज ह ॥ ३० ॥**

**शब्दलक्षणमाकाशं शब्दमात्रं समावृणोत्** इत्यत्र शब्द एव लक्षणं यस्य तदाकाशं, 'शब्दगुणकमाकाशम्' इति वचनात् । **शब्दमात्रं** स्वोपादानीभूतशब्दतन्मात्रम् **आवृणोत्** घटः मृत्पिण्डमिव तेनाऽविनाभूतः स्थित इत्यर्थः । **तेन** शब्दतन्मात्रेण **सम्पीड्यमानं** क्षोभ्यमाणं शब्दतन्मात्रमाकाशं स्पर्शमात्रं ससर्ज ।

**स्पर्शमात्रं तदा वायू रूपमात्रं समावृणोत् ।**
**तेन सम्पीड्यमानस्तु ससर्जाग्निमिति श्रुतिः ॥ ३२ ॥**

**रूपमात्रं समावृणोत्** इत्यत्र **रूपमात्रं** सृष्ट्वा समावृणोदित्यर्थः ।

**रूपमात्रं ततो वह्निं समुत्सृज्य समावृणोत् ।**
**तेन सम्पीड्यमानस्तु रसमात्रं ससर्ज ह ॥ ३३ ॥**

१. 'शब्दलक्षणमाकाशं शब्दतन्मात्रमावृणोत्' इति कुं.पाठः ।

**रूपमात्रं ततो वह्निं समुत्सृज्य समावृणोत्** इत्यत्र पूर्वं 'कार्यं कारणमावृणोत्' इत्युक्तम्, अत्र तु 'कारणं कार्यमावृणोत्' इत्युच्यते अन्योन्यव्याप्तेः साम्यात् उभयथापि वचनम् ।

**रसमात्रात्मकं भूयो रसं तन्मात्रमावृणोत् ।**
**तेन सम्पीड्यमानस्तु गन्धतन्मात्रकं ततः ॥ ३५ ॥**

**रसमात्रात्मकं भूय** इत्यत्र **रसमात्रात्मकम्** अम्भः ।

**ससर्ज गन्धतन्मात्रमावृणोत्करकं ततः ।**[१]
**तेन सम्पीड्यमानस्तु काठिन्यं च ससर्ज ह ॥ ३६ ॥**

**गन्धतन्मात्रमावृणोत्करकं तत** इत्यत्र **गन्धतन्मात्रं करकं** जलमयोपलं सृष्ट्वा **आवृणोत्** तदेव आवृणोत् । 'वर्षोपलस्तु करकः'[२] इत्यमरः ।

**पृथिवी जायते तस्माद्गन्धतन्मात्रजात्तथा ॥ ३७ ॥**
**अम्मयं सर्वमेवेदमापस्तस्तम्भिरे तया ।**[३]
**भूतानीमानि जातानि पृथिव्यादीनि वै श्रुतिः ॥ ३८ ॥**

**गन्धतन्मात्रजात्** करकात् ।

**अम्मयं सर्वमेवेदम्** इत्यत्र **इदं** पृथिव्याः स्वरूपम् । **तया** पृथिव्या **आपः** अधोभागस्थितघनोदकरूपा आपः । **तस्तम्भिरे** अध एव स्तम्भिता आसन् ।

---

१. **'गन्धम्'** इति कुं. पाठः । ; २. अ.को. प्र. दिग्वर्गः श्लो. १२
३. **'सर्वमेवेदमापस्तम्भिरे पुनः'** इति कुं. पाठः ।

**भूतानां मूर्तिरेवैषामन्नं चैषां मता बुधैः ।**
**तस्मिंस्तस्मिंस्तु तन्मात्रा तन्मात्रा इति ते स्मृताः ॥ ३९ ॥**

**तस्मिंस्तस्मिंस्तु तन्मात्रा** इत्यत्र तस्मिन् **तस्मिन्** भूते **तन्मात्राः** सूक्ष्मरूपेण तत्तद्भूतात्मिका यतः तस्मात् ते तन्मात्राः इति स्मृताः ।

**एषामुद्धर्तकः कालो नानाभेदवदास्थितः ।**
**परमात्मा च भूतात्मा गुणभेदेन संस्थितः ।**
**एक एव त्रिधा भिन्नः करोति विविधाः क्रियाः ॥ ४१ ॥**

**एक एव त्रिधा भिन्न** इत्यत्र **त्रिधा** ब्रह्मस्थब्रह्मरूपेण रुद्रस्थ-रुद्ररूपेण पृथक् नारायणरूपेण च भिन्नः अवतीर्णः ।

'सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः ।
विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक् ॥'[1]

इति भागवतवचनात् द्वयं ब्रह्मरुद्रयोर्नियामकरूपम् एकं तु पृथगेव स्थितं रूपम् इति विवेकः ।

**कालोऽपि तन्मयोऽचिन्त्यस्त्रिगुणात्मा सनातनः ।**
**अव्यक्तोऽसावचिन्त्योऽसौ वर्तते भिन्नलक्षणः ॥ ४३ ॥**

**कालोऽपि तन्मयोऽचिन्त्य** इत्यत्र **काल**पदेन कालान्तर्यामी नारायणो ग्राह्यः ।

**कालात्मना त्विदं भिन्नमभिन्नं श्रूयते हि यत् ।**
**अनाद्यन्तमजं दिव्यमव्यक्तमजरं ध्रुवम् ।**
**अप्रतर्क्यमविज्ञेयं ब्रह्माग्रे सम्प्रवर्तते ॥ ४४ ॥**

---

१. भाग.२/६/३१

**कालात्मना त्विदं भिन्नम्** इत्यत्र **कालात्मना** विष्णुना सह **इदं** मूर्तिचतुष्टयं **भिन्नं** भिन्नभिन्नकार्याय चतुर्धा अवतीर्णम् । **अभिन्नम्** एकीभूयस्थितं मूलरूपम् ।

**काष्ठा निमेषा दश पञ्च चैव**
**त्रिंशत्तु काष्ठा गणयेत् कलां ताम् ।**
**त्रिंशत्कलश्चापि भवेन्मुहूर्तो**
**भागः कलाया दशमश्च यः स्यात्** ॥ ४५ ॥

**त्रिंशत् कला चापि भवेन्मुहूर्त** इत्यत्र **मुहूर्तो** घटिका ।

**ये ते रात्र्यहनी पूर्वं कीर्तिते दैवलौकिके ।**
**तयोः सङ्ख्याय वर्षाग्रं ब्राह्मे वक्ष्याम्यहःक्षपे** ॥ ५१ ॥

**तयोः** देवमानुषयोः । **वर्षाग्रं** वर्षप्रमाणम् । 'अग्रं पुरः शिखामान-श्रेष्ठादिषु फलादिषु' इत्यमरः (?)।

**चत्वार्याहुः सहस्राणि वर्षाणां तत्कृतं युगम् ।**
**तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः** ॥ ५३ ॥

**तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविध** इत्यत्र **तस्य** कृतयुगस्य **तावच्छती** चतुःशती **सन्ध्या** । तस्याः सन्ध्याया एव **अंशः** पूर्वांशः उत्तरांशश्च **तथाविधः** । पूर्वांशोऽपि द्विशती उत्तरांशोऽपि द्विशती मिलित्वा चतुःशती इत्यर्थः । तथा च कृतत्रेतायुगसन्ध्या स्व-पूर्वोत्तरांशाभ्यां सह अष्टशतीत्यर्थः । त्रेतायुगद्वापरयुगयोः सन्ध्यापि पादोनत्वात् त्रिशती । **सन्ध्यांशः** तस्याः सन्ध्यायाः पूर्वांशः उत्तरांशश्च

तथाविधः सार्धशतं पूर्वांशः, सार्धशतम् उत्तरांशः मिलित्वा षट्शतीत्यर्थः। एवं द्वापरकलियुगयोः सन्ध्यापि पादोनत्वाद् द्विशती पूर्वांशः उत्तरांशश्च शतं शतं मिलित्वा चतुःशती । एवमेव कलियुगकृतयुगयोः सन्ध्यापि पादोनत्वात् शतं शतं पूर्वोत्तरांशौ तु पञ्चाशत् पञ्चाशत् मिलित्वा द्विशती । पूर्वांशे पूर्वयुगधर्मा एव बहुशः । उत्तरांशे उत्तरयुगधर्मा एव बहुशः । मध्ये तु मध्यमा रीतिरिति प्रदर्शनाय सन्ध्या सन्ध्यांशाविति विभागः। एवं चतुर्युगसन्ध्यासु मिलित्वा वत्सराणां द्विसहस्रया विभागो द्रष्टव्यः ।

**रात्रिस्तु तावती ब्राह्मी तदादौ विश्वमीश्वरः ।**
**प्रलये त्मानमाविश्य सुप्त्वा सोऽन्ते विबुध्यते ॥ ६३ ॥**

**प्रलये त्मानमाविश्य** इत्यत्र **त्मानम्** आत्मानम् ।

**ब्रह्मतेजोमयं शुक्रं यस्य सर्वमिदं जगत् ।**
**एकस्य ब्रह्मभूतस्य द्वयं स्थावरजङ्गमम् ॥ ७० ॥**

**एकस्य ब्रह्मभूतस्य** इत्यत्र **ब्रह्मभूतस्य** विष्ण्वाख्यमहाभूतस्य । [१]'एको विष्णुर्महद्भूतम्' इति वचनात् ।

**अभिभूयेह चातिष्ठद्व्यसृजत् सप्त मानसान् ।**
**दूरगं बहुधागामि प्रार्थनासंशयात्मकम् ॥ ७२ ॥**

**व्यसृजत्सप्तमानसान्** इत्यत्र **मानसान्** स्वमनसो जातान् सप्त बुद्धि मनःपञ्चभूताख्यान् ।

---

१. वि.स. फलस्तुति ।

**यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।**
**दृश्यन्ते तानि तान्येव तथा ब्रह्माहरादिषु[१]** ॥ १०९ ॥

**तथा ब्रह्माहरादिषु** इत्यत्र ब्रह्मणः **अहानि** दिनानि, तेषाम् **आदिषु** ।

॥ इति चतुःषष्टितमोऽध्यायः ॥

* * *

## ॥ अथ पञ्चषष्टितमोऽध्यायः ॥

**[२]आकाशस्य गुणं शब्दमभिव्यक्तात्मकं मनः ।**
**ग्रसते च यदा सोऽपि शाम्यति प्रतिसञ्चरे ।**
**मनसो व्यक्तमव्यक्तं ब्राह्मः सम्प्रतिसञ्चरः** ॥ १३ ॥

**शाम्यति प्रतिसञ्चर** इत्यत्र **प्रतिसञ्चरे** संहारे ।

**[३]एवं विस्तारसङ्क्षेपो ब्रह्माण्डोऽन्ते पुनः पुनः ।**
**युगसाहस्रयोरादावहोरात्र्यास्तथैव च** ॥ १९ ॥

**एवं विस्तारसङ्क्षेपो ब्रह्माण्डोऽन्ते पुनः पुन** इत्यत्र **ब्रह्माण्डः** ब्रह्मणो दिनस्य **अन्ते** उभयपार्श्वे **युगसाहस्रयोरादौ** एकयुगसहस्रस्यादौ अपरयुगसहस्रस्य च आदावित्यर्थः ।

॥ इति मोक्षधर्मे प्रत्याहारकथनं नाम पञ्चषष्टितमोऽध्यायः ॥

---

१. '**ब्रह्महरादिषु**' इति कुं. पाठः ।
२. कुं. २३९ अध्यायः ।
३. '**एवं विस्तारसङ्क्षेपौ ब्रह्माव्यक्ते पुनः पुनः**' इति कुं.पाठः ।

## ।। अथ षट्षष्टितमोऽध्यायः ।।

**[1] याज्यतः शिष्यतो वाऽपि कन्याया वा धनं महत् ।**
**यद्यागच्छेद्यजेद्दद्यान्नैकोऽश्नीयात्कथञ्चन ।। १२ ।।**

**याज्यतः शिष्यतो वाऽपि** इत्यत्र **याज्यतः** यजमानात् यज्ञ-दक्षिणारूपेण, **शिष्यतः** गुरुदक्षिणारूपेण, कन्यया सह वरदक्षि-णारूपेण च यत् धनमागच्छेत् तेन **यजेत्** दद्यात् इति अन्वयः ।

**अनुनीय तथा काव्यः सत्यसन्धो महाव्रतः ।**
**स्वैः प्राणैर्ब्राह्मणप्राणान् परित्राय दिवं गतः ।। १६ ।।**

**स्वैः प्राणैर्ब्राह्मणप्राणान्** इत्यत्र **ब्राह्मणप्राणान्** स्वोदरगतकचाख्य-बृहस्पतिपुत्रप्राणान् ।

**रन्तिदेवश्च सांकृत्यो वसिष्ठाय महात्मने ।**
**अपः प्रदाय शीतोष्णा नाकपृष्ठे महीयते ।। १७ ।।**

**अपः प्रदाय शीतोष्णा** इत्यत्र 'रन्तिदेवाख्यो राजा महादुर्भिक्षे सति स्वयम् अभुञ्जानः सन् अहोरात्रं बहुदिनपर्यन्तं दीनानाम् अन्नं दत्वा स्वस्य प्राणसङ्कटे तृषापरिहारायानीतमुष्णोदकं च भिक्षुरूपिणे वसिष्ठाय दत्वा, तदैव मृतः सन् स्वर्गमवाप' इति पौराणिकीं कथां सङ्गृह्णाति ।

**।। इति षट्षष्टितमोऽध्यायः ।।**

---

१. कुं. २४० अध्यायः ।

## ।। अथ सप्तषष्टितमोऽध्यायः ।।

**उपपन्नं[१] हि यत्प्राज्ञो निस्तरेन्नेतरो जनः ।**
**दूरतो गुणदोषौ हि प्राज्ञः सर्वत्र पश्यति ।। १९ ।।**

**उपपन्नं हि यत्प्राज्ञो निस्तरेत्** इत्यत्र प्राज्ञः निस्तरेत् इतरो जनः न निस्तरेदिति उपपन्नं हि ।

**त्र्यवदाते कुले जातस्त्रिसन्देहस्त्रिकर्मकृत् ।**
**तस्मादुन्मज्जनं तिष्ठेत्प्रज्ञया निस्तरेद्यथा ।। २३ ।।**

**त्रिसन्देहस्त्रिकर्मकृत्** इत्यत्र **त्रिसन्देहः** याजनवेदाध्यापनदानेषु अनियतकर्मत्वात् करोमि वा न वेति सन्देहो यस्य, यजनादि कर्मत्रिकस्य नित्यत्वात् करोतीति **त्रिकर्मकृत्** ।

**अधर्मं[२] धर्मसङ्काशं करोति ह्यविचक्षणः ।**
**धर्मं वाधर्मसङ्काशं शोचन्निव करोति सः ।। ३१ ।।**

**अधर्मं धर्मसङ्काशं करोति** इत्यत्र **धर्मसङ्काशं** सज्जनः धर्मं यथा अभीतः करोति, तथा **अविचक्षणः** दुर्जनः अधर्मम् अभीतः करोति । उत्तमो जनः अधर्मं यथा शङ्कया करोति तथा अधमो जनः धर्मं शङ्कितः करोतीत्यर्थः ।

**धर्मं करोमीति करोत्यधर्म-**
**मधर्मकामश्च करोति धर्मम् ।**

---

१. अत्र कुं पाठानुसारेण पूर्वाध्याय एवानुसरति ।
२. **'अधर्मं धर्मकामो हि'** इति कुं. पाठः ।

**उभे बालः कर्मणी न प्रजानन्**
**सञ्जायते म्रियते चापि देही ॥ ३२ ॥**

**धर्मं करोमि** इत्यत्र अन्नदानादि धर्मं करोमि इति प्रवृत्तः पङ्क्तिभेद-ब्राह्मणतर्जनाद्यधर्मं करोति । **अधर्मकामः** निशि अगम्यागमनादि पापकामः अह्नि तदूहनार्थम् अरुणोदयस्नानादि धर्मं करोति ।

**॥ इति मोक्षे सप्तषष्टितमोऽध्यायः ॥**

## ॥ अथ अष्टषष्टितमोऽध्यायः ॥

**छिन्नदोषो मुनिर्योगयुक्तो युञ्जीत द्वादश ।**[1]
**दशकर्मसुखानर्थानुपायापायनिष्क्रियः ॥ ३ ॥**

**योगयुक्तो युञ्जीत द्वादश** इत्यत्र **द्वादश** यजनादि षट्कर्माणि । कामादिषड्वर्गनिग्रहाख्यषट्कर्माणि । स्नान-शौच-तपः-सत्य-दया-तितिक्षाख्यानि वा षट्कर्माणीति द्वादश, दशेन्द्रियतृप्तिकरकर्माणि दशकर्माणि । तज्जन्यसुखादेः अनर्थादेश्च उपायापाययोः **निष्क्रियः** निर्व्यापारः ।

**चक्षुराचारसङ्ग्राहे मनसा दर्शनेन च ।**[2]
**यच्छेद्वाङ्मनसी बुद्ध्या य इच्छेज्ज्ञानमुत्तमम् ॥ ४ ॥**

**चक्षुराचारसङ्ग्राहे मनसा दर्शनेन च** इत्यत्र चक्षुषः सञ्चारदोष-दर्शनेन **सङ्ग्राहे** गुणदर्शनेन चेत्यर्थः ।

---

१. कुं. २४२ अध्यायः ।
२. BORI पृ १२७३; $G_1$; '**चक्षुराचारसङ्ग्राहैर्मनसा**' इति कुं. पाठः ।

**ज्ञानेन यच्छेदात्मानं य इच्छेच्छान्तिमात्मनः ।**
**एतेषां चेदनुद्रष्टा पुरुषोऽपि सुदारुणः** ॥ ५ ॥

**यच्छेदात्मानम्** इत्यत्र **आत्मानं** बुद्धिम् ।

**एवं ह्येतेन योगेन युञ्जानो[1]ऽप्येकमन्ततः ।**
**अपि जिज्ञासमानोऽपि शब्दब्रह्माऽतिवर्तते** ॥ ८ ॥

**युञ्जानोऽप्येकमन्तत** इत्यत्र अन्ततः एकं मनः हरौ युञ्जानः ।

**धर्मोपस्थो ह्रीवरूथ उपायापायकूबरः ।**
**अपानाक्षः प्राणयुगः प्रज्ञायुर्जीवबन्धनः** ॥ ९ ॥

**प्रज्ञायुर्जीवबन्धन** इत्यत्र **जीवो** जीवनम् ।

**त्यागरश्म्यनुगः क्षेम्यः शौचगाध्वानगोचरः[2] ।**
**जीवयुक्तो रथो दिव्यो ब्रह्मलोके विराजते** ॥ १२ ॥

**शौचगाध्वानगोचर** इत्यत्र **शौचगाः** शौचरताः मुनयः तेषामध्वा **गोचरः** विषयो यस्य ।

**सप्त यो धारणाः कृत्स्ना वाग्यतः प्रतिपद्यते ।**
**पृष्ठतः पार्श्वतश्चान्यास्तावत्यस्ताः प्रधारणाः** ॥ १४ ॥

**सप्त यो धारणा** इत्यत्र पञ्चेन्द्रियाणां मनोबुद्ध्योश्च सम्बन्धिन्यः **सप्त, धारणाः** ।

---

१. BORI पृ १२७४; **'युञ्जानो ह्येवमन्ततः'** इति कुं. पाठः ।
२. **'शौचगो ध्यानगोचरः'** इति कुं. पाठः ।

**पृष्ठतः पार्श्वतश्च** इत्यत्र पृष्ठपार्श्वादिसर्वाङ्गेषु यावत्यः प्रधारणाः ताश्च क्रमशः सन्तीति योजना ।

**क्रमशः पार्थिवं यच्च वायव्यं खं तथा पयः ।**
**ज्योतिषो यत्तदैश्वर्यमहङ्कारस्य बुद्धितः ।**
**अव्यक्तस्य तथैश्वर्यं क्रमशः प्रतिपद्यते ॥ १५ ॥**

**बुद्धितः** बुद्धेः विज्ञानतत्त्वस्य ।

**क्रमशः प्रतिपद्यत** इत्यत्र एतेषां धारणाः क्रमशः प्रतिपद्यते ।

इदानीं महाप्रलये सति सत्यलोकस्थितापरोक्षज्ञानिनां ब्रह्मणा सह पृथिव्याद्यावरणान्यतिक्रम्य भगवदुदरे प्रवेशप्रकारमाह – **तस्य देहाद्वियुक्तस्य पूर्वरूपं भवत्युत** इति ।

**तस्य[1] देहाद्वियुक्तस्य पूर्वरूपं भवत्युत ।**
**अथ [2]धूमस्य विरमे द्वितीयं रूपदर्शनम् ॥ १८ ॥**
**जलरूपमिवाकाशे तत्रैवात्मनि पश्यति ।**

**तस्य** ज्ञानिनः, जात्येकवचनम्, **देहात्** भोगोचितदिव्यदेहात् वियुक्तस्य, **पूर्वरूपम्** अनादिकालमारभ्य विद्यमानं लिङ्गदेहाख्यं रूपं भवति, अथ धूमस्य **विरमे** अवसाने **आकाशे जलरूपमिव** जलसङ्ग्रहयोग्यमेघरूपमिव **आत्मनि** ब्रह्माण्डस्याधारभूते आदिकूर्माख्ये परमात्मनि तदाधारतया स्थितमित्यर्थः । **द्वितीयं रूपदर्शनं** ब्रह्माण्डान्तर्गतपृथिव्याः द्वितीयं **रूपदर्शनं** दृश्यत इति दर्शनम् दर्शनीयं रूपं प्रथमावरणभूतसौवर्णखर्पराख्यरूपं पश्यति ।

---

१. BORI पृ १२७५; M5; **'तथा देहाद्विमुक्तस्य'** इति कुं. पाठः ।
२. BORI पृ १२७५; **'धूमस्य विरमेद्'** इति कुं. पाठः ।

**अपां व्यतिक्रमे चास्य वह्निरूपं प्रकाशते ॥ १९ ॥**

**अपां व्यतिक्रमे चास्य** इत्यत्र पृथिवीरूपदर्शनानन्तरं द्वितीयावरणभूताबुदेवतारूपं दृष्ट्वा अपां व्यतिक्रमे सतीत्यर्थः।

**तस्मिन्नुपरते चास्य वायव्यं सूक्ष्ममव्ययम् ।**
**रूपं प्रकाशते तस्य पीतवस्त्रवदव्ययम् ॥ २० ॥**

**तस्य रूपं प्रकाशत** इत्यत्र **तस्य** बुद्धितत्त्वस्य।

**अथ श्वेतां गतिं गत्वा सोऽहङ्कारे प्रकाशते ।**
[1] **सुशुक्लं चेतसः सूक्ष्ममप्युक्तं ब्राह्मणस्य वै ॥ २२ ॥**

**अथ श्वेतां गतिं गत्वा** इत्यत्र **श्वेतां गतिं** स्वाङ्गकान्तिं **गत्वा** प्राप्य सोऽहङ्कारः प्रकाशते ।

**सुशुक्लं चेतसः सूक्ष्मम्** इत्यत्र **अथ चेतसः** चित्तप्रवर्तकस्य अस्य महत्तत्त्वाभिमानिभूतस्य ब्रह्मणः रूपमपि सुशुक्लं **सूक्ष्मं** रूपम् **उक्तम्** प्राप्यतयोक्तम् ।

**एतेष्वपि हि जातेषु फलजातानि मे शृणु ।**
[2] **जातस्य पार्थिवैश्वर्ये सृष्टिरिष्टा विधीयते ॥ २३ ॥**

**एतेष्वपि हि जातेषु** इत्यत्र **एतेषु** स्थानेषु **जातेषु** वेदेषु फलजातानि शृणु । **पार्थिवैश्वर्ये** सौवर्णखर्पराख्यपार्थिवैश्वर्ये **जातस्य** पृथिव्यभिमानिदेवस्य सकाशात् इष्टा **सृष्टिः विधीयते** भूलोकाख्यरूपान्तरे विधीयते ।

---

१. **'सुशुक्लं चेतसः सौक्ष्म्यमप्युक्तम्'** इति कुं. पाठः ।
२. BORI पृ १२७६; **'जातस्य पार्थिवैश्वर्यैः'** इति कुं. पाठः ।

**प्रजापतिरिवाक्षोभ्यः शरीरात् सृजते प्रजाः ।**

**शरीरात्** पृथिव्यादिद्वितीयरूपात् ।

**अङ्गुल्यङ्गुष्ठमात्रेण हस्तपादेन वा तथा ॥ २४ ॥**

**पृथिवीं कम्पयत्येको गुणो वायोरिति श्रुतिः ।**
**आकाशभूतश्चाकाशे सवर्णत्वात् प्रकाशते ।**

**अङ्गुल्यङ्गुष्ठमात्रेण** इत्यत्र **एको वायुः** मुख्यप्राणः अङ्गुल्यङ्गुष्ठ-मात्रेण **हस्तपादेन वा**, हस्तेन पादेन वा पृथिवीं **कम्पयति**, प्रलय-काले **कम्पयति** चालयति नाशयति इत्यर्थः । अयं वायोर्गुणः इति श्रुतिराह । तदुपरि आकाशे **आकाशभूतः** भूताकाशाभिमानी **भूतः** देवः **सवर्णत्वात्** समीचीनवर्णेन सहितत्वात् प्रकाशते ।

**वर्णतो गृह्यते चाप्सु नापः पिबति चाशया ॥ २५ ॥**
**न चास्य तेजसां रूपं दृश्यते शाम्यते तथा ।**
**अहङ्कारेऽस्य विजिते पञ्चैते स्युर्वशानुगाः ॥ २६ ॥**

**वर्णतो गृह्यते चाप्सु** इत्यत्र **अस्य** प्रकाशाभिमानिदेवस्य **रूपं** वर्णतो दृश्यते । **अप्सु** समागतास्वपि आशया अपः **न च पिबति** इतरभूतवन्न सङ्गृह्णाति इत्यर्थः ।

**षण्णामात्मनि बुद्धौ च जितायां प्रभवत्यथ ।**
**निर्दोषा प्रतिभा ह्येनं कृत्स्ना समभिवर्तते ॥ २७ ॥**

**षण्णामात्मनि बुद्धौ च** इत्यत्र **षण्णां** पञ्चभूतअहङ्काराख्यानां षण्णाम् **आत्मनि** स्वरूपे जिते सति, बुद्धौ च जितायाम् ।

**तथैव व्यक्तमात्मानमव्यक्तं प्रतिपद्यते ।**
**यतो निःसरते लोको भवति व्यक्तसञ्ज्ञकः ॥ २८ ॥**

**तथैव व्यक्तमात्मानम्** इत्यत्र **तथैव** 'सुशुक्लं (चेतसः) सुसूक्ष्मम्' इत्यादिनोक्तप्रकारेणैव स्थितं **व्यक्तं** व्यक्तनामकमहत्तत्त्वाभिमानिभूतम् **आत्मानं** विरिञ्चं प्रतिपद्यते । तदनन्तरम् **अव्यक्तं** प्रकृतितत्त्वाभिमानिनीं श्रियं प्रतिपद्यते ।

**विषयप्रतिसंहारः[1] साङ्ख्यानां[2] सिद्धि लक्षणः ॥ ३४ ॥**

**विषयप्रतिसंहार** इत्यत्र यतः अव्यक्ततत्त्वात्, तत् कृपयेत्यर्थः **साङ्ख्यानां** ज्ञानिनां **सिद्धिलक्षणः** कार्यसिद्धिज्ञापकः विषयप्रतिसंहारः भवति ।

**पञ्चविंशतितत्त्वानि तुल्यान्युभयतः समम् ।**
**योगे साङ्ख्येऽपि च तथा विशेषं तत्र मे शृणु ॥ ३० ॥**

**पञ्चविंशतितत्त्वानि तुल्यान्युभयतः समम्** इत्यत्र **उभयतः योगे** योगशास्त्रे **साङ्ख्ये** साङ्ख्यशास्त्रे चेत्युभयतः **समं** यथा भवति तथा तत्त्वानि । **पञ्चविंशतिः** प्रकृत्या सह पञ्चविंशतिः ।

**विपरीतमतो यत्तु तदव्यक्तमुदाहृतम् ।**
**द्वावात्मानौ च वेदेषु सिद्धान्तेष्वप्युदाहृतौ ॥ ३२ ॥**

---

१. BORI पृ १२७८; $D_{4,6,9}$,$M_{1,5,6}$; **'विषयात्प्रतिसंहारः'** इति कुं.पाठः ।

२. BORI पृ १२७८; $T_2$; **'साङ्ख्यानां विद्धि लक्षणम्'** इति कुं. पाठः ।

**द्वावात्मानौ च वेदेषु** इत्यत्र **आत्मानौ** जीवात्मपरमात्मानौ । **सिद्धान्तेषु** भारत-पञ्चरात्र-ब्रह्ममीमांसादिशास्त्रेषु ।

**[1] चतुर्लक्षणजं त्वेकं चतुर्वर्जं प्रचक्षते ।**
**व्यक्तमव्यक्तजं चैव तथा बुद्धिरथेतरम् ॥ ३३ ॥**

तयोर्मध्ये **एकं** जीवात्मतत्त्वं **चतुर्लक्षणजं** जायते, वर्धते, क्षीयते, म्रियते चेति चतुर्लक्षणैः सह जातम् । अन्यत् जीवतत्त्वादत्यन्तभिन्नं परमात्मतत्त्वं जायते, वर्धते, क्षीयते, म्रियते चेत्युक्तचतुर्लक्षणवर्जम् ।

**द्वावात्मानौ च वेदेषु [2] विषयेषु च लक्षितौ ॥ ३४ ॥**

**द्वावात्मानौ च वेदेषु विषयेषु च लक्षितौ** इत्यत्र **विषयेषु** अज्ञानाख्यविषं यापयन्तीति विषयाः प्रागुक्तसत्सिद्धान्ताः, तेषु, वेदेषु च विद्यमानौ द्वावात्मानौ **च लक्षितौ** विरुद्धलक्षणवत्तया प्रदर्शितौ ।

**[3] अवियोगाद्विमुच्यन्ते कारणैर्यैर्निबोध मे ।**

**अवियोगाद्विमुच्यन्त** इत्यत्र यैः कारणैः अवियोगात् विमुच्यन्ते तान्येव कारणानि **मे** मया उक्तानीति निबोध ।

**योगैश्वर्यमतिक्रान्तो योऽतिक्रामति मुच्यते ॥ ४१ ॥**

**योगैश्वर्यमतिक्रान्त** इत्यत्र **योगैश्वर्यं** परमात्मनः योगैश्वर्यम् **अतिक्रान्तः** जहदजहल्लक्षणया नास्तीति अतिक्रम्य वर्तमानो यो मिथ्याज्ञानी तं च यः **अतिक्रामति** श्रुतिस्मृतियुक्तिभिरतिक्रम्य वर्तते, पराभावयती-

---

१. **'चतुर्लक्षणजं त्वाद्यं चतुर्वर्गं प्रचक्षते'** इति कुं. पाठः ।
२. **'विषयेष्वनुरज्यतः'** इति कुं. पाठः ।
३. BORI पृ १२७८; **'यथा योगाद्विमुच्यन्ते कारणैर्यैर्निबोध तत्'** कुं. पाठः ।

त्यर्थः । अद्वैतमतं निरस्य, सर्वदा विष्णोः सर्वोत्तमत्वं प्रतिपादयन्निति यावत्, स मुच्यते ।

**इत्येषा भावजा बुद्धिः कथिता ते न संशयः ।**

**इत्येषा भावजा बुद्धिः** इत्यत्र **भावजा** मनोभावाज्जाता मनःपूर्वं कथितेत्यर्थः ।

**एवं भवति निर्द्वन्द्वो ब्रह्माणं चाधिगच्छति ॥ ४२ ॥**

**एवं भवति निर्द्वन्द्व** इत्यत्र यः एवं मदुक्तप्रकारेण **निर्द्वन्द्वो** शीतोष्णसुखदुःखलाभालाभादिद्वन्द्वरहितो भवति, सः ब्रह्माणम् अधिगच्छति इति योजना ।

**॥ इति मोक्षधर्मे शुकानुप्रश्ने मोक्षोपायविधिर्नाम अष्टषष्टितमोऽध्यायः ॥**

## ॥ अथ षष्टितमोऽध्यायः ॥

**व्यास उवाच –**

**यस्तु[1] पश्येत् स्वभावेन विनाभावमचेतनः ।**
**पुष्णाति स पुनः सर्वान् प्रज्ञया मुक्तहैतुकः[2] ॥ ३ ॥**

बौद्धमतं निराकरोति – **यस्तु पश्येदिति** । **यः** बौद्धः **स्वभावेन** तत्तद्वस्तुस्वभावेन **विना अभावं** कारणान्तराभावं पश्येत् । **मुक्तहैतुकः** मुक्तः हेतुः ईश्वरादृष्टादिहेतुसमूहो येन स तथोक्तः ।

---

१. कुं. २४३ अध्यायः । BORI पृ १२७९; **'यस्तु पश्यन्'** इति कुं. पाठः ।
२. BORI पृ १२८०; M7; **'मुक्तहेतुकः'** इति कुं. पाठः ।

**येषां चैकान्तभावेन स्वभावः कारणं मतम् ।**
**दूर्वातृणबृसीका ये ते लभन्ते न किञ्चन ॥ ४ ॥**

**दूर्वातृणबृसीका** इत्यत्र परवञ्चनार्थं दूर्वातृणादिकं **बृसीकम्** आसनं येषां ते ।

**स्वभावो हि विनाशाय मोहकर्ममनोभवः ।**
**निरुक्तमेतयोरेकं[1] स्वभावपरिभावयोः ॥ ६ ॥**

**स्वभावो हि विनाशाय** इत्यत्र मोहकर्म मनोभवः स्वभावः मुख्यतो जगत्कारणत्वेनाङ्गीकृतः **स्वभावः** विनाशाय तेषां वादिनाम् । **एतयोः स्वभावपरिभावयोः** दुःस्वभावपरिभावयोः सुष्ठु अभावो यस्मादिति व्युत्पत्त्या **एकम्** एकमेव निरुक्तम् ।

स्वभावस्यैव कारणत्वे कृष्यादिकं व्यर्थं स्यात् । अतः कृष्यादौ या प्रज्ञाकर्षणदोहदजलदानादि कौशलं सापि कारणमित्याह–**कृष्यादीनीति ।**

**कृष्यादीनीह कर्माणि सस्यसंहरणानि च ।**
**प्रज्ञाविद्भिः प्रक्लृप्तानि यानासनगृहाणि च ॥ ७ ॥**

**पारावर्यं[2] तु भूतानां ज्ञानेनैवोपलभ्यते ।**
**विद्यया तात सृष्टानां विद्यैवेह परा गतिः ॥ १० ॥**

**पारावर्यं तु भूतानाम्** इत्यत्र परावरभावः **पारावर्यं** तारतम्यमित्यर्थः ।

---

१. '**निरुक्तमेतयोरेतत् स्वभावपरिभावयोः**' इति कुं. पाठः ।
२. BORI पृ १२८०; '**परावरं तु भूतानाम्**' इति कुं. पाठः ।

अधुना स्वभावादेव सर्वं भवति । 'किं विद्यया' इति बौद्धमतं निराकरोति– **विद्ययेति ॥**

**द्विपादानि द्वयान्याहुः [१] पार्थिवान्युत्तराणि च ।**
**पार्थिवानि विशिष्टानि तानि ह्यन्नानि भुञ्जते ॥ १४ ॥**

**पार्थिवान्युत्तराणि च** इत्यत्र **पार्थिवानि** भूचराणि, **उत्तराणि** खेचराणि चेति ।

**पार्थिवानि द्वयान्याहुः [२] मध्यमानीतराणि च ।**
**मध्यमानि विशिष्टानि जातिधर्मोपधारणात् ॥ १५ ॥**

**मध्यमानीतराणि च** इत्यत्र **इतराणि** अधमानि ।

**[३] धर्मद्वयं हि यो वेद स धर्मज्ञः स सर्ववित् ।**
**[४] स त्यागी सत्यसङ्कल्पः सत्यः शुचिरथेश्वरः ॥ २१ ॥**

**धर्मद्वयं हि यो वेद** इत्यत्र एको **धर्मः** धारयतीति व्युत्पत्त्या नारायणः ।

**स धर्मज्ञः स सर्ववित्** इत्यत्र **स धर्मज्ञ** इति ज्ञानिनः स्तुतिः, **स सर्ववित्** इत्यादि तु धर्मपदोक्तनारायणस्य स्तुतिः । **त्यागी** दोषत्यागी ।

**आद्यन्तनिधनं चैव कर्म चातीत्य सर्वशः ।**
**चतुर्विधस्य भूतस्य सर्वस्येशाः स्वयम्भुवः ॥ २५ ॥**

---

१. **'पार्थिवानीतराणि च'** इति कुं. पाठः ।

२. **'मध्यमानुत्तमानि तु'** इति कुं.पाठः ।

३. BORI पृ १२८२; $V_1$,$D_3$,$M_{6,7}$; **'धर्मद्वयं हि यो वेद स सर्वज्ञः'** इति कुं. पाठः । ; ४. BORI पृ १२८२; **'सत्याशीः'** इति कुं. पाठः ।

**सर्वस्येशाः स्वयम्भुव** इत्यत्र **स्वयं** स्वतन्त्रः परमात्मा, **भूः** स्थानमेषां ते तथोक्ताः ।

**॥ इति शान्तौ मोक्षे अष्टषष्टितमोऽध्यायः ॥**

## ॥ अथ एकोनसप्ततितमोऽध्यायः ॥

**[1]तत्र चेन्न भवेदेवं संशयः कर्मनिश्चये ।**
**[2]किन्तु कर्म स्वभावो वा ज्ञानकर्मेति वा पुनः** ॥ २ ॥
**तत्र वेदविवित्सायां ज्ञानं चेत् पुरुषं प्रति ।**
**उपपत्त्युपलब्धिभ्यां वर्णयिष्यामि तच्छृणु** ॥ ३ ॥

**तत्र चेन्न भवेदेवं संशयः कर्मनिश्चय** इत्यत्र कर्म स्वभावो वा **ज्ञानकर्म** ज्ञानस्य कर्म, स्वभावो वा इति **संशयः** संशयवानयं पुरुषः धर्मनिश्चये न भवेच्चेत् **वेदविवित्सायां** वेदविचारेऽपि पुरुषं प्रति ज्ञानं च न भवेच्चेत् **उपपत्त्युपलब्धिभ्याम्** अनुमानप्रत्यक्षाभ्यां **वर्णयिष्यामि** । धर्मज्ञानं च वर्णयिष्यामि ।

**पौरुषं कर्म दैवं च फलवृत्तिस्वभावतः ।**
**त्रयमेतत् पृथग्भूतमविवेकं तु केचन** ॥ ५ ॥

**त्रयमेतत्पृथग्भूतम्** इत्यत्र पृथग्भूतमेतत् **त्रयं** पौरुषं कर्म दैवाख्यं त्रयमप्यपेक्षितम् । एवमपि **केचन** सन्तः **अविवेकम्** अस्मन्मतात् विवेकाभावं भेदाभावमेव कुर्वन्ति, **केचन** असन्तस्तु विवेकमेव कुर्वन्ति ।

---

१. कुं. २४४ अध्यायः ।
२. BORI प १२८३; T,G1,3,6,M1,6; **‘किन्तु कर्मस्वभावोऽयं ज्ञानं कर्मेति वा पुनः’** इति कुं. पाठः ।

**एतदेवं च नैवं च न चोभे नानुभे तथा ।**
**कर्मस्था विषयं ब्रूयुः सत्त्वस्थाः समदर्शिनः ॥ ९ ॥**

**एतदेवम्**, **एतत्** पूर्वोक्तं मतम् **एवम्** एवमेव इति सन्तः । **एवं च न** किन्तु **उभे** पुरुषप्रयत्नकर्मणी **एवं** जगत्कारणे इति मीमांसकाः । **उभे अपि च न** किन्तु पुरुषप्रयत्न एक एवेति चार्वाकाः, **कर्मस्थाः** कर्मठाः **विषयं** स्वमनसो योऽयं विषयः तमेव ब्रूयुः, **सत्त्वस्थाः** ज्ञानस्थाः **समदर्शिनः** यथावस्तु ज्ञानिनः ।

**तपसा तदवाप्नोति यद्भूतं सृजते जगत् ।**
**स तद्रूपः[१] ततः सर्वभूतानां भवति प्रभुः ॥ १० ॥**

**स तद्रूप** इत्यत्र **तत्** सर्वस्रष्टृत्वं रूपं यस्य सः । अनेन, हरिः सर्वोत्तमः सर्वस्रष्टृत्वात्, व्यतिरेकेण देवदत्तवत् इति उपपत्तिर्दर्शिता ।

**॥ इति शुकानुप्रश्ने एकोनसप्ततितमोऽध्यायः ॥**

## ॥ अथ सप्ततितमोऽध्यायः ॥

**[२]आश्रयोऽन्योऽस्ति सत्त्वस्य गुणः सत्त्वस्य चेतना ।**
**सत्त्वं हि तेजः सृजति न गुणान् वै कथञ्चन ॥ १४ ॥**

**आश्रयोऽन्योऽस्ति सत्त्वस्य** इत्यत्र **सत्त्वस्य** प्राणिसमूहस्य । **अन्यः** भिन्नः परमात्मा ।

**सत्त्वं हि तेजः सृजति** इत्यत्र **तेजः** दर्शनस्पर्शनादिसामर्थ्यं, **गुणान्** रूपादिगुणान् सत्त्वादिगुणांश्च ।

---

१. **'तद्भूतश्च ततः'** इति कुं. पाठः ।
२. कुं. २४९ अध्यायः । **'आश्रयो नास्ति सत्त्वस्य'** इति कुं. पाठः ।

**एवं सप्तदशं देहे वृतं षोडशभिर्गुणैः ।**
**मनीषी मनसा विप्रः पश्यत्यात्मानमात्मनि ॥ १५ ॥**

**वृतं षोडशभिर्गुणैः** इत्यत्र **षोडशभिः** एकादशेन्द्रियपञ्चमहाभूतैः ।

**पश्यत्यात्मानमात्मनि** इत्यत्र **आत्मानं** स्वात्मानं स्वदेहं च । **आत्मनि** परमात्मनि । परमात्माधारतयेत्यर्थः ।

**विद्याभिजनसम्पन्ने ब्राह्मणे गवि हस्तिनि ।**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १९ ॥**

**शुनि चैव श्वपाके च पण्डिताः समदर्शिन** इत्यत्र **समं** नारायणं पश्यन्तीति समदर्शिनः ।

**यावानात्मनि वेदात्मा तावानात्मा परात्मनि ।**[1]
**य एवं सततं वेद सोऽमृतत्वाय कल्पते ॥ २२ ॥**

**यावानात्मनि वेदात्मा** इत्यत्र **वेदात्मा** वेदपुरुषः । **आत्मा** जीवात्मा परमात्मनि इति विवेकः स्यादिति योग्यपदाध्याहारः । यावत् यावत् वेदाभ्यासो भवति तावत्तावदात्मविवेकबुद्धिर्भवतीति भावः ।

**सर्वभूतात्मभूतस्य सर्वभूतहितस्य च ।**
**देवाऽपि मार्गे मुह्यन्ति अपदस्य पदैषिणः ॥ २३ ॥**

**अपदस्य पदैषिण** इत्यत्र पद्यते ज्ञायते अनेनेति **पदं** प्राकृतदेहः तद्रहितस्य ।

**सर्वेऽन्तस्था इमे लोका बाह्यमेषां न किञ्चन ।**
**यः सहस्रं समा गच्छेद्यथा बाणो गुणाच्च्युतः ॥ २७ ॥**

---

१ BORI पृ १२८९; **'यावानात्मनि मे ह्यात्मा'** इति कुं. पाठः ।

**बाह्यमेषां न किञ्चन** इत्यत्र **एषां** लोकानां मध्ये ।

**सर्वतः पाणिपादं तत् सर्वतोऽक्षि शिरोमुखम् ।**
**सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ २९ ॥**

**तत्** परमात्मनः स्वरूपम् ।

**अक्षरश्च क्षरश्चैव द्वैधीभावोऽयमात्मनः ।**[१]
**क्षरः सर्वेषु भूतेषु दिवि ह्यमृतमक्षरम् ॥ ३१ ॥**

**अक्षरश्च क्षरश्चैव** इत्यत्र **आत्मनः** परमात्मनः **द्वैधीभावः** जीवात् भेदः यथा भवति तथा । क्षरः अक्षरः इति द्वौ पुरुषौ वर्तेते ।

**नवद्वारं पुरं गत्वा हंसो हि नियतो वशी ।**
**ईशः सर्वस्य भूतस्य स्थावरस्य चरस्य च ॥ ३२ ॥**

**नवद्वारं पुरं गत्वा** इत्यत्र नवद्वारं पुरं **गत्वा** प्रविश्य **हंसः** परमात्मा ईशः सन् तिष्ठतीति योजना ।

**पातेनाजं विकल्पानां नवानां संशयेन च ।**[२]
**शरीराणामजस्याहुर्हंसत्वं पारदर्शिनः ॥ ३३ ॥**

**पातेनाजं विकल्पानाम्** इत्यत्र यस्मात् हंसस्य परमात्मनः सारासारविवेचनसमर्थं स्वरूपं **विकल्पानां** विविधः कल्पः कल्पना येषां तेषां शरीराणां **पातेन** सन्निपातेन उत्पत्त्येत्यर्थः । **अजं** जननरहितम् ।

---

१. BORI पृ १२९०; T,G$_{1,3,6}$; **'अक्षरं च क्षरं चैव'** इति कुं. पाठः ।
२. BORI पृ १२९०; Cs; **'हानिभङ्गविकल्पानां नवानां सश्चयेन च'** इति कुं. पाठः ।

**संशयेन** सम्यक् शयः शयनं नाशः तेन । अनन्तरं नाशरहितं सत् तिष्ठति ।

**[१]हंसोक्तं यत् क्षरं चैव कूटस्थं यत्तदक्षरम् ।**
**तद्विद्वानक्षरं प्राप्य जहाति प्राणजन्मनी ॥ ३४ ॥**

**हंसोक्तं यत्क्षरं चैव** इत्यत्र **यत् क्षरं** जीवस्वरूपं तदपि **हंसोक्तं** हंस इत्युक्तम् । उक्तिमात्रेण हंसो न त्वित्यर्थः । कूटस्थं यदक्षरं परमात्मस्वरूपम् तत् विकारबहिर्भूतत्वात् मुख्यतो हंस इत्युक्तमिति सूचनाय कूटस्थपदम् ।

**॥ इति मोक्षधर्मे ब्रह्माधिगमोपायविधिर्नाम सप्ततितमोऽध्यायः ॥**

## ॥ अथ एकसप्ततितमोऽध्यायः ॥

**[२]योगकृत्यं तु ते कृत्स्नं वर्तयिष्यामि तच्छृणु ।**
**एकत्वं बुद्धिमनसोरिन्द्रियाणां च सर्वशः ॥ २ ॥**

**एकत्वं बुद्धिमनसोः** इत्यत्र **एकत्वम्** एकविषयत्वं यदा ।

**वर्जयेदुशतीं वाचं हिंसायुक्तां मनोनुदाम् ।**
**[३]ब्रह्म तेजोमयं शुक्लं यस्य सर्वमिदं ततम् ॥ ९ ॥**

---

१. BORI पृ १२९०; T,$G_{1,3,6}$,$M_{1,5,6}$,Cs; **'हंसोक्तं चाक्षरं चैव'** इति कुं. पाठः ।

२. कुं. २४६ अध्यायः ।

३. BORI पृ १२९२; $T_1$,$G_{1,6}$,$M_{1,6,7}$; **'ब्रह्म तेजोमयं शुक्रम्'** इति कुं. पाठः ।

**एतस्य सूत्रभूतस्य द्वयं स्थावरजङ्गमम्** ॥ १० ॥

**ब्रह्म तेजोमयं शुक्लं यस्य सर्वमिदं ततम्** इत्यत्र **यस्य** परमात्मनः, **शुक्लं** शुक्लं यत्स्वरूपं तेन इदं सर्वं **ततं** व्याप्तम् । **द्वयं** स्थावरजङ्गमं वशे इति योजना ।

**विमोहोऽभ्रम[1] आवर्ते घ्राणश्रवणदर्शने ।**
**अद्भुतानि रसस्पर्शौ शीतोष्णे मारुताकृतिः** ॥ २३ ॥

**विमोहोऽभ्रम आवर्त** इत्यत्र **आवर्ते** आसमन्तात् वर्तमाने **घ्राणश्रवणदर्शने,** घ्राणं गन्धाघ्राणनं, श्रवणं शब्दश्रवणम्, दर्शनं रूपदर्शनम्, तस्मिन् विमोहोऽभ्रम इति योजना ।

**कुर्यात् परिचयं योगे त्रैकाल्ये नियतो मुनिः ।**
**गिरिशृङ्गे तथा चैत्ये वृक्षाग्रेषु च योजयेत्** ॥ २५ ॥

**वृक्षाग्रेषु** वृक्षमूलेषु ।

**अपि वर्ण्यपकृष्टश्च[2] नारी वा धर्मकाङ्क्षिणी ।**
**तावप्येतेन मार्गेण गच्छेतां परमां गतिम्** ॥ ३४ ॥

**वर्णी** ब्रह्मचारी 'वर्णिनो ब्रह्मचारिणः'[3] इत्यमरः । **अपकृष्टः** धिक्कृतः ।

॥ इति एकसप्ततितमोऽध्यायः ॥

* * *

---

१. **'विमोहो भ्रम आवर्तो घ्राणम्'** इति कुं. पाठः ।
२. **'वर्णावकृष्टस्तु'** इति कुं. पाठः ।
३. अ.को. द्वि. ब्रह्मवर्गः श्लो. ४२

## ।। अथ द्विसप्ततितमोऽध्यायः ।।

[१] इत्युक्तः प्रत्युवाचेदं पराशरसुतः सुतम् ।
कर्मविद्यामयावेतौ व्याख्यास्यामि क्षराक्षरौ ।। ३ ।।

व्याख्यास्यामि क्षराक्षरौ इत्यत्र क्षराक्षरौ क्षराक्षरफलकौ ।

अस्ति धर्म इति ह्युक्त्वा नास्तीत्यत्रैव यो वदेत् ।
तस्य पक्षस्य सदृशमिदं मम भवेदथ ।। ५ ।।

अस्ति धर्म इति ह्युक्त्वा नास्तीत्यत्रैव यो वदेत् इत्यत्र अत्र ज्ञानिनां मध्ये धर्मोऽस्तीत्युक्त्वा पुनर्नास्तीति च यो वदेत् तस्य पक्षस्य पक्षद्वयस्य सदृशं मम वाक्यं भवेदिति योजना ।

कर्मणा बध्यते जन्तुर्विद्यया तु प्रमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ।। ७ ।।

कर्मणा बध्यते जन्तुः इत्यत्र कर्मणा प्रवृत्तिकर्मणा ।

विद्यामयोऽन्यः पुरुषस्तात कर्ममयोऽपरः ।
विद्धि चन्द्रमसं दर्शे सूक्ष्मया कलया स्थितम् ।। १५ ।।
नवं तु शशिनं दृष्ट्वा वक्रतन्तुमिवाम्बरे ।। १६ ।।
एकादशविकारात्मा कलासम्भारसम्भृतः ।
मूर्तिमानिति तं विद्धि तात कर्म गुणात्मकम् ।। १७ ।।

विद्धि चन्द्रमसं दर्शे इत्यत्र लुप्तोपमेयम् । दर्शे सूक्ष्मकलया

---

१ [illegible] अध्यायः ।

सूर्यमण्डले **स्थितं** गमनागमनवन्तं वृद्धिह्रासवन्तं चन्द्रमसमिव प्रलये भगवदुदरनिविष्टं सर्गे स्थूलरूपेण पुनरुत्पत्स्यमानं जीवं कर्ममयं पुरुषं विद्धीति 'तातकर्मगुणात्मकम्' इत्यन्तसार्धश्लोकद्वयस्य तात्पर्यम् ।

**तस्मिन् यः संस्थितो ह्यग्निर्नित्यं स्थाल्यामिवाहितः ।**
**आत्मानं तं विजानीहि नित्यं त्यागजितात्मकम् ॥ १८ ॥**

**तस्मिन् यः संस्थितो ह्यग्निः** इत्यत्र **तस्मिन्** सूर्यमण्डले **यः अग्निः** उष्णभास्वरतेजोरूपेण स्थितः स इव सदाऽविकारो **यः** परमात्मा **तं** विद्यामयं विद्धीत्युत्तरेणान्वयः ।

**तमोरजश्च सत्त्वं च विद्धि जीवगुणात्मकम् ।**
**जीवमात्मगुणं विद्यादात्मानं परमात्मनः ॥ २० ॥**

**तमोरजश्च सत्त्वं च विद्धि जीवगुणात्मकम्** इत्यत्र सत्त्वादि-गुणत्रयं जीवगुणात्मकं **विद्धि** न तु **परमात्मनः**, जीवस्यापि कुत्सिता एवैते गुणाः न तु स्वभावभूता इति सूचनाय कुशब्दः । वस्तुतस्तु जीवम् **आत्मगुणम्** आत्मनः अन्तर्यामिणः गुणा इव गुणा यस्य तं विद्धि । प्रतिबिम्बस्य बिम्बसदृशत्वादिति भावः । **आत्मानम्** अन्तर्यामिणं च **परमात्मनः** स्वमूलरूपस्य (स्वरूपस्य) गुणं गुणात्मानं विद्धि इति योजना ।

**अचेतनं जीवगुणं वदन्ति स चेष्टते चेष्टयते च सर्वम् ।**
**ततः परं क्षेत्रविदो वदन्ति प्राकल्पयद्यो भुवनानि सप्त ॥२१॥**

**अचेतनं जीवगुणं वदन्ति** इत्यत्र स्वनिष्ठचैतन्यस्यापि परमात्मा-

धीनत्वादचेतनमिव जीवगुणं वदन्ति । **सः** परमात्मा **चेष्टते** स्वातन्त्र्येणैव चेष्टते । **सर्वं** जीवजडात्मकं जगत् जीवयते च । **ततः** कारणात् **क्षेत्रविदः** ज्ञानिनः तं **परं** जीवजडात्मकाज्जगतोऽत्यन्त-भिन्नम् उत्तमं च वदन्ति । यः सप्त भुवनानि प्राकल्पयत् ततोऽपि तं परमं वदन्तीति योजना ।

**॥ इति द्विसप्ततितमोऽध्यायः ॥**

## ॥ अथ त्रिसप्ततितमोऽध्यायः ॥

[१] **नाभुक्तवति चाश्नीयादपीतवति नो पिबेत् ।**
**नातिष्ठति तथासीत नासुप्ते प्रस्वपेत च ॥ २१ ॥**

**नातिष्ठति तथासीत** इत्यत्र **अतिष्ठति** निद्रातः उत्थानम् अकुर्वति सति । **तथा** यथा निद्राभङ्गो न भवति तथा आसीत ।

**॥ इति त्रिसप्ततितमोऽध्यायः ॥**

## ॥ अथ चतुःसप्ततितमोऽध्यायः ॥

[२] **गृहस्थवृत्तयश्चैव चतस्रः कविभिः स्मृताः ।**
**कुसूलधान्यः प्रथमः कुम्भधान्यस्त्वनन्तरम् ॥ २ ॥**

**अश्वस्तनोऽथ कापोतीमाश्रितो वृत्तिमाहरेत् ।**
**तेषां परः परो ज्यायान् धर्मतो लोकजित्तमः ॥ ३ ॥**

---

१ पू. २४८ अध्यायः ।

२ पू. २४९ अध्यायः ।

**कुसूलधान्यः प्रथम** इत्यत्र पूर्वमेव अतिवैराग्यासम्भवात् **प्रथमः** । कुसूलं धान्यं यस्य सः **कुसूलधान्यः** । कूसूलपदेन चत्वारिंशत्प्रस्थ-तण्डुलप्रमाणेन (मानेन) तृणैः आच्छाद्य यो बन्धः क्रियते स कुसूल इत्युच्यते । एकमासपर्यन्तं भार्यायाः स्वस्य च जीवनोपायसङ्ग्रहवानि-त्यर्थः । **कुम्भे** स्थूलघटे धान्यं यस्य सः **कुम्भधान्यः** । **अश्वस्तनः** श्वस्तनं धान्यं यस्य न सोऽश्वस्तनः । एकदिनमात्रयोग्यधान्यसङ्ग्रहवानित्यर्थः । **कापोतीं** कपोतवृत्तिसम्बन्धिनीं तत्तत्कालोचितधनेन जीवनमिति यावत् ।

**षट्कर्मावर्तयत्येकस्त्रिभिरन्यः प्रवर्तते ।**
**द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रे व्यवस्थितः ॥ ४ ॥**

**षट्कर्मावर्तयत्येक** इत्यत्र **षट्कर्मा** यजनादिषट्कर्मा । **त्रिभिः** यजना-ध्ययनप्रतिग्रहैः (दानैः), **द्वाभ्याम्** यजनाध्ययनाभ्यां, चतुर्थः **ब्रह्मसत्रे** ब्राह्मणैः क्रियमाणसत्रयागे व्यवस्थितः(त्यवस्थितः) इदमाहर इद-माहरेति तेषामाज्ञाधारी यः स **चतुर्थः** ।

**प्राणी वा यदि वाऽप्राणी संस्कारं यजुषाऽर्हति ।**
**न दिवा प्रस्वपेज्जातु न पूर्वापररात्रयोः ॥ ६ ॥**

**प्राणी वा यदि वाऽप्राणी** इत्यत्र **प्राणी** पैतृकाद्यर्थमानीतः प्राणी **अप्राणी वा** नित्यभोजनार्थमानीतव्रीह्यादिकं **यजुषा** भूर्भुवः-स्वरिति यजुर्मन्त्रेण अप्रोक्षयित्वा किमपि गृहान्तर्नानेयमिति भावः ।

**नखरैः सम्प्रयातस्य स्वकर्मख्यापकस्य च ।**
**अपविद्धाग्निहोत्रस्य गुरोर्वाऽलीककारिणः ॥ १० ॥**

**संविभागोऽत्र भूतानां सर्वेषामेव शिष्यते ।**
**तथैवापचमानेभ्यः प्रदेयं गृहमेधिना ॥ ११ ॥**

**संविभाग** इत्यत्र **भूतानां** मध्ये **नखरैः सम्प्रयातस्य** संविभागो न इत्यादि योजना ।

**दश पूर्वान् दश परान् पुनाति च पितामहान् ।**
**गृहस्थवृत्तीश्चाप्येता वर्तयेद्यो गतव्यथः ॥ २५ ॥**

**पूर्वान् दश परान्** इत्यत्र **पूर्वान्** अपरान् **परान्** अन्यूनान् ।

॥ इति चतुःसप्ततितमोऽध्यायः ॥

## ॥ अथ पञ्चसप्ततितमोऽध्यायः ॥

**व्यास उवाच—**

**क्रमशस्त्ववधूयैनां[१] तृतीयां वृत्तिमुत्तमाम् ।**
**संयोगव्रतखिन्नानां वानप्रस्थाश्रमौकसाम् ॥ २ ॥**

**तृतीयां वृत्तिमुत्तमाम्** इत्यत्र आश्रितानामिति योग्यपदाध्याहारः ।

**चतुर्थे चायुषः शेषे वानप्रस्थाश्रमं त्यजेत् ।**
**साद्यस्कां सन्निरूप्येष्टिं सार्ववेदां[२] सदक्षिणाम् ॥ २२ ॥**

**सार्ववेदां सदक्षिणाम्** इत्यत्र **सार्ववेदां** सर्ववेदसम्बन्धिनीं सर्व-वेदेषु विहितामित्यर्थः ।

---

१. कुं. २५० अध्यायः ।
२. 'सर्ववेदसदक्षिणाम्' इति कुं. पाठः ।

**यमेषु चैवानुगतेषु न व्यथेत्**
**स्वशास्त्रसूत्राहुतिमन्त्रविक्रमः ।**
**भवेद्यथेष्टा गतिरात्मयाजिनो**
**न संशयो धर्मपरे जितेन्द्रिये ॥ २९ ॥**

**स्वशास्त्रसूत्राहुतिमन्त्रविक्रम** इत्यत्र स्वशास्त्रेषु सूत्रेषु या **आहुतयः** ये मन्त्राः तेषु **विक्रमः** अक्रमरहितः ।

**॥ इति शान्तिपर्वणि मोक्षधर्मे शुकानुप्रश्ने पञ्चसप्ततितमोऽध्यायः ॥**

## ॥ अथ षट्सप्ततितमोऽध्यायः ॥

**[1]काषायाम्बरयित्वा च श्रेणिस्थानेषु च त्रिषु ।**
**प्रव्रजेच्च परं स्थानं पारिव्राज्यमनुत्तमम् ॥ ३ ॥**

**काषायाम्बरयित्वा च** इत्यत्र काषायाम्बरवन्तं कृत्वा ।

**यस्मिन् वाचः प्रविशन्ति कूपे प्रास्ताः शिला इव ।**
**न वक्तारं पुनर्यान्ति स कैवल्याश्रमे वसेत् ॥ ८ ॥**

**यस्मिन् वाच** इत्यत्र **वाचः** परकृतनिन्दावाचः ।

**एवं प्रज्ञानतृप्तस्य निर्भयस्य निराशिषः ।**
**[2]न मृत्युमतिगो भावः स मृत्युं नाधिगच्छति ॥ २१ ॥**

**न मृत्युमतिगो भाव** इत्यत्र मृत्युमति देहे गच्छतीति **मृत्युमतिगः** यस्य भावो न इति योजना ।

---

१. कुं. २५१ अध्यायः । **'कषायं पाचयित्वाऽऽशु'** इति कुं. पाठः ।
२. BORI पृ १३१६; $M_5$; **'न मृत्युरतिगो'** इति कुं. पाठः ।

जीवितं यस्य धर्मार्थं धर्मो[१] रत्यर्थमेव च ।
अहोरात्रश्च पुण्यार्थं तं देवा ब्राह्मणं विदुः ॥ २३ ॥

**धर्मो रत्यर्थमेव** इत्यत्र **रत्यर्थं** विष्णुप्रीत्यर्थम् ।

निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् ।
निर्मुक्तं बन्धनैः सर्वैस्तं देवा ब्राह्मणं विदुः ॥ २४ ॥

**निर्नमस्कारं निः** निरपेक्षितो नमस्कारो यस्य तम् ।

सर्वाणि भूतानि सुखे रमन्ते
सर्वाणि दुःखस्य भृशं त्रसन्ते ।
तेषां भयोत्पादनजातखेदः
कुर्यान्न कर्माणि हि श्रद्दधानः ॥ २५ ॥

**कुर्यान्न कर्माणि हि श्रद्दधान** इत्यत्र **कर्माणि** देहयात्राकर्माणि ।

दानं हि भूताभयदक्षिणायाः
सर्वाणि दानान्यधितिष्ठतीह ।
तीक्ष्णां तनुं यः प्रथमं जहाति
सोऽनन्तमाप्नोत्यभयं प्रजाभ्यः ॥ २६ ॥

**तीक्ष्णां तनुम्** इत्यत्र **तनुम्** अल्पाम् अपि **तीक्ष्णां** क्रूरवाचम् ।

स दत्तमास्येन हविर्जुहोति
लोकस्य नाभिर्जगतः प्रतिष्ठा ।

---

१. 'धर्मो हर्यर्थमेव' इति कुं. पाठः ।

**तस्याङ्गमङ्गानि कृताकृतं च**
**वैश्वानरः सर्वमिदं प्रपेदे ॥ २७ ॥**

**स दत्तमास्येन हविः** इत्यत्र यः वैश्वानरः दत्तं हविः आस्येन **जुहोति** देवानां ददाति 'हु दानादनयोः' इति धातुः । लोकस्य **नाभिः** नाभिस्थाने विद्यमानः जगतः प्रतिष्ठा च **स** वैश्वानरः **तस्य** यतेः **अङ्गं** देहम् **अङ्गानि** अवयवान् **कृतं** देहयात्राकर्म **आकृतम्** आ सम्यक् **कृतं** पुण्यकर्म च इति सर्वम् इदं प्रपेदे इति ।

**दैवं[1] त्रिधातुं त्रिवृतं सुपूर्णं**
**ये विद्युरग्र्यां परमात्मतां च ।**
**ते सर्वलोकेषु महीयमाना**
**देवाः समर्था अमृतं वहन्ति ॥ २९ ॥**

**दैवं त्रिधातुम्** इत्यत्र **त्रिधातुः** त्रयाणां कालपुरुषप्रकृतीनां धारणशीलं, **त्रिवृतं** तिस्रः विज्ञानैश्वर्यमन्त्रशक्तीः, त्रीन् वेदान्, त्रीन् लोकान्वा वृणोतीति त्रिवृत्, **सुपूर्णं** सम्यक् पूर्णं **दैवं** नारायणं तस्य **अग्र्यां** परमात्मतां च **ये विद्युः** ते देवाः ज्ञानिनः ।

**वेदांश्च वेद्यं तु विधिं च कृत्स्नमथो निरुक्तं परमार्थतां च ।**
**सर्वं शरीरात्मनि यः प्रवेद तस्य स्म देवाः स्पृहयन्ति नित्यम् ३०**

**सर्वं शरीरात्मनि** इत्यत्र **शरीरात्मनि** शरीरान्तर्यामिणि नारायणे ।

**॥ इति शुकानुप्रश्ने मोक्षधर्मे षट्सप्ततितमोऽध्यायः ॥**

---

१. BORI पृ १३१७; 'देवं त्रिधातुम्' इति कुं. पाठः ।

## ॥ अथ सप्तसप्ततितमोऽध्यायः ॥

**[१] धर्माख्यानेषु सर्वेषु चित्राख्यानेषु यद्वसु ।**
**[२] दृशेत ऋक्सहस्राणि निर्मथ्यामृतमुद्धृतम्** ॥ १४ ॥

**दृशेत ऋक्सहस्राणि** इत्यत्र दृशा इतः युक्तः दृशेतः ।

॥ इति सप्तसप्ततितमोऽध्यायः ॥

## ॥ अथ अष्टसप्ततितमोऽध्यायः ॥

**[३] यदूर्ध्वं [४] पादतलयोरवाङ् ऊर्ध्वं च पश्यति ।**
**एतस्मिन्नेव कृत्ये तु वर्तते बुद्धिरुत्तमा** ॥ १५ ॥

**यदूर्ध्वं पादतलयोः** इत्यत्र [५] 'पातालमेतस्य हि पादमूलम्' इति वचनात् **यत्** जगत् पादतलयोरूर्ध्वं विद्यते तज्जगत् त्रिविक्रमावतारे **अवाक् पश्यति** वामनावतारे **ऊर्ध्वं** पश्यति । शक्तिपर्यालोचनायाम् अवाक् पश्यति । मूर्तिविशेषावस्थापर्यालोचनायाम् ऊर्ध्वं पश्यति । **कृत्ये** कृतिनां कुशलानां योग्ये या बुद्धिर्वर्तते सा उत्तमा ।

**[६] गुणानोन्नीयते बुद्धिर्बुद्धिरेवेन्द्रियाण्यपि ।**
**मनःषष्ठानि सर्वाणि बुद्ध्यभावे कुतो गुणाः** ॥ १६ ॥

---

१. कुं. २५२ अध्यायः ।; २. '**दृश्यते**' इति कुं. पाठः ।
३. कुं. २५३ अध्यायः ।
४. BORI पृ १३२५; $M_6$,$K_1$,$D_{n1}$; '**पादतलयोरवाङ्मूर्ध्नश्च**' कुं. पाठः ।
५. भाग. २-१-२६
६. '**गुणान्ननीयते**' इति कुं. पाठः ।

**गुणानोन्नीयते बुद्धिः** इत्यत्र **गुणान्** वैराग्यादिगुणान् ।

**॥ इति अष्टसप्ततितमोऽध्यायः ॥**

## ॥ अथ एकोनाशीतितमोऽध्यायः ॥

**[१] सेयं भावात्मिका भावांस्त्रीनेताननुवर्तते ।**
**सरितां सागरो भर्ता महावेलामिवोर्मिमान् ॥ ८ ॥**

**सेयं भावात्मिका** इत्यत्र **भावात्मिका** भगवद्भक्त्यात्मिका ।

**एवमेव कृतप्रज्ञो नदोषैर्विषयांश्चरन् ।**
**असज्जमानः सर्वेषु कथञ्चन न लिप्यते ॥ १८ ॥**

**नदोषैर्विषयांश्चरन्** इत्यत्र **नदोषैः** रागादिदोषाभावैः ।

**सत्त्वमात्मा प्रसरति गुणान् वाऽपि कदाचन ।**
**न गुणा विदुरात्मानं गुणान् वेद स सर्वदा ॥ २० ॥**

**न गुणा विदुः** इत्यत्र **गुणाः** अप्रधानभूता जीवाः ।

**परिद्रष्टा गुणानां च परिस्रष्टा यथातथम् ।**
**क्षेत्रक्षेत्रज्ञयोरेतदन्तरं विद्धि सूक्ष्मयोः ॥ २१ ॥**

**'क्षेत्रक्षेत्रज्ञयोः'** इतिपाठे **क्षेत्रम्** क्षेत्राभिमानी जीवः ।

**सृजतेऽत्र गुणानेक एको न सृजते गुणान् ।**
**पृथग्भूतौ प्रकृत्या तौ सम्प्रयुक्तौ च सर्वदा ॥ २२ ॥**

---

१. कुं. २५४ अध्यायः ।

**पृथग्भूतौ प्रकृत्या** इत्यत्र **प्रकृत्या** स्वभावेन ।

**॥ इति मोक्षे एकोनाशीतितमोऽध्यायः ॥**

## ॥ अथ अशीतितमोऽध्यायः ॥

**सृजते[१] त्रिगुणान् सत्त्वं क्षेत्रज्ञस्त्वधितिष्ठति ।**
**गुणान्विक्रियते सर्वानुदासीनवदीश्वरः ॥ १ ॥**

**सृजते त्रिगुणान् सत्त्वम्** इत्यत्र **सत्त्वं** जीवसमूहम् ।

**प्रध्वस्ता न निवर्तन्ते प्रवृत्तिर्नोपलभ्यते ।**
**एवमेके व्यवस्यन्ति निवृत्तिरिति चापरे ॥ ३ ॥**

**एवमेके व्यवस्यन्ति** इत्यत्र **अपरे** सर्वप्रलये सति जगतः निवृत्तिरेव न पुनः प्रवृत्तिरिति मन्यन्ते ।

**उभयं सम्प्रधार्यैतदध्यवस्येद्यथामति ।**
**अनेनैव विधानेन भवेद्गर्भशयो महान् ॥ ४ ॥**

**उभयं** पौनःपुन्येन प्रवृत्तिं निवृत्तिं चेत्युभयम् ।

**लोकमातुरनुसूयते[२] जन-**
**स्तत्तदेव च निरीक्ष्य शोचते ।**
**तत्र पश्य कुशलानशोचतो**
**ये विदुस्तदुभयं कृताकृतम् ॥ १३ ॥**

---

१. कुं. २५५ अध्यायः ।
२. **'लोकमातुरमसूयते'** इति कुं. पाठः ।

**लोकमातुः** इत्यत्र **लोकमातुः** प्रकृतेः सकाशात्।

**यत्करोत्यनभिसन्धिपूर्वकं**
**तच्च निर्णुदति तत्पुराकृतम्।**
**न प्रियं तदुभयं न चाप्रियं**
**तस्य तज्जनयतीह कुर्वतः** ॥ १४ ॥

**न प्रियं तदुभयम्** इत्यत्र **उभयम्** अबुद्धिपूर्वकं पुण्यपापं च कुर्वतः पुरुषस्य **तत्** अबुद्धिपूर्वकं कृतं पुण्यं **प्रियं** न जनयति, अबुद्धिपूर्वकं कृतं पापम् **अप्रियं** च न जनयति।

**॥ इति अशीतितमोऽध्यायः ॥**

## ॥ अथ एकाशीतितमोऽध्यायः ॥

[१] **ज्ञानदीपेन दीप्तेन पश्यत्यात्मानमात्मना।**
**दृष्ट्वा त्वमात्मनाऽऽत्मानं निरात्मा भव सर्ववित्** ॥ १० ॥

**निरात्मा भव सर्ववित्** इत्यत्र **निरात्मा** निर्गताहङ्कारः।

**इति एकाशीतितमोऽध्यायः ॥**

## ॥ अथ द्व्यशीतितमोऽध्यायः ॥

[२] **अकामकामो न तु कामकामः।**
**स वै कामात् स्वर्गमुपैति देही ॥** ॥ १० ॥

---

१. कुं. २५६ अध्यायः।
२. कुं. २५७ अध्यायः। BORI पृ १३३८; $D_{3,5,7}$; **'स कामकान्तः'** इति कुं. पाठः।

**अकामकामो न तु कामकाम** इत्यत्र कामकामो न भवतीति **अकामकामो** योगी तद्वत् ।

**क्लेदने[1] शोकमनसोः सन्तीर्णं तृष्णया सह ।**
**सत्त्वमृच्छति सन्तोषाच्छान्तिलक्षणमुत्तमम् ॥ १३ ॥**

**क्लेदने शोकमनसोः** इत्यत्र शोकमनसोः **क्लेदने** अन्योन्यमिश्रणे तृष्णया सह निस्तीर्णे सतीत्यर्थः ।

**विशोको निर्ममः शान्तः प्रशान्तात्माऽत्मविच्छुचिः ।**
**षड्भिर्लक्षणवानेतैः सत्त्वेन[2] पुनरेष्यति ॥ १४ ॥**

**षड्भिर्लक्षणवान्** इत्यत्र **सत्त्वेन** सत्वगुणेन सह एतैः षड्भिः ।

**अकृत्रिममसंहार्यं प्राकृतं निरुपस्कृतम् ।**
**अध्यात्मवित् कृतप्रज्ञः सुखमव्ययमश्नुते ॥ १६ ॥**

**प्राकृतं निरुपस्कृतम्** इत्यत्र **प्राकृतं** स्वाभाविकम् ।

**येन तृप्यत्यभुञ्जानो येन तृप्यत्यवित्तवान् ।**
**येनास्नेहो बलं धत्ते यस्तं वेद स वेदवित् ॥ १८ ॥**

**येनास्नेहो बलम्** इत्यत्र **येन** परमात्मना **अस्नेहः** तैलघृतादिस्नेहरहितोऽपि बलं धत्ते ।

॥ इति मोक्षे द्व्यशीतितमोऽध्यायः ॥

---

१. **'क्लेदनम्'** इति कुं. पाठः ।
२. **'समग्रः'** इति कुं. पाठः ।

## ।। अथ त्र्यशीतितमोऽध्यायः ।।

**[१]चरणं मारुतात्मेति प्राणापानौ च तन्मयौ ।**
**स्पर्शनं चेन्द्रियं विद्यात्तथा स्पर्शं च तन्मयम् ।। ४ ।।**

**चरणं मारुतात्मेति** इत्यत्र **इति** दृश्यमानप्रकारेण **चरणम्** इतस्ततः सञ्चरणं **मारुतात्मा** वायुना व्याप्तम् ।

**[२]मनो नवममेतेषां बुद्धिस्तु दशमी स्मृता ।**
**एकादशस्त्वन्तरात्मा स सर्वः पर उच्यते ।। १० ।।**

**मनो नवममेतेषाम्** इत्यत्र **एतेषाम्** उक्तविधया इन्द्रियपञ्चक-गुणपञ्चकाख्यसन्तानवतां भावाभावकालानां चेत्यष्टपदार्थानां **नवमं मनः** ।

**व्यवसायात्मिका बुद्धिर्मनो व्याकरणात्मकम् ।**
**कर्मानुमानाद्विज्ञेयः स जीवः क्षेत्रसंज्ञकः ।। ११ ।।**

**मनो व्याकरणात्मकम्** इत्यत्र **व्याकरणात्मकं** विकारात्मकम् । **कर्मानुमानात्** शरीरचेष्टाख्यलिङ्गात् । **सः जीवः क्षेत्रसञ्ज्ञक** इत्युक्तत्वात् जीवः क्षेत्रकोटावेव प्रविष्टः । क्षेत्रज्ञस्तु हरिरेवेति द्रष्टव्यम् ।

।। इति त्र्यशीतितमोऽध्यायः ।।

* * *

---

१. कुं. २५८ अध्यायः ।

२. BORI पृ १३४२; K7,D4,7,9; **'मनो नवममेषां तु'** इति कुं. पाठः ।

## ।। अथ चतुरशीतितमोऽध्यायः ।।

[१]प्रतिरूपं यथैवाप्सु तावत्सूर्यस्य लक्ष्यते ।
**सत्त्ववांस्तु तथा सत्त्वं प्रतिरूपं स पश्यति ।। ३ ।।**

**सत्त्ववांस्तु तथा** इत्यत्र **सत्त्ववान्** ज्ञानसत्त्ववान् सत्त्वगुणवान् वा । **सत्त्वं** जीवराशिम् ।

**स्वपतां जाग्रतां चैष सर्वेषामात्मचिन्तितम् ।**
**[२]प्रधानाद्वैधमुक्तानां दह्यते कर्मजं रजः ।। ५ ।।**

**प्रधानाद्वैधमुक्तानाम्** इत्यत्र **द्वैधं** द्विप्रकारावलम्बसंशयः ।

**तेषां नित्यं सदा नित्यो भूतात्मा सततं गुणैः ।**
**सप्तभिस्त्वन्वितः सूक्ष्मैश्चरिष्णुरजरामरः ।। ७ ।।**

**तेषां नित्यं सदा नित्य** इत्यत्र स्वभावतः **सदा नित्यः** अजरामरोऽपि जीवः । नित्यं **तेषां** पञ्चमहाभूतानां **गुणैः** रूपरसादिभिः सततं चरिष्णुः सूक्ष्मैः **सप्तभिः** पञ्चेन्द्रियमनोबुध्याख्यैः अन्वितः जीवः उपरि वक्ष्यमाणप्रकारेण संसरति ।

**मनोबुद्धिपराभूतः स्वदेहपरदेहवित् ।**
**स्वप्नेष्वपि भवत्येष विज्ञाता सुखदुःखयोः ।। ८ ।।**

**स्वदेहपरदेहवित् स्वदेहं** स्वस्वरूपयोग्यदेहं, **परदेहं** विपरीतदेहं च कर्मवशात् विन्दतीति स्वदेहपरदेहवित् ।

---

१. कुं. २५९ अध्यायः ।
२. BORI पृ १३४३; K7,B9; **'प्रधानाद्वैधयुक्तानाम्'** इति कुं. पाठः ।

**योगशास्त्रपरा भूत्वा स्वमात्मानं परीप्सवः ।**
**तमोरजोभ्यां निर्मुक्तास्तं प्रपश्यन्ति मूर्तिषु ।**
**अनुच्छ्वासान्यमूर्तानि यानि वज्रोपमान्यपि ॥ १३ ॥**

**अनुच्छ्वासान्यमूर्तानि यानि वज्रोपमान्यपि** इत्यत्र **अनुच्छ्वासानि** उच्छ्वासरहितानि, **वज्रोपमानि** यान्यचलशृङ्गाणि, **अमूर्तानि** देह-रहितानि ।

**पृथग्भूतेषु सृष्टेषु चतुर्ष्वाश्रमकर्मसु ।**
**समाधौ योगमेवैतच्छाण्डिल्यः सममब्रवीत् ॥ १४ ॥**

पृथक् सृष्टभूतेषु चतुर्ष्वाश्रमकर्मसु च समाधौ योगमेव येषाम् अचलशृङ्गाणां समं **शाण्डिल्यः** मुनिः अब्रवीत् इति योजना ।

**विदित्वा सप्तसूक्ष्माणि षडङ्गं च महेश्वरम् ।**
**प्रधानविनियोगस्थः[१] परं ब्रह्मानुपश्यति ॥ १५ ॥**

**सप्त सूक्ष्माणि** पञ्चेन्द्रियबुद्धिमनांसि, महेश्वरं **षडङ्गं** षड्गुणैश्वर्य-मयाङ्गोपेतं च विदित्वा **प्रधानविनियोगस्थः प्रधानस्य** अन्तः-करणस्य **विनियोगः** परमात्मन्येव विनियोगः, तस्मिन् **स्थः** स्थिरः योगी परं ब्रह्मानुपश्यति इति योजना ।

॥ इति शान्तिपर्वणि चतुरशीतितमोऽध्यायः ॥

* * *

---

१. BORI पृ १३४५; **'प्रधानविनियोगज्ञः'** इति कुं. पाठः ।

## ।। अथ पञ्चाशीतितमोऽध्यायः ।।

**[1] उपासते महावृक्षं सुलुब्धास्तत्फलेप्सवः ।**
**आयतैः संयुताः पाशैः फलदं परिवेष्ट्य तम्** ।। ४ ।।

**पाशैः** स्नेहपाशैः ।

।। इति कामत्यागोपायकथनं नाम पञ्चाशीतितमोऽध्यायः ।।

## ।। अथ षडशीतितमोऽध्यायः ।।

**[2] अपां शैत्यं रसः क्लेदो द्रवत्वं स्नेहसौम्यता ।**
**[3] जिह्वानिष्पन्दनं भूमा भूमापां श्रपणं तथा** ।। ४ ।।

**जिह्वानिष्पन्दनं भूमा** इत्यत्र **भूमा** भूयस्त्वम् ।

**इष्टानिष्टविपत्तिश्च व्यवसायः समाधिता ।**
**संशयः प्रतिपत्तिश्च बुद्धेः पञ्च गुणान्विदुः** ।। १० ।।

**संशयः प्रतिपत्तिश्च** इत्यत्र **संशयः** सम्यगाश्रयणम् ।

**युधिष्ठिर उवाच–**

**कथं पञ्चगुणा बुद्धिः कथं पञ्चेन्द्रिया गुणाः ।**
**एतन्मे सर्वमाचक्ष्व सूक्ष्मज्ञानं पितामह** ।। ११ ।।

**कथं पञ्चगुणा बुद्धिः** इत्यत्र बुद्धिः पञ्चगुणा कथम् ? सर्वश्रेष्ठायाः

---

१. कुं. २६० अध्यायः ।
२. कुं. २६१ अध्यायः ।
३. 'जिह्वाविस्यन्दनं चापि भौमानाम्' इति कुं. पाठः ।

तस्याः बहुगुणैर्भवितव्यमिति शङ्कितुराशयः । इन्द्रियगुणानां कथितत्वात् **पञ्चेन्द्रियाः** पञ्चेन्द्रियसम्बन्धिनो गुणाः कथम् ।

**भीष्म उवाच–**

**आहुः[1] षष्टिं भूतगुणान् वै भूतविषक्तप्रकृतिविसृष्टान्[2] ।**
**नित्यविषक्तांश्चाक्षरसृष्टान् पुत्र न नित्यं तदिह वदन्ति ॥१२॥**

**आहुः षष्टिं भूतगुणान्** इत्यत्र भूतविषक्तप्रकृतिविसृष्टान् **भूत-विषक्ता** भूतात्मना विकृता या प्रकृतिः तया **विसृष्टान्** नित्यविषक्तान् यावद्द्रव्यभाविन इत्यर्थः । **अक्षरसृष्टान्** परमात्मना कर्त्रा च सृष्टान् । बुद्धेः पञ्चगुणानां बुद्धिगुणत्वेनैकीकरणे, नवभिः मनोगुणैः सह यान् षष्टिभूतगुणानाहुः **तत्** तदेव **इह** बुद्धौ इन्द्रियेषु च गुणान् वदन्ति । इन्द्रियाणां पञ्चभूतात्मकत्वात् तेषां पञ्चाशद्गुणा एव इन्द्रियगुणाः । सर्वगुणानामपि बुद्धिविकारहेतुत्वात् । असारतानिश्चये बुद्धेर्विवेक-हेतुत्वाच्च षष्टिगुणा अपि बुद्धेरेव गुणा इति विवेकः ।

**तत्पुत्र चिन्ताकलिलं तदुक्तमनागतं वै तव सम्प्रतीह ।**
**भूतार्थवत्त्वं तदवाप्य सर्वं भूतप्रभावाद्भव शान्तबुद्धिः ॥ १३ ॥**

**अनागतं वै** इत्यत्र **अनागतं** केनापि अज्ञातम् ।

**॥ इति भूतगुणकथनं नाम षडशीतितमोऽध्यायः ॥**

**॥ शुकानुप्रश्नः समाप्तः ॥**

* * *

---

१. BORI पृ. १३५०; $D_{4,9}$; **'आहुः पष्टिम्'** इति कुं. पाठः ।
२. **'भूतविषक्तान्'** इति कुं. पाठः ।

## ।। अथ अष्टाशीतितमोऽध्यायः ।।

स्थाणुरुवाच–

**[१]प्रजासर्गनिमित्तं मे कार्यवत्तामिमां प्रभो ।**
**विद्धि सृष्टास्त्वया हीमा [२]मा क्रुध्यासां पितामह ।। १ ।।**

**मा क्रुध्यासां पितामह** इत्यत्र **मा क्रुध्य** कोपं मा कुरु इति लोटि मध्यमपुरुषवचनम् ।

।। इति अष्टाशीतितमोऽध्यायः ।।

* * *

## ।। अथ एकोननवतितमोऽध्यायः ।।

**[३]सर्वे देवाः [४]प्राणिनां प्रायणान्ते**
**गत्वा वृत्ताः सन्निवृत्तास्तथैव ।**
**एवं सर्वे मानवाः प्राणनान्ते**
**[५]गत्वाऽवृत्ता देववद्राजसिंह ।। ४० ।।**

**सर्वे देवाः प्राणिनाम्** इत्यत्र सर्वे देवाः प्राणिनां **प्रायणान्ते** मरणकाले **सन्निवृत्ताः** सम्यङ्निवृत्ताः सन्तः, **गत्वा** स्वमूलरूपं गत्वा पुनर्जन्म-काले **आवृत्ताः** परावृत्त्याऽऽगता भवन्ति ।

---

१. कुं. २६३ अध्यायः ।
२. BORI पृ. १३५४; $K_7$,$D_{4,9}$; **'मा कुप्यासाम्'** इति कुं. पाठः ।
३. कुं. २६४ अध्यायः ।
४. **'प्राणिनां प्राणनान्ते'** इति कुं. पाठः ।
५. **'गत्वा वृत्ता'** इति कुं. पाठः ।

**वायुर्भीमो भीमनादो महौजाः**
**सर्वेषां च प्राणिनां प्राणभूतः ।**
**अनावृत्तिर्देहिनां देहपाते**
**तस्माद्वायुर्देवदेवो विशिष्टः ॥ ४१ ॥**

**अनावृत्तिर्देहिनाम्** इत्यत्र **अनावृत्तिः** स्वमूलरूपं प्रति गत्वा पुनरावृत्तिरहितः । 'प्राज्ञेनात्मना अन्वारूढः उत्सर्जद्याति'[१] इत्यादि श्रुतौ मरणकाले मुख्यप्राण एव परमात्मानं जीवं च स्वस्कन्ध आरोप्य देहान्निर्गच्छति इत्यस्यार्थस्य प्रसिद्धत्वादिति भावः ।

**॥ इति मृत्युप्रजापतिसंवादो नाम एकोननवतितमोऽध्यायः ॥**
**मृत्युप्रजापतिसंवादः समाप्तः ॥**

## ॥ अथ नवतितमोऽध्यायः ॥

**[२]धर्मस्त्वयमिहार्थः किममुत्रार्थोऽपि वा भवेत् ।**
**उभयार्थो हि वा धर्मस्तन्मे ब्रूहि पितामह ॥ २ ॥**

**धर्मस्त्वयमिहार्थ** इत्यत्र इह अर्थो यस्मात्सः **इहार्थः** ।

**मन्यन्ते बलवन्तस्तं दुर्बलैः सम्प्रवर्तितम् ।**
**[३]यदा नियन्ति दौर्बल्यमथैषामेव रोचते ॥ १३ ॥**

**यदा नियन्ति दौर्बल्यम्** इत्यत्र **नियन्ति** नितरां यान्ति ।

---

१. बृ.उ. ६/३/२४
२. कुं. २६५ अध्यायः ।
३. BORI पृ. १३६५; $M_6$; 'यदा निर्यातिदौर्बल्यम्' इति कुं. पाठः ।

**यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः ।**
**न तत्परेषु कुर्वीत जानन्नप्रियमात्मनः ॥ २० ॥**

**यदन्यैर्विहितम्** इत्यत्र आत्मनः अन्यैर्विहितं यत्कर्म अप्रियं जानन् पुरुषः तत्कर्म परेषु न कुर्वीत ।

**[१]योऽन्यस्य स्यादुपरतः स कं किं वक्तुमर्हति ।**
**यदन्यस्य ततः कुर्यान्न मृष्येदिति मे मतिः ॥ २१ ॥**

**योऽन्यस्य स्यादुपरत** इत्यत्र यः अन्यस्य **उपरतः** उपरमवान् शान्त इत्यर्थः।

**अतिरिक्तः संविभजेद्भोगैरन्यानकिञ्चनान् ।**
**एतस्मात् कारणाद्धात्रा कुसीदं सम्प्रवर्तितम् ॥ २३ ॥**

**अतिरिक्तः संविभजेत्** इत्यत्र **अतिरिक्तः** त्यागेन अतिरेकवान् । [२]'अतिरिक्तः समधिको दृढसन्धिस्तु संहत' इत्यमरः ।

**॥ इति नवतितमोऽध्यायः ॥**

## ॥ अथ एकनवतितमोऽध्यायः ॥

**[३]सदाचारो मतो धर्मः सन्तस्त्वाचारलक्षणाः ।**
**साध्यासाध्यं कथं शक्यं सदाचारो ह्यलक्षणः ॥ ५ ॥**

**सदाचारो ह्यलक्षण** इत्यत्र **अलक्षणः** लक्षितुम् अशक्यः ।

---

१. 'योऽन्यस्य स्यादुपपतिः' इति कुं. पाठः ।
२. अ.कां. ३. विशेष्यनिघ्न-७५ ; ३. कुं. २६६ अध्यायः ।

**दृश्यते धर्मरूपेण ह्यधर्मं प्राकृतश्चरन् ।**
**धर्मं चाधर्मरूपेण कश्चिदप्राकृतश्चरन् ॥ ६ ॥**

**दृश्यते धर्मरूपेण ह्यधर्मं प्राकृतश्चरन्** इत्यत्र अधर्मं चरन् **प्राकृतः** नीचः तमाच्छाद्य धर्मरूपेण दृश्यते, धर्मं चरन् **अप्राकृतः** उत्तमः अधर्मरूपेण दृश्यते, स्वकृतधर्मोत्कीर्तनं न करोति इति भावः ।

**आम्नायवचनं सत्यमित्ययं लोकसङ्ग्रहः ।**
**आम्नायेभ्यः पुनर्वेदाः प्रसृताः सर्वतोमुखाः ॥ ९ ॥**

**आम्नायेभ्यः पुनर्वेदाः प्रसृता** इत्यत्र वेदव्यासेन प्रसृताः ।

**ते चेत्सर्वप्रमाणं वै प्रमाणं ह्यत्र विद्यते ।**
**प्रमाणं च प्रमाणेन विरुद्ध्येच्छास्त्रता कुतः ॥ १० ॥**

**ते चेत्सर्वप्रमाणं वै** इत्यत्र ते वेदाः **सर्वप्रमाणं** सर्वेषां प्रमाणं चेत् **अत्र** धर्मे प्रमाणं विद्यते ।

**निपानानीव गोभ्याशे क्षेत्रे कुल्ये च भारत ।**
**स्मृतो हि शाश्वतो धर्मो विप्रहीणो न दृश्यते ॥ १४ ॥**

**विप्रहीणो न दृश्यत** इत्यत्र विप्रैर्हीनः **विप्रहीणः** । गवामभावे उदकपानपात्रमिव, क्षेत्राभावे कुल्येव विप्राभावे धर्मोऽपि न दृश्यते इत्यर्थः ।

॥ इति एकनवतितमोऽध्यायः ॥

* * *

## ।। अथ द्विनवतितमोऽध्यायः ।।

**न[१] मया सदृशोऽस्तीह लोके स्थावरजङ्गमे ।**
**अप्सु वैहायसं गच्छेन्मया योऽन्यः सहेति वै ।। ६ ।।**

**अप्सु वैहायसं गच्छेत्** इत्यत्र **अप्सु वैहायसं** पवनोद्बन्धनेन जलोपरि सञ्चारम् । जले उन्मज्जनं यथा न भवति तथा सञ्चारमित्यर्थः ।

**जातपक्षा यदा ते च गताः सञ्चरितुं ततः ।**
**मन्यमानस्ततो धर्मं चटकप्रभवं द्विज ।**
**खे वाचं त्वमथाश्रौषीर्मां प्रति द्विजसत्तम ।। ५० ।।**

**चटकप्रभवं द्विज** इत्यत्र **चटकः** कलविङ्कपक्षी, तेभ्यः **प्रभवः** उत्पत्तिः यस्य तत्पालनाज्जातमित्यर्थः । 'चटकः कलविङ्कः स्यात्'[२] इत्यमरः ।

**।। इति तुलाधारजाजलिसंवादो नाम द्विनवतितमोऽध्यायः ।।**

## ।। अथ त्रिनवतितमोऽध्यायः ।।

**सर्वभूतात्मभूतस्य[३] सर्वभूतानि पश्यतः ।**
**देवाऽपि मार्गे मुह्यन्ति ह्यपदस्य पदैषिणः ।। ३३ ।।**

**अपदस्य पदैषिण** इत्यत्र **अपदस्य** स्थानरहितस्य विरक्तस्य **पदैषिणः** मार्गमिच्छतः ।

**अकारणो हि नैवास्ति धर्मः सूक्ष्मो हि जाजले ।**
**भूतभव्यार्थमेवेह धर्मप्रवचनं कृतम् ।। ३६ ।।**

---

१. कुं. २६७ अध्यायः ।; २. अ.को. द्वि. सिंहादिवर्गः श्लो. १८
३. कुं. २६८ अध्यायः ।

**भूतभव्यार्थमेव** इत्यत्र भूतानां **भव्यं** शोभनं तदर्थम् ।

**।। इति त्रिनवतितमोऽध्यायः ।।**

## ।। अथ चतुर्नवतितमोऽध्यायः ।।

[१] **इष्टापूर्तादसाधूनां विदुषां जायते प्रजा ।**
**लुब्धेभ्यो जायते लुब्धः समेभ्यो जायते समः ।। ९ ।।**

**इष्टापूर्तादसाधूनाम्** इत्यत्र **असाधूनां** केवलं स्वर्गकाम्यया कीर्तिकाम्यया वा प्रवृत्तिकर्मनिरतानाम् ।

[२] **यजमानास्तथाऽऽत्मानमृत्विजश्च तथा प्रजाः ।**
**यज्ञात् प्रजा प्रभवति नभसोऽम्भ इवामलम् ।। १० ।।**

**यजमानास्तथात्मानम्** इत्यत्र **आत्मानं** परमात्मानं **यजमानाः** केवलं विष्णुप्रीत्यर्थमेव कर्म कुर्वाणा इत्यर्थः ।

**स्वयं चैषामनडुहो युञ्जन्ति च वहन्ति च ।**
**स्वयमुस्राश्च दुह्यन्ते मनःसङ्कल्पसिद्धिभिः ।। ३१ ।।**

**स्वयं चैषामनडुह** इत्यत्र **एषां** वत्सानां मध्ये स्वयमेव **अनडुहो** पुङ्गवान् **युञ्जन्ति** नन्दिनः(?) कुर्वन्ति । **उस्राः** गाः स्वयमेव दुहन्ते । [३]'माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी' इत्यमरः ।

---

१. कुं. २६९ अध्यायः ।

२. BORI पृ. १३८७; $M_{1,5,7}$,$T_1$,$D_8$; **'यजमाना यथाऽऽत्मानमृत्विजश्च'** इति कुं. पाठः ।

३. अ.को. द्वि. वैश्यवर्गः श्लो. ६६

**यस्मिन्नेवात्मतीर्थेन पशवः[1] प्राप्नुयुः सुखम् ।**
**अथ स्म कर्मणा केन वणिज प्राप्नुयात् सुखम् ।**
**शमं ते तन्महाप्राज्ञ भृशं वै श्रद्धधामि ते ॥ ३७ ॥**

**पशवः प्राप्नुयुः सुखम्** इत्यत्र **पशवः** अज्ञानिनः ।

तुलाधार उवाच–
**[2]उत यज्ञः उतायज्ञः यज्ञं नार्हन्ति ते क्वचित् ।**
**आज्येन पयसा दध्ना सत्कृत्यामिक्षया त्वचा ।**
**बालैः शृङ्गेण पादेन सम्भरत्येव [3]गोर्मखम् ॥ ३८ ॥**

**उत यज्ञः उतायज्ञ** इत्यत्र **यज्ञः** यज्ञवान् , **यज्ञं** यज्ञफलम् ।

**सत्कृत्यामिक्षया त्वचा** इत्यत्र **आमिक्षया** ईषदुष्णक्षीरमिश्रितदध्ना [4]'आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः' इत्यमरः । मरणानन्तरं त्वचा बालैः पादैःशृङ्गैश्च यद्धनं सम्भवति तेन पूर्वोक्ताज्यादिना च **सत्कृत्य** ब्राह्मणान् भोजयित्वा पूजयित्वा **गोः** सकाशात् वणिजां **मखः** मखफलं सम्भवति ।

**पुरोडाशो हि सर्वेषां पशूनां मेध्य उच्यते ।**
**सर्वा नद्यः सरस्वत्यः सर्वे पुण्याः शिलोच्चयाः ।**
**जाजले तीर्थमात्मैव मा स्म देशातिथिर्भव ॥ ४० ॥**

---

१. BORI पृ. १३९१; **'पशवः प्राप्नुयुः मखम्'** इति कुं. पाठः ।
२. **'उत यज्ञ उतायज्ञाः मखं नार्हन्ति ते क्वचित्'** इति कुं. पाठः ।
३. BORI पृ. १३९२; $K_6$,$D_{s1}$; **'गौर्मखम्'** इति कुं. पाठः ।
४. अ.को. द्वि. ब्रह्मवर्गः श्लो. २३

**जाजले तीर्थमात्मैव** इत्यत्र **आत्मैव** परमात्मैव ।

**॥ इति तुलाधारजाजलिसंवादो नाम चतुर्नवतितमोऽध्यायः ॥**

## ॥ अथ पञ्चनवतितमोऽध्यायः ॥

तुलाधार उवाच –

**सद्भिर्वा[1] यदि वाऽसद्भिः पन्थानमिममाश्रितः ।**
**प्रत्यक्षीक्रियतां[2] साधु ततो ज्ञास्यसि तद्यथा** ॥ १ ॥

**सद्भिर्वा यदि वाऽसद्भिः** इत्यत्र **सद्भिः** तदुपदेशात् पन्थानमाश्रितः धर्मः **असद्भिः** पन्थानमाश्रितः अधर्मश्च **साधु** सम्यक् त्वया **प्रत्यक्षीक्रियताम्** । सन्मार्गप्रकारः असन्मार्गप्रकारश्च तव यथा प्रत्यक्षो भवति तथा उपायं करोमि । ततः परं तद् यथा तथा ज्ञास्यसि ।

भीष्म उवाच–

**ततो जाजलिना तेन समाहूताः पतत्रिणः ।**
**वाचमुच्चारयन्ति स्म धर्मस्य वचनात् किल** ॥ ५ ॥

**धर्मस्य वचनात् किल** इत्यत्र **धर्मस्य वचनात्** धर्मशास्त्रात् सिद्धां वाचम् उच्चारयन्ति स्म ।

तुलाधार उवाच–

**अहिंसादिकृतं कर्म इह चैव परत्र च ।**
**श्रद्धां निहन्ति वै ब्रह्मन् सा हता हन्ति तं नरम्** ॥ ६ ॥

---

१. कुं. २७० अध्यायः ।
२. BORI पृ. १३९३; $D_{5,7}$; **'प्रत्यक्षं क्रियताम्'** इति कुं. पाठः ।

**श्रद्धां निहन्ति** इत्यत्र **अहिंसादिकृतं कर्म** स्वेन कृतम् अहिंसादिकर्म साहङ्कारस्य पुरुषस्य इह परत्र च श्रद्धां निहन्ति । स्वस्मादुत्तमेषु श्रद्धां कर्तुं न मुञ्चति इत्यर्थः ।

**समानां श्रद्दधानानां संयतानां सुचेतसाम् ।**
**कुर्वतां यज्ञ इत्येव न यज्ञो जातु नेष्यते ॥ ७ ॥**

**कुर्वतां यज्ञ इत्येव** इत्यत्र **यज्ञ इत्येव कुर्वतां** न तु कीर्त्यर्थं कुर्वताम् इत्यर्थः । यज्ञः जातु नेष्यत इति न, किन्तु इष्यत एव, तेषां श्रद्धयैव करणात् यज्ञफलं (यज्ञ एव फलं) भवत्येवेत्यर्थः ।

**वाग्वृद्धं त्रायते श्रद्धा मनोवृद्धं च जाजले ।**
**श्रद्धावृद्धं वाङ्मनसी न यज्ञस्त्रातुमर्हति ॥ ९ ॥**

**वाग्वृद्धं त्रायत** इत्यत्र **वाग्वृद्धं** विद्यावृद्धं **मनोवृद्धं मनो**मननम् तेन वृद्धं वाङ्मनोभ्यां **वृद्धं** च श्रद्धा त्रायते ।

**शुचेरश्रद्दधानस्य श्रद्दधानस्य चाशुचेः ॥ १० ॥**

**श्रोत्रियस्य कदर्यस्य वदान्यस्य च वार्धुषेः ॥ ११ ॥**

**मीमांसित्वोभयं देवाः सममन्नमकल्पयन् ।**
**प्रजापतिस्तानुवाच विषमं कृतमित्युत ॥ १२ ॥**

**विषमं कृतमित्युत** इत्यत्र यः शुचिरपि अश्रद्दधानः यः अशुचिरपि श्रद्दधानः तयोरुभयोः श्रोत्रियकदर्यादीनां च सममन्नं भवद्भिः कृतम् । तद् विषममिति प्रजापतिरुवाच ।

**श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत् ।**
**भोज्यमन्नं वदान्यस्य कदर्यस्य[१] च वार्धुषेः ॥ १३ ॥**

तर्हि कथं देयमित्यतः सूचनाय आह – **वदान्यस्य श्रद्धापूतं** देयम् । [२]'श्रद्धया देयम्' इति श्रुतेः । इतरस्य **वार्धुषेः** वृद्धिजीवनस्य **अश्रद्धया हतं** देयम् । 'अश्रद्धया देयम्' इति श्रुतेः । वदान्यस्य **भोज्यं** भोजनयोग्यं शाल्यमन्नं देयम् । कदर्यस्य वार्धुषेश्च यावनालादिकं देयम्, एवं श्रद्दधानस्य अशुचेरपि श्रद्धया भोज्यमन्नं देयम् । श्रद्धाबलात् स एव कालान्तरे शुचिर्भवति इति भावः ।

**अश्रद्दधान एवैको देवानां नार्हते हविः ।**
**तस्यैवान्नं न भोक्तव्यमिति धर्मविदो विदुः ॥ १४ ॥**

अश्रद्दधानः पुरुषः एक एव देवानां हविर्नार्हते । तस्मै न देयमेवेति भावः ।

**ज्यायसी या पवित्राणां निवृत्तिः श्रद्धया सह ।**
**[३]निवृत्तशीलदोषो यः श्रद्धावान् पूत एव सः ॥ १६ ॥**

**निवृत्तिः श्रद्धया सह** इत्यत्र श्रद्धया सहिता या **निवृत्तिः** निवृत्तिमार्गः सा पवित्राणां मध्ये ज्यायसी । **निवृत्तशीलदोषः**, निवृत्तः **शीलस्य** स्वभावस्य **दोषः** आशारूपो दोषो यस्य सः ।

**श्रद्धां कुरु महाप्राज्ञ ततः प्राप्स्यसि यत्परम् ॥ १९ ॥**

---

१. BORI पृ. १३९५; $M_{1,6}$,$B_{7,9}$; **'कदर्यस्य न वार्धुषेः'** इति कुं. पाठः ।
२. तै.उ. १-२३
३. BORI पृ. १३९५; **'निवृत्ति शीलदोषो यः'** इति कुं. पाठः ।

**श्रद्धां कुरु महाप्राज्ञ** इत्यत्र **श्रद्धां** महत्सु श्रद्धाम् । 'स्पर्धां जहि' इति पाठे महत्सु स्पर्धां, जहि (त्यज) ।

**[1]कस्मिन्नेवानुतीर्थेन पशवः प्राप्नुयुः सुखम् ।**
**पत्नीव्रतेन विधिना प्रकरोति नियोजनम् ।**
**श्रद्धावाञ्श्रद्दधानश्च धर्मश्चैव हि वाणिज ॥ २१ ॥**

**कस्मिन्नेवानुतीर्थेन** इत्यत्र कस्मिन्नाश्रमे **अनुतीर्थेन** अनुकूल-शास्त्रेण पत्नीव्रतेन विधिना स्वयं **श्रद्धावान्** धर्मं प्रति श्रद्दधानश्च कथं प्रकरोति ।

**समानां श्रद्दधानानां युक्तानां च यथा बलम् ।**
**कुर्वतां यज्ञ इत्येव [2]न यज्ञो जातु नेष्यते ॥ २६ ॥**

**यज्ञ** इत्येव कुर्वतां, न तु कीर्त्यर्थं कुर्वतामित्यर्थः । यज्ञः नेष्यत इति न, किन्तु इष्यत एव ।

**॥ इति मोक्षे पञ्चनवतितमोऽध्यायः ॥**
**॥ तुलाधारजाजलिसंवादः समाप्तः ॥**

## ॥ अथ षण्णवतितमोऽध्यायः ॥

**[3]छिन्नस्थूणं वृषं दृष्ट्वा विरावं च गवां भृशम् ।**
**गोगृहे यज्ञवाटे च प्रेक्षमाणः स पार्थिवः ॥ ४ ॥**

**छिन्नस्थूणं वृषम्** इत्यत्र **छिन्नस्थूणं** छिन्नशृङ्गम् ।

---

१. **'यस्मिन्नेवानुतीर्थेन'** इति कुं. पाठः ।
२. 'नायज्ञो' इति कुं. पाठः । BORI पृ. १३९७
३. कुं. २७१ अध्यायः ।

उपोष्य संशितो भूत्वा हित्वा वेदकृतां शुचिः ।
आचार इत्यनाचारा कृपणाः फलहेतवः ॥ ९ ॥

हित्वा वेदकृतां शुचिः इत्यत्र शुचिराचार इति मत्वा अनाचाराः सन्तः प्रवर्तन्ते ।

यदि छिन्दन्ति वृक्षांश्च यूपांश्चोद्दिश्य मानवाः ।
वृथा मांसानि खादन्ति नैष धर्मः प्रशस्यते ॥ १० ॥

यूपांश्चोद्दिश्य मानवा इत्यत्र यूपान् उद्दिश्य(इति) वाङ्मन्त्रेण उक्त्वा ।

सुरां मत्स्यान् मधु मांसमासवं कृसरोदनम्[१] ।
धूर्तैः प्रवर्तितं ह्येतन्नैतद्वेदेषु कल्पितम् ।
कामान्मोहाच्च लोभाच्च लौल्यमेतत्प्रवर्तितम् ॥ ११ ॥

कृसरोदनं सूपतिलमुद्गादिमिश्रोदनम् ।

यज्ञियाश्चैव ये वृक्षा वेदेषु परिकल्पिताः ।
यच्चापि किञ्चित्कर्तव्यमन्यच्चोक्षैः सुसंस्कृतम् ।
महासत्त्वैः शुद्धभावैः सर्वं देहार्हमेव तत् ॥ १३ ॥

अन्यच्चोक्षैः सुसंस्कृतम् इत्यत्र उक्षैः प्रोक्षणैः ।

युधिष्ठिर उवाच–

शरीरमापदश्चापि विवदन्त्यविहिंसतः ।
कथं यात्रा शरीरस्य निरारम्भस्य सेत्स्यते ॥ १४ ॥

---

१. BORI पृ. १३९९; K7,D4,6,9; 'कृसरौदनम्' इति कुं. पाठः ।

**शरीरमापद** इत्यत्र **अहिंसतः** पुरुषस्य शरीरम् आपदश्च **विवदन्ति** मा आयाहीति शरीरं ब्रूते । आयास्याम इति क्षुधाद्यापदः वदन्ति ।

**॥ इति विचख्युगीतासु षण्णवतितमोऽध्यायः ॥**

## ॥ अथ सप्तनवतितमोऽध्यायः ॥

**[१]व्यभिचारे तु कस्मिंश्चिद्व्यतिक्रम्यापरान्सुतान् ।**
**पित्रोक्तः कुपितेनाथ जहीमां जननीमिति ॥ ७ ॥**

**जहीमां जननीमिति** इत्यत्र 'एकवारमिन्द्रागमने पुत्रं प्रति जहीत्याज्ञा दत्ता', 'पुनरेकवारमिन्द्रागमने शिला भवेति शापो दत्तः' इति कथाद्वयम् अप्यनुसन्धेयम् ।

**सोऽहं मात्रा स्वयं पित्रा पुत्रत्वे प्रकृतः पुनः ।**
**[२]विज्ञानं मे यथा न स्याद्बौ बुद्ध्ये चात्मसम्भवम् ॥ १५ ॥**

**विज्ञानं मे यथा** इत्यत्र **विज्ञानं** विरुद्धं ज्ञानम् ।

**शिशोः शुश्रूषणाच्छुश्रूर्माता देहमनन्तरम् ।**
**चेतनावान् स को हन्याद्यस्य नासुपिरं शिरः ॥ ३३ ॥**

**यस्य नासुषिरं शिर** इत्यत्र **यस्य शिर असुषिरं न** किन्तु ससुषिरमेव । यस्य शिरः सहस्रधा भिद्यते स एव मातरं हन्यादिति भावः ।

**नापराधोऽस्ति नारीणां नर एवापराध्यति ।**
**सर्वकार्यापराध्यत्वान्नापराध्यन्ति चाङ्गनाः ॥ ४० ॥**

---

१. कुं. २७२ अध्यायः ।; २. 'विज्ञानं मे कथम्' इति कुं. पाठः ।

**सर्वकार्यापराध्यत्वात्** इत्यत्र सर्वकार्येषु अपरेण **आध्या** आ-समन्तात् धारयितुं योग्या पराधीनेत्यर्थः, तस्याः भावः ।

**यश्च नोक्तोऽथ निर्देशः [१] स्त्रियां मैथुनवृत्तये ।**
**तस्य स्मारयतो व्यक्तमधर्मो नास्ति संशयः** ॥ ४१ ॥

**यश्च नोक्तोऽथ निर्देश** इत्यत्र स्त्रियां मैथुनवृत्तये **निर्देशः नोक्तः** स्मृतौ नोक्तः, ऋतुकालातिरिक्तकाले नोक्तः । **तस्य** मिथुनीभावस्य **स्मारयतः** पुरुषस्य व्यक्तम् अधर्मो भवतीति योजना ।

**देवतानां समावायमेकस्थं पितरं विदुः ।**
**मर्त्यानां देवतानां च [२] स्नेहादध्येति मातरम्** ॥ ४३ ॥

**स्नेहादध्येति मातरम्** इत्यत्र **अध्येति** अधिकमेति ।

**मेधातिथिर्महाप्राज्ञो गौतमस्तपसि स्थितः ।**
**विमृश्य तेन कालेन पत्न्याः संस्थाव्यतिक्रमम्** ॥ ४५ ॥

**पत्न्याः संस्थाव्यतिक्रमम्** इत्यत्र **संस्था** मरणं तस्य **व्यतिक्रमः** अभावः ।

**सोऽब्रवीद् भृशसन्तप्तो दुःखेनाश्रूणि वर्तयन् ।**
**श्रुतधैर्यप्रसादेन पश्चात्तापमुपागतः** ॥ ४६ ॥

**पश्चात्तापमुपागत** इत्यत्र **पश्चात्तापं** तापस्य पश्चात् भागं तापाभाव-मित्यर्थः ।

---

१. BORI पृ. १४०६; M1,5,7,; **'स्त्रिया मैथुनवृद्धये'** इति कुं. पाठः ।
२. **'स्नेहादभ्येति मातरम्'** इति कुं. पाठः ।

**परवानस्मि चेत्युक्तः प्रणयिष्यति तेन च ।**
**अत्र चाकुशले जाते स्त्रिया नास्ति व्यतिक्रमः ॥ ४९ ॥**

**प्रणयिष्यति तेन च** इत्यत्र **तेन** अकृतोपचारेण । प्रणयिष्यति इति मत्त्वा परवानस्मीति मया उक्तः ।

**ईर्ष्याजं व्यसनं प्राहुस्तेन चैवोर्ध्वरेतसः ॥ ५१ ॥**

**तेन चैव** इत्यत्र **तेन** कारणेन ।

**गौतमस्तं ततो दृष्ट्वा शिरसा पतितं भुवि ।**
**पत्नीं चैव निराकारां परामभ्यागमन्मुदम् ॥ ६१ ॥**

**पत्नीं चैव निराकाराम्** इत्यत्र नितराम् आकारो यस्याः **निराकारा** ताम् ।

**हन्या इति समादेशः शस्त्रपाणौ सुते स्थिते ।**
**विनीते प्रसवत्यर्थे विवासे चात्मकर्मसु ॥ ६३ ॥**

**विवासे चात्मकर्मसु** इत्यत्र आत्मकर्मसु **विवासे** विशेषेण वासं कुर्वति । बहुकालं विचार्य तिष्ठतीत्यर्थः ।

**बुद्धिश्चासीत् सुतं दृष्ट्वा पितुश्चरणयोर्नतम् ।**
**शस्त्रग्रहणचापल्यं संवृणोति भयादिति ॥ ६४ ॥**

भयात् शस्त्रग्रहणचापल्यं **संवृणोति** अङ्गीकरोतीति बुद्धिरासीत् ।

**चिरकारिक भद्रं ते चिरकारी चिरं भव ।**
**[१]चिराययति ते सौम्य चिरमस्मि न दुःखितः ॥ ६७ ॥**

---

१ BORI पृ. १४१०; $T_1$,$G_{2,3,6}$; 'चिराय यदि' इति कुं. पाठः ।

**चिराययति ते** इत्यत्र **चिराययति ते** प्रयत्नं कुर्वति सति ।

॥ इति चिरकारिकोपाख्याने सप्तनवतितमोऽध्यायः ॥

* * *

## ॥ अथ अष्टनवतितमोऽध्यायः ॥

**सत्यवानुवाच–**

**सर्व एव त्रयो वर्णाः कार्या ब्राह्मणबन्धनाः ।**[१]
**धर्मपाशनिबद्धानां नाल्पोऽप्यपचरिष्यति** ॥ ७ ॥

**धर्मपाशनिबद्धानाम्** इत्यत्र धर्मपाशनिबद्धानां मध्ये ।

**यो यस्तेषामपचरेत् तमाचक्षीत वै द्विजः ।**
**अयं मे न शृणोतीति तस्मिन् राजा प्रधारयेत्** ॥ ८ ॥

**अयं मे न शृणोति** इत्यत्र **अयं** पुरुषः **मे** वाक्यं न शृणोतीति ब्राह्मणेनोक्ते तस्मिन् राजा **प्रधारयेत्** दण्डं प्रधारयेत् ।

**पक्वं श्मशानादादत्ते पिशाचांश्चापि दैवतम् ।**
**तेषु यः समयं कश्चित् कुर्वीत हतबुद्धिषु** ॥ २२ ॥

**पक्वं श्म(स्म)शानादादत्त** इत्यत्र हतः चोरः पिशाचो भूत्वा **दैवतं** देवतासम्बन्धि **पक्वं** मरणदिनादारभ्य दशमेऽहनि 'दक्षिणपार्श्वे यमाय, उत्तरपार्श्वे रुद्राय, मध्ये प्रेतराजाय' इति दत्तं **पक्वं** पिण्डाद्यन्नं श्मशानात् **आदत्ते** अपहरति, इदं चोपलक्षणम् । तत्रागताः प्रजाश्च आविश्य बाधते ।

---

१. कुं. २७३ अध्यायः ।

**तान्न शक्नोषि चेत्साधून् परित्रातुमहिंसया ।**
**कस्यचिद्भूतभव्यस्य[१] लाभेनान्तं तथा कुरु ॥ २३ ॥**

**तान्न शक्नोषि चेत्** इत्यत्र **अहिंसया** दस्यूनामहिंसया भूतभव्यस्य जगतः लाभेन तद्रक्षणार्थमिति यावत् । तदा **अन्तं** नाशं कुरु ।

**॥ इति द्युमत्सेनसत्यवत्संवादो नाम अष्टनवतितमोऽध्यायः ॥**

## ॥ अथ एकोनशततमोऽध्यायः ॥

**युधिष्ठिर उवाच–**

**अविरोधेन[२] भूतानां त्यागः षाड्गुण्यकारकः ।**
**यः स्यादुभयभाग्धर्मस्तन्मे ब्रूहि पितामह ॥ १ ॥**

**यः स्यादुभयभाक्** इत्यत्र **उभयभाक्** ऐहिकामुष्मिकफलभाक् ।

**स बुद्धिमुत्तमां प्राप्तो नैष्ठिकीमकुतोभयाम् ।**
**स्वरेण[३] शिथिलोऽसत्या वेदा ३ इत्यब्रवीत् सकृत् ॥ ८ ॥**

**स्वरेण शिथिलोऽसत्या** इत्यत्र **स्वरेण शिथिलः** उच्चैर्वक्तुं भीत्या अल्पस्वरो भूत्वेत्यर्थः । गोमेधस्यापि विधानात् वेदा असत्या इति सकृदब्रवीत् ।

**तां गामृषिः स्यूमरश्मिः प्रविश्य यतिमब्रवीत् ।**
**अंहो[४] वेदा ३ यदि मता धर्माः केनापरे मताः ॥ ९ ॥**

---

१. BORI पृ. १४१५; **'कस्यचिद्भूतभव्यस्य लोभेन'** इति कुं. पाठः ।
२. कुं. २७४ अध्यायः ।; ३. **'स्वरेण शिथिलां सत्याम्'** इति कुं. पाठः ।
४. **'हंहो'** इति कुं. पाठः ।

**अंहो वेदा यदि मता** इत्यत्र **वेदाः अंहः** पापहेतुत्वादंह इति यदि मता इत्यर्थः ।

**तस्यैव गततृष्णस्य विज्वरस्य निराशिषः ।**
**का विवक्षाऽस्ति वेदेषु निरारम्भस्य सर्वशः[1] ॥ ११ ॥**

**निरारम्भस्य सर्वश** इत्यत्र **निरारम्भस्य** यज्ञाद्यारम्भरहितस्य यतिरूपस्य तव वेदेषु का विवक्षास्ति । अत एव वेदं विनिन्दसीति भावः ।

**नाहं वेदान् विनिन्दामि न विवक्षामि कर्हिचित् ।**
**पृथगाश्रमिणां कर्माण्येकार्थानीति नः श्रुतम् ॥ १२ ॥**

**पृथगाश्रमिणाम्** इत्यत्र आश्रमिणां कर्माणि पृथक् पृथक् **एकार्थानि** एकस्वर्गाख्यफलानि ।

**गच्छत्येव परित्यागी वानप्रस्थश्च गच्छति ।**
**गृहस्थो ब्रह्मचारी च उभौ तावपि गच्छतः ॥ १३ ॥**

**गच्छत्येव परित्यागी** इत्यत्र **गच्छति** परलोकं प्रति गच्छति ।

**यज्ञेषूपाकृतं विश्वं प्राहुरुत्तमसंज्ञितम् ॥ २५ ॥**

**यज्ञेषूपाकृतम्** इत्यत्र **उपाकृतं** देवानुद्दिश्य मन्त्रितपशुम् । 'यो यजत्यफलेप्सया' इत्यनेन यज्ञः कर्तव्यः यज्ञो न कर्तव्य इति द्विविध-वाक्यस्यापि 'फलेच्छुना न कर्तव्यः, अफलेच्छुना कर्तव्यः' इति गतिः सूचिता । अतो न वेदाप्रामाण्यं शङ्क्यमिति भावः ।

---

१. BORI पृ. १४१९; **'निरारम्भस्य सर्वतः'** इति कुं. पाठः ।

**नायं लोकोऽस्त्ययज्ञानां परश्चेति विनिश्चयः ।**
**वेदवादविदश्चैव प्रमाणमुभयं तदा ॥ ४३ ॥**

**वेदवादविद** इत्यत्र **वेदवादविदः** ज्ञानिनः ।

॥ इति गोकपिलसंवादे एकोनशततमोऽध्यायः ॥

## ॥ अथ एकशततमोऽध्यायः ॥

[1] **निर्द्वन्द्वा निर्नमस्कारा निराशीर्बन्धना बुधाः ।**
**विमुक्ताः सर्वपापेभ्यश्चरन्ति शुचयोऽमलाः ॥ २ ॥**

**निर्द्वन्द्वा निर्नमस्कारा** इत्यत्र **निर्नमस्काराः** स्वात्मानं प्रति परैः क्रियमाणनमस्काराशारहिताः ।

**अर्चिष्मन्तो बर्हिषदः क्रव्यादाः पितरस्तथा ।**
**मृतस्याप्यनुमन्यन्ते मन्त्रामन्त्राश्च कारणम् ॥ १५ ॥**

**मन्त्रामन्त्राश्च कारणम्** इत्यत्र **मन्त्राः** मन्त्रसहितकर्माणि **अमन्त्राः** मन्त्रं विना तूष्णीं क्रियमाणकर्माणि उपवीतस्य सव्यापसव्यकरणादीनि।

**श्रिया विहीनैरलसैः पण्डितैश्चपलायितम् ।**
**वेदवादापरिज्ञानं सत्याभासमिवानृतम् ॥ १७ ॥**

**पण्डितैश्चपलायितम्** इत्यत्र **पण्डितैः** शतश्लोकपण्डितैः, चौरैः ब्राह्मणहिंसायामारब्धायां सत्याभासमादाय **अनृतं** यथा चञ्चलीकृतम् तथा वेदवादपरिज्ञानं **चपलायितं** चञ्चलीकृतम् ।

---

१ [illegible] अध्यायः ।

**न वेदानां परीभावान्न शाठ्येन न मायया ।**
**महत्प्राप्नोति पुरुषो ब्राह्मणो ब्रह्म विन्दति ॥ १९ ॥**

**ब्राह्मणो ब्रह्म विन्दति** इत्यत्र **ब्राह्मणः** वेदाभ्यासवान् ।

**अनारम्भाः सुधृतयः शुचयो ब्रह्मसञ्ज्ञिताः ।**
**ब्राह्मणा एव ते देवांस्तर्पयन्त्यमृतैरिव ॥ २१ ॥**

**अनारम्भाः सुधृतय** इत्यत्र **अनारम्भाः** स्वोदरपोषणायारम्भरहिताः ।

**सर्वभूतात्मभूतस्य सर्वभूतानि पश्यतः ।**
**देवाऽपि मार्गे मुह्यन्ति ह्यपदस्य पदैषिणः ॥ २२ ॥**

**अपदस्य पदैषिण** इत्यत्र **अपदस्य** लौकिकस्थानाशारहितस्य, **पदैषिणः** मुक्तिपदैषिणः, ब्राह्मणस्य **मार्गे देवा अपि मुह्यन्ति** तन्मार्गे देवा अपि चलितुं न शक्नुवन्तीत्यर्थः ।

**नाक्षैर्दीव्येन्नाददीतान्यवित्तं**
**न वाऽयोनिजस्य सुतां प्रगृह्णन्[1] ।**
**क्रुद्धो न चैव प्रहरेत धीमां-**
**स्तथास्य तत्पाणिपादं सुगुप्तम् ॥ २४ ॥**

**अयोनिजस्य सुताम्** इत्यत्र अयोनिजस्य सुतां प्रगृह्णन्नैव **भवेत्** तदाशया न वाञ्छेन्नैव प्रहरेत् हस्तेन पादेन वा ।

**द्वन्द्वारामेषु सर्वेषु य एको रमते मुनिः ।**
**परेषामननुध्यायंस्तं देवा ब्राह्मणं विदुः ॥ ३१ ॥**

---

१. 'न वाऽयोनीयस्य शृतं प्रगृह्णात्' इति कुं. पाठः ।

**द्वन्द्वारामेषु सर्वेषु** इत्यत्र सर्वेषु द्वन्द्वारामेषु सत्सु एकः रमते ।

**नान्तरेणानुजानाति वेदानां यत्क्रियाफलम् ।**
**अविज्ञाय च तत्सर्वमन्यद्रोचयते फलम् ॥ ३४ ॥**

**नान्तरेण** इत्यत्र दानयज्ञक्रियाफलम् **अन्तरेण** विना ।

**स्वकर्मभिः संश्रितानां तपोघोरत्वमागतम् ।**
**तं सदाचारमाश्चर्यं पुराणं शाश्वतं ध्रुवम् ॥ ३५ ॥**

**तपोघोरत्वमागतम्** इत्यत्र **तपोघोरत्वं** तपसा घोरत्वमागतम् ।

**[१]अशक्नुवद्भिश्चरितुं किंस्विद्धर्मेषु सूचितम् ।**
**[२]अनापद्धर्म आचारो ह्यप्रमादोऽपराभवः ॥ ३६ ॥**

सदाचारं चरितुमशक्नुवद्भिः धर्मेषु चरितुं **सूचितं** सुष्ठूचितं किंस्वित् ? **अनापद्धर्म आचार** इत्यत्र **अनापत्** मध्ये विच्छिद्राख्योपद्रवरहितः ।

**फलवन्ति च कर्माणि व्युष्टिमन्ति ध्रुवाणि च ।**
**त्रिगुणानि च पश्यन्ति तथा नैकानि केन च ॥ ३७ ॥**

**व्युष्टिमन्ति** इत्यत्र **व्युष्टिः** विभागः तद्वन्ति व्युष्टिमन्ति ।

**भवन्तो ज्ञानिनो नित्यं सर्वतश्च निरामयाः ।**
**ऐकात्म्यं नाम कश्चिद्धि कदाचिदभिपद्यते ॥ ५१ ॥**

**ऐकात्म्यं नाम** इत्यत्र **ऐकात्म्यं** जीवब्रह्मैक्यम् ।

---

१ 'अशक्नुवन्तश्चरितुं किञ्चिद्धर्मेषु सूत्रितम्' इति कुं. पाठः ।
२ 'अनापद्धर्म' इति कुं. पाठः । अयमेव श्लोकः उत्तरेप्यध्याये पठ्यते ।

**यतः स्वरूपतश्चान्यो जातितः श्रुतितोऽर्थतः ।**
**कथमस्मिन् स इत्येव सम्बन्धः स्यादसंहितः ॥**[१]

**कथमस्मिन् स इत्येव सम्बन्धः स्यादसंहित** इत्यत्र **स्वरूपतः** महापरिमाणाख्यस्वरूपात्, **अन्यः** अणुरूपाज्जीवादन्यः, **जातितः** परमात्मत्वाख्यजातितः आत्मत्वजात्याक्रान्तजीवादन्यः, **श्रुतितः** 'द्वासुपर्णा'[२] इति श्रुतितः । **अर्थतः** अवाप्तसकलपुरुषार्थत्वात् मुमुक्षोर्जीवादन्यो यः परमात्मा सः अहमेवास्मीति, **असंहितः** युक्तिसम्बन्धविरुद्धः सम्बन्धः कथं स्यात् ? यथा विरुद्धं जीवदेहैक्यं न भवति तथा विरोधसाम्याज्जीवपरमात्म्यैक्यं च न भवतीत्यर्थः ।

**ये तद्बुद्ध्वाऽनुपश्यन्तः सन्त्यजेयुः शुभाशुभम् ।**
**परां गतिमभीप्सन्तो यतयः संयमे रताः** ॥ ६६ ॥

**सन्त्यजेयुः शुभाशुभम्** इत्यत्र **शुभं** काम्यकर्म ।

**यद्येतदेवं कृत्वाऽपि न विमोक्षोऽस्ति कस्यचित् ।**
**धिक्कर्तारं च कार्यं च श्रमश्चायं निरर्थकः** ॥ ६६ ॥

**धिक्कर्तारं च** इत्यत्र **कर्तारं** काम्यकर्म कर्तारम्, कुटुम्बभरणकर्तारं वा ।

**नास्तिक्यमनया च स्याद्वेदानां पृष्ठतः क्रिया ।**[३]
**एतस्यानन्त्यमिच्छामि भगवन् श्रोतुमञ्जसा** ॥ ६७ ॥

---

१. BORI अध्यायः २६१, श्लोक-५२स्यानन्तरं अयमपि श्लोकः लक्षालङ्कारे वर्तते । (पृ. १४३४)

२. अथर्वण. उ. ५/१ ; ३. **'नास्तिक्यमन्यथा च'** इति कुं. पाठः ।

**नास्तिक्यमनया** इत्यत्र यो वेदानां पृष्ठतः क्रियाविस्तारः अनया नास्तिक्यं (वेदानां) स्यात्, इति योजना ।

**।। इति गोकपिलसंवादो नाम एकशततमोऽध्यायः ।।**

## ।। अथ द्विशततमोऽध्यायः ।।

**[1] निरागममनैतिह्यमत्यक्षं लोकसाक्षिकम् ।**
**धर्म इत्येव ये यज्ञान् वितन्वन्ति निराशिषः ।। ४ ।।**

**निरागममनैतिह्यम्** इत्यत्र **निरागमं** प्रवृत्तिकर्म प्रतिपादकागमे श्रद्धां विना, **अत्यक्षम्** अक्षसिद्धफलमतिक्रम्य ।

**अक्रुध्यन्तोऽनसूयन्तो निरहङ्कारमत्सराः ।**
**[2] ज्ञाननिष्ठास्त्रियुक्ताश्च सर्वभूतहिते रताः ।। ७ ।।**

**ज्ञाननिष्ठास्त्रियुक्ता** इत्यत्र **त्रियुक्ताः** त्रिभिर्वेदैः युक्ताः ।

**सत्यं हि धर्ममास्थाय दुराधर्षतमा मताः ।**
**न मात्रामनुरुध्यन्ते न धर्मच्छलमन्ततः ।। १२ ।।**

**न मात्रामनुरुध्यन्त** इत्यत्र **मात्रां** रूपरसादिकम् ।

**अशक्नुवद्भिश्चरितुं किञ्चिद्धर्मेषु सूचितम् ।**
**निरापद्धर्म आचारो ह्यप्रमादोऽपराभवः ।। २१ ।।**

**किञ्चिद्धर्मेषु सूचितम्** इत्यत्र धर्मेषु सूचितं **किञ्चित्** किञ्चिद्धा[illegible]म् । सर्वधर्मकरणासामर्थ्येऽपि यथाशक्ति कर्तव्यमिति भावः ।

---

१. [illegible]. २७६ अध्यायः ।; २. 'ज्ञाननिष्ठास्त्रिशुक्ला' इति कुं. पाठः ।

**सर्ववर्णेषु यत्तेषु नासीत् कश्चिद्व्यतिक्रमः ।**
**धर्ममेकं चतुष्पादमाश्रितास्ते नरा विभो ॥ २२ ॥**

**सर्ववर्णेषु यत्तेषु** इत्यत्र **यत्तेषु** सन्नद्धेषु ।

धर्मफलं प्रत्यक्षतो दर्शयितुमाह– **त एते दिवि दृश्यन्त** इति ॥

**त एते दिवि दृश्यन्ते ज्योतिर्भूता द्विजातयः ॥ २६ ॥**

**एवमेव ब्रह्मचारी शुश्रूषुर्घोरनिश्चयः ।**
**एवंयुक्तो ब्राह्मणः स्यादन्यो ब्राह्मणको भवेत् ॥ २८ ॥**

**अन्यो ब्राह्मणको भवेत्** इत्यत्र **ब्राह्मणकः** कुत्सितब्राह्मणः ।

**शरीरपङ्क्तिः कर्माणि ज्ञानं तु परमा गतिः ।**
**पक्के कषायविज्ञानं यथा ज्ञाने च तिष्ठति ॥ ३९ ॥**

**पक्के कषाय** इत्यत्र **कषाये** कर्मकषाये ।

॥ इति द्व्युत्तरशततमोऽध्यायः ॥
॥ गोकापिलेयं समाप्तम् ॥

## ॥ अथ त्र्युत्तरशततमोऽध्यायः ॥

**सोऽथ सौम्येन मनसा देवानुचरमन्तिके ।**[1]
**प्रत्यपश्यज्जलधरं कुण्डधारमवस्थितम् ॥ ६ ॥**

**प्रत्यपश्यत् जलधरम्** इत्यत्र **जलधरं** मेघाभिमानिनम् । **कुण्डधारं** कुण्डधारनामकम् । **देवानुचरं** गन्धर्वं धनदानुचरं यक्षं वा ।

---

१. कुं. २७७ अध्यायः ।

**ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा ।**
**निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ ११ ॥**

**कृतघ्ने नास्ति निष्कृतिः** इत्यत्र त्वत्कृतपूजायाः अल्पोपकारे कृते मम कृतघ्नता स्यात् । अतः मोक्षाख्यमहोपकारायैव यतिष्य इति भावः ।

**ततोऽपश्यत चीराणि सूक्ष्माणि द्विजसत्तमः ।**
**पार्श्वतोऽभ्याशतो न्यस्तान्यथ निर्वेदमागतः ॥ ३१ ॥**

**ततोऽपश्यत चीराणि** इत्यत्र ततः स्वप्नोत्थानानन्तरम् । **सूक्ष्माणि चीराणि** जीर्णवस्त्रखण्डानि वैराग्यजननाय देवैर्निक्षिप्तानि । (दैवान्निक्षिप्तानि ।)

**अयं न सुकृतं वेत्ति को न्वन्यो वेत्स्यते कृतम् ।**
**गच्छामि वनमेवाहं परं धर्मेण जीवितुम् ॥ ३२ ॥**

**अयं न सुकृतं वेत्ति** इत्यत्र यद्यपि स्वप्ने वैराग्यजननाय कुण्डधारेण महानुपकारः कृत इति हृष्टवान्, तथापि मणिभद्रेण दीयमानद्रव्ये निरोधात् तात्कालिकदुःखेन अयं न सुकृतं वेत्तीत्युक्तवानिति द्रष्टव्यम् ।

**ततः प्रहृष्टवदनो भूय आरब्धवांस्तपः ।**
**भूयश्चाचिन्तयत्सिद्धो यत्परं सोऽभिपद्यते[1] ॥ ३९ ॥**

**भूयश्चाचिन्तयत्सिद्ध** इत्यत्र **सिद्धः** सिद्धगणस्थः कुण्डधारः । **यत्** येन उपायेन **सः** ब्राह्मणः **परं** परमपुरुषार्थं मोक्षमभिपद्यते तत् भूयश्चाचिन्तयदित्यर्थः ।

---

१ BORI पृ. १४४८; $T_1$,$G_{1.3}$,$M_{1,5,7}$; **'सोऽभिमन्यते'** इति कुं. पाठः ।

**यदि दद्यामहं राज्यं तुष्टो वै यस्य कस्यचित् ।**
**स भवेदचिराद्राजा न मिथ्या वाग्भवेन्मम ॥ ४० ॥**

**न मिथ्या वाग्भवेन्मम** इत्यत्र **मम वाक्** प्रार्थनारूपा वाक् । फलालाभात् **मिथ्या** व्यर्था न भवेत् । महाफलं तु न लभ्यत एवेति भावः ।

**कृतं मया भवेत् [1]किन्तु कश्च तेऽनुग्रहो भवेत् ॥ ४५ ॥**

इदानीं प्राकृतकृतघ्ननिन्दायाः भावमुद्घाटयति– **कृतं मया भवेत् किन्तु** इति ।

**एतैर्लोकाः सुसंरुद्धा देवानां मानुषाद्भयम् ।**
**तथैव देववचनाद्विघ्नं कुर्वन्ति सर्वशः ॥ ४८ ॥**

**देवानां मानुषाद् भयम्** इत्यत्र **मानुषात्** मनुष्यजन्मतः ।
**देववचनात् विघ्नं कुर्वन्ति** इत्यत्र देववचनात् विघ्नं कुर्वन्ति देवदूताः ।

॥ कुण्डधाराख्याने त्र्युत्तरशततमोऽध्यायः ॥

## ॥ अथ चतुरुत्तरशततमोऽध्यायः ॥

**[2]श्यामाकमशनं तत्र [3]सूर्यपत्री सुवर्चला ।**
**तिक्तं च विरसं शाकं तपसा स्वादुतां गतम् ॥ ४ ॥**

**सूर्यपत्री सुवर्चला** इत्यत्र **सूर्यपत्री** अर्कपत्री **सुवर्चला** च काचिदारण्यकशाकलता ।

---

१. **'किं ते कश्च'** इति कुं. पाठः ।; २. कुं. २७८ अध्यायः ।
३. BORI पृ. १४५१; Ca; **'सूर्यपर्णी'** इति कुं. पाठः ।

**अकामया कृतस्तत्र यज्ञो होत्रानुमार्गतः[१] ।**
**शुकस्य पुनराजातिरवध्यानादधर्मवत् ॥ ८ ॥**

**शुकस्य पुनराजातिः** इत्यत्र शुकस्य **आ** समीचीना जातिः यस्य सः **आजातिः** पक्षी । **पुनरवध्यानात्** अवज्ञाकारणात् । यत्र **होत्रानुमार्गतः** (यज्ञस्य) होत्रं होमः, तन्मार्गेण, **अधर्मवत्** अधर्मो यथा भवति तथा हतः ।

**तस्मिन् वने समीपस्थो मृगोऽभूत्सहचारिकः ।**
**वचोभिरब्रवीत् सत्यं त्वयेदं दुष्कृतं कृतम् ॥ ९ ॥**

**सहचारिक** इत्यत्र शुकस्य सहचरणशीलः ।

**ततस्तु यज्ञे सावित्री साक्षात्तं संन्यमन्त्रयत् ।**
**निमन्त्रयन्ती प्रत्युक्ता न हन्यां सहवासिनम् ॥ ११ ॥**

**ततस्तु यज्ञे सावित्री** इत्यत्र **सावित्री** यज्ञपत्नी ।

**निमन्त्रयन्ती प्रत्युक्ता** इत्यत्र प्रति **उक्तं** वचनं यस्याः सा । न हन्यामिति प्रतिवचनवती जाता ।

**स तु बद्धाञ्जलिः[२] सत्यमयाचद्धरिणः पुनः ।**
**सत्येन स परिष्वज्य सन्दिष्टो गम्यतामिति ॥ १३ ॥**

**स तु बद्धाञ्जलिः सत्यम्** इत्यत्र **सत्यं** सत्यनामकऋषिम् ।

**स तु धर्मो मृगो भूत्वा बहुवर्षोषितो वने ।**
**तस्य निष्कृतिमाधत्त न त्वसौ यज्ञसंविधिः ॥ १७ ॥**

---

१. **'होत्रनुमार्गतः'** कुं.पाठः । BORI पृ. १४५२

२. BORI पृ. १४५३; $M_7, G_{1,3}, T$; **'बद्धाञ्जलिम्'** इति कुं. पाठः ।

**तस्य निष्कृतिम्** इत्यत्र **तस्य** अविधिना कृतस्य यज्ञस्य पुण्यह्रासाख्यपरिहारम् । **असौ** मन्त्रं विना पत्न्या कृतपक्षिहोमः । **हिंसात्मनः** हिंसायामात्मा चित्तं यस्य ।

**तस्य तेनानुभावेन मृगहिंसात्मनस्तदा ।**
**तपो महत्समुच्छिन्नं तस्माद्धिंसा न यज्ञिया ॥ १८ ॥**

**तस्माद्धिंसा न यज्ञिया** इत्यत्र यज्ञिया न भवतीत्यनभिज्ञा । यज्ञियैव हिंसा प्रशस्तेत्यर्थः ।

**ततस्स[1] भगवान् धर्मो यज्ञं याजयत स्वयम् ।**
**समाधानं च भार्याया लेभे स तपसा परम् ॥ १९ ॥**

**ततस्स भगवान् धर्म** इत्यत्र **सः** मृगः भगवान् **धर्मः** धर्मराजो भूत्वा ।

**॥ इति मोक्षधर्मे अविधिकृतयज्ञनिन्दा नाम चतुरुत्तरशततमोऽध्यायः ॥**

## ॥ अथ पञ्चोत्तरशततमोऽध्यायः ॥

**[2]विज्ञानार्थं हि पञ्चानामिच्छापूर्वं प्रवर्तते ।**
**प्राप्यतां वर्तते कामो द्वेषो वा भरतर्षभ ॥ ३ ॥**

**विज्ञानार्थं हि पञ्चानाम्** इत्यत्र **पञ्चानां** रूपरसादीनाम् ।

**[3]उत्तरन्यायसम्बद्धं ब्रवीति विधिचोदितम् ।**
**अधर्मस्त्रिविधस्तस्य वर्धते रागमोहजः ॥ ९ ॥**

---

१. **'ततस्तं भगवान्धर्मो'** इति कुं. पाठः ।
२. कुं. २७९ अध्यायः ।; ३. **'उत्तरं न्यायसम्बद्धम्'** इति कुं. पाठः ।

**उत्तरन्यायसम्बद्धम्** इत्यत्र **न्यायसम्बद्धं** कुतर्काख्यन्यायसम्बन्धम् । **विचोदितः** विपरीतया चोदितः इदं न कुर्वित्युक्त इत्यर्थः ।

॥ इति पञ्चोत्तरशततमोऽध्यायः ॥

## ॥ अथ षडुत्तरशततमोऽध्यायः ॥

**युधिष्ठिर उवाच–**

**मोक्षः[1] पितामहेनोक्तो [2]नानुपायादुपायतः ।**
**तदुपायं यथान्यायं श्रोतुमिच्छामि भारत ॥ १ ॥**

**नानुपायादुपायत** इत्यत्र अनुपायात् न किन्तु उपायत एव यतते । वाचा उक्त्वा तदर्थमुपायं न करोतीति न । किन्तु उपायत एव यतत इत्यर्थः ।

**करणे घटस्य या बुद्धिर्घटोत्पत्तौ न सा मता ।**
**एवं धर्माभ्युपायेषु नान्यद्धर्मेषु कारणम् ॥ ३ ॥**

**करणे घटस्य या बुद्धिः** इत्यत्र घटस्य करणे **या बुद्धिः** दण्डचक्रमृत्पिण्डसम्पादनाय या बुद्धिः, सा घटोत्पत्त्यनन्तरं न । उत्पन्नघटाय पुनर्न यतते । किन्तु घटान्तरकरणायैव प्रवर्तते । एवं **धर्माभ्युपायेषु** धर्मसाधनेषु प्रयत्नः कर्तव्यः । एकधर्मसिद्ध्यनन्तरम् पुनर्धर्मान्तराय प्रयत्नः कर्तव्यः ।

**अप्रमादाद्भयं रक्षेच्छ्वासं क्षेत्रज्ञशीलनात् ।**
**इच्छां द्वेषं च कामं च धैर्येण विनिवर्तयेत् ॥ ६ ॥**

१. कुं. २८० अध्यायः ।; २. 'उपायान्नानुपायत' इति कुं. पाठः ।

**क्षेत्रज्ञशीलनात्** इत्यत्र **क्षेत्रज्ञे** परमात्मनि **शीलनं** शीलकरणम्। असम्प्रज्ञातसमाधियोग इति यावत्।

**अनुक्रोशादधर्मं च जयेद्धर्ममुपेक्षया[1]।**
**आयत्या च जयेदाशामर्थं सङ्गविवर्जनात्** ॥ ९ ॥

**जयेद्धर्ममुपेक्षया** इत्यत्र **उपेक्षया** फलोपेक्षया।
**आयत्या जयेत्** इत्यत्र आसमन्तात् **अयत्या** अप्रयत्नेन।

**यच्छेद्वाङ्मनसी बुद्ध्या तां यच्छेज्ज्ञानचक्षुषा।**
**ज्ञानमात्मा महान्यच्छेत्तं यच्छेज्ज्ञान[2] आत्मनि** ॥ १२ ॥

**ज्ञानमात्मा महान्** इत्यत्र **महानात्मा** ब्रह्मा। ज्ञानं यच्छेदिति चिन्तयेत्। **तं** ब्रह्माणम्। **ज्ञाने** ज्ञानस्वरूपे। **आत्मनि** परमात्मनि यच्छेत्।

॥ इति मोक्षधर्मपर्वे षडुत्तरशततमोऽध्यायः ॥

## ॥ अथ सप्तोत्तरशततमोऽध्यायः ॥

**[3]तेभ्यः सृजति भूतानि काल आत्मप्रचोदितः।**
**[4]एतेभ्यो यत् परं ब्रूयादसद्ब्रूयादसंशयम्** ॥ ५ ॥

**एतेभ्यो यत्परम्** इत्यत्र **परम्** अन्यत् अज्ञानं कारणं ये ब्रूयुः, ते असंशयम्, **असत्** असत्यं ब्रूयुः।

---

१. BORI पृ. १४५९; **'जयेद्धर्ममवेक्षया'** इति कुं. पाठः।
२. **'यच्छेज्ज्ञानमात्मनः'** इति कुं. पाठः। $M_{1,6}$; BORI पृ. १४५९.
३. कुं. २८१ अध्यायः।
४. BORI पृ. १४६१; $M_5, G_{1,3}$; **'एतेभ्यो यः'** इति कुं. पाठः।

**आपश्चैवान्तरिक्षं च पृथिवी वायुपावकौ ।**
**असद्भिः परमेतेभ्यो भूतेभ्यो मुक्तसंशयम् ॥ ७ ॥**

**भूतेभ्यो मुक्तसंशयम्** इत्यत्र मुक्तः संशयो यथा भवति तथा । असंशयमित्यर्थः ।

**नोपपत्त्या न वा युक्त्या त्वसद्ब्रूयादसंशयम् ।**
**[१]वेत्थैतानभिसंवृतान् षडेते येऽस्य राशयः ॥ ८ ॥**

**षडेते येऽस्य राशय** इत्यत्र ये एते षट् **अस्य** जगतः **राशयः** कारणराशयः । तान् **अभिसंवृतान्** व्याप्तान् वेत्थ ।

**पञ्चैव तानि कालश्च भावाभावौ च केवलौ ।**
**अष्टौ भूतानि भूतानां शाश्वतानि भवाव्ययौ ॥ ९ ॥**

**भावाभावौ च केवलौ** इत्यत्र भवत्येभ्यो जगदिति **भावः** सुकृत-दुष्कृतात्मकं कर्म । **अभावः** प्रागभावः इत्यष्टौ । भूतानां शाश्वतौ प्रभवाप्ययौ एतेभ्यो भवतः ।

**अभावभवितेष्वेव तेभ्यश्च प्रभवन्त्यपि ।**
**विनष्टोऽप्यनु तान्येव जन्तुर्भवति पञ्चधा ॥ १० ॥**

**अभावभविता** इत्यत्र **अभावः** नाशः तेन सहिता **भविता** उत्पत्तिः **अभावभाविता** ।

**चक्षुषी नासिकाकर्णौ त्वक् जिह्वेति च पञ्चमी ।**
**इन्द्रियाणीन्द्रियार्थानां ज्ञानानि कवयो विदुः ॥ १२ ॥**

---

१. **'वेत्थैतानभिनिर्वृत्तान्'** इति कुं. पाठः ।

**ज्ञानानि कवयो विदुः** इत्यत्र **ज्ञानानि** ज्ञायन्ते एभ्यः तानीति व्युत्पत्त्या ज्ञानकरणानि ।

**रूपं गन्धं रसं स्पर्शं शब्दं चैवाथ तद्गुणान् ।**
**इन्द्रियाणि न बुध्यन्ते क्षेत्रज्ञस्तैस्तु बुध्यते ॥ १९ ॥**

**इन्द्रियाणि न बुध्यन्त** इत्यत्र **न बुध्यन्ते** स्वशक्त्या न बोधयन्ति ।

**मनःषष्ठान्यथैतानि वाचा सम्यग्यथागमम् ।**
**ज्ञानचेष्टेन्द्रियगुणाः सर्वेषां शब्दिता मया ॥ २२ ॥**

**ज्ञानचेष्टेन्द्रियगुणा** इत्यत्र **चेष्टेन्द्रियाणि** कर्मेन्द्रियाणि ।

**आनन्दः कर्मणां सिद्धिः प्रतिपत्तिः परा गतिः ।**
**सात्त्विकस्य निमित्तानि भावात् संश्रयते स्मृतिः ॥ २६ ॥**

**सात्त्विकस्य निमित्तानि** इत्यत्र **निमित्तानि** परगतनिमित्तानि । सात्त्विकस्य **भावात्** स्वभावात् इति सम्बन्धः ।

**जन्तुष्वेकतमेष्वेवं भावं यो वा समास्थितम्[१] ।**
**भावयोरीप्सितं नित्यं प्रत्यक्षं गमनं द्वयोः ॥ २७ ॥**

**जन्तुष्वेकतमेषु** इत्यत्र [२]'एके मुख्यान्यकेवला' इति वचनात् **एकतमेषु** अत्यन्तभिन्नेषु, जन्तुषु । **समास्थितं** नित्यमीप्सितम् । एकं **भावं** सदा भवतीति **भावः** परमात्मा तं यो भावयेत् । तस्य **द्वयोः** ऐहिकपारत्रिकयोः । **गमनं** प्रत्यक्षम् ।

---

१. **'समास्थितः'** इति कुं. पाठः । M7, BORI पृ. १४६४
२. अ.को. तृ. नानार्थवर्गः श्लो. १६

**इन्द्रियाणि च भावाश्च गुणाः सप्तदश स्मृताः ।**
**तेषामष्टादशो देही यः शरीरे स शाश्वतः ॥ २८ ॥**

**इन्द्रियाणि च भावाश्च** इत्यत्र **इन्द्रियाणि** एकादशेन्द्रियाणि । **गुणाः** पञ्चगुणाः भावाः **तेषां** भावनां ज्ञानम् इति **सप्तदश** स्मृताः ।

**अथवा सशरीरास्ते गुणाः सर्वे शरीरिणाम् ।**
**संश्रितास्तद्वियोगे हि सशरीरा न सन्ति ते ॥ २९ ॥**

**अथवा सशरीरास्त** इत्यत्र शरीरिणं संश्रित्य सशरीरास्ते गुणाः सन्ति । तद्वियोगे तु शरीरमपि न । ते गुणाः अपि न सन्ति ।

**अथवा संविभागेन शरीरं पाञ्चभौतिकम् ।**
**एकं[1] च दश चाष्टौ च गुणाः सह शरीरिणाम् ।**
**वर्ष्मणा[2] सह विंशो वा सङ्घातः पाञ्चभौतिकः ॥ ३० ॥**

**एकं च दश च** इत्यत्र **एकं** मनः । **दश** इन्द्रियाणि **अष्टौ** रूपादयः पञ्च गुणाः बुध्यहङ्कारचित्तानि चेत्यष्टौ सर्वे शरीरिणां **गुणाः** अप्रधानभूताः **वर्ष्मणा** देहेन सह **विंशः** ।

**महान् सन्धारयत्येतच्छरीरं वायुना सह ।**
**तस्यास्य[3] भावयुक्तस्य निमित्तं देहभेदने ॥ ३१ ॥**

**महान्** महापुरुषो नारायणः **भावयुक्तस्य** (चेष्टायुक्तस्य) **अस्य** जीवस्य देहभेदने निमित्तं च महानेवेति पूर्वेणान्वयः ।

---

१. 'एकश्च-' इति कुं. पाठः ।; २. 'ऊष्मणा-' इति कुं. पाठः ।
३. 'सत्यप्रभावयुक्तस्य' इति कुं. पाठः । BORI पृ. १४६४

**यथैवोत्पद्यते किञ्चित् पञ्चत्वं गच्छते तथा ।**
**पुण्यपापविनाशान्ते पुण्यपापसमीरितः ।**
**देहं विशति कालेन ततोऽयं कर्मसम्भवम् ॥ ३२ ॥**

**पुण्यपापविनाशान्त** इत्यत्र पूर्वदेहोपचयहेतुभूतपुण्यपापविनाशान्ते उत्तरदेहोपचयहेतुभूतपुण्यपापसमाहितं देहं विशति ।

**पुण्यपापमयं देहं क्षपयन् कर्मसङ्क्षयात् ।**
**क्षीणदेहः पुनर्देही ब्रह्मत्वमुपगच्छति ॥ ३७ ॥**

**ब्रह्मत्वमुपगच्छति** इत्यत्र **ब्रह्मत्वं** बृह 'बृहि वृद्धौ' इति धातोः स्वयोग्य (सुखस्वरूपं) सुखेन पूर्णत्वम् ।

**पुण्यपापक्षयार्थं हि साङ्ख्यज्ञानं विधीयते ।**
**तत्क्षये हृदि पश्यन्ति ब्रह्मभावे परां गतिम् ॥ ३८ ॥**

**ब्रह्मभावे** ब्रह्मसम्बन्धि विज्ञाने सति ।

**॥ इति सप्तोत्तरशततमोऽध्यायः ॥**

## ॥ अथ नवोत्तरशततमोऽध्यायः ॥

**[१]विमुक्ताः सप्तदशभिर्हेतुभूतैश्च पञ्चभिः ।**
**इन्द्रियार्थैर्गुणैश्चैव अष्टाभिश्च पितामह ॥ ४ ॥**

**विमुक्ताः सप्तदशभिः** इत्यत्र **सप्तदशभिः** बुद्ध्या सह द्वादशेन्द्रियैः पञ्चमहाभूतैश्चेति सप्तदशभिः, **पञ्चभिः** इन्द्रियार्थैः, **गुणैः** रूपादिगुणैः,

---

१. कुं. २८५ अध्यायः ।

**अष्टभिः** धनमदकुलमदविद्यामदयौवनमदप्रभुत्वमदपरिजनमदधर्ममद-दानमदा इत्यष्टमदैः ।

**यथाञ्जनमयो वायुः पुनर्मानःशिलं रजः ।**
**अनुप्रविश्य तद्वर्णो दृश्यते रञ्जयन् दिशः ॥ ९ ॥**

**मानःशिलं रज** इत्यत्र मानःशिलं मनःशिला रक्तधातुशिला । तत्सम्बन्धि रजः ।

॥ इति नवोत्तरशततमोऽध्यायः ॥

## ॥ अथ दशोत्तरशततमोऽध्यायः ॥

[1]**यथा चाल्पेन माल्येन वासितं तिलसर्षपम् ।**
**न मुञ्चति स्वकं गन्धं तद्वत्[2] सूक्ष्मस्य दर्शनम् ॥ १४ ॥**

**तद्वत् सूक्ष्मस्य दर्शनम्** इत्यत्र **सूक्ष्मस्य** बहुप्रयत्नरहितस्य **दर्शनं** ज्ञानम् ।

**एवं जातिशतैर्युक्तो गुणैरेव प्रसङ्गिषु ।**
**बुद्ध्या निवर्तते दोषो यत्नेनाभ्यासजेन ह ॥ १६ ॥**

**गुणैरेव प्रसङ्गिषु** इत्यत्र **प्रसङ्गिषु** प्रकृष्टभगवत्सङ्गवत्सु **गुणैः** स्नेहादिगुणैः **जातिशतैः** जन्मशतैः युक्तः ।

**रजस्तमश्च सत्त्वं च विद्धि नारायणात्मकम् ।**
**सोऽश्रमाणां मुखं तात कर्मणस्तत्फलं विदुः ॥ २४ ॥**

१. कुं. २८६ अध्यायः ।
२. BORI पृ. १४७८; **'तथा सूक्ष्मस्य दर्शनम्'** इति कुं. पाठः ।

**विद्धि नारायणात्मकम्** इत्यत्र **नारायणात्मकं** नारायणेन व्याप्तम् । **फलं विदुः** फलदायकं विदुः ।

**श्रोत्रशास्त्रग्रहोपेतः षोडशर्त्विक्क्रतुश्च सः ।**
**पितामहश्च रुद्रश्च सोऽश्विनौ स पुरन्दरः ॥ २७ ॥**

**मित्रोऽथ वरुणश्चैव यमोऽथ धनदस्तथा ।**
**ते पृथग्दर्शनास्तस्य संवदन्ति[१] तथैवताम् ॥ २८ ॥**

**पितामहश्च** इत्यत्र पितामहशब्दवाच्यः स इत्यर्थः । **ते** पितामहादिदेवाः, **तस्य** सकाशात् पृथगिति दर्शनं येषां ते **पृथग्दर्शनाः** भिन्नाः इत्यर्थः । तानपि **तथैव संवदन्ति** तन्निष्ठपितामहादिशब्दान् समाकृष्य तथैव वदन्ति ।

**नानाभूतस्य दैत्येन्द्र तस्यैकत्वं वदन्त्यपि ।**
**जन्तुः पश्यति विज्ञानात्ततः सत्त्वं प्रकाशते ॥ २९ ॥**

**नानाभूतस्य** इत्यत्र नानाप्राणिषु **भूतस्य** आविर्भूतस्य तस्य एकत्वं वदन्ति । स्थानभेदात् तस्य भेदो नास्तीत्यर्थः ।

**संहारविक्षेपसहस्रकोटी-**
**स्तिष्ठन्ति जीवाः प्रचरन्ति चान्ये ।**
**[२]प्रजानिसर्गस्य च पारिमाण्यं**
**वापीसहस्राणि बहूनि दैत्य ॥ ३० ॥**

---

१. BORI पृ. १४८०; Cp; **'संविदन्ति तथैकताम्'** इति कुं. पाठः ।
२. BORI पृ. १४८०; T,$G_{1,3}$; **'प्रजाविसर्गस्य'** इति कुं. पाठः ।

**संहारविक्षेपसहस्रकोटीः** इत्यत्र संहारे सति **विक्षेपः** स्वोदरे निक्षेपः तेषां सहस्रकोटीः प्राप्य केचिज्जीवाः **तिष्ठन्ति** संसरन्त एव तिष्ठन्ति । अन्ये **प्रचरन्ति** प्रकृष्टकर्माण्याचरन्ति । एवम् अनन्तानन्तजीवाः सन्तीति भावः । **प्रजानिसर्गस्य** प्रजासृष्टेः **बहूनि** वापीसहस्राणि **पारिमाण्यं** परिमाणस्य भावः पारिमाण्यं प्रमाणमित्यर्थः । बहुवापीसहस्रेषु यथा अपरिमितं जलं तिष्ठति तथा परमाणुप्रदेशेऽपि अनन्ता जीवाः तिष्ठन्तीत्यर्थः ।

**वाप्यः पुनर्योजनविस्तृतास्ताः**
**क्रोशं च गम्भीरतयाऽवगाढाः ।**
**आयामतः पञ्चशताश्च सर्वाः**
**प्रत्येकशो योजनतः प्रवृद्धाः** ॥ ३१ ॥

वापीनां प्रमाणमाह **वाप्यः पुनर्योजनविस्तृता** इति । अनेन ज्योतिश्चक्रस्थविमानानि उपलक्षयति ।

**वाप्या जलं क्षिपति वालकोट्या**
**त्वह्ना सकृच्चाप्यथ न द्वितीयम् ।**
**तासां क्षये विद्धि परं विसर्गं**
**संहारमेकं च तथा प्रजानाम्** ॥ ३२ ॥

**वाप्या जलम्** इत्यत्र **बालकोट्या** शिंशुमारदेवस्य बालाग्रेण जलं क्षिप्यते। ततोऽन्यत्र निरस्यते। शिंशुमारवालकोट्या ज्योतिश्चक्रस्य पौनःपुन्येन आवर्तने सति स्वविहितायुषोऽवसाने ततोऽन्यत्रापि गच्छति । यथा वापीजलस्थशिंशुमारेण तज्जलं कस्मिंश्चित् काले

उच्चलब्धवालकोट्या अन्यत्र निक्षिप्यते तद्वत् तासां प्रजानां क्षये सति एकस्य संहारं विद्धि। पुनरन्यस्य **विसर्गं** सृष्टिं विद्धि।

**षड्जीववर्णाः परमं प्रमाणं**
**कृष्णो धूम्रो नीलमथापि मध्यम्।**[1]
**रक्तं पुनः सह्यतरं सुखं तु**
**हारिद्रवर्णं सुसुखं च शुक्लम्** ॥ ३३ ॥

**परं तु शुक्लं विमलं विशोकं**
**गतक्लमं सिद्ध्यति दानवेन्द्र** ॥ ३४ ॥

**षड्जीववर्णा** इत्यत्र ईषत्तामस-अतितामस-ईषद्राजस-अति-राजस-ईषत्सात्त्विक-अतिसात्त्विकभेदेन **षट् जीववर्णाः**। जीवानां प्राकृत-देहवर्णाः।

**कृष्णो धूम्रो नीलमथापि मध्यम्** इत्यत्र कृष्णादिवर्णत्रयं **मध्यं** तमोगुणप्रचुरत्वात् बहुदुःखम् ईषत्सुखमिश्रं चेति मध्यम्। सत्त्वगुण-प्रचुरत्वाच्छुक्लगुणं स्तौति – **परं तु शुक्लमित्यादिना**॥

[2]**गतिं च यन् दर्शनमाह देवो**
**गत्वा शुभं दर्शनमेव चापि।**
**गतिः पुनर्वर्णकृता प्रजानां**
**वर्णस्तथा कालकृतोऽसुरेन्द्र** ॥ ३५ ॥

---

१. BORI पृ. १४८१; $M_{1,5,7}$; '**कृष्णो धूम्रो नीलमथास्य**' इति कुं. पाठः।
२. '**गतिं च याम्**' इति कुं. पाठः।

**गतिं च यन्** इत्यत्र **गतिं** मोक्षगतिं **यन्** गच्छन् देही **दर्शनं** साधूनां दर्शनम् एति । शुभं **दर्शनं** वैष्णवसिद्धान्तम् । **वर्णकृता** शुक्ल-वर्णकृता ।

**शतं सहस्राणि चतुर्दशेह**
**परा गतिर्जीवगणस्य दैत्य ।**
**आरोहणं तत्कृतमेव विद्धि**
**स्थानं तथा निःसरणं च तेषाम्** ॥ ३६ ॥

**शतं सहस्राणि** इत्यत्र **शतं** मनुष्याणां, **सहस्राणि** ऋष्यादीनां, **चतुर्दश** गवादीनां, **परा गति** आयुषो गतिः ।

**आरोहणं तत्कृतम्** इत्यत्र **तत्कृतम्** आयुःप्रमाणेन कृतम् ।

**हारिद्रवर्णस्तु प्रजाविसर्गात्**
**सहस्रशस्तिष्ठति सञ्चरन्वै ।**
**अविप्रमुक्तो निरये च दैत्य**
**ततः सहस्राणि दशापराणि** ॥ ४२ ॥

**गतीः सहस्राणि च पञ्च तस्य**
**चत्वारि संवर्तकृतानि चैव ।**
**विमुक्तमेनं निरयाच्च विद्धि**
**सर्वेषु चान्येषु च सम्भवेषु** ॥ ४३ ॥

**ततः सहस्राणि दशापराणि** इत्यत्र मध्यमपापकृतः दश सहस्राणि गतीः प्राप्नुवन्ति, अपराणि जीववृन्दानि सहस्राणि गतीः प्राप्नुवन्ति ।

अतिपापकृतस्तस्य जीवस्य परम् अधिकं च । **संवर्तकृतानि** महाप्रलयकृतानि । **चत्वारि** चतुःकल्पपरिमितवर्षाणि । इदं च शृङ्गग्राहकतयोक्तम् । वस्तुतस्तु स्वयोग्यतानुसारेण इतोऽप्यधिकाः केषाञ्चित् केषाञ्चिदल्पाश्चेति द्रष्टव्यम् ।

**सोऽस्मादथ भ्रश्यति कालयोगात्**
**कृष्णे तले तिष्ठति सर्वकृष्टे ।**
**यथा त्वयं सिद्ध्यति जीवलोक-**
**स्तत्तेऽभिधास्याम्यसुरप्रवीर** ॥ ४५ ॥

**सोऽस्मादथ** इत्यत्र **सः** अयोग्यः जीवः **अस्मात्** मानुष्यात् ।

**दैव्यानि[१] च व्यूहशतानि सप्त**
**रक्तो हरिद्रोऽथ तथैव शुक्लः ।**
**संश्रित्य सन्धावति शुक्लमेत-**
**मष्टावरानर्च्यतमान्स लोकान्** ॥ ४६ ॥

**अष्टौ[२] च षष्टिं च शतानि यानि**
**मनोनुरुद्धान्[३] महाद्युतीनाम् ।**
**शुक्लस्य वर्णस्य परा गतिर्या**
**त्रीण्येव रुद्धानि तृष्णाविरुद्धा[४]** ॥ ४७ ॥

---

१. BORI पृ. १४८३; $T_1$,$G_{1,3}$; **'दैवानि स'** इति कुं. पाठः ।
२. BORI पृ. १४८४; **'अष्टौ च षष्टिं च शतानि चैव'** इति कुं. पाठः ।
३. BORI पृ. १४८४; **'मनोविरुद्धानि'** इति कुं. पाठः ।
४. **'महानुभाव'** इति कुं. पाठः ।

**संहारविक्षेपमनिष्टमेकं**
**चत्वारि चान्यानि वसत्यनीशः ।**
**षष्ठस्य वर्णस्य परा गतिर्या**
**[१]सिद्धा विशुद्धस्य गतक्लमस्य ॥४८॥**

**दैव्यानि च व्यूहशतानि** इत्यत्र दैव्यानि **व्यूहशतानि** वर्षव्यूह-शतानि । सप्त सप्तशतानि वा । शुक्लमेव वर्णं संश्रित्य **महाद्युतीनां** देवानाम् **अष्टावरान्** अष्टभ्यः **अवरान्** नीचान् सप्तर्षिलोकान् सप्तपितृ-लोकान् वा । **अष्टौ** वसुलोकान् **षष्टिम्** एकोनपञ्चाशन्मरुताम् एकादशरुद्राणां च लोकान् **शतानि** शतगणस्थदेवान्तरलोकान् **मनोनुरुद्धान्** मरणकाले मनसा ध्यातान् लोकान् संधावति । **तृष्णा-विरुद्धा** तृष्णायाः अविरुद्धा आकाङ्क्षितसकलफलदात्री स्वर्गादिरूपा । तामेव विशिनष्टि **विशुद्धस्य गतक्लमस्य** । ऋष्यादेर्या सिद्धा सा **षष्ठवर्णस्य** शुक्लवर्णस्य परा गतिः ।

**सप्तोत्तरं तत्र वसत्यनीशः**
**संहारविक्षेपशतं सशेषः ।**
**संहारविक्षेपमनिष्टमेकं**
**चत्वारि चान्यानि वसत्यनीशः ॥ ४९ ॥**

**सप्तोत्तरं** सप्तपातालादिलोकेभ्यः **उत्तरम्** उत्कृष्टं यथा भवति तथा वसति ।

**संहारविक्षेपशतम्** इत्यत्र अनीशः सः दैनन्दिनसंहारविक्षेपशतं यथा वर्तते तथा वसति ।

---

१. **'सिद्धावसिद्धस्य'** इति कुं. पाठः ।

**संहारविक्षेपम्** इत्यत्र संहारविक्षेपाख्यमेकम् अनिष्टम्, अन्यानि चत्वारि सृष्टिः, लिङ्गदेहः, अविद्या, परममोक्षाभावश्चेति चत्वारि अनिष्टानि यथा भवन्ति तथा वसति ।

**स सप्तकृत्वश्च परैति लोकान् संहारविक्षेपकृतप्रवासः ॥५०॥**

**सप्तकृत्व** इत्यनेन बहुवारं मरणं लक्षयति ।

**सप्तैव संहारमुपप्लवानि सम्भाव्य सन्तिष्ठति जीवलोके ।**
**ततोऽव्ययं स्थानमनन्तमेति देवस्य विष्णोरथ ब्रह्मणश्च ।**
**शेषस्य चैवाथ नरस्य चैव देवस्य विष्णोः परमस्य चैव ॥५१॥**

**सप्तैव संहारम्** इत्यत्र जन्म कामक्रोधादयः षट् चेति सप्त उपप्लवानि सम्भाव्येति सम्बन्धः ।

**ततोऽव्ययम्** इत्यत्र **देवस्य विष्णोः** स्वर्गस्थितवामनस्य । **नरस्य** ऋषेः विष्णोर्नारायणस्य वा ।

**[१] प्रजाविसर्गे तु सशेषकालाः**
**स्थानानि स्वान्येव सरन्ति जीवाः ।**
**[२] निःशेषाः वै तत्पदं यान्ति चान्ते**
**सर्वे देवा ये सदृशा मनुष्याः ॥ ५३ ॥**

**प्रजाविसर्गे तु सशेषकाला** इत्यत्र संसारानुभावककालशेषसहिताः सशेषकालाः, **निःशेषाः** सर्वे **अन्ते** परान्तकाले **यान्ति** यास्यन्ति ।

---

१. BORI पृ. १४८५; $D_5$,T,$G_{1,3}$,$M_7$; **'प्रजानिसर्गे तु स शेषकाले'** इति कुं. पाठः ।

२. BORI पृ. १४८५; T,$G_{1,3}$,$M_{1,5,7}$; **'निःशेपतस्तत्पदम्'** इति कुं.पाठः

**ये सदृशा मनुष्या** इत्यत्र **सदृशाः** अपरोक्षज्ञानित्वेन समानाः ।

**स यावदेवास्ति सशेषभुक्तिः**
**प्रजाश्च[1] दिव्याश्च तथैव शुक्ले ।**
**तावत्तदङ्गेषु विशुद्धभावः**
**संयम्य पञ्चेन्द्रियरूपमेतत् ॥ ५५ ॥**

**स यावदेवास्ति** इत्यत्र **सशेषभुक्तिः** भुक्तिशेषसहितः यावदस्ति तथैव **शुक्ले** कुले दिव्याः **प्रजाः** प्रजननानि च यावत्सन्ति तावत् **तदङ्गेषु** तन्निमित्तकदेहेषु ।

**तुरीयांशेन तस्येमं विद्धि केशवमच्युतम् ।**
**तुरीयांशेन ब्रह्माणं तस्य विद्धि महात्मनः ।**
**तुरीयार्धेन लोकांस्त्रीन् भावयत्येव बुद्धिमान् ॥ ६२ ॥**

**तुरीयांशेन ब्रह्माणम्** इत्यत्र तस्य तुरीयांशेन ब्रह्माणं जातं विद्धि ।

**॥ इति शान्तौ मोक्षे एकादशाधिकशततमोऽध्यायः ॥**
**॥ वृत्रगीता समाप्ता ॥**

## ॥ अथ पञ्चदशाधिकशततमोध्यायः ॥

**[2]शीर्षाभितापो नागानां पर्वतानां [3]शिखाजतु ।**
**अपां तु नीलिकां विद्धि निर्मोकं भुजगेषु च ॥ ५२ ॥**

**पर्वतानां शिखाजतु** इत्यत्र शिखायां विद्यमानं जतु लाक्षा ।

---

१. BORI पृ. १४८६; $T_2$; **'प्रजाश्च देव्यौ'** इति कुं. पाठः ।
२. कुं. २८९ अध्यायः ।
३. BORI पृ. १५०८; $T_1$,$G_1$; **'शिलाजतु'** इति कुं. पाठः ।

[१] क्षौरकं सौरभेयीणामूषरं पृथिवीतले ।
पशूनामपि धर्मज्ञ दृष्टिप्रत्यवरोधनम् ॥ ५३ ॥

**क्षौरकं सौरभेयीणाम्** इत्यत्र **क्षौरकं** क्षुरवत् जिह्वाक्रौर्यम् ।

[२] रन्ध्रोद्भवश्च मत्स्यानां शिखोद्भेदश्च बर्हिणाम् ।
नेत्ररोगः कोकिलानां ज्वरः प्रोक्तो महात्मना ॥ ५४ ॥

**रन्ध्रोद्भवश्च मत्स्यानाम्** इत्यत्र **रन्ध्रोद्भवः** नासिकारन्ध्रोद्गमनम् ।

अवीनां पित्तभेदश्च सर्वेषामिति नः श्रुतम् ।
शुकानामपि सर्वेषां हिक्किका प्रोच्यते ज्वरः ॥ ५५ ॥

**हिक्किका प्रोच्यते ज्वर** इत्यत्र **हिक्किका** क्षणे क्षणे मलम् ।

॥ इति पञ्चदशाधिकशततमोऽध्यायः ॥

## ॥ अथ अष्टादशाधिकशततमोध्यायः ॥

[३] यैः कैश्चित्सम्मतो लोके गुणैश्च पुरुषो नृषु ।
भवत्यनपगान् सर्वांस्तान् गुणाँल्लक्षयामहे ॥ ५ ॥

**भवत्यनपगान् सर्वान्** इत्यत्र **भवति** त्वयि ।

शास्त्रं यदि भवेदेकं श्रेयो व्यक्तं भवेत्तदा ।
शास्त्रैश्च बहुभिर्भूयः श्रेयो गुह्यं प्रवेशितम् ॥ १० ॥

**श्रेयो गुह्यं प्रवेशितम्** इत्यत्र **गुह्यं** गुह्यत्वं निगूहितत्वम् ।

---

१. 'खोरकः सौरभेयाणाम्' इति कुं. पाठः ।
२. 'रन्ध्रागतमधाश्वानाम्' इति कुं. पाठः ।; ३. कुं. २९३ अध्यायः ।

**एतस्मात् कारणाच्छ्रेयो गहनं प्रतिभाति मे ।**
**ब्रवीतु भगवांस्तन्मे उपसन्नोऽस्म्यधीहि भो ॥ ११ ॥**

**एतस्मात्** शास्त्राणां सात्त्विकराजसादिभेदेन षड्दर्शनभेदेन बहुत्वात् ।

**अनूच्यमानास्तु पुनस्ते मन्यन्ते महाजनात् ।**
**गुणवत्तरमात्मानं स्वेन मानेन दर्पिताः ॥ २७ ॥**

**अनूच्यमानास्तु पुन** इत्यत्र **अनूच्यमानाः** सर्वैरनुकूलतया उच्यमानाः प्रशस्यमाना इति यावत् ।

**न लोके दीप्यते मूर्खः केवलात्मप्रशंसया ।**
**अपि चापिहितः श्वभ्रे कृतविद्यः प्रकाशते ॥ ३१ ॥**

**अपि चापिहितः श्वभ्र** इत्यत्र **श्वभ्रे** गर्ते **अपिहितः** आच्छादितः । [१] 'रन्ध्रं श्वभ्रं वपा सुषिः' इत्यमरः ।

**[२] अपश्यन्तो नविपयं भुञ्जते विघसाशिनः ।**
**भुञ्जानाश्चान्यविपयान्विपयान्विद्धि कर्मणाम् ॥ ४० ॥**

**अपश्यन्तो नविपयम्** इत्यत्र **नविपयं** विषयविरोधि दुर्विषयम् ।

**यत्रागमयमानानामसत्कारेण पृच्छताम् ।**
**प्रब्रूयात् ब्रह्मणो धर्मं त्यजेत्तं देशमात्मवान् ॥ ४१ ॥**

**यत्रागमयमानानाम्** इत्यत्र **अगमयमानानाम्** अजानताम् ।

---

१ अ. को. प्र. पातालभोगिवर्गः श्लो. २

२ BORI पृ. १५१८; T,G1,2; **'अपश्यन्तोऽन्यविपयम्'** इति कुं. पाठः ।

**[१]येन खड्गं समारूढं कर्मणाऽनुशयी भवेत् ।**
**आदितस्तन्न कर्तव्यमिच्छता भवमात्मनः ॥ ४८ ॥**

**येन खड्गं समारूढम्** इत्यत्र **येन** पुरुषेण आदितः **खड्गं** खड्गवत् स्थितं वैरं **समारूढं** मनसि निहितं कर्मणा **अनुशयी** अनुकूलः **तत्** ईदृशं गूढं कपटं न कर्तव्यम् ।

**यत्र राजा च राज्ञश्च पुरुषाः प्रत्यनन्तराः ।**
**कुटुम्बिनामग्रभुजस्त्यजेत्तद्राष्ट्रमात्मवान् ॥ ४९ ॥**

**प्रत्यनन्तरा** इत्यत्र प्रतिगृहम् **अन्तरम्** अन्तर्गृहमिति शङ्का नास्ति येषां ते प्रत्यनन्तराः ।

॥ इति अष्टादशाधिकशततमोऽध्यायः ॥

## ॥ अथ एकोनविंशत्यधिकशततमोऽध्यायः ॥

**भीष्म उवाच–**

**[२]अत्र ते वर्तयिष्येऽहमितिहासं पुरातनम् ।**
**अरिष्टनेमिना प्रोक्तं सगरायानुपृच्छते ॥ २ ॥**

**अरिष्टनेमिना प्रोक्तम्** इत्यत्र **अरिष्टनेमिः** गरुडः 'अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिवाहुवेम' इति श्रुतिः ।

**प्रस्थं वाहसहस्रेषु [३]वस्त्रार्थं चैव कोटिषु ।**
**प्रासादे मञ्चकं स्थानं यः पश्यति स मुच्यते ॥ ३० ॥**

---

१. **'येन खड्गं समारूढः'** इति कुं. पाठः ।

२. कुं. २९४ अध्यायः ।

३. BORI पृ. १५२५; $D_{3,6,7}$; **'यात्रार्थं चैव कोटिषु'** इति कुं. पाठः ।

**प्रस्थं वाहसहस्रेषु** इत्यत्र वाहसहस्रेषु पोष्यमाणेषु सत्सु पतिततण्डुलादिना स्वस्य प्रस्थं यः पश्येत् । **कोटिषु** जीर्णपटखण्डेषु **वस्त्रार्थं** वस्त्रप्रयोजनं यः पश्येत्, **प्रासादे** देवतागोपुरादिप्रासादे मञ्चकं यः पश्यति ।

**यः पश्यति सुखं[1] तुष्टो नापश्यति विहन्यते ।**
**यश्चाप्यल्पेन सन्तुष्टो लोकेऽस्मिन्मुक्त एव सः ॥ ३२ ॥**

**सुखं तुष्ट** इत्यत्र **पश्यति** स्वात्मानं प्रतिपश्यति सति सुखं तुष्टः अपश्यति सः न विहन्यते ।

**अग्नीषोमाविदं सर्वमिति यश्चानुपश्यति ।**
**न च संस्पृश्यते भावैरद्भुतैर्मुक्त एव सः ॥ ३३ ॥**

**अग्नीपोमाविदम्** इत्यत्र यः इदं सर्वं अग्नीषोमौ **अनु** अनुसृत्य पश्यति । अग्नीषोमयोः यथा कुत्राप्यासक्तिर्नास्ति तथा । सः भावैर्न स्पृश्यते ।

**क्षौमं च कुशचीरं च कौशेयं वल्कलानि च ।**
**[2]अविकं चर्म च समं यस्य स्यान्मुक्त एव सः ॥ ३४ ॥**

**अविकं** कार्पासवस्त्रम् ।

॥ इति एकोनविंशत्यधिकशततमोऽध्यायः ॥
॥ सगरारिष्टनेमिसंवादः समाप्तः ॥

---

१. BORI पृ. १५२५; $D_{4,9}$; **'स सन्तुष्टो नपश्यंश्च विहन्यते'** इति कुं. पाठः ।

२. $K_7$,$D_8$; BORI पृ. १५२६; **'आविकम्'** इति कुं. पाठः ।

## ॥ अथ विंशत्यधिकशततमोध्यायः ॥

इन्द्रोऽथ धनदो राजा यक्षरक्षोधिपः सदा ।[१]
प्रभविष्णुश्च कोशस्य जगतश्च तथा प्रभुः ॥ ८ ॥

**इन्द्रोऽथ धनद** इत्यत्र **इन्द्रः** ऐश्वर्यवान् ।

**आनतेनाथ शूलेन पाणिनामिततेजसा ।**
**पिनाकमिति चोवाच शूलमुग्रायुधः प्रभुः ॥ १८ ॥**

**आनतेनाथ शूलेन** इत्यत्र अमिततेजसा पाणिनेति तृतीया सप्तम्यर्थे । न शुक्रस्य तपसा आनतेन । **उग्रायुधः** शिवः । तदेव शूलं पिनाकं पिनाकाख्यधनुरित्युवाच ।

**स तु प्रविष्ट उशना कोष्ठं माहेश्वरं प्रभुः ।**
**व्यचरच्चापि तत्रासौ महात्मा भृगुनन्दनः ॥ २० ॥**

**कोष्ठं माहेश्वरं प्रभुः** इत्यत्र **कोष्ठम्** उदरम् ।

॥ इति विंशत्यधिकशततमोऽध्यायः ॥

## ॥ अथ एकविंशत्यधिकशततमोध्यायः ॥

**सुकृतासुकृतं कर्म निषेव्य विविधैः क्रमैः ।**[२]
**दशार्धप्रविभक्तानां भूतानां विविधा गतिः ॥ १० ॥**

**दशार्धप्रविभक्तानाम्** इत्यत्र देवर्षिपितृपनरा इति पञ्चधा प्रवृत्तानाम् ।

---

१. कुं. २९५ अध्यायः ।
२. कुं. २९६ अध्यायः ।

**सौवर्णं राजतं चापि यथा भाण्डं निषिच्यते ।**
**तथा निषिच्यते जन्तुः पूर्वकर्मवशानुगः ॥ ११ ॥**

**यथा भाण्डं निषिच्यत** इत्यत्र **निषिच्यते** अग्नौ द्रवीभूतं सत् पुनर्जले निषिच्य क्रियते ।

**दैवं तात न पश्यामि नास्ति दैवस्य साधनम् ।**
**स्वभावतो हि संसिद्धा देवगन्धर्वदानवाः ॥ १३ ॥**

**दैवं तात न पश्यामि** इत्यत्र स्वभावमतिक्रम्य फलदायकं दैवम् ।

**प्रेत्य यान्त्यकृतं कर्म न स्मरन्ति सदा जनाः ।**
**ते वै तस्य फलप्राप्तौ कर्म चापि चतुर्विधम् ॥ १४ ॥**

**ते वै तस्य** इत्यत्र **कर्म** पुण्यपापरूपम् ।

**भीरू राजन्यो ब्राह्मणः सर्वभक्ष्यो**
**[1]वैश्यो नीहारात् हीनवर्णोऽलसश्च ।**
**विद्वांश्चाशीलो वृत्तहीनः कुलीनः**
**सत्याद्विभ्रष्टो ब्राह्मणस्त्री च दुष्टा ॥ २५ ॥**

**वैश्यो नीहारात्** इत्यत्र **नीहारात्** क्रयविक्रयादौ नितरां परद्रव्य-[illegible]णात् । **हीनवर्णः** शूद्रः, **अलसः** सेवाकरणे आलस्ययुक्तः ।

**रागी युक्तः पचमानोऽऽत्महेतोः**
**मूर्खो वक्ता नृपहीनं च राष्ट्रम् ।**

---

१ 'वैश्योऽनीहारवान्' इति कुं. पाठः ।

**एते सर्वे शोच्यतां यान्ति राजन्**
**यश्चायुक्तः स्नेहहीनः प्रजासु ॥ २६ ॥**

**रागी युक्त** इत्यत्र **युक्तः** योगी ।

॥ इति एकविंशत्युत्तरशततमोऽध्यायः ॥

## ॥ अथ द्वाविंशत्यधिकशततमोऽध्यायः ॥

[१]**आयुर्नसुलभं लब्ध्वा नावकर्षेद्विशाम्पते ।**
**उत्कर्षार्थं प्रयतते नरः पुण्येन कर्मणा ॥ ३ ॥**

**आयुर्नसुलभम्** इत्यत्र **नसुलभम्** असुलभम् ।

**किं कष्टमनुपश्यामि फलं पापस्य कर्मणः ।**
**प्रत्यापन्नस्य हि ततो नात्मा तावद्विरोचते ॥ ८ ॥**

**किं कष्टमनुपश्यामि** इत्यत्र पापस्य कर्मणः फलं किमनुपश्यामि । न किञ्चित् । किन्तु कष्टमेवानुपश्यामि । **प्रत्यापन्नस्य** प्रत्यापत्तिमतः ज्ञानिन इत्यर्थः ।

**विरक्तं शोध्यते वस्त्रं न तु कृष्णोपसंहितम् ।**
**प्रयत्नेन मनुष्येन्द्र पापमेवं निबोध मे ॥ १० ॥**

**विरक्तं शोध्यत** इत्यत्र **विरक्तं** विशेषेण रजसा युक्तम् ।

[२]**तथा कामकृता यास्य विहिंसैवापकर्षति ।**
**इत्याहुर्ब्रह्मशास्त्रज्ञा ब्राह्मणा ब्रह्मवादिनः ॥ १३ ॥**

---

१. कुं. २९७ अध्यायः ।

२. **'तथा कामकृतं नास्य विहिंसैवानुकर्षति'** इति कुं. पाठः ।

**तथा कामकृता यास्य** इत्यत्र कामकृता **विहिंसा** विशेषेण हिंसा । **अपकर्षति** अहिंसामेवापकर्षति ।

॥ इति द्वाविंशत्युत्तरशततमोऽध्यायः ॥

## ॥ अथ त्रयोविंशत्युत्तरशततमोऽध्यायः ॥

[1] **मानं त्यक्त्वा यो नरो वृद्धसेवी**
**विद्वान् क्लीबः पश्यति प्रीतियोगात् ।**
**दाक्ष्येण हीनो धर्मयुक्तो न दान्तो**
**लोकेऽस्मिन् वै पूज्यते सद्भिरार्यः ॥ २३ ॥**

**दाक्ष्येण हीन** इत्यत्र **दाक्ष्यं** कलासु कौशल्यम् ।

॥ इति त्रयोविंशत्युत्तरशततमोऽध्यायः ॥

## ॥ अथ चतुर्विंशत्युत्तरशततमोऽध्यायः ॥

[2] **वृत्तिः सकाशात् वर्णेभ्यो**[3] **नित्यं हीनस्य शोभना ।**
**प्रीत्योपनीता निर्दिष्टा धर्मिष्ठान् कुरुते सदा ॥ १ ॥**

**नित्यं हीनस्य शोभना** इत्यत्र **हीनस्य** दरिद्रस्य ब्राह्मणादेः ।

**यथोदयगिरौ द्रव्यं सन्निकर्षेण दीप्यते ।**
**तथा सत्सन्निकर्षेण हीनवर्णोऽपि दीप्यते ॥ ४ ॥**

---

१. कुं. २९८ अध्यायः । ; २. कुं. २९९ अध्यायः ।
३. BORI पृ. १९४३; $G_{1,3}$,$M_{1,5,7}$; **'वर्णेभ्यस्त्रिभ्यो हीनस्य'** इति कुं. पाठः ।

**यथोदयगिरौ** इत्यत्र **द्रव्यं** स्फटिकादि द्रव्यम् । **सन्निकर्षेण** सूर्यादिसन्निकर्षेण ।

**तस्माद्गुणेषु रज्येथा मा दोषेषु कदाचन ।**
**अनित्यमिह मर्त्यानां जीवितं हि चलाचलम् ॥ ६ ॥**

**जीवितं हि चलाचलम्** इत्यत्र शरीरं चलं, चैतन्यम् **अचलम्** ।

**[१] यो हत्वा गोसहस्राणि नृपो दद्यादरक्षिता ।**
**स शब्दमात्रफलभाग्राजा भवति तस्करः ॥ १० ॥**

**यो हत्वा गोसहस्राणि** इत्यत्र **हत्वा** प्रजापीडनं कृत्वा ।

**स्वयम्भूरसृजच्चाग्रे धातारं लोकसत्कृतम् ।**
**धाताऽसृजत्पुत्रमेकं लोकानां धारणे रतम् ॥ ११ ॥**

**स्वयम्भूरसृजत्** इत्यत्र **स्वयम्भूः** नारायणः एकं **पुत्रं** पर्जन्यं धर्मं वा ।

**प्राणसन्तापनिर्दिष्टाः काकिण्योऽपि महाफलाः ।**
**न्यायेनोपार्जिता दत्ताः किमुतान्याः सहस्रशः ॥ १७ ॥**

**प्राणसन्तापनिर्दिष्टा** इत्यत्र कस्यचित् प्राणसन्तापे सति **निर्दिष्टाः** दत्ताः । **काकिण्यः** क्षुद्रधान्यकणाः ।

**अतिक्रामेन्मज्जमानो विविधेन नरः सदा ।**
**तथा प्रयत्नं कुर्वीत यथा मुच्येत संशयात् ॥ २१ ॥**

---

१. BORI पृ. १५४४; $D_{5,7}$,$G_2$; **'यो हत्वा'** इति कुं. पाठः ।

**विविधेन नरः सदा** इत्यत्र **विविधेन** नानापायेन **मज्जमानः** व्यसनार्णवमज्जमानः यथा अतिक्रामेत् ।

॥ इति चतुर्विंशत्युत्तरशततमोऽध्यायः ॥

## ॥ अथ पञ्चविंशत्युत्तरशततमोऽध्यायः ॥

[1]**रङ्गावतरणं चैव तथा रूपोपजीवनम् ।**
**मद्यमांसोपजीव्यं च विक्रयं लोहचर्मणोः ॥ ५ ॥**

**रङ्गावतरणं चैव** इत्यत्र **रङ्गावतरणं** नाट्यरङ्गावतरणम् । वस्त्र-भित्त्यादिषु रङ्गकरणं वा ।

**अपूर्विणा न कर्तव्यं कर्म लोके विगर्हितम् ।**
**कृतपूर्विणस्तु त्यजतो महान् धर्म इति श्रुतिः ॥ ६ ॥**

**अपूर्विणा** पूर्वं तत्कर्माकुर्वन् अपूर्वी तेन ।

**श्रूयन्ते हि पुराणेषु प्रजाधिग्दण्डशासनाः ।**
**दान्ता धर्मप्रधानाश्च न्यायधर्मानुवृत्तिकाः ॥ ८ ॥**

**प्रजाधिग्दण्डशासना** इत्यत्र प्रजासु धिग्दण्डो धिक्काराख्यदण्डो येषां ते प्रजाधिग्दण्डाः । तेषां **शासनाः** शास्तारः ।

**ताः प्राप्य तु स धिग्दण्डो** [2]**नकारणमतोऽभवत् ।**
**ततोऽभ्यगच्छन् देवांश्च ब्राह्मणांश्चावमन्य ह ॥ १४ ॥**

---

१ [illegible]. ३०० अध्यायः ।

२ BORI पृ. १५४८; **'नकारणमतो भवत्'** इति कुं. पाठः ।

**ताः प्राप्य तु स धिग्दण्ड** इत्यत्र **ताः** प्रजाः प्राप्य धिग्दण्डः । **नकारणमतः** कारणं विना **मतः** सम्मतः अभवत् ।

**तेन स्मृताः गगनगाः त्रिपुराः पातिताः क्षितौ ।**[१]
**त्रिधाऽप्येकेन बाणेन देवाप्यायिततेजसा ॥ १६ ॥**

**तेन स्मृता** इत्यत्र **गगनगाः** खेचराः । **त्रिपुराः** पुरत्रयसहिताः ते दैत्याः ।

**तेषामधिपतिस्त्वासीद्भीमो भीमपराक्रमः ।**
**देवतानां भयकरः स हतः शूलपाणिना ॥ १७ ॥**

(भीमपराक्रमः)**भीमः** महादेवः, 'व्योमकेशो भवो भीमः'[२] इत्यमरः । **स हतः शूलपाणिना** इत्यत्र **सः** त्रिपुरवासिनामधिपतिर्दैत्यः ।

**सप्तर्षीणामथोर्ध्वं च विपृथुर्नाम पार्थिवः ।**
**राजानः क्षत्रियाश्चैव मण्डलेषु पृथक्पृथक् ॥ २० ॥**

**सप्तर्षीणामथोर्ध्वम्** इत्यत्र सप्तऋषीणाम् **ऊर्ध्वम्** ऊर्ध्वदेशपर्यन्तम् ऊर्ध्वम् उपरि तदाज्ञामुल्लङ्घ्येति वा ।

**इष्टानिष्टसमायोगे वैरं सौहार्दमेव च ।**
**अथ जातिसहस्राणि बहूनि परिवर्तते ॥ २७ ॥**

**बहूनि परिवर्तत** इत्यत्र **परिवर्तते** परितः वर्तयते ।

---

१. 'तेन स्म ते गगनगाः सपुराः' इति कुं. पाठः ।
२. अ.को. प्र. स्वर्गवर्गः श्लो. ३४

**तस्माद्गुणेषु रज्येथा मा दोषेषु कथञ्चन ।**
**निर्गुणोऽपि हि दुर्बुद्धिरात्मनः सोऽतिरुच्यते[१] ॥ २८ ॥**

**निर्गुणोऽपि हि दुर्बुद्धिः** इत्यत्र सः **आत्मनः** परमात्मनः सकाशात् **अतिः** अतिक्रान्तः उच्यते ।

**धर्मशीलो नरो विद्वानीहकोऽनीहकोऽपि वा ।**
**आत्मभूतः सदा लोके चरेद्भूतान्यहिंसया ॥ ३० ॥**

**आत्मभूत** इत्यत्र **आत्मनि** परमात्मनि **भूतः** जातः ।

**यदा व्यपेतहृल्लेखं मनो भवति तस्य वै ।**
**नानृतं चैव भवति तदा कल्याणमृच्छति ॥ ३१ ॥**

**यदा व्यपेतहृल्लेखम्** इत्यत्र हरतीति **हृत्** दुःखम् । तस्य **लेखा** कला व्यपेता यस्मात्तथोक्तम्। हृदयं लिखति विदारयतीति **हृल्लेखः** कामो वा ।

**॥ इति पञ्चविंशोत्तरशततमोऽध्यायः ॥**

* * *

## ॥ अथ षड्विंशत्युत्तरशततमोऽध्यायः ॥[२]

**ततो लोभाभिभूतात्मा सङ्गाद्वर्धयते जनम् ।**
**पुष्ट्यर्थं चेह देहस्य जनस्यार्थं चिकीर्षति[३] ॥ ७ ॥**

**पुष्ट्यर्थं चेह देहस्य** इत्यत्र **देहस्य** जनस्य स्वजनस्य च पुष्ट्यर्थम् ।

---

१. **'सोऽतिरिच्यते'** इति कुं. पाठः ।

२. कुं. ३०१ अध्यायः ।

३. BORI पृ. १८८१; B४; **'पुष्ट्यर्थं चैव तस्येह'** इति कुं. पाठः ।

[१] **इषुप्रपातमात्रं हि स्पृश्ययोगे रतिः स्मृता ।**
**रसने दर्शने घ्राणे श्रवणे च विशांपते ॥ ३२ ॥**

**इषुप्रपातमात्रं हि** इत्यत्र शरो यावत्पर्यन्तं पतति तावत्पर्यन्तं गत्वा वा **स्पृश्यं** स्पर्शनयोग्यं मनोज्ञकामिनीकायादिकं स्पृशामीति स्पृश्ययोगे । एवमुत्तरत्रापि ।

[२] **तपः फलार्थं सर्वस्य भवन्ति ज्यायसे गुणाः ।**
**धर्मवृद्ध्या च सततं कामार्थाभ्यां न हीयते ॥ ३४ ॥**

**तपः फलार्थम्** इत्यत्र सर्वस्य तपःफलार्थं यदि रतिः तर्हि **ज्यायसः** उत्तमपुरुषस्य ये **गुणाः** वैराग्यादयः ते, भवन्ति ।

**मानिनां कुलजातानां नित्यं शास्त्रार्थचक्षुषाम् ।**
**क्रियाधर्मविमुक्तानामसत्यं[३] संवृतात्मनाम् ॥ ३६ ॥**

**क्रियमाणं यदा कर्म नाशं गच्छति मानुषम् ।**
**तेषां नान्यदृते लोके तपसः कर्म विद्यते ॥ ३७ ॥**

**असत्यं संवृतात्मनाम्** इत्यत्र सम्यग्वृतः **संवृतः** वशीकृतः, **आत्मा** चित्तं येषां ते तथोक्ताः । क्रियमाणं मानुषं **कर्म** पुत्रमित्रकलत्रपोषणादि कर्म **यदा** यस्मान्नाशं गच्छति तस्मादित्युत्तरेण सम्बन्धः ।

**॥ इति श्रीमन्महाभारते षड्विंशत्यधिकशततमोऽध्यायः ॥**

---

१. **'इषुप्रपातमात्रं हि स्पर्शयोगे रतिः स्मृता'** इति कुं. पाठः ।
२. BORI पृ. १५५४; $T_2$,$G_3$,$M_7$,$D_9$; **'ततः फलार्थम्'** इति कुं. पाठः ।
३. **'-शक्त्या संवृतात्मनाम्'** इति कुं. पाठः ।

## ।। अथ सप्तविंशत्युत्तरशततमोऽध्यायः ।।

**[१] यदेतज्जायतेऽपत्यं स एवायमिति श्रुतिः ।**
**कथं ब्राह्मणतो जातो विशेषग्रहणं गतः ।। २ ।।**

**विशेषग्रहणं गत** इत्यत्र ब्राह्मणतो जातः क्षत्रियः । **विशेषग्रहणं** विशेषस्य **ग्रहणं** सङ्ग्रहणं कथं गतः ?

**पितामहश्च मे पूर्वमृश्यशृङ्गश्च काश्यपः ।**
**वेदस्ताण्ड्यः कृपश्चैव काक्षीवत्कमठादयः ।। १४ ।।**

**पितामहश्च मे पूर्वम्** इत्यत्र **मे पितामहः** वसिष्ठः ।

**कर्मतोऽन्यानि गोत्राणि समुत्पन्नानि पार्थिव ।**
**नामधेयानि तपसा तानि च ग्रहणं सताम् ।। १८ ।।**

**तानि च ग्रहणं सताम्** इत्यत्र सतां **ग्रहणं** सङ्ग्रहं प्राप्तानि ।

**न चापि शूद्रः पततीति निश्चयो**
**न चापि संस्कारमिहार्हतीति वा ।**
**श्रुतिप्रयुक्तं न च धर्ममाप्नुते**
**न चास्य धर्मे प्रतिषेधनं कृतम् ।। २७ ।।**

**न चास्य धर्मे प्रतिषेधनं कृतम्** इत्यत्र **अस्य** शूद्रस्य योग्यब्राह्मण-[सेवा]रूपधर्मे ।

**[वै]देहकं शूद्रमुदाहरन्ति द्विजा महाराज श्रुतोपपन्नाः ।**
**[अ]हं हि पश्यामि नरेन्द्र देवं विश्वस्य विष्णुं जगतः प्रधानम् २८**

---

१. [गी]. ३०२ अध्यायः ।

**वैदेहकं शूद्रमुदाहरन्ति** इत्यत्र **वैदेहकः** ब्राह्मण्यां वैश्याज्जातः
[१] 'ब्राह्मण्यां क्षत्रियात् सूतः तस्यां वैदेहको विशः' इत्यमरः ।

॥ इति सप्तविंशत्युत्तरशततमोऽध्यायः ॥

## ॥ अथ अष्टाविंशत्युत्तरशततमोऽध्यायः ॥

**[२] स्निग्धैश्च क्रियमाणानि कर्माणीह निवर्तयेत् ।**
**हिंसात्मकानि सर्वाणि नायुरिच्छेत्परायुषा ॥ ९ ॥**

**नायुरिच्छेत्परायुषा** इत्यत्र परायुषा आयुर्नेच्छेत्, परायुर्नाशयित्वा स्वयं न जीवेदित्यर्थः ।

**गृहस्थानां तु सर्वेषां विनाशमभिकाङ्क्षताम् ।**
**निधनं शोभनं तात पुलिनेषु क्रियावताम् ॥ १० ॥**

**विनाशमभिकाङ्क्षताम्** इत्यत्र व्याध्याद्युपद्रवेण नित्यकर्मकरणासामर्थ्ये विनाशमभिकाङ्क्षतामित्यर्थः । **पुलिनेषु** नदीतीरेषु ।

**आयोजयित्वा क्लेशेन [३] जनं प्राप्य च दुष्कृतम् ।**
**[४] मृत्युना प्राकृतेनेह कर्म कृत्वाऽऽत्मशक्तितः ॥ २४ ॥**

**मृत्युना प्राकृतेनेह** इत्यत्र आत्मशक्तितः **कर्म** पुण्यकर्म कृत्वा प्राकृतेन पूर्वकर्मस्वभावादागतेन मृत्युना यः निधनं व्रजेत् स पुण्यकृदिति पूर्वेणान्वयः । ॥ इति अष्टाविंशत्युत्तरशततमोऽध्यायः ॥

---

१. अ.को. द्वि. शूद्रवर्ग श्लो. ३; २. कुं. २०३ अध्यायः ।
३. BORI पृ. १५६४; T,G2,3,6,M1,5,7: 'जनं प्लाव्य' इति कुं. पाठः ।
४. BORI पृ. १५६४: 'मृत्युनाऽऽत्मकृतेनेह' इति कुं. पाठः ।

## ॥ अथ एकोनत्रिंशत्युत्तरशततमोऽध्यायः ॥

[१] छित्वाऽधर्ममयं पाशं यदा धर्मेऽभिरज्यते ।
[२] दत्त्वाऽभयं कृतं दानं तदा सिद्धिमवाप्नुते ॥ ४ ॥

**दत्त्वाऽभयं कृतं दानम्** इत्यत्र **कृतं** सम्पूर्णं **दानं** दानरूपम् अभयमिति सम्बन्धः ।

**मर्यादायां धर्मसेतुर्निबद्धो नावसीदति ।**
**पुष्टस्रोत इवासक्तः स्फीतो भवति सञ्चयः ॥ ११ ॥**

**मर्यादायां धर्मसेतुः** इत्यत्र **मर्यादायां** रक्षितायाम् । **स्रोतः** स्रोतसि । **आसक्तः** पुष्टः । सञ्चय इव स्थिरो भवति ।

**यथा तिलानामिह पुण्यसंश्रयात्**
**पृथक्पृथग्याति गुणोऽपिसाम्यताम्[३] ।**
**तथा नराणां भुवि भावितात्मनां**
**यथाश्रयं सत्त्वगुणः प्रवर्तते ॥ १३ ॥**

**पृथक्पृथग्याति गुणोऽपि साम्यताम्** इत्यत्र पृथक् पृथक् विद्यमानः गुणः स्नेहाख्यगुणः । **साम्यताम्** एकप्रकारतां याति ।

[४] **सङ्घातवान् मर्त्यलोकः परस्परमपाश्रितः ।**
**कदलीगर्भनिःसारो नौरिवाप्सु निमज्जति ॥ १६ ॥**

---

१ कुं. ३०४ अध्यायः ।

२ 'दत्त्वाऽभयकृतम्' इति कुं.पाठः । BORI पृ. १५६७

३ BORI पृ. १५६९; G3,T,M1.5.7; 'गुणोऽतिसाम्यताम्' इति कुं. पाठः

४ BORI पृ. १५६९; 'सङ्घातवन्' इति कुं. पाठः ।

**सङ्घातवान् मर्त्यलोक** इत्यत्र **सङ्घातवान्** पुत्रमित्रादिसमूहवान् ।

**अधस्तिर्यग्गतिं चैव स्वर्गे चैव परां गतिम् ।**
**[१]प्राप्नोति स्वकृतैरात्मा प्राज्ञस्येहेतरस्य च ॥ २४ ॥**

**प्राप्नोति स्वकृतैः** इत्यत्र प्राज्ञस्य **आत्मा** स्वरूपं **स्वकृतैः** पुण्यैः स्वर्गे परां गतिं प्राप्नोति । **इतरस्य** अप्राज्ञस्य **आत्मा** स्वरूपं **स्वकृतैः** पापैः अधः तिर्यक् च गतिं प्राप्नोति ।

**मृन्मये [२]भाजनेऽपक्के यथा वै नश्यति द्रवः ।**
**तथा शरीरं तपसातप्तं विषयमश्नुते ॥ २५ ॥**

**तथा शरीरम्** इत्यत्र अतप्तं चेत् विषयमश्नुते, तप्तं चेत् विषयद्रवं मुञ्चतीति दृष्टान्तानुसारी दार्ष्टान्तो द्रष्टव्यः ।

**विषयानश्नुते यस्तु न स भोक्ष्यत्यसंशयम् ।**
**यस्तु भोगांस्त्यजेदात्मा स वै भोक्तुं व्यवस्यति ॥ २६ ॥**

**न स भोक्ष्यत्यसंशयम्** इत्यत्र **न स भोक्ष्यति** परत्र भोगान्न भोक्ष्यति ।

**वणिग्यथा समुद्राद्वै यथार्थं लभते धनम् ।**
**तथा मर्त्यार्णवाज्जन्तोः कर्मविज्ञानतो गतिः ॥ २८ ॥**

**यथार्थं लभते धनम्** इत्यत्र यथार्थं स्वमूलधनमनतिक्रम्य ।

**[३]न ह्यन्यतीरमासाद्य पुनस्तर्तुं व्यवस्यति ।**
**दुर्लभो दृश्यते ह्यस्य विनिपातो महार्णवे ॥ ३२ ॥**

---

१. BORI पृ. १५७०; **'प्राप्नोति सुकृतैरात्मा'** इति कुं. पाठः ।
२. **'भाजने पक्के'** इति कुं. पाठः । ; ३. **'न ह्यन्यत्तीरमासाद्य'** इति कुं. पाठः ।

न ह्यन्यतीरमासाद्य इत्यत्र **अन्यतीरम्** अपरपारादर्वाचीनपारम् ।

**यथा भावावसन्ना हि नौर्महाम्भसि तन्तुना ।**
**तथा मनोभियोगाद्धि[1] शरीरं प्रचिकीर्षति ॥ ३३ ॥**

**तथा मनोभियोगात्** इत्यत्र मनः **अभियोगात्** स्नेहात् ।

**यथा समुद्रमभितः संश्रिताः सरितोऽपराः ।**
**तथाऽन्या प्रकृतिर्योगादभिसंश्रियते सदा ॥ ३४ ॥**

**अन्या** मूलप्रकृतेरन्या । **प्रकृतिः** शरीररूपा प्रकृतिः ।

**माता पुत्रः पिता भ्राता भार्या मित्रजनस्तथा ।**
**अष्टापदपदस्थाने लाक्षामुद्रेव लक्ष्यते ॥ ४० ॥**

**अष्टापदपदस्थान** इत्यत्र **अष्टापदपदस्थाने** सुवर्णाश्रयग्रन्थिस्थाने ।

**सर्वाणि कर्माणि पुरा कृतानि**
**शुभाशुभान्यात्मनो यान्ति जन्तोः ।**
**उपस्थितं कर्मफलं विदित्वा**
**बुद्धिं तथा चोदयतेऽन्तरात्मा ॥ ४१ ॥**

**अन्तरात्मा** परमात्मा ।

**अद्वैधमनसं युक्तं शूरं धीरं विपश्चितम् ।**
**न श्रीः सन्त्यजते नित्यमादित्यमिव रश्मयः ॥ ४३ ॥**

**अद्वैधमनसं द्वैधं** संशयं तद्रहितमनसम् ।

---

१. K7; BORI पृ. १५७२; **'यथा मनोभियोगाद्धे'** इति कुं. पाठः ।

**मृत्युश्चापरिहारवान् समगतिः कालेन विच्छेदिना।**
**दारोच्छूनमिवाश्मसारविहितं कर्मान्तिकं प्रापयेत्[1]   ॥ ४५ ॥**

**दारोच्छूनमिव** इत्यत्र **अश्मसारेण** अयसा विहितम्। जलूका-कारेण द्विमुखतया कृतं दारोः फलका द्वयोच्छूनं निबद्धं यन्त्रमिव।

**स्वरूपतामात्मकृतं च विस्तरं**
**कुलान्वयं द्रव्यसमृद्धिसञ्चयम्।**
**नरो हि सर्वो लभते यथाकृतं**
**शुभाशुभेनात्मकृतेन कर्मणा   ॥ ४६ ॥**

**स्वरूपताम्** इत्यत्र **स्वरूपतां** स्वयोग्यरूपवत्ताम् आत्मकृतं **विस्तरं** भाग्यविस्तरं दारिद्र्यविस्तरं वा **कुलान्वयं** दुष्कुलसम्बन्धं सत्कुल-सम्बन्धं वा, **द्रव्यसमृद्धिसञ्चयं द्रव्यं** धनकनकादिद्रव्यं च।

॥ इति एकोनत्रिंशत्युत्तरशततमोऽध्यायः ॥
॥ पराशरगीता समाप्ता ॥

## ॥ अथ त्रिंशोत्तरशततमोऽध्यायः ॥

**[2]श्रुतोऽसि नः पण्डितो धीरवादी**
**[3]साधुः शब्दः पततस्ते पत्रत्रिन्।**
**किं मन्यसे श्रेष्ठतमं द्विज त्वं**
**कस्मिन् मनस्ते रमते महात्मन्   ॥ ५ ॥**

---

१. **'दारोश्चूर्णम्'** इति कुं. पाठः।; २. कुं. ३०५ **अध्यायः।**
३. **'साधुः शब्दः चरते ते पत्रत्रिन्'** इति कुं. पाठः।

**श्रुतोऽसि नः पण्डितः धीरवादी** इत्यत्र हे पण्डित धीर, **पतत्रिन्** हंस त्वं वादी असि । पततस्ते साधुः शब्दः **नः** अस्माभिः श्रुत इति योजना ।

**वाचो वेगं मनसः क्रोधवेगं**
**विवित्सा[1]वेगमुदरोपस्थवेगम् ।**
**एतान्वेगान्यो विपहेदुदीर्णांस्तं**
**मन्येऽहं ब्राह्मणं वै मुनिं च ॥ १४ ॥**

**विवित्सावेगम्** वेत्तुमिच्छा **विवित्सा** विचार इत्यर्थः । स्वपाण्डित्य-प्रकटनार्थं कुत्सितविचार इति यावत् ।

**अक्रोधनः क्रुध्यतां वै विशिष्ट-**
**स्तथा तितिक्षुरतितिक्षोर्विशिष्टः ।**
**अमानुषान्मानुषो वै विशिष्ट-**
**स्तथाज्ञानाज्ज्ञानवान्वै विशिष्टः ॥ १५ ॥**

**अमानुषान्मानुषो वै विशिष्ट** इत्यत्र **अमानुषात्** पश्वादेः ।

**आक्रुश्यमानो न क्रोशेन्मन्युरेवं तितिक्षतः ।**
**आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति ॥ १६ ॥**

**आक्रुश्यमानो न क्रोशेन्मन्युरेवं तितिक्षत** इत्यत्र तितिक्षतः पुरुषस्य **मन्युः** तृणीकृतो मन्युः सः आक्रोष्टारमेव निर्दहति । अस्य सुकृतं तितिक्षावानेव विन्दतीति योजना ।

॥ इति हंसगीता नाम त्रिंशदुत्तरशततमोऽध्यायः ॥

---

१. BORI पृ. १५७७; 'विधित्सावेगमुदरोपस्थवेगम्' इति कुं. पाठः ।

## ।। अथ एकत्रिंशोत्तरशततमोऽध्यायः ।।

साङ्ख्याः[1] साङ्ख्यं प्रशंसन्ति योगा योगं द्विजातयः ।
वदन्ति कारणं श्रेष्ठं भावनाद्भावनाय[2] वै ।। २ ।।

**योगाः** योगस्थाः ।

**भावनाद्भावनाय वै** इत्यत्र **भावनात्**, इहलोके **भावनात्** ध्यानात् । **भावनाय** परलोके भावनाय ।

अनीश्वरः कथं मुच्येदित्येवं शत्रुसूदन ।
वदन्ति कारणैः श्रैष्ठ्यं योगाः सम्यङ्मनीषिणः ।। ३ ।।

**अनीश्वरः** ज्ञानादिसामर्थ्यरहितः ।

तुल्यं शौचं तयोरेकं दया भूतेषु चानघ ।
व्रतानां धारणं तुल्यं दर्शनं न समं तयोः ।
तयोस्तु दर्शनं सम्यक्सूक्ष्माभावे प्रसज्यते ।। ९ ।।

**दर्शनं न समं तयोः** इत्यत्र दृश्यत इति **दर्शनं** फलम् ।

यथैव[3] वागुरां छित्वा बलवन्तो यथा मृगाः ।
प्राप्नुयुर्विमलं मार्गं विमुक्ताः सर्वबन्धनैः ।। १३ ।।

**यथैव वागुरां छित्वा** इत्यत्र **वागुरां** मृगग्रहणाय कृतं जालम् । [4]'वागुरा मृगबन्धिनी'त्यमरः ।

---

१. कुं. ३०६ अध्यायः । ; २. **'स्वपक्षोद्भावनाय वै'** इति कुं. पाठः ।
३. BORI पृ. १५८४; $D_{5,7}$ ; **'तथैव'** इति कुं. पाठः ।
४. अ.को. द्वि. शूद्रवर्गः श्लो. २६

**कर्मजैर्बन्धनैर्बद्धास्तद्वद्योगाः परन्तप ।**
**अबला वै विनश्यन्ति मुच्यन्ते च बलान्विताः ॥ १८ ॥**

**तद्वद्योगा** इत्यत्र **योगाः** योगवन्तः ।

**तदेव च महास्रोतो विष्टम्भयति वारणः ।**
**तद्वद्योगबलं लब्ध्वा व्यूहते विषयान् बहून् ॥ २३ ॥**

**तद्वद्योगबलं लब्ध्वा व्यूहत** इत्यत्र **व्यूहते**, विरोधितया तर्कयति ।

**विशन्ति चावशाः पार्थ योगाद्योगबलान्विताः ।**
**प्रजापतीन् ऋषीन् देवान् महाभूतानि चेश्वराः ॥ २४ ॥**

**विशन्ति चावशाः पार्थ** इत्यत्र **अवशाः** विष्णुवशाः । मृत्योरवशा वा ।

**बलस्थस्य हि योगस्य बन्धनेशस्य पार्थिव ।**
**विमोक्षे प्रभविष्णुत्वमुपपन्नमसंशयम् ॥ २८ ॥**

**बन्धनेशस्य पार्थिव** इत्यत्र **बन्धने** करणानां निग्रहे, **ईशस्य** समर्थस्य । **विमोक्षे प्रभविष्णुत्वम्** इत्यत्र **विमोक्षः** विषयाणां मोचनं तस्मिन् **प्रभविष्णुत्वं** समर्थत्वम् ।

**[१] स्वरतिं दुर्जयां चैव घोरां तृष्णां च पार्थिव ।**
**स्पर्शं निद्रां तथा तन्द्रीं दुर्जयां नृपसत्तम ॥ ४८ ॥**

**स्वरतिं दुर्जयां चैव** इत्यत्र स्वस्मिन् रतिं स्वीये स्वीयेषु च रतिं वर्जित्वा ।

---

१. **'अरतिम्'** इति कुं. पाठः ।

**[१] परं महद्ब्रह्म महन्महात्मन्**

**ब्रह्माणमीशं वरदं च विष्णुम् ।**

**भवं च धर्मं च षडाननं च**

**षड्ब्रह्मपुत्रांश्च महानुभावान् ॥ ५९ ॥**

**परं महद्ब्रह्म महन्महात्मन्** इत्यत्र हे **महात्मन्** युधिष्ठिर ! **परम्** उत्तमं तत् योगकौशलाख्यं **ब्रह्म** वेदः । योगस्य वेदसारत्वात् वेदत्वम् । अधुना योगाभ्यासवतां सर्वत्राव्याहता गतिरित्याह **ब्रह्माणमित्यादिना।**

**नागान्नगान् यक्षगणान् दिशश्च**

**गन्धर्वसङ्घान् पुरुषान् स्त्रियश्च ।**

**परात्परं प्राप्य महान्महात्मा**

**विशेत योगी न चिराद्विमुक्तः ॥ ६१ ॥**

**परात्परं प्राप्य** इत्यत्र **परात्परं** महद् योगकौशलम् प्राप्य **महात्मा** योगी न चिराद् विमुक्तः सन् इमान् सर्वान् यथाकामं विशेत ।

**कथा च येयं नृपते प्रसक्ता देवे [२] महावीर्यतमे शुभेयम् ।**

**योगी स सर्वानभिभूय मर्त्यान् नारायणात्मा कुरुते महात्मा ६२**

**नारायणात्मा कुरुते महात्मा** इत्यत्र नारायणे **आत्मा** चित्तं यस्य स तथोक्तः । योगं **कुरुत** इति योजना ।

॥ इति योगविधिर्नाम एकत्रिंशोत्तरशततमोऽध्यायः ॥

---

१. **'परं हि तद्ब्रह्ममयं महात्मन्'** इति कुं. पाठः ।

२. BORI पृ. १५९.१;T,G$_{1,3,6}$; **'महात्रीर्यतमौ'** इति कुं. पाठः ।

## ।। अथ द्वात्रिंशत्युत्तरशततमोऽध्यायः ।।

सत्त्वं[1] दशगुणं ज्ञात्वा रजो नवगुणं तथा ।
तमश्चाष्टगुणं ज्ञात्वा बुद्धिं सप्तगुणां तथा ।। १४ ।।

षड्गुणं च मनो ज्ञात्वा नभः पञ्चगुणं तथा ।
बुद्धिं चतुर्गुणां ज्ञात्वा तमश्च त्रिगुणं तथा ।। १५ ।।

द्विगुणं च रजो ज्ञात्वा सत्त्वमेकगुणं पुनः ।
सर्गे[2] विज्ञाय तत्वेन प्रलये प्रेक्ष्य चात्मनः ।। १६ ।।

**सत्त्वं दशगुणं ज्ञात्वा** इत्यत्र सत्त्वगुणस्य तत्त्वज्ञानमेकमसाधारणगुणः । तदुपयुक्ताः शमदमविषयोपरमद्वन्द्वसहिष्णुता चित्तसमाधानं गुरूपसत्तिः श्रवणं मननं ध्यानं चेति नव गुणाः । एवम् अङ्गाङ्गिभ्यां सह दश गुणाः । रजसोऽपि संशयोऽसाधारणगुणः । तदुपयुक्ताः विशेषज्ञानं कदाचित् सत्सङ्गमः, कदाचिद्दुस्सङ्गमः, कदाचित् सच्छास्त्रश्रवणं, कदाचिद् दुःशास्त्रश्रवणं विषयाभिलाषः, धनलौल्यं, दारापत्यादिलौल्यं चेत्यष्टौ गुणाः । एवम् अङ्गाङ्गिभ्यां सह नव गुणाः । तमसश्च मिथ्याज्ञानमसाधारणगुणः । तदुपयुक्ताः विष्णुद्वेषः असत्सेवा दुःशास्त्रश्रवणं क्रोधः प्रमादः निद्रा आलस्यं चेति सप्त । एवम् अङ्गाङ्गिभ्यां सह अष्ट गुणाः । बुद्धेश्च निश्चयोऽसाधारणगुणः । षडिन्द्रियजन्यं षड्विधं ज्ञानं साधारणगुणः । यद्यपि ज्ञानं मानसमेव । तथापि तद्विषयान् परीक्ष्य निर्णेतुं परकीयवराय परीक्षक इव बुद्धिरपि तान्युपादत्ते । अतः सप्तगुणता । मनसश्च स्मरणमसाधारणगुणः ।

---

१. कुं. ३०७ अध्यायः । ; २. 'सर्गम्' इति कुं. पाठः ।

पञ्चेन्द्रियजन्यं पञ्चविधं ज्ञानं साधारणगुणः । प्रलयकालेऽपि मनसश्च श्रोत्रादिभ्यो निवृत्तिः तज्जन्यज्ञानोपरमः । अत एव बाह्यविषयाननुसन्धानं स्वजन्यस्मृतेरुपरमः स्वारम्भकावयवापचयश्चेति पञ्च गुणाः । बुद्धेस्तु बाह्यज्ञानानुसन्धानं मानसज्ञानानुसन्धानं स्वजन्यव्यवसायोपरमः स्वात्मोपचायकावयवविनाशश्चेति चत्वारो गुणाः । तमसश्च बाह्यतत्त्वज्ञानाप्रतिबन्धकतया बाह्यमिथ्याज्ञानानुत्पादकत्वं स्वशक्तिह्रासश्चेति त्रयो गुणाः । रजसश्च स्वजन्यसंशयानाधायकत्वं स्वशक्तिह्रासश्चेति द्वौ गुणौ । सत्त्वस्य च सार्वत्रिकशक्तिह्रास एको गुणः । प्रलयेऽपि मुख्यप्राणचेतसि तत्त्वज्ञानोज्जृम्भणात् सत्त्वस्य न स्वगुणक्षयः । नापि सर्वथा शक्तिह्रासः । अत एकगुणमित्युक्तम् । सर्वत्र प्रागुक्ततत्तद्गुणानां प्रलये जगदभावेन अप्रसक्तत्वात् न प्रत्येकं निषेधः । मनोबुध्योर्मूलकारणीभूतापचयान्नाशोक्त्या तमोरजस्सत्त्वगुणेषु शक्तिह्रासोक्त्या च न पृथगुक्तिः ।

**ज्ञानविज्ञानसम्पन्नाः कारणैर्भाविताः शुभाः ।**
**प्राप्नुवन्ति शुभं मोक्षं सूक्ष्मा इव नभः परम्** ॥ १७ ॥

**सूक्ष्मा इव नभः परम्** इत्यत्र **सूक्ष्माः** त्रसरेणवः । वायवो वा ।

**अपां फेनोपमं लोकं [1]विष्णोर्मायाशतैः कृतम् ।**
**चित्रभित्तिप्रतीकाशं नलसारमनर्थकम्** ॥ ५९ ॥

**विष्णोर्मायाशतैः कृतम्** इत्यत्र माया, 'माङ् माने' इति धातोः, रचनाकौशलम् । अन्यथाभित्तिचित्रदृष्टान्तायोगात् ।

---

१. BORI पृ. १६००;$G_2$,$D_{5,7}$; '**विष्णोर्मायाशतैश्चितम्**' इति कुं. पाठः ।

**नलसारमनर्थकम्** इत्यत्र **नलं** तृणविशेषः वंशो वा । तद्वत् बहिः-सरतया प्रतीयमानम् ।

**तत्र तान् सुकृतीन् साङ्ख्यान् सूर्यो वहति रश्मिभिः ।**
**पद्मतन्तुवदाविश्य प्रसह्य विषयान्नृप ॥ ७३ ॥**

**विपयात्** स्वविषयात् ।

**सत्त्वं वहति शुद्धात्मा परं नारायणं प्रभुम् ।**
**प्रभुर्वहति शुद्धात्मा परमात्मानमात्मना ॥ ७७ ॥**

**सत्त्वं वहति शुद्धात्मा** इत्यत्र 'वह प्रापणे' इति धातोः **वहति** प्रापयति ।

**परमात्मानमासाद्य तद्भूता यतयोऽमलाः ।**
**अमृतत्वाय कल्पन्ते न निवर्तन्ति वा विभो ॥ ७८ ॥**

**तद्भूता यतयोऽमला** इत्यत्र **तद्भूताः** तस्मिन् परमात्माभिधे नारायणे ।

**स्थानमुत्तममासाद्य भगवन्तं स्थिरव्रताः ।**
**आजन्ममरणं वा ते स्मरन्त्युत न वानघ ॥ ८० ॥**

अनेन स्मरन्ति न वेति प्रश्नस्य स्मरन्तीत्युत्तरम् । गुरोरनुकूलशिष्यवत् इन्द्रियाणां स्ववशत्वात् स्मरणेऽपि तस्मादुत्तीर्णत्वात् । तदुत्तरस्मरणाद् हर्ष एव भवति न तु क्लेश इति धर्मराजस्य हार्दी शङ्कापि निरस्तेति फलितम् ।

शिष्टं[1] तत्र मनः कर्माणीन्द्रियाणि च भारत ।
अनुयान्ति यथाकालं गुरोः सन्देशकारिणः ॥ ९८ ॥

**शिष्टं तत्र मनः कर्माणीन्द्रियाणि च भारत** इत्यत्र **शिष्टं** स्वस्वरूपभूतं मनः चिन्मात्रदेहेनावशिष्टम् अत एव **शिष्टं** विशिष्टम् उत्तमं **तत्र** मुक्तौ **मनः** स्वरूपभूतं मनः **कर्माणि** स्वरूपभूतकर्मेन्द्रियाणि **इन्द्रियाणि** स्वरूपभूतज्ञानेन्द्रियाणि च यथाकामम् **अनुयान्ति** अनुकूलतयैव यान्ति । न तु कदापि दुःखं प्रापयन्ति । अतः परमेश्वरवत् स्वयोग्यसकलज्ञानेऽपि तेषां न दोष इति भावः ।

अमूर्तेस्तस्य कौन्तेय साङ्ख्यं मूर्तिरिति श्रुतिः ।
अभिज्ञानानि तस्याहुर्मतं हि भरतर्षभ ॥ १०६ ॥

**अमूर्तेस्तस्य कौन्तेय** इत्यत्र **अमूर्तेः** प्राकृतमूर्तिरहितस्य । **साङ्ख्यं** साङ्ख्यज्ञानं, **मूर्तिः** करचरणाद्याकारवान् देहः ।

**अभिज्ञानानि तस्याहुः** इत्यत्र **अभिज्ञानानि** ज्ञापकचिन्हानि । '[2]अङ्कश्चिह्नमभिज्ञानम्' इति हलः ।

विपर्यये तस्य हि पार्थ देवान्
गच्छन्ति साङ्ख्याः सततं सुखेन ।
तांश्चानुसञ्चार्य ततः कृतार्थाः
पतन्ति विप्रेषु यतेषु भूयः ॥ १११ ॥

---

१. BORI पृ. १६०५; M5; **'शिष्टं तत्र मनस्तात इन्द्रियाणि च भारत । आगच्छन्ति यथाकालं गुरोः सन्देशकारिणः'** इति कुं. पाठः ।
२. ह.को. १/४५

**विपर्यये तस्य हि पार्थ देवान्** इत्यत्र **विपर्यये** मोक्षविपरीते प्रवृत्ति-कर्मणि सति ।

[१] **तेषां गतिर्यद्गमनं हि दृष्टं**
**नार्वाग्गतिः पापकृताधिवासः ।**
**न चाबुधानामपि ते द्विजातयो**
**ये ज्ञानमेतन्नृपतेऽनुरक्ताः ॥ ११३ ॥**

**तेषां गतिर्यद्गमनं हि दृष्टम्** इत्यत्र **दृष्टं** शास्त्रेषु दृष्टम् । **यत् गमनं** येषां देवानां गमनम् । यस्य मोक्षस्य गमनं च **तेषां** साङ्ख्यानां गतिः ।

**॥ इति द्वात्रिंशोत्तरशततमोऽध्यायः ॥**

## ॥ अथ त्रयस्त्रिंशोत्तरशततमोऽध्यायः ॥

[२] **युगं द्वादशसाहस्रं कल्पं विद्धि चतुर्युगम् ।**
**दशकल्पशतावृत्तमहस्तद्ब्राह्ममुच्यते ॥ १४ ॥**

**युगं द्वादशसाहस्रं कल्पं विद्धि चतुर्युगम्** इत्यत्र युगं द्वादश-साहस्रं युगानां सम्बन्धि यद्देवानां द्वादशवर्षसाहस्रं चतुर्युगाख्यं कल्पं विद्धि ।

**मूर्तिमन्तममूर्तात्मा विश्वं शम्भुः स्वयम्भुवम् ।**
**अणिमा लघिमा प्राप्तिरीशानं ज्योतिरव्ययम् ॥ १६ ॥**

**विश्वं शम्भुः स्वयम्भुवम्** इत्यत्र **शम्भुः** नारायणः ।

---

१. **'तेषां न तिर्यग्गमनम्'** इति कुं. पाठः ।
२. कुं. **३०८ अध्यायः ।**

**अव्यक्ताद्व्यक्तमापन्नं विद्यासर्गं वदन्ति तम् ।**
**महान्तं चाप्यहङ्कारमविद्यासर्गमेव च ॥ २२ ॥**

**अव्यक्तात्** व्यक्तं महत्तत्वम् । गुरुत्वेन तं विद्यासर्गं वदन्ति ।

**अपरश्च परश्चैव समुत्पन्नौ तथैकतः ।**
**विद्याविद्येति विख्याते श्रुतिशास्त्रार्थचिन्तकैः ॥ २३ ॥**

**अपरश्च परश्चैव** इत्यत्र **परः** महत्तत्त्वाभिमानी ब्रह्मा । **अपरः** अहङ्कारतत्त्वाभिमानी रुद्रः । **एकतः** एकस्मात् नारायणात् ब्रह्मान्तर्यामी हरिरेव तं निमित्तीकृत्य सृजतीति सूचनाय एकत इत्युक्तम् ।

**भूतसर्गमहङ्कारात्तृतीयं विद्धि पार्थिव ।**
**अहङ्कारेषु सर्वेषु चतुर्थं विद्धि वैकृतम् ॥ २४ ॥**

**अहङ्कारेषु सर्वेषु** इत्यत्र **सर्वेषु** वैकारिकतैजसतामसाहङ्कारेषु, वैकारिकतैजसाभ्यां यत्कृतं तच्चतुर्थं विद्धि ।

**एवं युगपदुत्पन्नं दशवर्गमसंशयम् ।**
**पञ्चमं विद्धि राजेन्द्र भौतिकं सर्गमर्थवत् ॥ २६ ॥**

**भौतिकम्** ओषधिवनस्पत्यादिकम् ।

**एषा तत्त्वचतुर्विंशत्सर्वाकृतिषु वर्तते ।**
**यां ज्ञात्वा नाभिशोचन्ति ब्राह्मणास्तत्त्वदर्शिनः ॥ २९ ॥**

**एषा तत्त्वचतुर्विंशत्** इत्यत्र भौतिकमेकं, पञ्चभूतानि पञ्चतन्मात्राः दशेन्द्रियाणि मनः अहङ्कारं महत्तत्वं चेति इयमेका विवक्षा । बुध्या सह चतुर्विंशतितत्त्वानीति वस्तुस्थितिः ।

**एवमेष महानात्मा सर्गप्रलयकोविदः ।**
**विकुर्वाणः प्रकृतिमानभिमन्यत्यबुद्धिमान्** ॥ ४२ ॥
**[१] सहवासात् निवासात्मा नान्योऽहमिति मन्यते ।**
**[२] योऽयं सोऽहमित्युक्त्वा गुणानेवानुवर्तते** ॥ ४४ ॥

**विकुर्वाणः प्रकृतिमान्** इत्यत्र **प्रकृतिमान्** जीवः । **सहवासात् निवासात्मा** देहे देहे निवसनशीलः जीवः क्षीरेण सह नीरस्येव एकस्मिन् देहे ईश्वरेण सहवासात् **अहं न अन्यः** ईश्वरेण सह अन्यः नेति मन्यते **योऽयं** जीवः, **सः** गुणातीतः परमात्मा अहमित्युक्त्वा पुनः **गुणान्** सत्त्वादिगुणान् **अनु** अनुसृत्य वर्तते, तद्वशः तिष्ठतीत्यर्थः । सः विरुद्धवादीति शेषः ।

**निष्कैवल्येन पापेन तिर्यग्योनिमवाप्नुयात् ।**
**पुण्यपापेन मानुष्यं पुण्येनैकेन देवताः** ॥ ४८ ॥

**निष्कैवल्येन पापेन** इत्यत्र नितरां केवलभावो यस्य । तेन केवलपापेनेत्यर्थः ।

**एवमव्यक्तविषयं क्षरमाहुर्मनीषिणः ।**
**[३] पञ्चविंशतिगो योऽयं ज्ञानादेव प्रवर्तते** ॥ ४९ ॥

**पञ्चविंशतिगो योऽयं ज्ञानादेव प्रवर्तत** इत्यत्र 'सः अक्षरः' इति योग्यपदाध्याहारः । ॥ इति त्रयस्त्रिंशोत्तरशततमोऽध्यायः ॥

---

१. **'सहवासनिवासात्मा'** इति कुं.पाठः ।
२. BORI पृ. १६१४; $T_2$,$G_1$; **'योऽहं सोऽहमिति ह्युक्त्वा'** इति कुं.पाठः ।
३. **'पञ्चविंशतिमो'** इति कुं. पाठः ।

## ॥ अथ चतुस्त्रिंशोत्तरशततमोऽध्यायः ॥

**शाणीबालपरीधानो[1] व्याघ्रचर्मपरिच्छदः ।**
**सिंहचर्मपरीधानः पट्टवासस्तथैव च ॥ १३ ॥**

**शाणीबालपरीधान** इत्यत्र **शाणी** 'सणबू'[2] इति अपभ्रंशभाषा । **बालः** बालाख्यतृणगुल्मम् ।

**मनुष्यत्वाच्च निरयं पर्यायेणोपगच्छति ।**
**य एवं वेत्ति नित्यं वै निरात्मात्मगुणैर्वृतः ॥ ४२ ॥**

**निरात्मात्मगुणैर्वृत** इत्यत्र निर्गतः **आत्मा** नियामको यस्य स **निरात्मा** ।

**तेन देवमनुष्येषु निरये चोपपद्यते ॥ ४३ ॥**

**निरये चोपपद्यते** जीवः **तेन** परमात्मना ।

**प्रकृतिः कुरुते कर्म शुभाशुभफलात्मकम् ।**
**प्रकृतिश्च तदश्नाति त्रिषु लोकेषु कामगा ॥ ४५ ॥**

**प्रकृतिस्तु तदश्नाति** इत्यत्र **अश्नाति** भोजयति ।

**अलिङ्गां प्रकृतिं त्वाहुर्लिङ्गैरनुमिमीमहे ।**
**तथैव पौरुषं लिङ्गमनुमानाद्धि गम्यते ॥ ४७ ॥**

---

१. कुं. ३०९ अध्यायः । BORI पृ. १६१७ ; **'शणवालपरीधानो'** इति कुं. पाठः ।

२. कन्नडभाषा शब्दोऽयम् ।

**अलिङ्गां प्रकृतिं चाहुः** इत्यत्र **अलिङ्गाम्** अतीन्द्रियत्वात् दृश्य-चिह्नरहिताम् । **लिङ्गैः** महदादिकार्यैः ।

**तथैव पौरुपं लिङ्गम्** इत्यत्र **पौरुपं** जीवसम्बन्धि, **लिङ्गम्** अस्वातन्त्र्याख्यलिङ्गम्, **अनुमानात्** दुःखाख्यानुमापकलिङ्गात् ।

**स लिङ्गान्तरमासाद्य प्राकृतं लिङ्गमव्रणम्** ॥ ४८ ॥

**सः** जीवः **लिङ्गान्तरं** दुःखाख्यलिङ्गादन्यत् **प्राकृतं लिङ्गं** देहाख्यं लिङ्गम् आसाद्य ।

**अलिङ्गो लिङ्गमात्मानमकालः कालमात्मनः ।**
**असत्त्वं सत्त्वमात्मानमतत्त्वं तत्त्वमात्मनः** ॥ ५१ ॥

**अलिङ्गो लिङ्गमात्मानम्** इत्यत्र **लिङ्गं** लिङ्गाख्यदेहवन्तम् । 'अर्श आद्यच्' इति ह्यनुशासनम् । अकालमेव आत्मनः कालं मन्यते । **सत्त्वं** सामर्थ्यवन्तम् । सत्त्वगुणवन्तं वा । **तत्त्वं** तत्त्वज्ञानवन्तं मन्यते ।

**अतमास्तम[1] आत्मानमगतिर्गतिमात्मनः ।**
**अभवो भवमात्मानमभयो भयमात्मनः** ॥ ५३ ॥

**अतमास्तम आत्मानम्** इत्यत्र 'तमु ग्लानौ' इति धातोः **तमः** ग्लानिम् ।

॥ इति मोक्षधर्मे वसिष्ठकरालजनकसंवादे
चतुस्त्रिंशोत्तरशततमोऽध्यायः ॥

* * *

---

१ 'अतपास्तप आत्मानम्' इति कुं. पाठः ।

## ।। अथ पञ्चत्रिंशोत्तरशततमोऽध्यायः ।।

**धाम्ना[१] धामसहस्राणि पतनान्तानि गच्छति ।**
**तिर्यग्योनौ मनुष्यत्वे देवलोके तथैव च ।। २ ।।**

**धाम्ना** एकैकदेहेन । **धाम** धामत्वेन मन्यमानं कलापञ्चदशकम् ।

**चन्द्रमा इव भूतानां पुनस्तत्र सहस्रशः ।**
**लीयतेऽप्रतिबुद्धत्वादेवमेष ह्यबुद्धिमान् ।। ३ ।।**

**चन्द्रमा इव भूतानाम्** इत्यत्र **अप्रतिबुद्धत्वात्** नश्वरपञ्चदशकलाः मदीयाः नेति बोधरहितत्वात् । षोडश्या एककलया उर्वरितः सन् । **भूतानां** दिने दिने जातानां पञ्चदश कलानां **तत्र** मण्डले **पुनः** सहस्रशः उत्पत्त्यनन्तरं यथा सहस्रशः लीयते । स चन्द्रमा इव **अबुद्धिमान्** परमात्मज्ञानरहितो जीवः । सप्तदशकलामात्रेणोर्वरितः सन् एकादशेन्द्रियपञ्चभूतात्मकषोडशकलानाम् **एवं** परिदृश्यमानप्रकारेण मरणान्तो हि सर्गकोटिसहस्राणि गच्छति ।

तस्यैव विवरणम् – **धाम्ना** एकैकदेहेन **धामसहस्राणि** देहसहस्राणीति ।

**कलया जायते जन्तुः पुनः पुनरबुद्धिमान् ।**
**धाम तस्योपयुञ्जन्ति भूय एवोपजायते ।। ५ ।।**

**धाम तस्योपयुञ्जन्ति** इत्यत्र **तस्य** चन्द्रस्य **धाम** धामत्वेन मन्यमानं कलापञ्चदशकं देवाः उपयुञ्जन्ति, 'प्रथमां पिबते वह्निः' इत्यादिश्रुतेः ।

१. कुं. ३१० अध्यायः ।

**षोडशी तु कला सूक्ष्मा स सोम उपधार्यताम् ।**
**न तूपयुज्यते देवैर्देवानुपयुनक्ति सा ॥ ६ ॥**

**देवानुपयुनक्ति सा** इत्यत्र भक्षितकलारूपेण स्थितान् तान् देवान् शुक्लपक्षे उपयुनक्ति ।

**करालजनक उवाच–**

**अक्षरक्षरयोरेष द्वयोः सम्बन्ध उच्यते ।**
**स्त्रीपुंसोश्चापि भगवन् सम्बन्धस्तद्वदुच्यते ॥ १२ ॥**

**अक्षरक्षरयोरेष** इत्यत्र **अक्षरो** जीवः **क्षरः** प्रकृतिरिति जनकस्य हृदयम् ।

**अथवाऽनन्तरकृतं किञ्चिदेव निदर्शनम् ।**
**तन्ममाचक्ष्व तत्त्वेन प्रत्यक्षो ह्यसि सर्वथा ॥ २० ॥**

**किञ्चिदेव निदर्शनम्** इत्यत्र **निदर्शनं** मोक्षस्य निदर्शनम् ।

**मोक्षकामा वयं चापि काङ्क्षामो यदनामयम् ।**
**अदेहमजरं नित्यमतीन्द्रियमनीश्वरम् ॥ २१ ॥**

**अतीन्द्रियमनीश्वरम्** इत्यत्र **अनीश्वरम्** ईश्वराद् भिन्नं मुक्तजीवम् ।

**यदेतदुक्तं भवता वेदशास्त्रनिदर्शनम् ।**
**एवमेतद्यथा चैतन्न गृह्णाति तथा भवान् ॥ २२ ॥**

**एवमेतद्यथा चैतन्न गृह्णाति तथा भवान्** इत्यत्र एतत् प्रमेयम् एवं मया उपरिवक्ष्यमाणप्रकारेणैव न तु त्वदुक्तप्रकारेण 'क्षरः सर्वाणि

भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मा'[१] इति गीतावचनात् पुरुषत्रयविवक्षायाम् अक्षरपदवाच्या, नित्यमुक्ता लक्ष्मीः, पुरुषद्वयविवक्षायां तु 'क्षरः सर्वाणि भूतानि'[२] इति वचनात् क्षरो जीवः, अक्षरो नारायणः । 'अक्षरमम्बरान्तधृतेः'[३] इति व्यासानुशासनात् । जीवस्य त्वक्षरता न शास्त्रे श्रूयते, भवांस्तु जीवाक्षरवादित्वात् एतच्छास्त्ररहस्यं यथा न वेत्ति तथेति योजना ।

**त्वङ्मांसं रुधिरं मेदः पित्तं मज्जा च स्नायु च ।**
**एतदैन्द्रियकं तात तद्भवानिदमाह माम् ॥ ३१ ॥**

**एतदैन्द्रियकं तात** इत्यत्र **ऐन्द्रियकं** शुक्लशोणितयोः श्वेतरक्तत्वात् **ऐन्द्रियकम्** इन्द्रियसम्बन्धि प्रमेयम् । चक्षुरिन्द्रियेण सर्वैर्दृश्यमानं च । तस्मादिदं नापूर्वमिति भावः ।

**[४]निरिन्द्रियस्य बीजस्य निर्द्रव्यस्यापदेहिनः ।**
**कथं गुणा भविष्यन्ति निर्गुणत्वान्महात्मनः ॥ ३३ ॥**
**[५]गुणा गुणेषु वर्तन्ते तत्रैव निवसन्ति च ।**
**एवं गुणाः प्रकृतितो जायन्ते च न सन्ति च ॥ ३४ ॥**

**निरिन्द्रियस्य बीजस्य** इत्यत्र **निरिन्द्रियस्य** प्राकृतेन्द्रियरहितस्य, **बीजस्य** सर्वजगन्निमित्तकारणस्य, **निर्द्रव्यस्य** प्रकृत्याख्यद्रव्यसम्बन्धरहितस्य । **देहिनः** ज्ञानानन्दमयदेहिनः । **महात्मनः** अस्य

---

१. भ.गी. अ.१५ श्लो. १६ ; २. भ.गी. अ. १५ श्लो. १७
३. ब्र.सू. १-३-१०
४. BORI पृ. १६२७; $T_2$,$G_1$; '**निरिन्द्रियस्याबीजस्य**' इति कुं. पाठः ।
५. '**गुणा गुणेषु जायन्ते तत्रैव निविशन्ति च**' इति कुं. पाठः ।

क्षरपदवाच्यस्य परमात्मनः । **निर्गुणत्वात्** सत्त्वादिगुणरहितत्वात् । **गुणाः** प्राकृतश्वेतशुक्लत्वविकारित्वादिगुणाः कथं भविष्यन्ति । अतस्त्वदुक्तं सर्वम् अबोधविजृम्भितमिति भावः । **गुणाः** प्रकृतिस्थश्वेतरक्तकृष्णाख्यगुणाः । **गुणेषु** तत्कार्यदेहेषु वर्तन्ते । प्रलयकाले तत्रैव निवसन्ति च । एवं **गुणाः** प्राकृतगुणाः प्रकृतितो जायन्ते । अप्राकृते अक्षरपुरुषे परमात्मनि न सन्त्येव ।

**त्वङ्मांसं रुधिरं मेदः पित्तं मज्जाऽस्थि स्नायु च ।**
**[1]अष्टौ तान्यथ शुक्लेन जानीहि प्राकृतानि वै ॥ ३५ ॥**

**अष्टौ तान्यथ शुक्लेन** इत्यत्र शुक्लेनेत्युपलक्षणं शोणितेन चेत्यपि द्रष्टव्यम् ।

**पुमांश्चैवापुमांश्चैव त्रैलिङ्ग्यं प्राकृतं स्मृतम् ।**
**न वा पुमान् पुमांश्चैव स लिङ्गीत्यभिधीयते ॥ ३६ ॥**

**पुमांश्चैवापुमांश्चैव** इत्यत्र **त्रैलिङ्ग्यं** गुणत्रयाख्यत्रिगुणसम्बन्धि । **पुमान्** जीवः । **अपुमान्** देहादिः । **पुमान्** पुरुषरूपोऽपि **अपुमान्** जीवव्यतिरिक्तो नारायणः सः लिङ्गीति नैवाभिधीयते ।

**[2]अलिङ्गाप्रकृतिर्लिङ्गैरुपालभ्यति सात्मजैः ।**
**यथा पुष्पफलैर्नित्यमृतवो मूर्तयस्तथा ॥ ३७ ॥**

**अलिङ्गा** अदृश्यत्वात् दृश्यमानस्वनिष्ठलिङ्गरहिता । **आत्मजैः** आत्मजातैः महदादिभिः ।

---

१. BORI पृ. १६२७; $G_2$; **'अष्टौ तान्यथ शुक्रेण'** इति कुं.पाठः ।
२. BORI पृ. १६२८ ; **'अलिङ्गात्'** इति कुं.पाठः ।

**ऋतवो मूर्तयस्तथा** इत्यत्र **मूर्तयः** अन्योन्यविलक्षणास्तरुमूर्तयः ।

**एवमप्यनुमानेन ह्यलिङ्गमुपलभ्यते ।**
**पञ्चविंशतिमस्तात लिङ्गेषु नियतात्मकः** ॥ ३८ ॥

**एवमप्यनुमानेन** इत्यत्र **अनुमानेन** कार्यत्वानुमानेन । **अलिङ्गमपि** दृश्यमानस्वलिङ्गरहितमपि । **एवं** प्रकृतिवत् उपलभ्यते । **लिङ्गेषु** स्वातन्त्र्यादिलिङ्गेषु । **नियतात्मकः** नियतस्वरूपः । अत एव ब्रह्मणः प्रागुक्तमलिङ्गत्वं दृश्यमानलिङ्गराहित्यादिति ज्ञेयम् ।

**अनादिनिधनोऽनन्तः सर्वदर्शी निरामयः ।**
**केवलं त्वभिमानित्वाद्गुणेष्वगुण उच्यते** ॥ ३९ ॥
**गुणा गुणवतः सन्ति निर्गुणस्य कुतो गुणाः ।**
**तस्मादेवं विजानन्ति ये जनाः गुणदर्शिनः** ॥ ४० ॥

**केवलं त्वभिमानित्वात्** इत्यत्र **गुणेषु** स्वरूपभूतसर्वज्ञत्वादि-गुणेषु, **केवलं** मायाद्युपाधिं विना । **अभिमानित्वात्** बहुमानत्वात् **अगुण उच्यते** अनन्तगुणस्वरूपत्वात् अगुण इत्युच्यते । **गुणाः गुण-वतः सन्ति** – गुणानां कश्चित् गुणी अपेक्षितः । अतो भगवान् विशेष-शक्त्या गुण्यपि भवति । **निर्गुणस्य** सर्वथा गुणरहितस्य ज्ञानानन्दादि गुणा अपि कुतः ।

**[१] यदा त्वेष गुणानेतान् प्राकृतानभिमन्यते ।**
**तदा स गुणहान्येनं परमेनं च पश्यति** ॥ ४१ ॥

१. BORI पृ. १६२८; $G_2$,$M_{1,5,7}$;$D_3$,$D_{N4}$; **'यदा त्वेष गुणानेव प्रकृतावनुमन्यते । तदा स गुणवानेव परमं नानुपश्यति'** इति कुं. पाठः ।

**यदा त्वेष गुणानेतान्** इत्यत्र **यदा** यस्मात् **एषः** जीवः प्राकृतान् गुणान् अभिमन्यते । **तदा** तस्मात् **सः** विवेकी जीवः **एनं** परमात्मानं **गुणहान्या** प्राकृतगुणहान्या **परं** भिन्नम् उत्तमश्च पश्यति । बद्धत्वा-बद्धत्वाभ्यां जीवेश्वरयोर्भेदं पश्यति । नित्यं बन्धरहितत्वात् विष्णोरुत्तमतां च पश्यति इति भावः ।

**[1]अप्रबुद्धमथाव्यक्तम् अगुणं प्राहुरनीश्वरम् ।**
**निर्गुणं चेश्वरं नित्यमधिष्ठातारमेव च ॥ ४३ ॥**

**अप्रबुद्धमथाव्यक्तम्** इत्यत्र प्रकर्षेण बुद्धो न भवतीति **अप्रबुद्धः** तम् अगुणं प्रधानम् । **निर्गुणं** सत्त्वादिगुणरहितम् । **अधिष्ठातारम्** अन्त-र्नियामकम् ।

**प्रकृतेश्च गुणानां च पञ्चविंशतिकं बुधाः ।**
**साङ्ख्ययोगे च कुशला बुध्यन्ते परमैषिणः ॥ ४४ ॥**

**प्रकृतेश्च गुणानां** प्राकृतगुणानाम् ।

**एतन्निदर्शनं सम्यगसम्यक्चार्थदर्शनम् ।**
**बुध्यमानाप्रबुद्धानां पृथग्पृथगरिन्दम ॥ ४६ ॥**

**एतन्निदर्शनं** सम्यगसम्यक् चार्थदर्शनम् इत्यत्र एतत् निदर्शनम् ।

**परस्परेणैतदुक्तं क्षराक्षरनिदर्शनम् ।**
**एकत्वमक्षरं प्राहुर्नानात्वं क्षरमुच्यते ॥ ४७ ॥**

---

१. BORI पृ. १६२९; $B_{0,7,9}$, $V_1$, $M_5$; 'अप्रबुद्धमथाव्यक्तं गुणम्' इति कुं. पाठः ।

**परस्परेणैतदुक्तम्** इत्यत्र **परस्परेण** अन्योन्यस्वभावेन क्षराक्षर-निदर्शनम् **एतत्** वक्ष्यमाणम् **उक्तं** शास्त्रेषु उक्तम् । **एकत्वं** शश्वदेक-प्रकारत्वम् । **नानात्वं** नानायोनिषूत्पन्नत्वम् ।

**पञ्चविंशतिनिष्ठोऽयं यदा सम्यक् प्रचक्षते ।**
**एकत्वं दर्शनं चास्य नानात्वं चाप्यदर्शनम्** ॥ ४८ ॥

**पञ्चविंशतिनिष्ठोऽयम्** इत्यत्र **अयं** क्षराक्षरस्वभावः **पञ्चविंशति-निष्ठः** चतुर्विंशतितत्त्वाख्यब्रह्मादिजीवेषु पञ्चविंशतितमत्वेन ।

**पञ्चविंशतितत्त्वं तु तत्त्वमाहुर्मनीषिणः** ॥ ४९ ॥

नारायणेन क्रियमाणं महदादिसर्गं **तत्त्वं** तत्त्वाभिमानित्वात् तत्त्व-माहुः ।

**निस्तत्त्वं पञ्चविंशस्य परमाहुर्निदर्शनम् ।**
**वर्गस्य वर्गमाचारं तत्त्वं तत्त्वात् सनातनम्** ॥ ५० ॥

**तत्त्वं** तत्स्वभावः सनातनात्तत्त्वादाहुरिति योजना ।

**॥ इति पञ्चत्रिंशोत्तरशततमोऽध्यायः ॥**

## ॥ अथ षट्त्रिंशोत्तरशततमोऽध्यायः ॥

**एकाग्रता च मनसः प्राणायामस्तथैव च ।**[१]
**प्राणायामस्तु सगुणो निर्गुणो मनसस्तथा** ॥ ८ ॥

**प्राणायामस्तु सगुण** इत्यत्र **सगुणः** प्राणायामः, वायोः रेचक-पूरककुम्भकाख्यव्यापारगुणसहितः ।

१. कुं. ३११ अध्यायः ।

**तैश्चात्मा सततं[1] ज्ञेय इत्येवमनुशुश्रुम ।**
**द्रुतं ह्यहीनमनसो नान्यथेति विनिश्चयः ॥ १२ ॥**

**तैश्चात्मा सततं ज्ञेय** इत्यत्र तैः नियतेन्द्रियैः ।

**तदा तमनुपश्येत यस्मिन्दृष्टे तु कथ्यते ।**
**हृदयस्थोऽन्तरात्मेति ज्ञेयो ज्ञस्तात मद्विधैः ॥ १९ ॥**

**यस्मिन् दृष्टे तु कथ्यत** इत्यत्र **कथ्यते** ज्ञानीति कथ्यते ।

**एताः प्रकृतयश्चाष्टौ विकाराश्चापि षोडश ।**
**पञ्च चैव विशेषा वै तथा पञ्चेन्द्रियाणि च ॥ २९ ॥**

**विकाराश्चापि षोडश** इत्यत्र **षोडश** पञ्चतन्मात्राणि एका-दशेन्द्रियाणीति षोडश । तेषां मध्ये पञ्चतन्मात्रा विशेषाः इत्युच्यन्ते तथा चक्षुरादयः पञ्चेन्द्रियाणि । **इदं** मात्रापञ्चकं प्रति **द्रवणात्** इन्द्रिया-णीत्युच्यन्तेऽपि ।

**सर्गप्रलय एतावान्प्रकृतेर्नृपसत्तम ।**
**एकत्वं प्रलये चास्य बहुत्वं च यदाऽसृजत् ॥ ३३ ॥**

**एकत्वं प्रलये चास्य** इत्यत्र **अस्य** अव्यक्ततत्त्वस्य **प्रकृतेः** सर्ग-प्रलयौ भवतः ।

**एवमेव च राजेन्द्र विज्ञेयं ज्ञेयचिन्तकैः ।**
**[2] अधिष्ठातारमव्यक्तम् अस्याप्येतन्निदर्शनम् ॥३४ ॥**

१. BORI पृ. १६३२; **'सततं योज्य'** इति कुं.पाठः ।
२. BORI पृ. १६३५; **'अधिष्ठाता य इत्युक्तः'** इति कुं. पाठः ।

**अधिष्ठातारमव्यक्तम्** इत्यत्र **अव्यक्तम्** अज्ञेयं परमात्मानम् । **अधिष्ठातारं** सर्वस्याप्याधारं वदन्ति । **अस्य** परमात्मनः **एतदव्यक्ततत्त्वं** निदर्शनम् । अव्यक्ततत्त्वं यथा सकलजगदादिभूतं तथा नारायणोऽपि इति भावः ।

**अव्यक्तं क्षेत्रमित्युक्तं तथा[१] सत्त्वं तथेश्वरम् ।**
**अनीश्वरमतत्त्वं च तत्त्वं तत् पञ्चविंशकम् ॥ ४२ ॥**

**तथा सत्त्वं तथेश्वरम्** इत्यत्र यथा प्रकृतेः सर्गप्रलयौ भवतः तथा **सत्त्वं** सामर्थ्यं यस्य तं तथा सत्त्वमाहुः । **अनीश्वरम्** ईश्वराद्भिन्नजीवम् । **अतत्त्वं** प्राकृतदेहे अभिमानेन तत्त्वज्ञानरहितत्वादतत्त्वम् । असारेषु प्राकृतपदार्थेषु कदापि सारबुध्यभावेन तत्त्वज्ञानभरितत्वात् तत् पञ्चविंशकं परं ब्रह्म तत्त्वमाहुः ।

**तत्त्वानि च चतुर्विंशत्परिसङ्ख्याय तत्त्वतः ।**
**साङ्ख्याः सह प्रकृत्या तु निस्तत्त्वः पञ्चविंशकः ॥ ४३ ॥**

**निस्तत्त्वः** चतुर्विंशतितत्त्वेष्वभिमानरहितः ।

**पञ्चविंशोऽप्रबुद्धात्मा बुध्यमान इति स्मृतः ।**
**यदा तु बुध्यतेऽऽत्मानं तदा भवति केवलः ॥ ४४ ॥**

**तदा भवति केवल** इत्यत्र **केवलः** कैवल्यवान् ।

**सम्यग्दर्शनमेतावद्भाषितं तव तत्त्वतः ।**
**एवमेतद्विजानन्तः साम्यतां प्रतियान्त्युत ॥ ४५ ॥**

---

१. BORI पृ. १६३६; **'यथासत्त्वं'** इति कुं.पाठः ।

**साम्यतां प्रतियान्त्युत** इत्यत्र **समं** यथावस्तु ज्ञानम्। तत्सम्बन्धिनः साम्याः, तेषां भावः **साम्यता**, ताम्।

**सम्यङ् निदर्शनं नाम प्रत्यक्षं प्रकृतेस्तथा।**
**गुणतत्त्वान्यथैतानि[१] निर्गुणोऽन्यस्तथा भवेत् ॥ ४६ ॥**

**गुणतत्त्वान्यथैतानि** इत्यत्र **एतानि** महदादीनि **गुणतत्त्वानि** त्रिगुणात्मकतत्त्वानि।

**न त्वेवं वर्तमानानामावृत्तिर्विद्यते पुनः।**
**विद्यतेऽक्षरभावत्वे स परात्परमव्ययम् ॥ ४७ ॥**

**विद्यतेऽक्षरभावत्वे स परात्परमव्ययम्** इत्यत्र अक्षरे **भावः** भावना यस्य सः अक्षरभावः। तस्य भावः अक्षरभावत्वम् तस्मिन् सति, **सः** ज्ञानी, **परात्परमव्ययं** परमात्मानं, **विद्यते** विन्दति।

**पश्येरन्नेकमतयो न सम्यक्तेषु दर्शनम्।**
**तेऽव्यक्तं प्रतिपद्यन्ते पुनःपुनररिन्दम ॥ ४८ ॥**

**पश्येरन्नेकमतय** इत्यत्र क्षराक्षरयोर्जीवपरयोः **एकमतयः** ऐक्यमतयः सन्तः ये पश्येरन् तेषु सम्यक् दर्शनं नास्ति। एकावितिमतिर्येषामिति समासः।

**सर्वमेतद्विजानन्तो नासर्वस्य प्रबोधनात्।**
**[२]व्यक्तभूता भविष्यन्ति व्यक्तस्य वशवर्तिनः ॥ ४९ ॥**

---

१. BORI पृ. १६३७; '**गुणतत्त्वाद्यथैतानि**' इति कुं.पाठः।
२. BORI पृ. १६३७; $G_2$; '**व्यक्तीभूता**' इति कुं. पाठः।

सर्वम् **एतत्** जगत् **विजानन्तः** विपरीततया जानन्तः मिथ्यात्वेन जानन्त इति यावत् । सर्वस्य न प्रबोधनात् **व्यक्तभूताः व्यक्ते** प्राकृत-देहे **भूता** जाताः ।

सर्वशास्त्राण्यालोड्य प्रकृत्यादितत्त्वसृष्टिप्रलयप्रकारस्य महदहङ्काराद्यभिमानिभूतब्रह्मादिदेवानां तारतम्यस्य क्षराक्षरपदोदितजीव-परमात्माख्यतत्त्वविवेकस्य मिथ्याज्ञानविभागस्य किं बहुना, ब्रह्म-मीमांसादिसकलतत्त्वानां यद्विविच्यज्ञानं तत्साङ्ख्यं, सर्वेन्द्रियाण्युप-हृत्य मनःस्थिरीकृत्य साङ्ख्ये विदितस्वयोग्यभगवद्गुणानां यन्मनसि निरन्तरध्यानं तत् भगवद्विषयककर्मकुशलरूपत्वात् योग इत्युच्यत इति अध्यायसमुदायार्थः ।

**॥ इति षट्त्रिंशोत्तरशततमोऽध्यायः ॥**

## ॥ अथ सप्तत्रिंशोत्तरशततमोऽध्यायः ॥

**[१] अविद्यामाहुरव्यक्तं सर्गप्रलयधर्मिणीम् ।**
**[२] सर्गप्रलयनिर्मुक्तो विद्या वै पञ्चविंशकः** ॥ २ ॥

**अविद्यामाहुरव्यक्तम्** इत्यत्र **अविद्याम्** जडरूपतया विद्यायाः अयोग्या । **पञ्चविंशकः** परमात्मा **विद्या** सकलविषयकज्ञानरूपत्वा-द्विद्यामयः । जीवस्तु चेतनत्वेऽपि प्राकृतरूपाविद्यया अन्धत्वादविद्यैव । अत एव 'योऽविद्ययान्धः स तु नित्यबद्धः विद्यामयो यः स तु नित्य-मुक्त' इति भागवते भगवद्वचनम् ।

---

१. कुं. ३१२ अध्यायः ।

२. $M_{1.5.6}$,$G_{1.3.6}$; BORI पृ. १६३८; **'सर्गप्रलयनिर्मुक्तो विद्यो वै'** इति कुं. पाठः ।

**एकत्वं च बहुत्वं च प्रकृतेरनु तत्त्ववित् ।**
**परस्परं तु विद्यां वै त्वं निबोधानुपूर्वशः ।**
**यथोक्तमृषिभिस्तात साङ्ख्यस्यास्य निदर्शनम् ॥ ३ ॥**

**एकत्वं च बहुत्वं च** इत्यत्र एकत्वं मूलरूपेण प्रकृतेः । (सृष्टेः)सृष्टमहत्तत्त्वादिकम् **अनु** अनुप्रविश्य (बहुत्वं) भवति । तदापि स तत्त्वविदेव न तु जीववदन्धः ।

**कर्मेन्द्रियाणां सर्वेषां विद्या बुद्धीन्द्रियं स्मृतम् ।**
**बुद्धीन्द्रियाणां च तथा विशेषा इति नः श्रुतम् ॥ ४ ॥**

**विद्या बुद्धीन्द्रियं स्मृतम्** इत्यत्र विद्यासाधनत्वात् विद्या । स्थूलभूतानि देहारम्भकाणि, विशेषाः ।

**विशेषाणां मनस्तेषां विद्यामाहुर्मनीषिणः ।**
**मनसः पञ्चभूतानि विद्या इत्यभिचक्षते ॥ ५ ॥**

**मनसः पञ्चभूतानि विद्या** इत्यत्र विद्याविषयत्वाद्विद्याः । (विषयाणां विद्याः) पञ्चानां विद्याहेतुत्वाद्विद्या, 'अहं जानामि' इति हि सर्वस्यानुभवः ।

**अव्यक्तस्य परं प्राहुर्विद्यां वै पञ्चविंशकम् ।**
**सर्वस्य सर्वमित्युक्तं ज्ञेयं ज्ञानस्य पार्थिव ॥ ८ ॥**

**सर्वस्य सर्वम्** इत्यत्र **सर्वस्य ज्ञानस्य** ईश्वरज्ञानस्य ।

**ज्ञानमव्यक्तमित्युक्तं ज्ञेयो वै पञ्चविंशकः ।**
**तथैव ज्ञानमव्यक्तं विज्ञाता पञ्चविंशकः ॥ ९ ॥**

**ज्ञानमव्यक्तम्** इत्यत्र **ज्ञानं** प्राकृतमनोवृत्तिरूपज्ञानम् ।

**उभावेतौ क्षरावुक्तावुभावेतौ क्षराक्षरौ ।**
**कारणं तु प्रवक्ष्यामि यथाख्यातो न जानतः ॥ ११ ॥**

**उभावेतौ क्षरावुक्तौ** इत्यत्र **एतौ** जीवपरमौ उभावपि **क्षरौ** क्षर्यमाणदेहाभिमानित्वाज्जीवः, क्षरयति तं देहमिति भगवान् क्षरः । कथमन्यथा सर्वशब्दाभिधेयत्वं भगवतः । अत एव जीवोऽप्यक्षरो न, उक्तव्युत्पत्त्या क्षरशब्दवाच्यत्वाद्भगवानप्यक्षरो न । पूर्वोक्तमक्षरत्वं तु शरीरक्षरणाभावादिति ज्ञेयम् ।

**अनादिनिधनावेतावुभावेवेश्वरौ मतौ ।**
**तत्त्वसञ्ज्ञावुभावेतौ प्रोच्येते ज्ञानचिन्तकैः ॥ १२ ॥**

**उभावेवेश्वरौ मतौ** इत्यत्र परमात्मा निरवधिकेश्वरः । जीवस्तु तद्दत्त-सामर्थ्यात् ईषदीश्वरः । अन्यथा दुःखादिकं नानुसन्दध्यात् । ईशो वरो यमस्मादिति वा **ईश्वरः** ।

**तत्त्वसञ्ज्ञावुभावेतौ** इत्यत्र स्वतन्त्रमस्वतन्त्रं च द्विविधं तत्त्व-मिष्यत इति वचनात् उभावपि तत्त्वसञ्ज्ञौ ।

**सर्गप्रलयधर्मित्वादव्यक्तं[1] प्राहुरक्षरम् ।**
**तदेतद्गुणसर्गाय विकुर्वाणं पुनःपुनः ॥ १३ ॥**

**सर्गप्रलयधर्मित्वात्** महदादीनां जायमानसर्गप्रलययोः भूतलव-द्धर्मित्वात् । **तदेतद्गुणसर्गाय विकुर्वाणं पुनःपुन** इत्यत्र यदेति योग्यपदाध्याहारः ।

---

१. BORI पृ. १६३९ ; **'सर्गप्रलयधर्मत्वात्'** इति कुं. पाठः ।

**यदा तु गुणजालं तदव्यक्तात्मनि सङ्क्षिपेत् ।**
**तदा सह गुणैस्तैस्तु पञ्चविंशोऽपि[1] लीयते ॥ १५ ॥**

**पञ्चविंशोऽपि लीयत** इत्यत्र **पञ्चविंशः** परमात्मापि महदादि-प्रेरकस्वबहुरूपैः स्वमूलरूपे सम्बध्यते । 'लीङ् श्लेषणे' इति धातोः । पृथक् दर्शनाल्लय इत्युक्तम् ।

**गुणा गुणेषु लीयन्ते तदैका प्रकृतिर्भवेत् ।**
**क्षेत्रज्ञोऽपि यदा तात तत्क्षेत्रे सम्प्रलीयते ॥ १६ ॥**

**तत्क्षेत्रे सम्प्रलीयत** इत्यत्र उपचायकरूपेण प्रकृतेर्बहिरायाति ।

**[2]तदा क्षरत्वं प्रकृतिर्गच्छते गुणसंज्ञिता ।**
**निर्गुणत्वं च वैदेह गुणेष्वप्रतिवर्तनात् ॥ १७ ॥**

**तदा क्षरत्वं प्रकृतिः** इत्यत्र कार्योपचायकशक्तिह्रासात् क्षरत्वं गच्छते ।

**एवमेव च क्षेत्रज्ञः क्षेत्रज्ञानपरिक्षयात् ।**
**प्रकृत्या निर्गुणस्त्वेष इत्येवमनुशुश्रुम ॥ १८ ॥**

**प्रकृत्या निर्गुणस्त्वेष** इत्यत्र प्रकृत्या गुणरहितः न तु स्वतो गुणरहितः ।

**तदा विशुद्धो भवति प्रकृतेः परिवर्जनात् ।**
**अन्योऽहमन्येयमिति यदा बुद्ध्यति बुद्धिमान् ॥ २० ॥**

---

१. BORI पृ. १६४०; $T_2$,$G_3$,$M_1$; **'पञ्चविंशो विलीयते'** इति कुं. पाठः ।
२. **'तदा अक्षरत्वम्'** इति कुं. पाठः ।

**तदा विशुद्धो भवति** इत्यत्र प्रलये कथञ्चिदपि जडसम्बन्धाभावाद् **विशुद्धः**। **बुद्धिमान्** ज्ञानी जीवः।

**यदा तु गुणजालं तत्प्राकृतं विजुगुप्सते।**
**पश्यते चापरं पश्यं तदा पश्यन्न संसृजेत्[1] ॥ २२ ॥**

**पश्यते चापरं पश्यम्** इत्यत्र **अपरं** जीवात् भिन्नम्। पश्यतीति **पश्यः** सर्वज्ञो नारायणः तं पश्यति। जीवस्यायासं दृष्ट्वा कृपाविपुललोचनाभ्यां तं पश्यतीति सूचनाय पश्य इत्युक्तम्। **न संसृजेत्** न विसृजेत्। 'सृज विसर्गे' इति धातुः।

**किमहं कृतवानेवं योऽहं कालमिमं जनम्।**
**[2]यथा मत्स्योदके जालमनुवर्तितवांस्तदा।**
**मत्स्यो जालं ह्यविज्ञानादनुवर्तितवानिह ॥ २३ ॥**

**यथा मत्स्योदके जालम्** इत्यत्र मत्स्यः उदके इति पदच्छेदः। 'व्यत्ययो बहुलम्'[3] इति वचनात्।

**अहमेव हि सम्मोहात् [4]अन्यं मन्ये जनाजनम्।**
**मत्स्यो यथोदकज्ञानादनुवर्तितवानहम् ॥ २४ ॥**

**अन्यं मन्ये जनाजनम्** इत्यत्र **अन्यं** भिन्नं, **जनं** बन्धुजनम्। **अजनं** धनकनकादिकम्। **जनाः** चेतनाः। **अजना** जडाश्च यस्मात् तं परमात्मानं वा। अहमेवेति मन्ये।

इदानीं जीवस्य वैराग्यप्रकारं दर्शयति **अयं मम भवेद्बन्धुः** इत्यादिना।

---

१. 'संस्वजेत्' इति कुं.पाठः। ; २. **'यदा मत्स्योदकं ज्ञानम्'** इति कुं.पाठः।
३. पा.सू. ३-१-८५; ४. **'-अन्यमन्यं जनाज्जनम्'** इति कुं.पाठः।

**अयं मम भवेद्बन्धुरनेन सह मे क्षमम्[1] ।**
**साम्यमेकत्वतां यास्ये यादृशस्तादृशस्त्वहम् ॥ २७ ॥**

**योऽहमज्ञानसंमोहादज्ञया सम्प्रवृत्तवान् ।**
**ससङ्गयाऽहं निःसङ्गः स्थितः कालमिमं त्वहम् ॥ २९ ॥**

**ससङ्गयाऽहं निःसङ्ग** इत्यत्र **निःसङ्गः** स्वभावतो गुणत्रयसङ्गरहितोऽप्ययं **ससङ्गया** प्रकृत्या ।

**समानया न याचेह सहवासमहं कथम् ।**
**गच्छाम्यबुद्धभावत्वादेषेदानीं स्थिरो[2] भवेत् ॥ ३१ ॥**

**एषेदानीं स्थिरो भवेत्** इत्यत्र सेदुराजेतिवत् एष इदानीमिति पदच्छेदः ।

**प्रकृतेरनयत्वेन तासु तास्विह योनिषु ।**
**निर्ममस्य ममत्वेन किं कृतं तासु तासु च ॥ ३५ ॥**

**प्रकृतेरनयत्वेन तासु तास्विह योनिषु** इत्यत्र **अनयत्वेन** प्रकृतेः सकाशादनयत्वेन ।

**एवं परमसम्बोधात् पञ्चविंशोऽनुबुद्धवान् ।**
**अक्षरत्वं नियच्छेत त्यक्त्वा क्षरमनामयम् ॥ ४० ॥**

**एवं परमसम्बोधात्पञ्चविंशोऽनुबुद्धवान्** इत्यत्र 'सुपां सुलुक्'[3] इति वचनात् **पञ्चविंशः** पञ्चविंशस्य परमसम्बोधात् इति सम्बन्धः ।

---

१. **'अयमत्र भवेद्बन्धुः'** इति कुं. पाठः ।
२. BORI पृ. १६४३; $T_2$,;$B_7$; **'भवे'** कुं.पाठः ।; ३. पा.सू. ७-१-३९

**अक्षरत्वं नियच्छेत त्यक्त्वा क्षरमनामयम्** इत्यत्र **अनामयम्** अनाद्यनन्तकालेषु जननमरणाद्यामयरहितम् । **परमाक्षरं** नारायणं त्यक्त्वा तत्प्रसादात् **अक्षरत्वम्** अमृतत्वं नियच्छेत ।

**[१]अव्यक्तं व्यक्तधर्माणं सगुणं निर्गुणं तथा ।**
**निर्गुणं परमं दृष्ट्वा तादृग्भवति मैथिल** ॥ ४१ ॥

**पञ्चविंशात् परं तत्त्वं न पश्यति नराधिप ।**
**साङ्ख्यानां तु परं तत्त्वं यथावदनुवर्णितम्** ॥ ४७ ॥

**अव्यक्तं व्यक्तधर्माणम्** इत्यत्र **अव्यक्तं** स्वभावतः अज्ञेयम् । **व्यक्तधर्माणं** जगत्सृष्ट्यादिना व्यक्तस्वातन्त्र्यसार्वज्ञादिधर्माणम् अत एव **सगुणं** सर्वगुणम् । **परमं निर्गुणम्** अनाद्यनन्तकालेषु गुणत्रयरहितम् नारायणं दृष्ट्वा तत्प्रसादात् स्वबन्धकीभूतगुणेभ्यो विमुक्तः **तादृग्भवति** प्राकृतगुणवर्जनात् तादृग्भवति । न तु तदेव भवति । नारायणस्य अनाद्यनन्तकालेऽपि निर्गुणत्वम् । जीवस्य तु कदाचिन्निर्गुणत्वमिति सूचयितुं परमं निर्गुणमित्युक्तम् । अत एव न सर्वसाम्यमपि ।

**पञ्चविंशात् परं तत्त्वम्** इत्यस्य चतुर्विंशतितत्त्वात्मकजडानां जडधियैव नीचत्वात्, चतुर्विंशतितत्त्वात्मकदेहाभिमानितया चतुर्विंशतितत्त्वेष्वेवान्तर्भूतानां जीवानां च जननमरणादिदुःखयोगित्वेन नीचत्वात्, लक्ष्म्याश्च हर्यनुज्ञया चतुर्विंशतितत्त्वात्मकप्रकृत्यभिमानितया प्रकृतिपदसूचितस्त्रीत्वेन च हरेः सकाशात् नीचत्वात् पञ्चविंशात् **परम्** उत्तमं तत्त्वं न पश्यति इति योजना ।

---

१. BORI पृ. १६४४ ; **'अव्यक्तं व्यक्तकर्माणम्'** इति कुं.पाठः ।

**बुद्धमप्रतिबुद्धं च बुध्यमानं च तत्त्वतः ।**
**बुध्यमानं च बुद्धं च प्राहुर्योगनिदर्शनम् ॥ ४८ ॥**

**बुद्धमप्रतिबुद्धं च** इत्यत्र **बुद्धं** चेतनम् । **अप्रतिबुद्धं** जडम् । **बुध्यमानम्** अज्ञानिभिरन्यथा बुध्यमानं प्रबुद्धैस्तत्त्वतः बुध्यमानं च **बुद्धं** परमात्मतत्त्वं च यच्छास्त्रं विवेचयति तद्योगस्य निदर्शनम् प्राहुरिति योजना ।

॥ इति सप्तत्रिंशोत्तरशततमोऽध्यायः ॥

## ॥ अथ अष्टात्रिंशोत्तरशततमोऽध्यायः ॥

**एतदेवं विकुर्वाणं बुध्यमानो न बुध्यते ।**[१]
**अव्यक्तबोधनाच्चैव बुध्यमानं वदन्त्यपि ॥ ३ ॥**

**अव्यक्तबोधनाच्चैव** इत्यत्र **व्यक्तं** स्पष्टं प्रत्यक्षं न भवतीत्यव्यक्तमनुमितिरूपं ज्ञानम् ।

**न त्वेव बुध्यतेऽव्यक्तं सगुणं वाऽथ निर्गुणम् ।**
**कदाचित्त्वेव खल्वेतदाहुरप्रतिबुद्धकम् ॥ ४ ॥**

**कदाचित्त्वेव खल्वेतदाहुः** इत्यत्र **कदाचित्** कदापि **अप्रतिबुद्धकं** जीवैरप्रतिबुद्धं, यदि बुध्यते तदापि **अव्यक्तम्** अस्पष्टमेव बुध्यते । आन्तं न बुध्यत इत्यर्थः । (सान्तं न बुध्यत इत्यर्थः ।)

**अव्यक्तबोधनाच्चापि बुध्यमानं वदन्त्युत ।**
**पञ्चविंशं महात्मानं न चासावपि बुध्यते ॥ ६ ॥**

---

१. कुं. ३१३ अध्यायः ।

**न चासावपि बुध्यत** इत्यत्र **असौ न च बुध्यते** स्पष्टं न बुध्यते ।

**षड्विंशं विमलं बुद्धमप्रमेयं सनातनम् ।**
**स तु तं पञ्चविंशं च चतुर्विंशं च बुध्यते ॥ ७ ॥**

**षड्विंशं विमलं बुद्धम्** इत्यत्र 'तत्सृष्ट्वा तदेवानुप्राविशत्'[१] इति श्रुतेः यन्नारायणस्वरूपं स्वसृष्टचतुर्विंशतितत्त्वेषु चतुर्विंशतिरूपैरन्तर्यामितया प्रविष्टं तत् नारायणरूपं चतुर्विंशतिसङ्ख्याश्रयत्वाच्चतुर्विंशमिति बुधैर्बुध्यते । यत्तु नारायणरूपं स्वयमेकमेव सत् सततमनाद्यनन्तकालेषु चतुर्विंशतितत्त्वानि सृजति । तत् (सङ्ख्या त्रिपुरुषैः)। स्वबिम्बभूतचतुर्विंशतिरूपाणामुपरि गण्यमानत्वात् पञ्चविंशमिति बुधैर्बुध्यते । यत्तु व्याप्तत्वादप्रमेयं यं जगत्सर्जननियमनसंहरणादिबहिर्भूतत्वात् **सनातनं** शश्वदेकप्रकारं **विमलं** विबुद्धं नारायणस्वरूपं तत्पञ्चविंशाख्यमध्यमरूपादप्युपरिगण्यमानत्वात् षड्विंशमिति बुधैर्बुध्यते । इदं च 'षड्विंशको महाविष्णुः' इतिवत् कचित्पुराणे पञ्चविंशः चतुर्विंश इत्यपि भगवत एव परिपठने सर्वेषामेकवाक्यतां ज्ञापयितुमुक्तम् ।

**केवलं पञ्चविंशं च चतुर्विंशं च पश्यति ।**
**बुध्यमानो यदात्मानमन्योऽहमिति मन्यते ॥ ९ ॥**

**बुध्यमानो यदात्मानम्** इत्यत्र **बुध्यमानः** बोद्धा जीवः । **अन्यः** परमात्मनोऽन्यः । प्रकृतेरतिदूरत्वफललाभाय षड्विंशं यदा बुध्यते इत्युक्तम् ।

---

१. तै.उ. २-१४

**केवलेन समागम्य विमुक्तोऽऽत्मानमाप्नुयात् ।**
**एतद्वै[1] तत्त्वमित्याहुर्निस्तत्त्वमजरामरम् ॥ १३ ॥**

**एतद्वै तत्त्वमित्याहुः** इत्यत्र **निस्तत्त्वं** चतुर्विंशतितत्त्वरहितम् अजरामरम् एतत् ब्रह्मतत्त्वसंश्रयणादेव तत्त्वमाहुः ।

**न[2] चैष तत्त्ववत्तात निस्तत्त्वस्त्वेष बुद्धिमान् ।**
**एष मुञ्चति तत्त्वं हि क्षिप्रं बुद्धस्य[3] लक्षणम् ॥ १५ ॥**

**षड्विंशोऽहमिति प्राज्ञो गृह्यमाणोऽजरामरः ।**
**केवलेन बलेनैव समतां यात्यसंशयम् ॥ १६ ॥**
**षड्विंशेन प्रबुद्धेन बुद्ध्यमानोऽथ[4] बुद्धिमान् ॥ १७ ॥**

**तत्त्ववत्** जीवतत्त्ववत् जडतत्त्ववच्च न ।

**एष मुञ्चति तत्त्वं हि** इत्यत्र **एष** परमात्मा **तत्त्वं** चतुर्विंशतितत्त्वं **क्षिप्रं** सर्वदा मुञ्चति । एतत् **बुद्धस्य** सर्वज्ञस्य लक्षणं हि । **गृह्यमाणः** स्वसाक्षिणा गृह्यमाणः **केवलेन** अन्यप्रसादानायत्तेन बलेन **समतां** शश्वदेकप्रकारताम् । **प्रबुद्धेन** सर्वज्ञेन षड्विंशेन **बुध्यमानो** जीवः **अथ** श्रवणादिजन्यतत्प्रसादानन्तरं **बुद्धिमान्** अपरोक्षज्ञानी भवति ।

**चेतनेन समेतस्य पञ्चविंशतिकस्य च ।**
**एकत्वं वै भवत्यस्य यदा बुध्या न बुध्यते ॥ १८ ॥**

---

१. BORI पृ. १६४८; M1,5,7,T; '**एतं वै तत्त्वमित्याहुः**' इति कुं.पाठः ।
२. '**न चैष तत्त्ववांस्तात**' इति कुं. पाठः ।
३. '**बुद्धत्वलक्षणम्**' इति कुं. पाठः । BORI पृ. १६४८
४. '**बुद्ध्यमानोप्यबुद्धिमान्**' इति कुं.पाठः ।

**बुध्यमानोऽप्रबुद्धेन समतां याति मैथिल ।**
**सङ्गधर्मा भवत्येष निःसङ्गात्मा नराधिप ॥ १९ ॥**

**चेतनेन समेतस्य** इत्यत्र यदा अयं जीवः **बुध्या न बुध्यते** शास्त्रार्थं न जानाति **चेतनेन** जीवेन स्वेन **समेतस्य** एकदेहे सङ्गतस्य पञ्चविंशतिकस्य एकत्वम् अस्य जीवस्य **भवति** अभिमतं भवति । **अप्रबुद्धेन** तेन अद्वैतज्ञानिना बुध्यमानः अन्योऽपि **समतां याति** तत्समतां याति । एवमन्धपरम्परया दुर्मतस्य प्रवृत्तिर्भवति । न त्वैक्यस्य साङ्ख्यशास्त्रं मूलमिति भावः ।

**निःसङ्गात्मानमाश्रित्य[१] षड्विंशकमजं विभुः ।**
**विभुस्त्यजति चाव्यक्तं यदा त्वेतद्धि बुध्यते ॥ २० ॥**
**चतुर्विंशं महाभाग षड्विंशस्य प्रबोधनात् ।**

**निःसङ्गात्मानमाश्रित्य** इत्यत्र यदा तु षड्विंशकमाश्रित्य **एतत्** साङ्ख्यशास्त्रं बुध्यते तदा षड्विंशस्य प्रबोधनात् **विभुः** समर्थः सन् **अव्यक्तम्** अव्यक्तमूलं ब्रह्माहमित्यहङ्कारं **चतुर्विंशं** चतुर्विंशतितत्त्वात्मकं देहं च त्यजतीति योजना ।

**एष ह्यप्रतिबुद्धश्च बुध्यमानश्च तेऽनघ ॥ २१ ॥**
**प्रोक्तो बुद्धश्च तत्त्वेन यथाश्रुतिनिदर्शनात् ।**

**एष ह्यप्रतिबुद्धश्च बुध्यमानश्च** इत्यत्र मन्दमतिभिरप्रबुद्धः सुबुद्धिभिः प्रतिबुद्धश्च **एष** नारायणः तत्त्वतः ते बुध्यमानश्च यथा भवति तथा प्रोक्त इति योजना ।

---

१. **'निःसङ्गात्मानमासाद्य षड्विंशकमजं विभुम्'** इति कुं. पाठः ।

**नानात्वैकत्वमेतावद् द्रष्टव्यं शास्त्रदृष्टिभिः ॥ २२ ॥**

**नानात्वैकत्वमेतावत्** इत्यत्र जीवपरमयोः यन्नानात्वैकत्वं तत्रतत्रोच्यते तत् **एतावत्** यावदुपरितनदृष्टान्ताभ्यां लभ्यते एतावदेव द्रष्टव्यम्। न तु कुमतोपस्थापितं भेदाभेदरूपम्। अत एव शास्त्रदृष्टिभि रित्युक्तमिति योजना।

**मशकौदुम्बरे यद्वदन्यत्वं तद्वदेतयोः।**
**मत्स्योदके यथा तद्वदन्यत्वमुपलभ्यते ॥ २३ ॥**

**एवमेवावगन्तव्यं नानात्वैकत्वमेतयोः।**
**एतद्धि मोक्ष इत्युक्तमव्यक्तज्ञानसञ्ज्ञितम् ॥ २४ ॥**

**एवमेवावगन्तव्यं नानात्वैकत्वमेतयोः** इत्यत्र **एवमेव** मशकौदुम्बरवत् मत्स्यजलवच्च। **एतयोः** जीवपरमयोः आधाराधेयभावेन **नानात्वं** भिन्नत्वम् एवमेव। मशकवन्मत्स्यवच्च जीवानां नानात्वम्। **एवमेव** औदुम्बरवज्जलवच्च आधारभूतब्रह्मणि **एकत्वं** स्वगतभेद-वर्जितत्वं चावगन्तव्यम्। भेदाभेदव्यावर्तनाय एवमित्युक्तम्। न हि मशकौदुम्बरयोः जलमत्स्ययोश्च भेदाभेदं कोऽपि प्रेक्षावान् ब्रूते। जीव-परमयोरात्यन्तिकभेदसमर्थनमात्रेणापि स्वमते सिद्धे 'एकमेवाद्वितीयं ब्रह्म'[1] इत्यादिपरोदीरितश्रुतीनामप्युक्तविधया ब्रह्मणि सावकाशतां सूचयित्वा परमतं च निषेद्धुं नानात्वैकत्वमित्युक्तम्। नानात्वं च एकत्वं चेति द्वन्द्वसमासे कृते तस्यापि पुनरेकीभावे नानात्वैकत्वमिति शब्दनिष्पत्तिरिति ज्ञेयम्। इदं च ब्रह्मधर्मिकैकत्ववत् जीवब्रह्मभेदस्यापि

१. छां. उ. ६-४-२

पारमार्थिकत्वं च सूचयितुम् । अत एकयोक्त्या सविस्तरं स्वमतं स्थापयन् परमतं च दूषयन् मुनिश्रेष्ठो वसिष्ठः सकलविदुषां गरिष्ठः । **एतयोः** जीवब्रह्मणोः ।

**पञ्चविंशतिकस्यास्य योऽयं देहेषु वर्तते ।**
**एष मोक्षयितव्येति प्राहुरव्यक्तगोचरात्** ॥ २५ ॥

**सोऽयमेवं विमुच्येत नान्यथेति विनिश्चयः ।**
**परेण परधर्मा च भवत्येष समेत्य वै** ॥ २६ ॥

**विशुद्धधर्मा शुद्धेन बुद्धेन च स बुद्धिमान् ।**
**विमुक्तधर्मा मुक्तेन समेत्य पुरुषर्षभ** ॥ २७ ॥

**[1]वियोगधर्मणा चैव वियोगात्मा भवत्यथ ।**
**विमोक्षिणा विमोक्षश्च समेत्येह तथा भवेत्** ॥ २८ ॥

**शुद्धधर्मा शुचिश्चैव भवत्यमितदीप्तिमान् ।**
**विमलात्मा च भवति समेत्य विमलात्मना** ॥ २९ ॥

**केवलात्मा तथा चैव केवलेन समेत्य वै ।**
**स्वतन्त्रश्च स्वतन्त्रेण स्वतन्त्रत्वमवाप्नुते** ॥ ३० ॥

**पञ्चविंशतिकस्यास्य योऽयं देहेषु वर्तत** इत्यत्र **योऽयं** जीवः देहेषु वर्तते एषः **अव्यक्तगोचरात्** अव्यक्तात्मकरूपरसादिविषयात् संसारादिविषयादिति यावत् । **मोक्षयितव्येति** मोक्षयितव्य इति **पञ्चविंशतिकस्यास्य** नारायणस्य दयामेव **प्राहुः** मोक्षकारणं प्राहुः । पूर्वं मुक्तजीवस्य एकैकगुणसाम्यमपि अल्पमित्युक्तम् । इदानीं तादृशगुण-

---

१. BORI पृ. १६५०; T,G1,6,M1,5,7; **'वियोगधर्मिणा'** इति कुं.पाठः ।

साम्यमपि कतिपयगुणैरेव न सर्वगुणैरित्याह– **परेण परधर्मा च** इत्यादिना । **परेण** संसारिभ्यो भिन्नेन नारायणेन समेत्य स्वयं च **परधर्मा** संसारिभिर्भिन्नत्वाख्यधर्मवान् भवति । **विशुद्धेन** संसाराख्य-मलरहितेन **विशुद्धधर्मा** संसारमलराहित्याख्यधर्मवान् । **मुक्तेन** पुण्याख्यधर्मान्मुक्तेन, **विमुक्तधर्मा** मुक्तपुण्यः ।

**वियोगधर्मणा** पापवियोगाख्यधर्मवता, **वियोगात्मा** पापवियोग-स्वभावः । 'पुण्यपापे विधूय'[१] इति श्रुतेः । **विमोक्षिणा** जननमरण-दुःखादिसांसारिकधर्मविमोक्षिणा **विमलात्मना** स्वरूपभूतसुखज्ञाना-त्मकनिर्मलदेहवता, **केवलेन** जडामिश्रेण **स्वतन्त्रेण** स्वावरनियामकेन नारायणेन **स्वतन्त्रः** संसारदशायां यावत्स्वावरनियामकः तावत् **स्वतन्त्रत्वं** स्वावरनियामकत्वम् आप्नुयात् । उक्तविधया मुक्तजीवस्यापि योग्यं नवविधमेव सादृश्यं तादृत्त्वमित्युच्यते । न तु सर्वोत्तमत्व-सर्वकर्तृत्व-सर्वज्ञत्व-लक्ष्मी-नारायणत्वादिकमिति भावः ।

**॥ इति अष्टात्रिंशोत्तरशततमोऽध्यायः ॥**

## ॥ अथ एकोनचत्वारिंशोत्तरशततमोऽध्यायः ॥

**[२]विरक्तस्य यथा सम्यग् धृतं भवति भेषजम् ।**
**तथा निर्हृतदोषस्य प्रेत्य धर्मः सुखावहः ॥ १८ ॥**

**विरक्तस्य यथा** इत्यत्र **विरक्तस्य** अन्ने रागरहितस्य ।

**॥ इति एकोनचत्वारिंशोत्तरशततमोऽध्यायः ॥**

---

१. आथर्व.उ. ५-३

२. कुं. ३१४ अध्यायः ; BORI पृ. १६५६; T,$G_{1,2}$,$M_{1,5,7}$; **'विरिक्तस्य'** इति कुं.पाठः ।

## ।। अथ चत्वारिंशोत्तरशततमोऽध्यायः ।।

**अधः स्रोतेन्द्रियग्राममुत्पद्यति नराधिप ।**[१]
**सप्तमं सर्गमित्याहुरेतदैन्द्रियकं स्मृतम् ।। २२ ।।**

**अधःस्रोतेन्द्रियग्रामम्** इत्यत्र **अधःस्रोतः** स्रवणं येषां तानीन्द्रियाणि । उपस्थपायुपादाख्यानि मूत्रस्य पुरीषस्य पादसञ्चरणस्य च अध एव व्यापारदर्शनात् ।

**ऊर्ध्वं स्रोतस्तथा तिर्यगुत्पद्यति नराधिप ।**
**अष्टमं सर्गमित्याहुरेतदार्जवकं स्मृतम् ।। २३ ।।**

ऊर्ध्वं चाधस्तथा तिर्यगित्यनेन पाणीन्द्रियमुच्यते । हस्ताभ्यां शिरःकण्डूयनस्य पादकण्डूयनस्य पार्श्वकण्डूयनस्य च दर्शनात् ।

**तिर्यक्स्रोतस्त्वधःस्रोत उत्पद्यति नराधिप ।**
**नवमं सर्गमित्याहुरेतदार्जवकं बुधाः ।। २४ ।।**

तिर्यक्स्रोतः अधःस्रोत इत्यनेन वदनेन्द्रियमुच्यते । वदनस्य उभयपार्श्वे अधरोष्ठद्वारा च वदनलालाजलस्य स्रवणदर्शनात् । शिशौ वागिन्द्रियव्यापारस्य शब्दोच्चारणस्य पाय्वादिचतुरिन्द्रियव्यापारादपि अनन्तरभावित्वात् । व्युत्क्रमेण कर्मेन्द्रियसृष्टिकथनम् ।

**।। इति चत्वारिंशोत्तरशततमोऽध्यायः ।।**

* * *

---

१. कुं. ३१५ अध्यायः । **'अधः श्रोत्रेन्द्रिय'** इति कुं.पाठः ।

## ।। अथ एकचत्वारिंशोत्तरशततमोऽध्यायः ।।

[१] **द्यावापृथिव्यावित्येष राजन् वेदेषु पठ्यते ।**
**तयोः शकलयोर्मध्यमाकाशमकरोत् प्रभुः** ।। ५ ।।

**द्यावापृथिव्यौ** इत्यत्र **एष** परमात्मा, परमात्मनो विश्वरूपाख्या मूर्तिरिति यावत् **द्यावापृथिव्यौ** द्यौश्च पृथिवी चेति प्रकाशमानत्वात् पृथुजघनत्वाच्च, वेदेषु पठ्यते ।

**एतस्यापि च सङ्ख्यानं वेदवेदाङ्गपारगैः ।**
**दशकल्पसहस्राणि पादोनान्यहरुच्यते** ।। ६ ।।

**एतस्यापि** इत्यत्र **एतस्य** ब्रह्माण्डान्तःस्थितचतुर्दशभुवनसर्जकविश्वरूपस्य **पादोनानि** सार्धद्विसहस्रकल्पोनानि । दशावरणोपेतब्रह्माण्डसृष्टौ जायमानायां पादः कालो गत इति भावः ।

।। इति एकचत्वारिंशोत्तरशततमोऽध्यायः ।।

## ।। अथ द्विचत्वारिंशोत्तरशततमोऽध्यायः ।।

[२] **तमप्यनुपमात्मानं विश्वशम्भुः प्रजापतिः ।**
**अणिमा लघिमा प्राप्तिरीशानो ज्योतिरव्ययः** ।। १३ ।।

**विश्वशम्भुः प्रजापतिः** इत्यत्र [३]'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम्' इति श्रुतेः **विश्वशम्भुः** नारायणः ।

---

१. कुं. ३१६ अध्यायः । **'द्यावापृथिव्योः इत्येष'** इति कुं.पाठः ।
२. कुं. ३१७ अध्यायः । BORI पृ. १६६५; $T_1$,$G_6$; **'तमप्यनुपमात्मानं विश्वं शम्भुः'** इति कुं.पाठः ।; ३. **महानारायणोपनिषत्** – ४/१३/२९

**ततः समभवत्सर्वमक्षयाव्ययमव्रणम् ।**
**भूतभव्यभविष्याणां स्रष्टारमनघं तथा ॥ १६ ॥**

**ततः समभवत्सर्वम्** इत्यत्र **समभवत्** सर्वं जगत् **समभवत्** समाविशात् ।

॥ इति द्विचत्वारिंशोत्तरशततमोऽध्यायः ।

## ॥ अथ त्रिचत्वारिंशोत्तरशततमोऽध्यायः ॥

**पायुरध्यात्ममित्याहुर्यथा तत्त्वार्थदर्शिनः ।**[१]
**विसर्गमधिभूतं च मित्रस्तत्राधिदैवतम् ॥ २ ॥**

**विसर्गमधिभूतं च** इत्यत्र **विसर्गं** पृथिव्यन्नविकारात्मकं मलम् ।

**उपस्थोऽध्यात्ममित्याहुर्यथायोगप्रदर्शिनः ।**
**अधिभूतमथाऽऽनन्दो दैवतं च प्रजापतिः ॥ ३ ॥**[२]

**अधिभूतमथाऽऽनन्द** इत्यत्र **आनन्दः** रेतः ।

**हस्तावध्यात्ममित्याहुर्यथासङ्ख्यानदर्शिनः ।**
**कर्तव्यमधिभूतं तु इन्द्रस्तत्राधिदैवतम् ॥ ४ ॥**

**कर्तव्यम्** इत्यत्र **कर्तव्यं** घटपटादिकम् ।

**वागध्यात्ममिति प्राहुर्यथाश्रुतिनिदर्शिनः ।**
**वक्तव्यमधिभूतं तु वह्निस्तत्राधिदैवतम् ॥ ५ ॥**

**वक्तव्यमधिभूतम्** इत्यत्र **वक्तव्यं** शब्दम् ।

---

१. कुं. ३१८ अध्यायः ।
२. BORI पृ. १६६७; T,$G_{1,3,6}$; 'अधिभूतं तथाऽऽनन्दो' इति कुं.पाठः ।

**जिह्वामध्यात्ममित्याहुर्यथाश्रुतिनिदर्शिनः ।**
**रस एवाधिभूतं तु आपस्तत्राधिदैवतम्** ॥ ८ ॥

**आपस्तत्राधिदैवतम्** इत्यत्र **आपः** अबभिमानी वरुणः ।

**आहङ्कारिकमध्यात्ममाहुस्तत्त्वनिदर्शिनम् ।**
**अभिमान्यधिभूतं[1] च बुद्धिश्चात्राधिदैवतम्** ॥ १२ ॥

**अभिमान्यधिभूतं च** इत्यत्र अभिमानसम्बन्धि, अभिमानविषय इति यावत् धनकनकादिः ।

**बुद्धिरध्यात्ममित्याहुर्यथावदभिदर्शिनः ।**
**बोद्धव्यमधिभूतं तु क्षेत्रज्ञश्चाधिदैवतम्** ॥ १३ ॥

**क्षेत्रज्ञः** ब्रह्मा ।

**मोहोऽप्रकाशस्तामिस्रमन्धतामिस्रसञ्ज्ञितम् ।**
**मरणं चान्धतामिस्रं तामिस्रं क्रोध उच्यते** ॥ २५ ॥

**मोहोऽप्रकाशस्तामिस्रम्** इत्यत्र **तामिस्रम्** अन्धतामिस्रमिति साक्षान्मूलतमसो रूपान्तरम् । तत्र **मोहः** अज्ञानं, **तामिस्रं** तामिस्रविकारः । **अप्रकाशः** नैशं तमः । **अन्धतामिस्रम्** अन्धतामिस्रविकारः । मरणं च सर्वास्मृतिरूपत्वात्, क्रोधश्च अविवेकरूपत्वात् तामिस्रं तामिस्रविकारः ।

॥ इति त्रिचत्वारिंशोत्तरशततमोऽध्यायः ॥

* * *

---

१. **'अभिमानोऽधिभूतं तु'** इति कुं.पाठः ।

## ॥ अथ चतुश्चत्वारिंशोत्तरशततमोऽध्यायः ॥

**अव्यक्तरूपो[१] भगवान् शतधा च सहस्रधा ।**
**दशधा[२] सहस्रधा चैव तथा शतसहस्रधा ॥ २ ॥**

**कोटिशश्च करोत्येष प्रकृत्याऽऽत्मानमात्मना ।**
**सात्त्विकस्योत्तमं स्थानं राजसस्येह मध्यमम् ॥ ३ ॥**

**कोटिशश्च करोति** इत्यत्र **एष** अव्यक्तरूपो भगवान् नारायणः **प्रकृत्या** स्वभावेनैव **आत्मना** आत्मेच्छया आत्मानं **करोति** अवतारादिरूपेण व्यक्तीकरोतीति । **दशधा,** दशधा सहस्रधा = दशसहस्रधा चेत्यावृत्त्या योजना ।

**पुण्यपापेन मानुष्यमधर्मेणाप्यधोगतिम् ।**
**द्वन्द्वमेषां त्रयाणां तु सन्निपातं च तत्त्वतः ॥ ५ ॥**

**सत्त्वस्य रजसश्चैव तमसश्च शृणुष्व मे ।**
**सत्त्वस्य तु रजो दृष्टं रजसश्च तमस्तथा ॥ ६ ॥**

**तमसश्च तथा सत्त्वं सत्त्वस्याव्यक्तमेव च ।**
**अव्यक्तः सत्त्वसंयुक्तो देवलोकमवाप्नुयात् ॥ ७ ॥**

**सत्त्वस्य तु रजो दृष्टम्** इत्यत्र सात्त्विकेषु इन्द्रादिषु कदाचित् रागदर्शनात् रजः **दृष्टम्**(सृष्टम्) अनुमितम्। मानुषेष्वपि कदाचित् क्रोधदर्शनात् रजसश्च तमः दृष्टम् । तामसेष्वपि कदाचित् तपसो दर्शनात् तमसश्च सत्त्वं दृष्टम् । सत्त्वस्य **अव्यक्तम्** ईषद्व्यक्तं किञ्चिदित्यर्थः,

---

१. कुं. ३१९ अध्यायः ।; २. 'शतधा सहस्रधा' इति कुं. पाठः ।

तमः दृष्टम् । सत्त्वस्येत्युपलक्षणं रजसोऽपि ग्राह्यम् । इन्द्रादिषु कदाचिदसुरावेशेन विष्णुविरोधदर्शनात् । अतः प्रायशः द्वन्द्वः तमोगुणः सात्त्विकेष्वल्पतरः । राजसेष्वल्पः । सत्त्वगुणश्च राजसेष्वल्पः । तामसेष्वल्पतरः । रजोगुणोऽपि तामसेष्वल्पः । एवं च एकैकगुणस्य सर्वत्र अत्यल्पविवक्षया द्वन्द्वमित्युक्तम् । वस्तुतः सर्वत्र गुणत्रयसङ्घात एव । **अव्यक्तः** रजस्तमोभ्यामव्यक्तः । अल्परजस्तमस्क इत्यर्थः । **सत्त्वसंयुक्तः** प्रचुरसत्त्वसंयुक्तः पुमान् देवलोकमवाप्नुयात् ।

**ज्ञानिनां सम्भवं श्रेष्ठं स्थानमव्रणमच्युतम् ।**
**अतीन्द्रियमबीजं च जन्ममृत्युतमोनुदम्** ॥ १० ॥

**ज्ञानिनां सम्भवम्** इत्यत्र सम्भवतीति सम्भवः ।

[१] **अव्यक्तस्थः परः यत्तत् पृष्टस्तेऽहं नराधिप ।**
**स एष प्रकृतिस्थो हि तत्स्थ इत्यभिधीयते** ॥ ११ ॥

[२] **अचेतनश्चैष मतः प्रकृतिश्चापि पार्थिव ।**
[३] **एतेनाधिष्ठितश्चायं सृजते संहरत्यपि** ॥ १२ ॥

**अव्यक्तस्थः परश्चैव** इत्यत्र **अव्यक्तस्थः** प्रकृतिस्थो जीवः। **परः** अप्राकृतः परमात्मा च । **अचेतनः** अज्ञाननिबिडत्वेन तत्त्वज्ञानाभावाद् अचेतनः । **एतेन** परमात्मना अधिष्ठितः । **अयं** जीवः **सृजते** मुक्तिसाधनानि सृजते । **संहरति** संसारं संहरति ।

---

१. BORI पृ. १६७२; $D_{s2}$; **'अव्यक्तस्थं परम्'** इति कुं.पाठः ।
२. BORI पृ. १६७२; **'अचेतना चैव मता'** इति कुं.पाठः ।
३. BORI पृ. १६७२; $M_5$; **'एतेनाधिष्ठिता चैव'** इति कुं. पाठः ।

**अनादिनिधनावेतावुभावेव महामते ।**
**अमूर्तिमन्तावचलावप्रकम्प्यगुणागुणौ ॥ १३ ॥**

**अनादिनिधनौ** इत्यत्र **एतौ** परमजीवौ ।

**[1]अस्तित्वं केवलत्वं च विनाभावं तथैव च ।**
**दैवतानि च मे ब्रूहि देहं यान्याश्रितानि वै ॥ १६ ॥**

**अस्तित्वं केवलत्वम्** इत्यत्र **अस्तित्वम्** आस्तिकत्वम् । **केवलत्वं** मोक्षः । **विनाभावं** देहोत्क्रमणरूपविनाशम् ।

**अरिष्टानि च तत्त्वानि वक्तुमर्हसि सत्तम ।**
**विदितं सर्वमेतत्ते पाणावामलकं यथा ॥ १८ ॥**

**अरिष्टानि** अनिष्टानि ।

॥ इति चतुश्चत्वारिंशोत्तरशततमोऽध्यायः ॥

## ॥ अथ पञ्चचत्वारिंशोत्तरशततमोऽध्यायः ॥

**[2]न शक्यो निर्गुणस्तात गुणीकर्तुं विशाम्पते ।**
**गुणवांश्चाप्यगुणवान् यथातत्त्वं निबोध मे ॥ १ ॥**

**न शक्यो निर्गुण** इत्यत्र **निर्गुण** अनाद्यनन्तकालेषु सत्त्वादिगुण-रहितः, **गुणीकर्तुं** गुणबद्धजीवैक्यं (गुणबन्धजीवैक्यं) प्रापयितुं, **गुण-वान्** गुणबद्धो (गुणबन्धो) जीवः, **अगुणवान्** नारायणः कर्तुं न शक्यः ।

---

१. BORI पृ. १६७३; **'निस्तत्त्वम्'** इति कुं.पाठः।; २. कुं. ३२० अध्यायः ।

**गुणस्वभावस्त्वव्यक्तो गुणानेवाभिवर्तते ।**
**उपयुङ्क्ते च तानेव स[1] चैवान्यः स्वभावतः ॥ ३ ॥**

**गुणस्वभाव** इत्यत्र **अव्यक्तः** प्रकृतिस्थः स्वभावतः **अन्यः** परमात्मनोऽन्यः ।

**अव्यक्तस्तु न जानीते पुरुषोऽज्ञः स्वभावतः ।**
**न मत्तः परमोऽस्तीति नित्यमेवाभिमन्यते ॥ ४ ॥**

**न मत्तः परम** इत्यत्र मत्तः परमो नास्ति । किन्तु अहमेव **परमः** परब्रह्मेत्यभिमन्यते ।

**अनेन कारणेनैतदव्यक्तं स्यादचेतनम् ।**
**नित्यत्वाच्चाक्षरत्वाच्च क्षरत्वान्न तदन्यथा ॥ ५ ॥**

**न तदन्यथा** इत्यत्र **तत्** ब्रह्म । **अन्यथा** तद्विपरीतजीवभावेन **न** न भवत्येव ।

**यदाऽज्ञानेन कुर्वीत गुणसर्गं पुनः पुनः ।**
**यदात्मानं न जानीते तदाऽऽत्मापि न मुच्यते ॥ ६ ॥**

**यदा** यस्मात् अज्ञानेन । **तदा** तस्मात् ।

जीवस्य अचेतनतामुपपाद्य अधुना परमात्मस्वरूपं निरूपयति– कर्तृत्वादिति ॥

**कर्तृत्वाच्चापि तत्त्वानां[2] तत्त्वधर्मा तथोच्यते ।**
**कर्तृत्वाच्चापि योगानां योगधर्मा तथोच्यते ॥ ७ ॥**

---

१. BORI पृ. १६७४; M1,5,7; **'स चैवाज्ञः'** इति कुं.पाठः ।
२. BORI पृ. १६७४; B0,6,D3; **'सर्गाणां सर्गधर्मा '** इति कुं पाठः ।

**तत्त्वानां** चतुर्विंशतितत्त्वानां कर्तृत्वात् **तत्त्वधर्मा** तत्त्वाख्यधर्मवानुच्यते । तत्त्वकर्तृत्वादेव धनीतिवत् तत्त्ववान् इत्युच्यते। न तु जीववत्तत्त्वबद्धत्वादित्यर्थः । एवमुत्तरत्रापि योज्यम् ।

**बीजत्वात् प्रकृतित्वाच्च प्रलयत्वात्तथैव च ।**
**[१]उपेक्षकत्वादन्यत्वादभिमानाच्च केवलम्** ॥ ११ ॥

**मन्यन्ते यतयः सिद्धा अध्यात्मज्ञा गतज्वराः ।**
**अनित्यं नित्यमव्यक्तं व्यक्तमेतद्धि शुश्रुम** ॥ १२ ॥

**बीजत्वात् प्रकृतित्वाच्च** इत्यत्र **बीजत्वात्** उत्पत्तिग्रस्तत्वात् । **प्रकृतित्वात्** प्रकृतिबद्धत्वात् । तथा **प्रलयत्वात्** प्रलयस्थानत्वाच्च । **उपेक्षकत्वात्** सच्छास्त्रोपेक्षकत्वात् । **अन्यत्वात्** स्वस्वभावादन्यादृशत्वात् । **अभिमानात्** अनित्यदेहाभिमानाच्च । **अव्यक्तं** प्रकृतिबद्धं जीवं **नित्यम्** अनादिकालीनमपि अनित्यं यतयः मन्यन्ते ।

**अव्यक्तैकत्वमित्याहुर्नानात्वं [२]पुरुषे तथा ।**
**सर्वभूतदयावन्तः केवलं ज्ञानमास्थिताः** ॥ १३ ॥

**अव्यक्तैकत्वम्** इत्यत्र इति पूर्वोक्तप्रकारेण **अव्यक्तस्य** प्रकृतेः एकत्वमाहुः । **पुरुषे** तत् बद्धे जीवे नानात्वमाहुः ।

**अन्यः स [३]पुरुषोऽव्यक्तादध्रुवाद् ध्रुवसञ्ज्ञकः ।**

---

१. **'उपेक्षत्वादनन्यत्वाद्'** इति कुं. पाठः । BORI पृ. १६७५

२. BORI पृ. १६७५; $G_{1,3,6}$,T ;**'पुरुपास्तथा'** इति कुं.पाठः ।

३. BORI पृ. १६७६; T,$G_{1,3,6}$,$M_{1,5,7}$; **'पुरुषोऽव्यक्तस्त्वध्रुवो'** इति कुं.पाठः ।

**यथा मुञ्ज इषीकाणां तथैवैतद्धि जायते ।**
**न चैव मुञ्जसंयोगादिषीका तत्र बुध्यते ॥ १४ ॥**

**अन्यः स पुरुष** इत्यत्र **सः पुरुषः** परमात्मा । **अव्यक्तात्** प्रकृतिबद्धात् । अत एव **अध्रुवात्** जीवात् । **ध्रुवः** स पुरुषः । नारायणः अन्यः ।

**तथैवैतद्धि जायत** इत्यत्र एतत् ब्रह्म ।

**अन्यो ह्यग्निरुखाऽप्यन्या नित्यमेवमवेहि भोः ।**
**न चोपलिप्यते सोऽग्निरुखासंस्पर्शनेन वै ॥ १७ ॥**

**एतेषां सहवासं च निवासं चैव नित्यशः ।**
**याथातथ्येन पश्यन्ति न नित्यं प्राकृता जनाः ॥ १९ ॥**

**अन्यो ह्यग्निरुखाऽप्यन्या** इत्यत्र उखा नाम अग्नेरुपरि स्थाल्यादिस्थापनाय कृतः मृण्मयवेदिकाविशेषः । **एतेषाम्** इषीका-मशकमत्स्यादीनां सहसंवासं **निवासं** निर्लेपतया वासं न पश्यन्ति । एवं परमात्मनोऽपि एकस्मिन् देहे जीवैः सह वासं तत्रापि निर्लेपतां न जानन्ति । जानन्त एव जानन्तीति भावः ।

**ये त्वन्यथैव पश्यन्ति न सम्यक् तेषु दर्शनम् ।**
**ते व्यक्तं निरयं घोरं प्रविशन्ति पुनः पुनः ॥ २० ॥**

**अन्यथा** इतोऽन्यथा । ब्रह्मैव जीवाकारेण लिप्यत इति ये पश्यन्ति ।

॥ इति पञ्चचत्वारिंशोत्तरशततमोऽध्यायः ॥

## ।। अथ षट्चत्वारिंशोत्तरशततमोऽध्यायः ।।

[१]
**रुद्रप्रधानानपरान् विद्धि योगानरिन्दम ।**
**तेनैव चाथ देहेन विचरन्ति दिशो दश ।। ५ ।।**

**रुद्रप्रधानान्** इत्यत्र **रुद्रः प्रधानः** प्रथमोपदेष्टा येषां तान् ।

**तावदेवाष्टगुणिनं योगमाहुर्मनीषिणः ।**
[२]
**सूक्ष्मेणाष्टगुणेनैव नेतरं नृपसत्तम ।। ७ ।।**

**सूक्ष्मेणाष्टगुणेनैव** इत्यत्र **अष्टगुणेन** अणिमाद्यष्टगुणसम्पन्नेन ।

**यद्यद् दृश्यति मुञ्चन्वै प्राणान् मैथिलसत्तम ।**
[३]
**वाताधिक्यं भवत्येव तस्माद्धि न समाचरेत् ।। १० ।।**

**तस्माद्धि न समाचरेत्** इत्यत्र सर्वदा न समाचरेत् इत्यर्थः ।

**निशायाः प्रथमे यामे चोदना द्वादश स्मृताः ।**
**मध्ये स्वप्नात् परे यामे द्वादशैव तु चोदनाः ।। ११ ।।**

**चोदनाः** योगाभ्यासाः । **द्वादश** द्वादशघटिकापर्यन्ताः ।

**युक्तस्य तु महाराज लक्षणान्युपधारय ।**
**लक्षणं तु प्रसादस्य यथा तृप्तः सुखं स्वपेत् ।। १८ ।।**

**युक्तस्य तु महाराज** इत्यत्र **युक्तस्य** योगयुक्तस्य ।

**।। इति षट्चत्वारिंशोत्तरशततमोऽध्यायः ।।**

---

१. कुं. ३२१ अध्यायः ।
२. BORI पृ. १६७८; **'सूक्ष्ममष्टगुणं प्राहुर्नेतरम्'** इति कुं.पाठः ।
३. BORI पृ. १६७९; **'तस्मात्तं न समाचरेत्'** इति कुं.पाठः ।

## ॥ अथ सप्तचत्वारिंशोत्तरशततमोऽध्यायः ॥

**[१] अथैवोत्क्रमतां स्थानं शृणुष्वावहितो नृप ।**
**पद्भ्यामुत्क्रममाणस्य वैष्णवं स्थानमुच्यते ॥ १ ॥**

पद्भ्यामुत्क्रममाणस्येत्यादेरयमर्थः । **पद्भ्यां** पादतलाभ्याम् **उत्क्रममाणस्य** जीवकलाम् ऊर्ध्वं नयतः वैष्णवं स्थानमुच्यते । एतावतः प्रयत्नस्य ध्रुवलोकादिविष्णुस्थानप्राप्तिः फलम् । एवमुपरि शिरोऽग्रभागस्थितब्रह्मनाडीप्रान्तपर्यन्तं जीवकलां क्रमेणोन्नयतः उक्ताः फलविशेषा ज्ञेयाः । जीवस्य देहादूर्ध्वं गमनं तु ब्रह्मनाडीमुखेनैवेति ज्ञातव्यम् ।

**अरिष्टानि प्रवक्ष्यामि विहितानि मनीषिभिः ।**
**[२] संवत्सरवियोगस्य सम्भवेत शरीरिणः ॥ ८ ॥**

**संवत्सरवियोगस्य** इत्यत्र संवत्सरेण **वियोगः** शरीरवियोगो यस्य तस्य ।

**खण्डाभासं दक्षिणतस्तेऽपि संवत्सरायुषः ।**
**परचक्षुषि चात्मानं ये न पश्यन्ति पार्थिव ॥ १० ॥**

**खण्डाभासं दक्षिणत** इत्यत्र **खण्डाभासं** मयूरबर्हिः खण्डवदाभासम् । दक्षिणतः दक्षिणाक्षिकोणे ये न पश्यन्तीति सम्बन्धः ।

**[३] यद्यस्य नेष्टं मरणं स्थातुमिच्छेदिमां क्रियाम् ।**
**सर्वगन्धान् रसांश्चैव धारयीत समाहितः ॥ १९ ॥**

---

१. कुं. ३२२ अध्यायः । BORI पृ. १६८१; Ds; **'तथैवोत्क्रमताम्'** कुं.पाठः
२. BORI पृ. १६८२; **'संवत्सराद्विमोक्षस्तु'** इति कुं.पाठः ।
३. **'अथास्य नेष्टम्'** इति कुं.पाठः ।

**यद्यस्य नेष्टम्** इत्यत्र यदि **अस्य** योगिनः मरणम् इष्टं न तदा **इमां** ध्यानक्रियां **स्थातुमिच्छेत्** निरन्तरध्यानेन तुष्टः परमात्मा मरणं परिहृत्य योगायुष्यं दिशेदित्यर्थः ।

॥ इति सप्तचत्वारिंशोत्तरशततमोऽध्यायः ॥

## ॥ अथ अष्टचत्वारिंशोत्तरशततमोऽध्यायः ॥

**[1] ततः प्रणम्य शिरसा मयोक्तस्तपतां वरः ।**
**यजूंषि नोपयुक्तानि क्षिप्रमिच्छामि वेदितुम्** ॥ ५ ॥

**यजूंषि नोपयुक्तानि** इत्यत्र पूर्वमन्यैः (स्व)सर्वकार्येषु उपयुक्तानि न भवन्तीति **नोपयुक्तानि** । अयातयामानीत्यर्थः ।

**कृत्वा चाध्ययनं तेषां शिष्याणां शतमुत्तमम् ।**
**विप्रियार्थं सशिष्यस्य मातुलस्य महात्मनः** ॥ १७ ॥

**विप्रियार्थं सशिष्यस्य** इत्यत्र **विप्रियार्थं** विशेषेण प्रियार्थम् ।

**स्ववेददक्षिणायार्थे विमर्दे मातुलेन ह** ॥ १९ ॥

**विमर्दे** जनसम्मर्दे ।

**त्रिगुणं गुणकर्तृत्वाद्विश्वान्यो निष्कलस्तथा ।**
**[2] विश्वोऽस्ति वेति मिथुनमेवमेवानुदृश्यते** ॥ ३८ ॥

**विश्वोऽस्ति वेति मिथुनम्** इत्यत्र असङ्गत्वात् अस्ति वेति अविश्वस्तमुच्यते ।

---

१. कुं. ३२३ अध्यायः ।

२. BORI पृ. १६८९; T,$G_{3,6}$; **'विश्वाविश्वेति'** इति कुं.पाठः ।

**ज्ञानं तु प्रकृतिं प्राहुर्ज्ञेयं पुरुषमेव च ।**
**अज्ञश्च[1] ज्ञश्च पुरुषस्तस्मान्निष्फल उच्यते ॥ ४० ॥**

**अज्ञश्च ज्ञश्च पुरुष** इत्यत्र अज्ञां प्रकृतिम् अज्ञयतीति पुरुषोऽपि **अज्ञ** इत्युच्यते । यद्यपि सर्वत्र प्रकृतिपुरुषयोरेव प्रश्नः तथापि विश्वात्मिका प्रकृतिः । विश्वभिन्नः पुरुषः । अविद्यात्मिका प्रकृतिः । विद्यारूपः पुरुष इत्यादिना, गुणविशेषप्रदर्शनाय पुनः पुनः प्रश्नः ।

**[2]अन्यश्च शाश्वतोऽव्यक्तः तथाऽन्यः पञ्चविंशकः ।**
**तत्स्थं समनुपश्यन्ति तमेकमिति साधवः ॥ ५६ ॥**
**तेनैतं नाभिनन्दन्ति पञ्चविंशकमच्युतम् ।**
**जन्ममृत्युभयाद्योगाः साङ्ख्याश्च परमैषिणः ॥ ५७ ॥**
**पञ्चविंशं यदेतत्ते प्रोक्तं ब्राह्मणसत्तम ।**
**तदहं न तथा वेद्मि तद्भवान्वक्तुमर्हति ॥ ५८ ॥**

**अन्यश्च शाश्वतोऽव्यक्तः तथाऽन्यः पञ्चविंशक** इत्यत्र प्राग्वसिष्ठेन पञ्चविंशः हरिरेवेति बहुधा प्रपञ्चितम् । इदानीं 'षड्विंशमनुपश्यन्ति' इत्यत्र षड्विंशस्यैव ज्ञेयत्वं याज्ञवल्क्येनोच्यते । अतः पूर्वोत्तरविरोध इत्याशङ्क्याह । महदादिचतुर्विंशतितत्त्वेषु जीवानामन्तर्भावे पञ्चविंशो हरिरेव । जडजीवौ विभज्य कथने चतुर्विंशं जडम्, पञ्चविंशो जीवः, षड्विंशो नारायण, इति विवक्षाभेदेन पञ्चविंशो जीवोऽपि भवति । अतः षड्विंशमनुपश्यतीत्युक्तमिति याज्ञवल्क्यः स्वाभिप्रायमुद्घाटयति । शाश्वतः अव्यक्तः प्रकृत्याख्यप्रधानतत्त्वम्,

---

१. BORI पृ. १६९०; '**अज्ञमव्यक्तमित्युक्तं ज्ञस्तु निष्फल**' इति कुं. पाठः ।
२. '**अन्यश्च शाश्वतो व्यक्तः**' इति कुं.पाठः ।

**अन्यः** हरेरन्यः । तथा पञ्चविंशको जीवोऽपि हरेरन्योऽस्ति । तस्माज्जडजीवविवेके जीवः एव पञ्चविंशः । जडाभिमानित्वाज्जीवानां जडेष्वेवान्तर्भावे हरिरेव पञ्चविंशः इति द्वौ पञ्चविंशौ पश्यन्ति । तं षड्विंशम् एकमित्येव पश्यन्ति । तस्मिन् द्वेधाभावो नास्तीति भावः । तेन कारणेन पञ्चविंशकम् **अच्युतम्** अच्युतमेव नाभिजानन्ति, किन्तु विवक्षाभेदाद् द्वावपि मुख्यामुख्यतया पञ्चविंशौ जानन्तीति योजना । यदेतत्पञ्चविंशं परमात्मस्वरूपं तत् यथा पञ्चविंशश्च भवति **न तथा** जीवस्य पञ्चविंशत्वे तथा न पञ्चविंशं न । किन्तु षड्विंशमेवेति त्वया प्रोक्तम् । तत् भवान् अथापि वक्तुमर्हति । जीवस्य पञ्चविंशत्त्वे कीदृश इति वक्तुमर्हतीति भावः ।

**बुध्यमानो हि प्रकृतिं बुध्यते पञ्चविंशकः ।**
**न तु बुध्यति गन्धर्वप्रकृतिः पञ्चविंशकम्** ॥ ७० ॥

**प्रकृतिः पञ्चविंशकम्** इत्यत्र **पञ्चविंशकं** जीवम् ।

**पश्यंस्तथैव चापश्यन् पश्यत्यन्यः सदाऽनघ ।**
**षड्विंशः[१] पञ्चविंशं च चतुर्विंशं च पश्यति** ॥ ७२ ॥
**न तु पश्यति पश्यंस्तु यश्चैनं अनुपश्यति ।**

**पश्यंस्तथैव चापश्यन्** इत्यत्र **अन्यः** जीवाख्यः पञ्चविंशकः, **पश्यन्** देहगेहादिकं, परमात्मानमपश्यंश्च पश्यति । षड्विंशस्तु **पञ्चविंशं** जीवं, **चतुर्विंशं** जडं च पश्यति । पश्यन् जीवं **यः** परमात्मा **एनं** जीवं पश्यति । तं पश्यन्तं अयं पञ्चविंशो न पश्यति ।

१. BORI पृ. १६९५; **'पड्विंशम्'** इति कुं.पाठः ।

यथैव बुध्यते मत्स्यस्तथैषोऽप्यनुपश्यति[1] ।
सस्नेहात्सहवासाच्च साभिमानाच्च नित्यशः ॥ ७५ ॥

तथैषोऽप्यनुपश्यति इत्यत्र एषः पञ्चविंशाख्यो जीवः ।

स निमज्जति कालस्य यदैकत्वं न बुध्यते ।
उन्मज्जति हि कालस्य समत्वेनाभिसंवृतः ॥ ७६ ॥

कालस्य एकत्वं मुख्यत्वं न बुध्यते ।

अन्यश्च राजन्परमस्तथाऽन्यः पञ्चविंशकः ।
तत्स्थत्वादनुपश्यन्ति एक एवेति साधवः ॥ ७८ ॥

एक एवेति मुख्य एवेति साधवः पश्यन्ति ।

॥ इति अष्टचत्वारिंशोत्तरशततमोऽध्यायः ॥

## ॥ अथ पञ्चाशोत्तरशततमोऽध्यायः ॥

[2] ज्ञानेन कुरुते यत्नं यत्नेन प्राप्यते महत् ।
महद्द्वन्द्वप्रमोक्षाय सा सिद्धिर्या वयोतिगा ॥ ३० ॥

यत्नेन प्राप्यते महत् इत्यत्र महत् ब्रह्म ।

यश्च मे दक्षिणं बाहुं चन्दनेन समुक्षयेत् ।
[3] सव्यं वाश्या च यस्तक्षेत् समावेतावुभौ मम ॥ ३६ ॥

---

१ 'तथैषोऽप्यनुबुध्यते' इति कुं.पाठः ।
२ कुं. ३२५ अध्यायः ।
३ 'सव्यं वास्यापि यस्तक्षेत्' इति कुं.पाठः ।

**सव्यं वाश्या च यस्तक्षेत्** इत्यत्र **वाशी** नाम कारूणां काष्ठ-समीकरणयन्त्रविशेषः । बाचीत्यपभ्रंशभाषा ।

**सुखी सोऽहमवाप्तार्थः समलोष्टाश्मकाञ्चनः ।**
**मुक्तसङ्गः स्थितो राज्ये विशिष्टोऽन्यैस्त्रिदण्डिभिः ॥ ३७ ॥**

**विशिष्टोऽन्यैस्त्रिदण्डिभिः** इत्यत्र विशेषेण शिष्टः शिक्षितो **विशिष्टः** ।

**विहायोभयमप्येव ज्ञानं कर्म च केवलम् ।**[१]
**तृतीयेयं समाख्याता निष्ठा तेन महात्मना ॥ ४० ॥**

**तृतीयेयं समाख्याता** इत्यत्र केवलं कर्म केवलं ज्ञानं च विहाय **इयं** सर्वत्यागरूपा निष्ठा तृतीया ।

**दोषदर्शी तु गार्हस्थ्ये यो व्रजत्याश्रमान्तरे ।**
**उत्सृजन्परिगृह्णंश्च सोऽपि सङ्गान्न मुच्यते ॥ ४४ ॥**

**उत्सृजन्परिगृह्णंश्च** इत्यत्र भार्यागेहादिकम् **उत्सृजन्** कमण्डलु-काषायादिकं **परिगृह्णंश्च** यः ।

**आधिपत्ये तथा तुल्ये निग्रहानुग्रहात्मके ।**
**राजभिर्भिक्षुकास्तुल्या मुच्यन्ते केन हेतुना ॥ ४५ ॥**

**आधिपत्ये तथा तुल्य** इत्यत्र राज्याधिपत्ये राजा कमण्डल्वाद्याधिपत्ये योगी एवं तुल्याः । राज्यापहरणे निग्रहे आत्मा चित्तं राज्ञः, कमण्डल्वपहरणे निग्रहे आत्मा चित्तं योगिनः । वित्तदाने अनुग्रहे आत्मा राज्ञः, भिक्षादाने योगिनः इति उभयेऽपि निग्रहानुग्रहात्मकाः ।

---

१. **'प्रहायोभयम्'** इति कुं. पाठः ।

**सौकुमार्यं तथा रूपं वपुरग्र्यं तथा वयः ।**
**न [1] चैतानि समस्तानि नियमश्चेति संशयः ॥ ५४ ॥**

**न चैतानि समस्तानि नियमश्चेति संशय** इत्यत्र **नियमः** प्राग्वृद्धभिक्षुकीव्रतनियमश्च त्वयि न । भिक्षुक्याः मायारूपाऽसम्भवात् इति हेतोः त्वयि मम शिष्टा वा अशिष्टो वेति संशयः अस्ति ।

**मत्पक्षसंश्रयाच्चायं शृणु यस्ते व्यतिक्रमः ।**
**आश्रयन्त्याः स्वभावेन मम पूर्वपरिग्रहम् ॥ ५७ ॥**

**आश्रयन्त्याः स्वभावेन मम पूर्वपरिग्रहम्** इत्यत्र **स्वभावेन** स्वस्या दुर्भावेन **पूर्वपरिग्रहं** देहम् । इदानीं देहे विरक्तत्वात् पूर्वपरिग्रहमित्युक्तम् ।

सुलभोवाच–

**नवभिर्नवभिश्चैव दोषैर्वाग्बुद्धिदूषणैः ।**
**अपेतमुपपन्नार्थमष्टादशगुणान्वितम् ॥ ७८ ॥**
**[2] सौक्ष्म्यं सङ्ख्याक्रमौ चोभौ निर्णयः सम्प्रयोजनः ।**
**पञ्चैतान्यर्थजातानि वाक्यमित्युच्यते नृप ॥ ७९ ॥**

**नवभिर्नवभिश्चैव दोषैर्वाग्बुद्धिदूषणैः** इत्यत्र **नवभिर्नवभिः** अष्टादशभिरित्यर्थः । तांश्च दोषान् अपार्थमित्यादिना स्वयमेव वक्ष्यति । तत्तद्दोषाभावो वा नगरादिवर्णनरूपो वा । सौक्ष्म्यं सङ्ख्या **उभौ क्रमौ**

१. **'तत्रैतानि समस्तानि'** इति कुं.पाठः ।
२. BORI पृ. १७१६; **'सौक्ष्म्यं साङ्ख्यक्रमौ चोभौ निर्णयः सप्रयोजनः'** इति कुं.पाठः ।

देवदत्त गामानयेत्यादिवाक्येषु पूर्वं कर्तृपदं मध्ये कर्मपदम् अन्ते क्रियापदं चेति पदानां पूर्वत्वापरत्वक्रमौ क्रमयोगावित्यर्थः । निर्णयः प्रयोजनं चेति पञ्च ।

**वक्ता श्रोता च वाक्यं च यदा त्वविकलं नृप ।**
**स ममेति विवक्षायां तदा सोऽर्थः प्रकाशते ॥ ९१ ॥**

**स ममेति विवक्षायाम्** इत्यत्र **सः** परेणोच्यमानः अर्थः ममेति विवक्षायाम् ।

**अथ यः स्वार्थमुत्सृज्य परार्थं प्राह मानवः ।**
**विशङ्का जायते तस्मिन्वाक्यं तदपि दोषवत् ॥ ९३ ॥**

**अथ यः स्वार्थमुत्सृज्य** इत्यत्र स्वार्थमुत्सृज्य परार्थं वचनं नाम विरक्तस्य वाणिज्योपदेशः ।

**यथा जतु च काष्ठं च पांसवश्चोदबिन्दवः ।**
**सुश्लिष्टानि तथा राजन् प्राणिनामिह सम्भवः ॥ ९७ ॥**

**जतु च काष्ठं च** इत्यत्र जतुकाष्ठयोः पांसुजलबिन्दूनां च यथा यादृच्छिकः सम्बन्धः तथा प्राणिनां सम्भवोऽपि (सम्बन्धोऽपि) यादृच्छिकः ।

**शब्दः स्पर्शो रसो रूपं गन्धः पञ्चेन्द्रियाणि च ।**
**पृथगात्मानमात्मानं[१] संश्लिष्टा जतुकाष्ठवत् ।**
**न चैषां चोदना काचिदस्तीत्येष विनिश्चयः ॥ ९८ ॥**

---

१. 'पृथगात्मा दशात्मानम्' इति कुं.पाठः ।

**पृथगात्मानमात्मानम्** इत्यत्र **पृथगात्मानं** पृथक् स्वरूपम्, **आत्मानं** जीवम् ।

**एकैकस्येह विज्ञानं नास्त्यात्मनि तथा परे ।**
**न वेद चक्षुश्चक्षुष्ट्वं श्रोत्रं नात्मनि वर्तते ॥ ९९ ॥**

**न वेद चक्षुश्चक्षुष्ट्वम्** इत्यत्र चक्षुः स्वचक्षुस्त्वं न वेद ।

**तथैव व्यभिचारेण न वर्तन्ते परस्परम् ।**
**प्रश्लिष्टं च न जानन्ति यथाऽऽप इव पांसवः ॥ १०० ॥**

तथा क्वचित् परस्परं न वर्तन्ते । किन्तु व्यभिचारेणैव । श्रोत्रे सति चक्षुर्नास्ति । चक्षुषि सति श्रोत्रं नास्तीत्यर्थः ।

**बाह्यानन्यानपेक्षन्ते गुणांस्तानपि मे शृणु ।**
**रूपं चक्षुः प्रकाशश्च दर्शने हेतवस्त्रयः ॥ १०१ ॥**

**रूपं चक्षुः प्रकाशश्च** इत्यत्र **प्रकाशः** आलोकः ।

**अथ पञ्चदशो राजन् गुणस्तत्रापरः स्मृतः ।**
**पृथक्कालसमूहस्य सामग्र्यं तदिहोच्यते ॥ १०६ ॥**

**पृथक्कालसमूहस्य** इत्यत्र स्वस्वोदयकालस्य ग्रहादीनामनुकूल-प्रतिकूलादिकालस्य **सामग्र्यं** सामग्री ।

**गुणस्त्वेकोऽपरस्तत्र सङ्घात इति षोडशः ।**
**आकृतिर्व्यक्तिरित्येतौ गुणौ यस्मिन्समाश्रितौ ॥ १०७ ॥**

**गुणस्त्वेकोऽपरस्तत्र** इत्यत्र **सङ्घातः** योनिसङ्घातः । **आकृतिः** पशु-पक्ष्याद्याकृतिः । **व्यक्तिः** अभिवृद्धिः ।

**अव्यक्तं प्रकृतिं त्वासां कलानां कश्चिदिच्छति ।**
**व्यक्तं चासां तथैवान्यः स्थूलदर्शी प्रपश्यति ॥ ११३ ॥**

**व्यक्तं चासाम्** इत्यत्र **व्यक्तं** चतुर्विंशतितत्त्वानि ।

**अव्यक्तं यदि वा व्यक्तं द्वयं वाऽथ चतुष्टयम् ।**
**प्रकृतिं सर्वभूतानां पश्यन्त्यध्यात्मचिन्तकाः ॥ ११४ ॥**

**द्वयं वाऽथ चतुष्टयम्** इत्यत्र **चतुष्टयं** जरायुजादि ।

**त्रिवर्गे[1] सप्तधा न्यस्तं यो न वेदेह कर्मसु ।**
**सङ्गवान् यस्त्रिवर्गे च किं तस्मिन् मुक्तलक्षणम् ॥ १३० ॥**

**त्रिवर्गे सप्तधा न्यस्तम्** इत्यत्र **सप्तधा कर्मसु** अग्निष्टोमादि सप्तक्रतुरूपकर्मसु ।

**इमान्यन्यानि सूक्ष्माणि मोक्षमाश्रित्य केनचित् ।**
**चतुरङ्गप्रवृत्तानि सङ्गस्थानानि मे शृणु ॥ १३४ ॥**

**चतुरङ्गप्रवृत्तानि** इत्यत्र पुरं, पुरान्तर्गृहम्, गृहान्तः शय्या, शय्यायामप्यर्धम् । एवं च वक्ष्यमाणचतुरङ्गैः प्रवृत्तानीत्यर्थः ।

**सप्ताङ्गश्चैव सङ्घातस्त्रयश्चान्ये नृपोत्तम ।**
**सम्भूय दशवर्गोऽयं भुङ्क्ते राज्यं हि राजवत् ॥ १५८ ॥**

**त्रयश्चान्ये नृपोत्तम** इत्यत्र **त्रयः** त्रिवर्गाः ।

**वर्णाश्रमाः पृथक्त्वेन दृष्टार्थस्यापृथक्त्वतः ।**
**नान्यदन्यदिति ज्ञात्वा नान्यदन्यत्र वर्तते ॥ १७८ ॥**

---

१. BORI पृ. १७२४; 'त्रिवर्गम्' इति कुं.पाठः ।

**नान्यदन्यदिति ज्ञात्वा नान्यदन्यत्र वर्तत** इत्यत्र **अन्यत्** मम स्वरूपं **न अन्यत्** अन्यस्य स्वरूपं नेति ज्ञात्वा प्रवर्तमानस्य । अन्यत् अन्यद्यथा भवति तथा न प्रवर्तते ।

**द्रोणश्च शतशृङ्गश्च वक्रद्वारश्च पर्वतः ।**
**मम सत्रेषु पूर्वेषां चिता मघवता सह ॥ १८४ ॥**

**चिता मघवता सह** इत्यत्र **मघवता** मघवन्नामकपर्वतेन सह । **चिताः** यज्ञयूपस्तम्भेन सञ्चिताः ।

**॥ इति पञ्चाशोत्तरशततमोऽध्यायः ॥**

## ॥ अथ एकपञ्चाशोत्तरशततमोऽध्यायः ॥

**ऐहलौकिकमीहन्ते मांसशोणितवर्धनम् ।**[1]
**पारलौकिककार्येषु प्रसुप्ता भृशनास्तिकाः ॥ ९ ॥**

**ऐहलौकिकमीहन्त** इत्यत्र इहलोकसम्बन्धि **ऐहलौकिकम्** ।

**तिष्ठन्तं च शयानं च मृत्युरन्वेषते यदा ।**
**निवृत्तिं लभसे तस्मादकस्मान्मृत्युनाऽशितः ॥ १८ ॥**[2]

**निवृत्तिं लभसे तस्मात्** इत्यत्र तस्मात् मृत्योः निवृत्तिं कस्माल्लभसे इति योजना ।

**तं दृष्ट्वा प्रसृतमजस्रमुग्रवेगं गच्छन्तं सततमिहान्ववेक्षमाणम् ।**
**चक्षुस्ते यदि न परप्रणेतृनेयं धर्मे ते रमतु मनः परं निशाम्य २५**

१. कुं. ३२९ अध्यायः ।
२. BORI पृ. १७३५; $D_3$,$G_2$ ;'**निवृत्तिं लभते कस्मात्**' इति कुं.पाठः ।

**चक्षुस्ते यदि न परप्रणेतृनेयम्** इत्यत्र ते चक्षुः यदि अन्धवत् परप्रणेत्रा नेयं न, न भवति, तर्हि मनः धर्मे रमतु इत्यन्वयः ।

**श्वानो भीषणकाया अयोमुखानि वयांसि**
**बलगृध्रकुररपक्षिणां च सङ्घातम् ।**
**नरककदनरुधिरवागुरवचन-[१]**
**नुदमुपरतं विशन्त्यसन्तः ॥ २८ ॥**

**श्वानो भीषणकाया** इत्यत्र श्वानश्च, अयोमुखानि वयांसि बलगृध्र-कुरराः पक्षिणश्च **सङ्घातं** सज्जनसमुदायं बिभीषिकया नो न भीषयन्तीति योग्यक्रियाध्याहारः । इदम् **उपरतं** शान्तं **नरककदनरुधिरवागुरवचनं** बध्नीहीति वचनं च सन्तः न विशन्ति ।

**यो लुब्धः सुभृशं प्रियानृतश्च मनुष्यः**
**सततनिकृतिवञ्चनाभिरतिः स्यात् ।**
**उपनिधिभिरसुखभृतस्वपरमो निरयगो[२]**
**भृशमसुखमनुभवति दुष्कृतकर्मा ॥ ३० ॥**

**उपनिधिभिरसुखभृतस्वपरम** इत्यत्र **उपनिधिभिः** उपाधिभिः **असुखभृतं** दुःखेनोपार्जितं यत् **स्वं** द्रव्यं तत्र **परमः** तात्पर्यवान् ।

**सहस्रशोऽप्यनेकशः प्रवक्तुमुत्सहामहे ।**
**अबुद्धिमोहनात् पुनः प्रभुस्तु ते न पावकः[३] ॥ ६१ ॥**

---

१. BORI पृ. १७३७; $C_S$; **'नरकदने रुधिरपागुरवचनम्'** इति कुं.पाठः ।
२. **'उपनिधिभिरसुखकृत्स'** इति कुं.पाठः ।
३. BORI पृ. १७४२; T,$G_{1,3,6}$; **'अबुद्धिमोहनं पुनः तेन'** इति कुं. पाठः

**प्रभुस्तु ते न पावक** इत्यत्र अबुद्धिमोहनात् कारणात् **पावकः** नारकाग्निः ते प्रभुर्न इति योजना ।

**शुभं समस्तमश्नुते प्रकुर्वतः शुभाः क्रियाः ।**
**तदेतदर्थदर्शनं कृतज्ञमर्थसंहितम् ॥ ६९ ॥**

**शुभं समस्तमश्नुत** इत्यत्र **अश्नुते** प्राप्नोति ।

॥ इति शुकानुशासने एकपञ्चाशोत्तरशततमोऽध्यायः ॥

## ॥ अथ द्विपञ्चाशोत्तरशततमोऽध्यायः ॥

**प्रियदेवातिथेयाश्च[१] वदान्याः प्रियसाधवः ।**
**क्षेम्यमात्मवता मार्गमास्थिता हस्तदक्षिणाः ॥ ६ ॥**

**क्षेम्यमात्मवतां मार्गमास्थिता हस्तदक्षिणा** इत्यत्र हस्ताः दक्षिणाः येषां देवदूतैः धृताः ते **हस्तदक्षिणाः** ।

**पुलाका[२] इव धान्येषु प्रत्यण्डा इव पक्षिषु ।**
**तद्विधास्ते मनुष्येषु येषां धर्मो न कारणम् ॥ ७ ॥**

**पुलाका इव धान्येषु** इत्यत्र **पुलाकाः** तुच्छधान्यानि ।

॥ इति द्विपञ्चाशोत्तरशततमोऽध्यायः ॥

* * *

---

१. कुं. २३० अध्यायः ।
२. **'पूत्यण्डा इव'** इति कुं. पाठः ।

## ।। अथ त्रिपञ्चाशोत्तरशततमोऽध्यायः ।।

[१] **उवाच चैवं भगवांस्त्र्यम्बकः प्रहसन्निव ।**
**एवंविधस्ते तनयो द्वैपायन भविष्यति** ।। २७ ।।

**एवंविधस्ते तनय** इत्यत्र यथा अहम्, एवंविधः ।

।। इति त्रिपञ्चाशोत्तरशततमोऽध्यायः ।।

## ।। अथ पञ्चपञ्चाशोत्तरशततमोऽध्यायः ।।

[२] **मेरोर्हरेश्च द्वे वर्षे वर्षं हैमवतं ततः ।**
**क्रमेणैवं व्यतिक्रम्य भारतं वर्षमासदत्** ।। १४ ।।

**मेरोर्हरेश्च द्वे वर्षे** इत्यत्र **मेरोर्वर्षम्** इलावृतवर्षं, **हरेर्वर्षं** हरिवर्षम् । **हैमवतं** हिमवत उत्तरभागे स्थितं किंपुरुषम् ।

**स देशान् विविधान् पश्यंश्चीनहूणनिषेवितान् ।**
**आर्यावर्तमिमं देशमाजगाम महामुनिः** ।। १५ ।।

**आर्यावर्तः** विन्ध्यहिमाचलयोर्मध्यदेशः । [३]'आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमागयोः' इत्यमरः ।

**पितुर्वचनमाज्ञाय तमेवार्थं विचिन्तयन् ।**
**अध्वानं सोऽतिचक्राम खचरः [४]खे चरन्निव** ।। १६ ।।

**खचरः खे चरन्निव** इत्यत्र खे आकाशे चरन् खचरः, सूर्य इव ।

---

१. कुं. ३३१ अध्यायः ।; २. कुं. ३३३ अध्यायः ।
३. अ.को.द्वि. श्लो. ८; ४. BORI पृ. १७५६; **'खे पतन्निव'** इति कुं.पाठः

**आरणेयस्तु शुद्धात्मा [१]त्रिसन्देहस्त्रिकर्मकृत् ।**
**वश्येन्द्रियो जितक्रोधो न हृष्यति न कुप्यति ॥ ४१ ॥**

**त्रिसन्देहस्त्रिकर्मकृत्** इत्यत्र **त्रिषु** मोक्षेतरपुरुषार्थेषु **सन्देहः** अनिषिद्धं चेदस्तु निषिद्धं चेन्मास्त्विति व्यवस्थितसन्देहो यस्य ।

॥ इति पञ्चपञ्चाशोत्तरशततमोऽध्यायः ॥

## ॥ अथ षट्पञ्चाशोत्तरशततमोऽध्यायः ॥

**[२]संयोज्य मनसाऽऽत्मानमीर्ष्यामुत्सृज्य मोहनीम् ।**
**त्यक्त्वा कामं च मोहं च ततो ब्रह्मत्वमश्नुते ॥ ३५ ॥**

**ततो ब्रह्मत्वमश्नुत** इत्यत्र **ब्रह्मत्वं** सुखबृंहितत्वं, 'बृह बृहि-वृद्धौ' इति धातुः ।

॥ इति शुकजनकसंवादे ब्रह्मप्रतिपादनं नाम
षट्पञ्चाशोत्तरशततमोऽध्यायः ॥

## ॥ अथ सप्तपञ्चाशोत्तरशततमोऽध्यायः ॥

**[३]रक्षिता स्कन्दराजस्य [४]धर्षिता प्रभविष्णुना ।**
**तां कम्पयित्वा भगवान् प्रह्लादमिदमब्रवीत् ॥ १७ ॥**

**रक्षिता स्कन्दराजस्य** इत्यत्र स्कन्दराजस्य प्रतिज्ञा रक्षिता । **धर्षिता** धिक्कृता च । कम्पनाद्धर्षिता । अनुद्धरणात् रक्षिता चेति भावः ।

---

१. BORI पृ. १७५९; **'निःसन्देहस्त्रिकर्मकृत्'** इति कुं.पाठः ।
२. कुं. २३४ अध्यायः ।; ३. कुं. २३५ अध्यायः ।
४. **'धर्षणा'** इति कुं.पाठः ।

**यश्चाधर्मेण विब्रूयाद्यश्चाधर्मेण पृच्छति ।**
**तयोरन्यतरः प्रैति विद्वेषं चाधिगच्छति** ॥ ५१ ॥

**तयोरन्यतरः प्रैति** इत्यत्र **प्रैति** मृतो भवति ।

॥ इति सप्तपञ्चाशोत्तरशततमोऽध्यायः ॥

## ॥ अथ अष्टपञ्चाशोत्तरशततमोऽध्यायः ॥

**उक्ताः[१] स्मो यद्भगवता तदात्रायति[२] संहिताम् ।**
**तन्नो मनसि संरूढं करिष्यामस्तथा च तत्** ॥ २ ॥

**तदात्रायति संहिताम्** इत्यत्र तत् भगवद्वचनं, **संहिताम्** अस्मत्पठितवेदम्, **आत्रायति** आसमन्ताद्रक्षति ।

**एतत्तु[३] ते दिवा वृत्तं परावृत्य परीक्ष्य च ।**
**गच्छ बाह्लीकसंसर्गादशुचित्वं न संशयः** ॥ ३५ ॥

**एतत्तु ते दिवावृत्तं परावृत्य परीक्ष्य च** इत्यत्र दिवा **परावृत्य** परितः आवर्तनं कृत्वा **परीक्ष्य च** परितः दृष्ट्वा च ते **एतत्** उपरि वक्ष्यमाणं **वृत्तम्** अनाचारः अभूत् ।

**तस्माद्ब्रह्मविदो ब्रह्म नाधीयन्तेऽतिवायति ।**
**वायोर्वायुभवे[४] ह्युक्तं ब्रह्म तत्पीडितं भवेत्** ॥ ७९ ॥

---

१. कुं. ३३६ अध्यायः ।
२. **'तदात्वायतिसंहितम्'** इति कुं.पाठः ।
३. **'एतत्तु ते दिवावृत्तं रात्रौ वृत्तमथान्यथा'** इति कुं.पाठः ।
४. **'वायोर्वायुभयम्'** इति कुं.पाठः ।

**वायोर्वायुभवे ह्युक्तम्** इत्यत्र **वायोर्वायुभवे** वायोः सकाशात् **वायुभवे** वाय्वन्तरस्योत्पत्तौ पौनःपुन्येन वायोर्महाघोषे सतीति यावत् । **उक्तं** तत् **ब्रह्म** वेदः **पीडितं भवेत्** अश्रूयमाणं भवेदित्यर्थः । प्रबलतर-वायूद्घोषे सति गुरुणोच्चार्यमाणवेदस्य शिष्यैः श्रोतुमशक्यत्वात् तदा अनध्यायः कर्तव्य इति भावः ।

**॥ इति अष्टपञ्चाशोत्तरशततमोऽध्यायः ॥**

## ॥ अथ षष्ट्युत्तरशततमोऽध्यायः ॥

**आत्मभूतैरतद्भूतः सह चैव विनैव च ।**[१]
**स विमुक्तः परं श्रेयो न चिरेणाधिगच्छति** ॥ १६ ॥

**आत्मभूतैरतद्भूत** इत्यत्र **आत्मभूतैः आत्मनः** परमात्मनः **भूतैः** जातैः पुत्रमित्रकलत्रादिभिः आत्माधीनैरिति यावत् । **अतद्भूतः** तेषां भूतो न भवतीत्यतद्भूतः । तदनधीन इत्यर्थः ।

**कुटुम्बं पुत्रदाराश्च शरीरं सञ्चयाश्च ये ।**
**पारक्यमध्रुवं सर्वं किं[२] तत्सुकृतदुष्कृतम्** ॥ ३२ ॥

**किं तत्सुकृतदुष्कृतम्** इत्यत्र **पारक्यं** परकीयं कुटुम्बदारादिकं तत्सर्वं सुकृतदुष्कृतं किम् इति योजना ।

**त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।**
**उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज** ॥ ४० ॥

---

१. कुं. ३३७ अध्यायः ।
२. 'किं स्वं सुकृतदुष्कृतम्' इति कुं.पाठः ।

**येन त्यजसि तं त्यज** इत्यत्र **येन** संसारेण त्यजसि परलोकं **तं** संसारं त्यज ।

**इदं विश्वं जगत्सर्वमजगच्चापि यद्भवेत् ।**
**महाभूतात्मकं सर्वं महद्यत्परमाणु च ॥ ४४ ॥**

**इदं विश्वं जगत्सर्वम्** इत्यत्र जायते गच्छते चेति **जगत्** जङ्गमम्, **अजगत्** जडम् ।

**लोके बुद्धिप्रकाशेन लोकमार्गो न रिष्यते ।**
[१] **अनादिनिधनं जन्तुम् आत्मनि स्थितमव्ययम् ॥ ५४ ॥**

**अकर्तारममूर्तं च भगवानाह तीर्थवित् ॥ ५५ ॥**

**अनादिनिधनं जन्तुम्** इत्यत्र **तीर्थवित्** शास्त्रवित् भगवान्नारायणः । अनादिनिधनम् अकर्तारं स्वातन्त्र्येण कर्तृत्वशक्तिरहितम् **अव्ययम्** अमूर्तं देहाभिमानरहितम् । **जन्तुं** जीवम् । **आत्मनि** स्वस्मिन् स्थितमाहेति योजना ।

**॥ इति शुकानुशासने षष्ट्युत्तरशततमोऽध्यायः ॥**

## ॥ अथ एकषष्ट्युत्तरशततमोऽध्यायः ॥

[२] **वाक्सम्प्रयोगाद्भूतानां नास्ति दुःखं परायणम् ।**
**विप्रयोगात्तु सर्वस्य न शोचेत् प्रकृतिस्थितः ॥ २७ ॥**

---

१. BORI पृ. १७८७; **'अनादिनिधनज्ञं तमात्मनि'** इति कुं.पाठः ।

२. कुं. ३३८ अध्यायः । BORI पृ. १७९२; $M_{1,5,7}$,$B_{0,6,9}$,$V_1$; **'प्राक्सम्प्रयोगाद्भूतानाम्'** इति कुं.पाठः ।

**वाक्सम्प्रयोगाद्भूतानाम्** इत्यत्र वाचां **सम्प्रयोगः** प्रियभाषणं तस्मात् ।

॥ इति शुकनारदसंवादे अनिष्टनाशनप्रतिपादनं नाम एकषष्ट्युत्तरशततमोऽध्यायः ॥

## ॥ अथ द्विषष्ट्युत्तरशततमोऽध्यायः ॥

[१]
**अपराधं समाचक्ष्व पुरुषस्य स्वभावतः ।**
**शुक्रमन्यत्र सम्भूतं पुनरन्यत्र गच्छति** ॥ १४ ॥

**अपराधं समाचक्ष्व** इत्यत्र **समाचक्ष्व** सम्यक् पश्य ।

**स्रवन्ति ह्युदराद्गर्भा जायमानास्तथा परे ।**
**आगमेन तथाऽन्येषां विनाश उपपद्यते** ॥ २६ ॥

**आगमेन तथाऽन्येषाम्** इत्यत्र **अन्येषां** पिशाचादीनामागमेन **अन्येषां** मत्सरिणां दुर्मन्त्राद्यागमेन वा ।

[२]
**शतस्य सहजातस्य सप्तमीं नवमीं दशाम् ।**
**प्राप्नुवन्ति ततः पञ्च न भवन्ति शतायुषः** ॥ २८ ॥

**शतस्य सहजातस्य** इत्यत्र सहजातस्य शतस्यायुषः ।

**न म्रियेरन्न जीर्येरन् सर्वे स्युः सर्वकामिनः ।**
**नाप्रियं प्रतिपश्येयुरुत्थानस्य फलेऽसति** ॥ ३७ ॥

**नाप्रियं प्रतिपश्येयुः** इत्यत्र **उत्थानस्य** दुष्कर्मणामुत्थानस्य ।

॥ इति द्विषष्ट्युत्तरशततमोऽध्यायः ॥

---

१. कुं. ३३९ अध्यायः ।

२. BORI पृ. १७९७ ; **'स तस्य सहजातस्य'** इति कुं.पाठः ।

## ।। अथ त्रिषष्ट्युत्तरशततमोऽध्यायः ।।

**न[१] तु योगमृते शक्त्या प्राप्नुयां परमां गतिम् ।**
**अवबन्धो[२] हि बद्धस्य कर्मभिर्नोपपद्यते ।। ५२ ।।**

**अवबन्धो हि बद्धस्य** इत्यत्र अवाग्गतो बन्धः **अवबन्धः** बन्धादुद्गमनमिति यावत् ।

।। इति त्रिषष्ट्युत्तरशततमोऽध्यायः ।।

## ।। अथ पञ्चषष्ट्युत्तरशततमोऽध्यायः ।।

**महायोगगतिं[३] त्वन्यां व्यासोऽस्थाय महातपाः ।**
**निमेषान्तरमात्रेण शुकाभिपतनं ययौ ।। २१ ।।**

**व्यासोऽस्थाय महातपा** इत्यत्र व्यासः **अस्थाय** आस्थायेत्यर्थः ।

**ततः शुकेति दीर्घेण शैक्ष्येणाक्रन्दितस्तदा[४] ।**
**स्वयं पित्रा स्वरेणोच्चैस्त्रींल्लोकाननुनाद्य वै ।। २३ ।।**

**ततः शुकेति दीर्घेण शैक्ष्येणाक्रन्दितं तदा** इत्यत्र **शैक्ष्येण** वेदशिक्षासम्बन्धिना ।

।। इति शुकसिद्धिर्नाम पञ्चषष्ट्युत्तरशततमोऽध्यायः ।।

---

१. कुं. ३३९ अध्यायः ।
२. BORI पृ. १८००; D3; **'अनुबन्धो विमुक्तस्य'** इति कुं.पाठः ।
३. कुं. ३४१ अध्यायः । BORI पृ. १८०९; D2,D8,B6,9; **'महायोगगतिं त्वग्र्यां व्यासोत्थाय'** इति कुं.पाठः ।
४. BORI पृ. १८०९; **'शब्देनाक्रन्दितम्'** इति कुं.पाठः ।

## ।। अथ सप्तषष्ट्युत्तरशततमोऽध्यायः ।।

**मेरोः सहस्रैरपि योजनानां[१]**
**द्वात्रिंशतोर्धं कविभिर्निरुक्तः ।**
**अनिन्द्रियाश्चानशनाश्च तत्र**
**निष्पन्दहीनाः सुसुगन्धिनस्ते ।। ९ ।।**

**मेरोः सहस्रैरपि योजनानां द्वात्रिंशतोर्धं कविभिर्निरुक्त** इत्यत्र **सहस्र**पदेन शतसहस्रात्मकं लक्षं गृह्यते । द्वात्रिंशल्लक्षाणि, अर्धपदेन षोडशलक्षाणि मिलित्वा मेरुणा सह एकोनपञ्चाशल्लक्षाणि योजनानि श्वेतद्वीपस्य प्रमाणम् । अल्पत्वादेकस्याविवक्षा । अर्धकोट्युच्छ्रित-स्वर्गसमानतया पञ्चाशल्लक्षत्वेन ग्रन्थान्तरे निर्णयादेवं योजना ।

**छत्राकृतिशीर्षा मेघौघनिनादाः**
**सममुष्कचतुष्का राजीवच्छदपादाः ।**
**षष्ट्या दन्तैर्युक्ताः शुक्लैरष्टाभिर्दंष्ट्राभिर्ये**
**जिह्वाभिर्ये विश्ववक्त्रं लेलिह्यन्ते सूर्यप्रख्यम् ।। ११ ।।**

'चतुरमुष्का' इति पाठे '[२]मुष्कोण्डकोशो वृषणम्' इत्यभिधानात् मनोहरवृषणा इत्यर्थः ।

**षष्ट्या दन्तैर्युक्ता** इत्यत्र दन्तानामतिसूक्ष्मतरत्वात् षष्टित्वम् । तस्मादूर्ध्वमधश्च चत्वारश्चत्वारो दंष्ट्राः ।

---

१. कुं. ३४३ अध्यायः । BORI पृ. १८१९; **'मेरोः सहस्रैः स हि योजनानां द्वात्रिंशतोर्ध्वम्'** इति कुं. पाठः ।

२. अ.को. द्वि. मनुष्यवर्गः श्लो. ७६

[१]भक्त्या देवं विश्वा विश्वोत्पत्त्यव्ययं यस्मात्सर्वे लोकाः सम्प्र-
सूताः । सर्वगात्राश्च सूक्ष्माः सहाङ्गका वेदा धर्मा मुनयः शान्ता
देवाः । सर्वे तस्य निसर्ग इति ॥ १२ ॥

**भक्त्या देवं विश्वा विश्वोत्पत्त्यव्ययम्** इत्यत्र **विश्वा** विश्वानां मुक्तानामुत्पत्त्यवधि **अव्ययं** व्ययरहितं देवम् आराधयन्ति इति योग्य-क्रियाध्याहारः ।

॥ इति श्वेतद्वीपवर्णनं नाम सप्तषष्ट्युत्तरशततमोऽध्यायः ॥

## ॥ अथ सप्तत्युत्तरशततमोऽध्यायः ॥

[२]ततोऽस्य तुष्टो भगवान् भक्त्या नारायणो हरिः ।
अनन्यभक्तस्य सतस्तत्परस्य जितात्मनः ॥ ३७ ॥

**तत्परस्य जितात्मन** इत्यत्र **तत्परस्य** तात्पर्यवतः ।

॥ इति सप्तत्युत्तरशततमोऽध्यायः ॥

## ॥ अथ एकसप्तत्युत्तरशततमोऽध्यायः ॥

[३]तदाविशति यो ब्रह्मन्नदृश्यो लघुविक्रमः ।
उत्पन्न एव भवति शरीरं चेष्टयन् प्रभुः ॥ ३४ ॥

**उत्पन्न एव भवति** इत्यत्र शरीरे उत्पन्ने सत्येव प्रभुरिति वचनान्न जीवोऽत्र ग्राह्यः । उत्पत्तिसमय एव शरीरचेष्टकत्वस्य दुर्बले शिशाव-

---

१. 'देवं भक्त्या विश्वा विश्वोत्पन्नम्' इति कुं. पाठः ।
२. कुं. ३४५ अध्यायः ।
३. कुं. ३४७ अध्यायः ।

सम्भवाच्च । [१]'योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां सञ्जीवयत्यखिलशक्तिधरः' इति हि स्मृतिः ।

**स जीवः परिसङ्ख्यातः शेषः [२]सङ्कर्षणः स्मृतः ।**
**तस्मात् सनत्कुमारत्वं योऽलभत्स्वेन कर्मणा ॥ ३६ ॥**

**स जीवः परिसङ्ख्यातः शेषः सङ्कर्षणः स्मृत** इत्यत्र **जीवः** जीवयतीति जीवो नारायणः । शिष्यते प्रलयेऽपीति **शेषः** ।

**स मनः सर्वभूतानां [३]प्रद्युम्नः परिपद्यते ।**
**तस्मात् प्रसूतो यः कर्ता कारणं कार्यमेव च ॥ ३७ ॥**

**प्रद्युम्नः परिपद्यत** इत्यत्र **परिपद्यते** प्रभुरिति परिपद्यते ।

**यो वासुदेवो भगवान् क्षेत्रज्ञो निर्गुणात्मकः ।**
**ज्ञेयः [४]स एव भगवान् जीवः सङ्कर्षणः प्रभुः ॥ ३९ ॥**
**मत्तः सर्वं सम्भवति जगत्स्थावरजङ्गमम् ।**
**अक्षरं च क्षरं चैव सच्चासच्चैव नारद ॥ ४१ ॥**

**ज्ञेयः स एव भगवान्** इत्यत्र यो भगवान् वासुदेवः स एवात्रोक्तव्युत्पत्त्या जीवो ज्ञेयः न तु लोकप्रसिद्धो जीवः । तस्य स्थावरजङ्गमं सर्वं जगत्तस्मात्प्रभवतीत्युक्तमहिमायोगात् सङ्कर्षणोऽपि स एव न तु हलायुध इत्यर्थः ।

---

१. भाग. ४-१०-६
२. **'सङ्कर्षणः प्रभुः'** इति कुं.पाठः ।
३. BORI पृ. १८५४;D$_{a3}$; **'प्रद्युम्नः परिपठ्यते'** इति कुं.पाठः ।
४. BORI पृ. १८५४; **'स एव राजेन्द्र'** इति कुं. पाठः ।

**सर्वभूतगुणैर्युक्तं नैवं त्वं ज्ञातुमर्हसि ।**
**मयैतत् कथितं सम्यक् तव मूर्तिचतुष्टयम् ॥ ४५ ॥**

**सर्वभूतगुणैर्युक्तम्** इत्यत्र **भूतगुणैः** प्राकृतरूपरसादिभिः, सर्वप्राणिनां गुणैर्दुःखादिभिर्वा ।

**तथाष्टगुणमैश्वर्यमेकस्थं पश्य मूर्तिमत् ।**
**श्रियं लक्ष्मीं च कीर्तिं च पृथिवीं च ककुद्मतीम्[1] ॥ ५६ ॥**

**पृथिवीं च ककुद्मतीम्** इत्यत्र **ककुद्मतीं** दिगभिमानिनीम् ।[2] 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इत्यमरः ।

**कृत्वाऽऽत्मस्थानि भूतानि स्थावराणि चराणि च ।**
**एकाकी विद्यया सार्धं विहरिष्ये जगत्पुनः ॥ ७२ ॥**

**एकाकी विद्यया सार्धम्** इत्यत्र **विद्यया** वेदविद्यया तदभिमानिन्या लक्ष्म्या च ।

**ततो भूयो जगत्सर्वं करिष्यामीह विद्यया ।**
**अस्मिन्मूर्तिश्चतुर्थी या साऽसृजच्छेपमव्ययम् ॥ ७३ ॥**
**स हि सङ्कर्षणः प्रोक्तः प्रद्युम्नः सोऽप्यजीजनत् ।**
**प्रद्युम्नादनिरुद्धोऽहं सर्गो मम पुनः पुनः ॥ ७४ ॥**

**अस्मिन्मूर्तिश्चतुर्थी या** इत्यत्र **चतुर्थी** वासुदेवनामिका सा **शेषं** शेषान्तर्यामिणं सङ्कर्षणम् **असृजत्** व्यक्तीचकार । प्रद्युम्नात् **अनिरुद्धः**

---

१. **'ककुद्मिनीम्'** इति कुं. पाठः ।
२. अ.को. दिग्वर्गः श्लो. १

अनिरुद्धनामकः अहम् अभवम् । अयं वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाख्यः ममैव पुनः पुनः सर्गः । न तु वक्ष्यमाणो ब्रह्मा जगच्च ।

**[१] मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः ।**
**रामो रामश्च रामश्च बुद्धः कल्कीति ते दश ॥ २ ॥**

**रामो रामश्च रामश्च** इत्यत्र रमयति गोपाङ्गना इति **रामः**[२] कृष्णः न तु बलरामः । उपरि अस्य रामस्य कथा प्रपञ्चनसमये 'प्रादुर्भावः कंसहेतोर्मधुरायां भविष्यति ॥'[३] 'शिशुपालवधश्चैव यज्ञे धर्मसुतस्य वै' इत्यादिना कृष्णचरित्राणामेव वक्ष्यमाणत्वात् ।

**स दद्यान्मयि सम्प्रीतः प्रतिषिद्धश्च मन्त्रिभिः ।**
**यावज्जलं हस्तगतं त्रिभिर्विक्रमणैर्युतम् ॥ १२ ॥**

**प्रतिषिद्धश्च मन्त्रिभिः** इत्यत्र यावत् मन्त्रिभिः प्रतिषिद्धं तावत् त्रिभिर्विक्रमणैः युतं, जलं **हस्तगतं** मम हस्तगतमभूत् ।

**[४] ततः कृतयुगे प्राप्ते द्वात्रिंशद्युगपर्यये ।**
**भविष्यामि ऋषिस्तत्र जमदग्निसुतो बली ॥**

**ततः कृतयुगे प्राप्ते द्वात्रिंशद्युगपर्यये** इत्यत्र द्विवारं त्रिंशद्युगाः षष्टिसङ्ख्या महायुगाः । इदं चैकादशयुगानामपि उपलक्षणम् । एवं च वैवस्वतमन्वन्तरस्थमहायुगानां **पर्यये** पर्याये क्रमे जायमाने सति ।

---

१. कुं. ३४८ अध्यायः ।
२. कुं. ३४८. श्लो.२१
३. कुं. ३४८. श्लो.३५
४. BORI पृ. १८६०

**त्रितोपघाताद्वैरूप्यमेकतोऽथ द्वितस्तथा ।**
**प्राप्स्येते वानरत्वं हि प्रजापतिसुतावृषी ॥ १७ ॥**

**त्रितोपघाताद्वैरूप्यम्** इत्यत्र **त्रितस्य** त्रितनामकस्य ऋषेः **उपघातात्** कूपे निपातनात् ।

**ततः कलियुगस्यादौ द्विजराजतरुं श्रितः ।**
**भीषया मागधेनैव धर्मराजगृहे वसन् ॥ ४२ ॥**

**धर्मराजगृहे** जिनगृहे । [१]'धर्मराजौ जिनयमौ' इत्यमरः ।

**शूद्राः शुद्धेषु भुज्यन्ते मयि बुद्धत्वमागते ।**
**भविष्यन्ति नराः सर्वे बुद्धाः काषायसंवृताः ॥ ४४ ॥**

**शुद्धेषु भुज्यन्त** इत्यत्र **शुद्धेषु** मांसाद्याहाररहितेषु ।

**अतिक्रान्ताः पुराणेषु श्रुतास्ते यदि वा क्वचित् ।**
**अतिक्रान्ताश्च बहवः प्रादुर्भावा ममोत्तमाः ॥ ५७ ॥**

**अतिक्रान्ताः पुराणेषु** इत्यत्र पुराणेषु अतिशयेन **क्रमणं** सङ्क्रमणं सम्बन्धं प्राप्ताः वर्णिता इत्यर्थः ।

**॥ इति भगवद्दर्शनं नाम एकसप्तत्युत्तरशततमोऽध्यायः ॥**

## ॥ अथ द्विसप्तत्युत्तरशततमोऽध्यायः ॥

**[२]ये च भागं प्रगृह्णन्ति यज्ञेषु द्विजसत्तम ।**
**ते यजन्तो महायज्ञैः कस्य भागं ददन्ति वै ॥ १५ ॥**

---

१. अ.को. तृ. नानार्थवर्गः श्लो. ३१; २. कुं. ३४९ अध्यायः ।

**कस्य भागं ददन्ति वै** इत्यत्र 'दद दाने' इति धातोः ददन्तीति प्रयोगः ।

**अव्यक्ताद्व्यक्तमुत्पन्नं लोकसृष्ट्यर्थमीश्वरात् ।**
**अनिरुद्धो हि लोकेषु महानात्मेति कथ्यते ॥ २९ ॥**

**अव्यक्ताद्व्यक्तमुत्पन्नम्** इत्यत्र **अव्यक्तात्** अव्यक्ताख्यप्रधान-सृष्टेरनन्तरम् ।

**योऽसौ व्यक्तत्वमापन्नो निर्ममे च पितामहम् ।**
**योऽहङ्कार इति प्रोक्तः सर्वतेजोमयो हि सः ॥ ३० ॥**

**योऽहङ्कार इति प्रोक्त** इत्यत्र यः अहङ्कार इति प्रोक्तः तं च निर्मम इति पूर्वेणान्वयः ।

**रुद्रो रोषात्मको जातो दशान्यान् सोऽसृजत्स्वयम् ।**
**एकादशैते रुद्रास्तु विकाराः पुरुषाः स्मृताः ॥ ३६ ॥**

**दशान्यान् सोऽसृजत्स्वयम्** इत्यत्र **अन्यान्** दशरुद्रान् ।

**योऽसौ त्वयाऽभिनिर्दिष्टो सोऽधिकारोऽधिकर्तृणा[१] ।**
**परिपाल्यः कथं तेन साहङ्कारेण कर्तृणा ॥ ३९ ॥**

**सोऽधिकारोऽधिकर्तृणा** इत्यत्र कर्तरिति ताच्छीलिकतृण्प्रत्ययान्तः शब्दः ।

**सर्वे भागान् कल्पयध्वं यज्ञेषु मम नित्यशः ।**
**तत्र श्रेयोऽभिधास्यामि यथाऽधीकारमीश्वराः ॥ ५२ ॥**

---

१. BORI पृ. १८७३; Cs; 'ह्यधिकारोऽर्थचिन्तकः' इति कुं.पाठः ।

**सर्वे भागान्कल्पयध्वं यज्ञेषु मम नित्यश** इत्यत्र 'ते यजन्तो महायज्ञैः कस्य भागं ददन्ति वै' इत्यस्योत्तरम् ।

**येन यः कल्पितो भागः स तथा मामुपागतः ।**
**प्रीतोऽहं प्रदिशाम्यद्य फलमावृत्तिलक्षणम् ।**
**एतद्वो लक्षणं देवा मत्प्रसादसमुद्भवम्** ॥ ५८ ॥

**फलमावृत्तिलक्षणम्** इत्यत्र **आवृत्तिः** प्रवृत्तिः । इन्द्रादिनामभि-र्विष्णोरेवाहुतिदानं निवृत्तिरित्युच्यते । देवानामेवाहुतिदानं प्रवृत्तिरिति विवेकः ।

**यो मे यथा कल्पितवान् भागमस्मिन्महाक्रतौ ।**
**स तथा यज्ञभागार्हो वेदसूत्रे मया कृतः** ॥ ६१ ॥

**यो मे यथा कल्पितवान्** इत्यत्र ब्रह्मा ब्रह्मणे स्वाहेति भागं यथा कल्पितवान् तेन मन्त्रेण तं भागं स एव गृह्णातु इत्यर्थः । एवमन्यत्रापीति भावः ।

**यतोऽहं प्रसृतः पूर्वमव्यक्तात् त्रिगुणो महान् ।**
**तस्मात्परतरो योऽसौ क्षेत्रज्ञ इति कल्पितः** ॥ ७३ ॥

**यतोऽहं प्रसृत** इत्यत्र **यतः** अव्यक्तात् त्रिगुणः महान् प्रसृतः **अहम्** अहङ्कारश्च प्रसृतः **तस्मात्** अव्यक्ततत्त्वात् तदभिमानिलक्ष्मीतत्त्वाच्च परतरः ।

**इदं कृतयुगं नाम कालः श्रेष्ठः प्रवर्तितः ।**
**अहिंस्या[१] यत्र पशवो युगेऽस्मिन्न तदन्यथा** ॥ ८० ॥

---

१. BORI पृ. १८७८; $D_7$,T,$G_{1,3,6}$; 'यज्ञपशव' इति कुं.पाठः ।

**अहिंस्या यत्र पशव** इत्यत्र सर्वेऽपि तपोनिष्ठा इति भावः ।

**ततस्तिष्येऽथ सम्प्राप्ते युगे कलिपुरस्कृते ।**
**एकपादस्थितो धर्मो यत्र तत्र भविष्यति ॥ ८४ ॥**

**ततस्तिष्येऽथ सम्प्राप्त** इत्यत्र **तिष्ये** पुष्यानक्षत्रे ।

**स आदिः स मध्यः स चान्तः प्रजानां**
**स धाता स धेयं स[1] कर्ता स कार्यः ।**
**युगान्ते प्रसुप्तः सुसङ्क्षिप्य लोकान्**
**युगादौ प्रबुद्धो जगद्व्युत्ससर्ज ॥ ९८ ॥**

**स कर्ता स कार्य** इत्यत्र **कार्यः** अवतारं कर्तुं योग्यः ।

॥ इति नारायणीये द्विसप्तत्युत्तरशततमोऽध्यायः ॥

## ॥ अथ त्रिसप्तत्युत्तरशततमोऽध्यायः ॥

**[2]तस्मादात्मानमेवाग्रे रुद्रं सम्पूजयाम्यहम् ।**
**यद्यहं नार्चयेयं वै ईशानं वरदं शिवम् ॥ २४ ॥**
**[3]आत्मानं चार्चयेत्कश्चिदिति मे भावितात्मनः ॥**

**आत्मानं चार्चयेत्** इत्यत्र यदि अहम् ईशानं नार्चयेयं तर्हि कश्चित् ...ागग्रहणायोग्यं दैत्यपिशाचादिरपि **आत्मानं** परमात्मानं मामेवार्चयेत् । ...ानस्तां मोहयितुं रुद्रार्चा मया कृतेत्यर्थः । 'आत्मानं नार्चयेत्' इति

---

१. 'स कर्ता स कार्यम्' इति कुं.पाठः । ; २. कुं. ३५० अध्यायः ।
३. 'आत्मानं नार्चयेत्' इति कुं.पाठः ।

पाठे मनुष्येष्ववतीर्य मया देवानामर्चा न कृता चेत् देवत्वाविशेषात् ममाप्यर्चां कोऽपि न कुर्वन्ति । अतो देवार्चायां रुचिमुत्पादयितुं रुद्रार्चा कृतेति भावः । अहं तु रुद्रनामकं रुद्रान्तर्यामिणम् आत्मानं परमात्मानं मामेव पूजयामि, न तु रुद्रम् । अतस्तस्यापि नायुःक्षय इति भावः ।

**मया प्रमाणं हि कृतं लोकः समनुवर्तते ॥ २५ ॥**

**प्रमाणानि हि पूज्यानि ततस्तं पूजयाम्यहम् ।**
**यस्तं वेत्ति स मां वेत्ति योऽनु तं स हि मामनु ॥ २६ ॥**

**रुद्रो नारायणश्चैव सत्त्वमेकं द्विधा कृतम् ।**
**लोके चरति कौन्तेय व्यक्तिस्थं सर्वकर्मसु ॥ २७ ॥**

**न हि मे केनचिद्देयो वरः पाण्डवनन्दन ।**
**इति संचिन्त्य मनसा पुराणं रुद्रमीश्वरम् ॥ २८ ॥**

**पुत्रार्थमाराधितवानहमात्मानमात्मना ।**
**न हि विष्णुः प्रणमति कस्मैचिद्विबुधाय च ॥ २९ ॥**

**मया प्रमाणम्** इत्यत्र मया **प्रमाणं** वेदशास्त्राख्यं प्रमाणं देवातिथिपूजनार्थं कृतम् । तानि प्रमाणानि **पूज्यानि** मान्यानि । **ततः** मानुषेषूत्पन्नैर्देवातिथिपूजा कर्तव्येति प्रतिपादकप्रमाणरक्षणार्थं **तं** रुद्रं पूजयामि । रुद्रस्य नमस्कार्यत्वे निमित्तान्तरमप्याह **रुद्रो नारायण** इति । सत्त्वं तावत् द्विविधम् । **एकं** मम स्वरूपभूतं मुख्यञ्च सामर्थ्याख्यं सत्त्वम् । एकं मत्तो भिन्नम् । 'एके मुख्यान्यकेवला'[१] इत्यमरः । **सत्त्वं** सत्त्वगुणाख्यं सामर्थ्यं चेत्युभयमपि मत्प्रियत्वात् मत्स्वरूपत्वाच्च मम

---

१. अ.को. तृ.का. नानार्थवर्गः श्लो १६

सत्त्वमित्येवोच्यते । तत्र स्वरूपभूतसत्त्वं नारायणेत्याख्यया तिष्ठति । सत्त्वगुणाख्यं सत्त्वं तु रुद्रेत्याख्यया । उपलक्षणमेतत् । ब्रह्मेन्द्रादिदेवतारूपेण सर्वत्र तिष्ठति । अतः देवानामपि तत्प्रियसत्त्वगुणात्मकत्वात् तदनुकूलोऽपि मदनुकूल एवेत्यर्थः ।

यद्वा एकं ममैवं **सत्त्वं** सामर्थ्यं नारायणेत्याख्यया सर्वत्र तिष्ठति, 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' [१] इति श्रुतेः । एकांशेन तु रुद्राख्यया रुद्रान्तर्यामितया तिष्ठति । अतः ममैव सत्त्वं द्विधा कृतम् । तेन रुद्रार्चापि रुद्रान्तर्गतस्य ममैवार्चेति भावः । पुत्रवरदानाय कैलासवासिनः गौरीपतेरेव पूजा कुतो नेत्यत आह – **न हि मे केनचिद्देयो वर** इति, **न हि विष्णुः प्रणमति कस्मैचित् विबुधाय च** इति ।

**ऋते आत्मानमेवेति ततोऽरुद्रं [२] भजाम्यहम् ।**
**सब्रह्मकाः सरुद्राश्च सेन्द्रा देवाः सहर्षिभिः ॥ ३० ॥**

**ततोऽरुद्रं भजाम्यहम्** इत्यत्र ततः कारणात् **अरुद्रं** प्रसिद्धरुद्रभिन्नं **रुद्रं** रुग्द्रावणहेतुत्वात् रुद्रनामकं मामेव भजामि । अन्यथा पूर्वोत्तरविरोधादियमेव योजना ।

**वरदं नमस्व कौन्तेय हव्यकव्यभुजं नमः ।**
**चतुर्विधा मम जना भक्ता एव हि मे श्रुतम् ॥ ३१ ॥**

**चतुर्विधा मम जना** इत्यत्र आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभेति चतुर्विधाः ।

---

१. महानारायणोपनिषत् ४-१३-३०
२. **'ततो रुद्रं नमाम्यहम्'** इति कुं.पाठः ।

**निवृत्तिलक्षणो धर्मस्तथाऽभ्युदयिकोऽपि च ।**
**नाराणामयनं ख्यातमहमेकः सनातनः ॥ ३९ ॥**

**नाराणामयनम्** इत्यत्र **अराः** दोषाः तद्भिद्धत्वान्नाराः गुणाः तेषाम् **अयनम्** आधारः, तेन नारायण इत्येकोऽर्थः ।

**आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।**
**अयनं मम ताः पूर्वमतो नारायणोऽस्म्यहम् ॥ ४० ॥**

**छादयामि जगद्विश्वं भूत्वा सूर्य इवांशुभिः ।**
**सर्वभूताधिवासश्च वासुदेवस्ततो ह्यहम् ॥ ४१ ॥**

आपो नारा इति तु अर्थान्तरम् । 'वस आच्छादने, वस निवासे' इति धातुद्वयार्थतया वासुदेवनाम निर्वक्ति – **छादयामि** इति ।

**गतिश्च सर्वभूतानां प्रजनश्चापि भारत ।**
**व्याप्ते मे रोदसी पार्थ कान्तिश्चाभ्यधिका मम ॥ ४२ ॥**

**अधिभूतानिविष्टश्च तद्विश्वं चास्मि भारत ।**
**क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसंज्ञितः ॥ ४३ ॥**

**गतिश्च सर्वभूतानाम्** इत्यत्र 'टु ओश्वि गतिवृद्ध्योः' इति धातोः विशेषेण सर्वभूतानां **श्वं** गतिर्यस्मात्स विश्व इति एकोऽर्थः । **मे** मया रोदसी व्याप्ते इत्यनेन विशेषेण **श्वम्** अभिवृद्धिर्यस्येति च विश्व इत्यर्थः । कान्तिश्चाभ्यधिका ममेत्यनेन 'शुभ दीप्तौ' इति धातोर्निरुक्तत्वात् भकारस्य वकाराख्यविकारे सति विशेषेण श्वं कान्तिर्यस्येति च विश्वः । **अधिभूतानिविष्टश्चे**त्यनेन 'विश प्रवेशने' इति धातोः भूतेषु प्राणिषु

अधिकतया निविष्टः प्रविष्ट इति कृत्वा च विश्वः । एवं चतुर्विध-व्युत्पत्त्यैव विश्वशब्दवाच्यः न तु विश्वात्मकत्वात् विश्व इत्यर्थः ।

**दमात् सिद्धिं परीप्सन्तो मां जनाः कामयन्ति ह ।**
**दिवं चोर्वीं च मध्यं च तस्माद्दामोदरो ह्यहम् ॥ ४४ ॥**

दमात्सिद्धिं परीप्सन्त इत्यनेन दमवन्तो दमाः । तेषामुदरे विद्यमानः दामोदरः इत्येकोऽर्थः । दिवि धातोः दाप्रत्यये कृते **दाः** द्यौः **मा** क्ष्मा, तयोर्मध्ये उदरं यस्य स दामोदर इत्यपरोऽर्थः । दिवमुर्वीं चानुसृत्य मे मध्यम् इति वाक्ययोजना । यशोदया बद्धोदर इति तु न मुख्य इति भावः ।

**पृश्निरित्युच्यते चान्नं वेदा आपोऽमृतं तथा ।**
**ममैतानि सदा गर्भः पृश्निगर्भस्ततो ह्यहम् ॥ ४५ ॥**

'पृश्निगर्भस्तत' इति वदता पृश्न्याख्यदेवीगर्भजत्वात् पृश्निगर्भः इति तु न मुख्योऽर्थ इति सूचितम् ।

**सूर्यस्य तपतो लोकानग्नेः सोमस्य चाप्युत ।**
**अंशवो यत्प्रकाशन्ते ममैते केशसंज्ञिताः ॥ ४८ ॥**

**ममैते केशसञ्ज्ञिता** इत्यनेन केशवान् केशव इति व्युत्पत्तिः सूचिता ।

**सर्वज्ञाः केशवं तस्मान्मामाहुर्द्विजसत्तमाः ।**
**स्वपत्न्यामाहितो गर्भ उचथ्येन महात्मना ॥ ४९ ॥**

**स्वपत्न्यामाहित** इत्यत्र **स्वपत्नी** ममतानाम्नी तस्याम् ।

॥ इति त्रिसप्तत्युत्तरशततमोऽध्यायः ॥

## ॥ अथ चतुःसप्तत्युत्तरशततमोऽध्यायः ॥

[१]अग्नीषोमौ कथं पूर्वमेकयोनी [२]प्रवर्तितौ ।
एष मे संशयो वीर तं छिन्धि मधुसूदन ॥ १ ॥

**अग्नीषोमौ कथं पूर्वमेकयोनी** इत्यत्र एक एव योनिः कारणं ययोस्तौ तथोक्तौ । अत एव उभौ मिलित्वा एकस्य यज्ञकर्मणः **योनी** मुखभूतौ च कथं प्रवर्तितौ इति योजना ।

**सम्प्रक्षालनकालेऽतिक्रान्ते चतुर्युगसहस्रान्ते । अव्यक्ते सर्वभूतप्रलये सर्वभूतस्थावरजङ्गमे । ज्योतिर्धरणिवायुरहिते अन्धे तमसि जलैकार्णवे लोके ॥ ३ ॥**

**सम्प्रक्षालनकालेऽतिक्रान्त** इत्यत्र यजनयाजनाध्ययनादिना सम्यक् पापानां प्रक्षालनकालः **सम्प्रक्षालनकालः** स्थितिकाल इत्यर्थः ।

**एतस्यामवस्थायां नारायणगुणाश्रयादजरामरादतीन्द्रियादग्राह्यादसम्भवात् सत्यादहिंस्याल्लवादिभिरद्वितीयादप्रवृत्तिविशेषादवैरादक्षयादमरादजरादमूर्तितः सर्वव्यापिनः सर्वकर्तुः शाश्वतात्तमसःपरात्पुरुषःप्रादुर्भूतोऽस्यपुरुषस्य[३] ब्रह्मयोनेर्ब्रह्मणः प्रादुर्भूतो हरिरव्ययः ॥ ६ ॥**

**अहिंस्याल्लवादिभिः** इत्यत्र लवनिमेषादिभिः कालावयवैः **अहिंस्यात्** हिंसितुमशक्यात् ।

---

१. कुं. ३५१ अध्यायः ।
२. '**प्रकीर्तितौ**' इति कुं.पाठः । BORI पृ. १८९०
३. BORI पृ. १८९.१; '**ब्रह्मयोनेर्ब्रह्मणः प्रादुर्भावे**' इति कुं. पाठः ।

**प्रादुर्भूतो हरिरव्यय** इत्यत्र **पुरुषः** पुरुषनामप्रतिपाद्यः । पुरुषनामकः हरिः, उक्तगुणविशिष्टात् मूलरूपात् नारायणात् प्रादुर्भूत इति योजना ।

**नासीदहो न रात्रिरासीन्न सदासीन्नासदासीत्तम एव पुरस्तादभवद्विश्वरूपम् । सा विश्वरूपस्य रजनी हि एवमस्यार्थोऽनुभाष्यते ॥ ८ ॥**

**तम एव पुरस्तादभवद्विश्वरूपम्** इत्यत्र **विश्वरूपं**, 'विश प्रवेशने' इति धातोः सर्वत्र प्रविष्टं रूपं यस्य तत्तथोक्तम् । **विश्वरूपस्य** नारायणस्य **सा** तमोराशिः रजनी हि । विशेष्यविवक्षया स्त्रीलिङ्गं, 'शैत्यं हि यत्सा प्रकृतिः' इतिवत् ।

**त्वमग्ने (ब्रह्मन्)यज्ञानां होता विश्वेषां हितो देवानां मानुषाणां च जगत इति ॥ १० ॥**

**त्वमग्ने यज्ञानां होता** इत्यत्र **अग्ने** यज्ञाङ्गानां नेतृत्वादग्निनामक **ब्रह्मन्** ब्राह्मण । अन्यथा प्रक्रमविरोधः । 'स चाग्निर्ब्रह्म' इति वक्ष्यमाणविरोधश्च ।

**यज्ञास्ते देवांस्तर्पयन्ति देवाः पृथिवीं भावयन्ति शतपथेऽपि हि ब्राह्मणं[१] भवति ॥ १३ ॥**

**शतपथेऽपि हि ब्राह्मणं भवति** इत्यत्र **शतपथे** काण्वशाखायाम् ।

**अपि चात्र सनत्कुमारगीताः श्लोका भवन्ति ।**

**ब्रह्मा विश्वं सृजत्पूर्वं सर्वादिर्निरवस्करम्(रः) ।**
**ब्रह्मघोषैर्दिवं तिष्ठन्त्यमरा ब्रह्मयोनयः ॥ १६ ॥**

---

१. BORI पृ. १८९४; **'ब्राह्मणमुखे भवति'** इति कुं.पाठः ।

**सर्वादिर्निरवस्करम्** इत्यत्र **निरवस्करं** निर्मलं, [१]'मूत्रं प्रस्राव उच्चारावस्करौ शमलं शकृत्' इत्यमरः।

**ब्राह्मणानामृतं वाक्यं कर्मश्रद्धातपांसि च।**
**धारयन्ति महीं द्यां च [२]शैत्याद्वागमृतं यथा** ॥ १७ ॥

**शैत्याद्वागमृतं यथा** इत्यत्र वाक् **शैत्यात्** परेषां शैत्यात् शीतलत्वात् सुखकरत्वादिति यावत्। अमृतं यथा धारयति तथा।

**नैषामुक्षा वहति नोत वाहा न [३]गर्गरी मथ्यति सम्प्रदाने** ॥१९॥

**गर्गरी** दधिमथनभाण्डम्। [४]'गर्गरी मन्थनी समा' इत्यमरः।

[५]**यत्र मया** इत्यत्र– **यत्र** ब्रह्माण्डकुले। मयेति कृष्णस्य वचनम्।

**गौतमनिमित्तं चेन्द्रो मुष्कवियोगं मेषवृषणत्वं चावाप** ॥२३॥

**मुष्कवियोगम्** अण्डवियोगम्। [६]'मुष्काण्डकोशो वृषणः' इत्यमरः।

**ते देवाः सेन्द्रा ब्रह्माणमभिजग्मुस्त ऊचुर्विश्वरूपेण सर्वयज्ञेषु सुहुतः सोमः पीयते वयमभागाः संवृत्ता असुरपक्षो वर्धते वयं क्षीयामस्तदर्हसि नो विधातुं श्रेयोऽनन्तरमिति** ॥ ३५ ॥

---

१. अ.को. मनुष्यवर्गः श्लो. ६७
२. 'शैत्याद्वाप्स्वमृतं तथा' इति कुं.पाठः।
३. 'गर्गरो' इति कुं. पाठः। Cs: BORI पृ. १८९५
४. अ.को. द्वि. वैश्यवर्गः श्लो. ७४
५. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते।
६. अ.को. द्वि. मनुष्यवर्गः श्लो. ७६

**ते देवाः सेन्द्रा** इत्यत्र ते देवाः तस्य श्रोत्रादिद्वारैः तद्देवाद्विगलिता देवाः।

**इन्द्रो दधीचोऽभवत्** ॥ ४० ॥

**इन्द्रो दधीचोऽभवत्** इत्यत्र **दधीचः** दधीचाश्रमगतः।

**तावत् पूर्वेण सेन्द्रा देवा आगमन् कालोऽयं देहन्यासाय** इत्यत्र **पूर्वेण** पूर्वोक्तप्रकारेण।

**श्रुतिरप्यत्र भवति 'इन्द्रो दधीचोऽस्थिभिः कृतम्' इति तस्य परमात्मन्यपसृते तान्यस्थीनि विधाता सङ्गृह्य वज्रमकरोत्। तेन वज्रेणाभेद्येनाप्रधृष्येण ब्रह्मास्थिसम्भूतेन विष्णुप्रविष्टेनेन्द्रो विश्वरूपं जघान। शिरसां चास्य च्छेदनमकरोत्तक्ष्णा यज्ञपशोः शिरस्ते ददानीत्युक्त्वा** ॥ ४१ ॥

**तस्य परमात्मन्यपसृत** इत्यत्र देहाभिमानं विहाय तस्य मनसि परमात्मन्यपसृते सतीति योग्यपदाध्याहारेण योजना।

**अथ शची दुःखशोकार्ता भर्तृदर्शनलालसा नहुषभयगृहीता बृहस्पतिमुपागच्छत्। स च तामत्युद्विग्नां दृष्ट्वैव ध्यानं प्रविश्य भर्तृकार्यतत्परां ज्ञात्वा बृहस्पतिरुवाचानेनैव व्रतेन तपसा चान्विता देवीं वरदामुपश्रुतिमाह्वय। तदा सा ते इन्द्रं दर्शयिष्यतीति। साऽथ महानियमस्थिता देवीं वरदामुपश्रुतिं मन्त्रैराह्वयत् सोपश्रुतिः॥ ४८ ॥**

**वरदामुपश्रुतिमाह्वय** इत्यत्र उपश्रुतिर्नाम कस्मिंश्चित् कार्ये सङ्कल्पिते सति या जनानां यादृच्छिकी 'तव कार्यं भविष्यति' इत्यादि-रूपा आरब्धकार्यानुकूलवाक्यश्रुतिः सा उपश्रुतिरित्युच्यते। तदभिमानिनी देव्यपि उपश्रुतिरित्युच्यते। चिन्तयन्त्याः देव्याः उपश्रुतिरप्यभूत्। तदा सा देवी दृश्या सती साहाय्यं चक्रे। अन्येषामदृश्यैवोपकरोतीति विशेषः।

**इन्द्रश्च तस्मात्सरसः प्रत्युत्थाय गत्वा सरस्वतीमभिजगाम। बृहस्पतिश्चाश्वमेधं महाक्रतुं शक्रायाहरत्। ततश्च[१] कृष्णसारङ्गं मेध्यमश्वमुत्सृज्य पावनं तमेव कृत्वा इन्द्रं मरुत्पतिं बृहस्पतिः स्वं स्थानं प्रापयामास ॥ ५२ ॥**

**ततश्च कृष्णसारङ्गं मेध्यमश्वमुत्सृज्य** इत्यत्र ततः अश्वमेध-करणानन्तरं **कृष्णसारङ्गं** कृष्णसारङ्गमृगवत् अङ्गं यस्य तं शुभ्रोदरकण्ठा-धोभागम्, अन्यत्र नीलम् अश्वम् **उत्सृज्य** ऊर्ध्वलोके स्वर्गे सृष्ट्वा। यज्ञे हतः पशुः स्वर्गे महासुखमनुभवन् महान् पशुर्भवतीति शास्त्रप्रवादः।

**वनितासु रजः। वृक्षेषु[२] च सुनः। गिरिषु शिम्बः। पृथिव्या-मूषरः। तेऽस्पृश्याः ॥ ५३ ॥**

**वृक्षेषु च सुन** इत्यत्र **सुनः** निर्यासः, गिरिषु **शिम्बः** शिम्बनामक नीचजातीनां भूमिः।

**कथयित्वा स्वकान्[३] प्रश्नान् स्वां तनुं च विमोक्ष्यते ॥ ५४ ॥**

---

१. **'तत्र'** इति कुं. पाठः। २. **'वृक्षेषु निर्यासः'** इति कुं. पाठः।
३. **'स्वकान्प्रश्नांस्त्वां च तं च विमोक्ष्यति'** इति कुं. पाठः।

**स्वां तनुं च विमोक्ष्यत** इत्यत्र **विमोक्ष्यते** विमोक्षयिष्यते। 'अन्तर्णीतो णिच्'।

**व्यथा विवस्वतो द्वितीयजन्मन्यण्डसंज्ञितस्य अण्डं मातुरदित्या मारितं स मार्ताण्डो विवस्वानभवच्छ्राद्धदेवः ॥५७॥**

**स मार्ताण्डोऽभवत्** इत्यत्र मृताण्डोत्पन्नत्वात् **मार्ताण्डः**। **श्राद्धदेवः** श्राद्धस्य देवः। वसुरुद्रादित्येषु श्राद्धभोजिषु आदित्योऽभूदित्यर्थः।

॥ इति चतुःसप्तत्युत्तरशततमोऽध्यायः ॥

* * *

## ॥ अथ पञ्चसप्तत्युत्तरशततमोऽध्यायः ॥

**[१] नाम्नां निरुक्तं वक्ष्यामि शृणुष्वैकाग्रमानसः।**
**सूर्याचन्द्रमसौ शश्वत् केशैर्मे अंशुसञ्ज्ञितैः।**
**बोधयंस्तापयंश्चैव जगदुत्तिष्ठते पृथक् ॥ १ ॥**

**बोधयंस्तापयंश्चैव** इत्यत्र जगत् बोधयन् तापयंश्च केशाख्यः किरणराशिः **उत्तिष्ठते** मम नेत्रद्वयात् उत्तिष्ठते। **पृथक्** अह्नि एकः निश्येकः इति पृथक्।

**हृषीकेशोऽहमीशानो वरदो लोकभावनः ॥ २ ॥**

**हृषी** हर्षणकरौ केशौ यस्येति हृषीकेश इत्यर्थः। निरुक्तत्वात् दीर्घः छान्दसः। हृषी इति ईकारान्तं पदं वा। तदा हृष्यौ केशौ यस्येति समासः।

---

१. [illegible] ३५२ अध्यायः।

**इळोपहूतं गेहेषु हरे भागं क्रतुष्वहम् ।**
**वर्णो मे हरितः श्रेष्ठस्तस्माद्धरिरहं स्मृतः ॥ ३ ॥**

**इळोपहूतं गेहेषु** इत्यत्र **इळोपहूतम्** इडां गृहाणेति उपहूतं हविर्भागं हरे, तेन हरतीति हरिरित्यर्थः ।

**धामसारो हि लोकानामृतं चैवावधारितम्[1] ।**
**ऋतधामा ततो विप्रैः सत्यश्चाहं[2] प्रकीर्तितः ॥ ४ ॥**

**धामसारः** श्रेष्ठाधारः । ऋगताविति धातोः **ऋतं** ज्ञानरूपं मे शरीरम् अवधारितम् । तेन ऋतश्चासौ धामा चेति ऋतधामा । **सत्यः** सतीमपेक्षितः, सत् यं ज्ञानं यस्येति पूर्वोक्तविधयैव सत्यश्च ।

**शिपिविष्टेति चाख्यायां हीनरोमा च यो भवेत् ।**
**तेनाविष्टं तु यत्किञ्चिच्छिपिविष्टेति च स्मृतः ॥ ६ ॥**

**शिपिविष्टेति चाख्यायाम्** इत्यत्र **हीनरोमा** रोमपदोपलक्षितत्वचा हीनं, यज्ञेषु दीयमानं यत् मांसरूपं हविः तद् **भवेत्** शिपिनामकं भवेत् । तेन शिपिना आविष्टं यत् किञ्चिद्वस्तु तत् शिपिविष्टं स्मृतं हि । तच्च यज्ञभोक्तरि मय्येवास्तीति कृत्वा शिपिविष्टनामकोऽहमेवेति भावः ।

**सच्चासच्चैव कौन्तेय मया वेशितमात्मनि ।**
**पौष्करे ब्रह्मसदने सत्यं मामृषयो विदुः ॥ ११ ॥**

**सच्चासच्चैव** इत्यत्र **सत्** पृथिव्यप्तेज आख्यं मूर्तम् । **असत्** आकाशवाय्वाख्यम् अमूर्तं तदेव, 'तनु विस्तारे' इति धातोः, गगनरूपेण

---

१. BORI पृ. १९१३; T,$G_{2,3,6}$,; **'चैव विचारितम्'** इति कुं. पाठः ।
२. BORI पृ. १९१३; **'सद्यश्चाहम्'** इति कुं. पाठः ।

व्याप्तत्वात्, 'या प्रापणे' इति धातोः, वायुरूपेण गमनशीलत्वाच्च सत्यमित्यपि कथ्यते । अतः सत्यवात्त्वात् सच्चासच्च यस्मिन्निति व्युत्पत्त्या चाहमेव सत्य इत्यर्थः । **पौष्करे** पुष्करकर्णिकास्थानीये सत्यलोके ।

**सत्त्वान्न च्युतपूर्वोऽहं सत्त्वं वै विद्धि मत्कृतम् ।**
**जन्मनीह[1] भवेत् सत्त्वं पौर्विकं मे धनञ्जय ॥ १२ ॥**
**निराशीः कर्मसंयुक्तः सत्त्वतश्चाप्यकल्मषः ।**
**सात्वतज्ञानदृष्टोऽहं सात्वतः[2] सात्वतीपते ॥ १३ ॥**

**सत्त्वान्न च्युतपूर्वोऽहम्** इत्यत्र **सत्त्वं** सामर्थ्यं सत्त्वगुणो वा । **पौर्विकं** पूर्वं विद्यमानमूलरूपसम्बन्धि । **इह जन्मनि** कृष्णावतारे । **निराशीः कर्मसंयुक्त** इत्यनेन रजोगुणसङ्गेन हि रागोऽपि स्यात् । तदभावात् केवलसत्त्वगुणनिमित्तं निवृत्तिकर्म, तत्सम्बन्धित्वादपि सात्वतः । **सत्त्वतः** स्वातन्त्र्याख्यसामर्थ्यात् केवलसत्त्वगुणप्रियत्वाच्च रजस्तमोनिमित्तकल्मषरहित इति कृत्वापि सात्वतः । **सात्वतज्ञानं** सत्त्वगुणसम्बन्धित्वात् सात्वतं पञ्चरात्रादिवैष्णवग्रन्थसमूहः । तेन दृष्ट इतिकृत्वापि सात्वतः । यादवकुलोत्पन्नत्वात् तव भार्या सुभद्रैव **सात्वती** । न त्वहमिति सूचनाय सात्वतीपते इत्युक्तम् ।

**कृषामि मेदिनीं पार्थ भूत्वा कृष्णायसोत्तरः[3] ।**
**कृष्णो वर्णश्च मे यस्मात्तस्मात्कृष्णोऽहमर्जुन ॥ १४ ॥**

---

१. **'जन्मनीहाभवेत्'** इति कुं. पाठः ।
२. BORI पृ. १९१४; **'सात्वतामिति सात्वतः'** इति कुं. पाठः ।
३. BORI पृ. १९१४; $M_{1,5,7}$; **'कार्ष्णायसो महान्'** इति कुं. पाठः ।

**कृष्णार्यसोत्तरः – कृष्णायसम्** अयः, उत्तरभावो यस्य तत् लाङ्गलं तद् **भूत्वा** अन्तःप्रविश्य । 'भू प्राप्तौ' इति धातोः ।

**मया संश्लेषिता भूमिरद्भिर्व्योम च वायुना ।**
**वायुश्च तेजसा सार्धं वैकुण्ठत्वं ततो मम** ॥ १५ ॥

**मया संश्लेषिता भूमिः** इत्यत्र मया त्रिविधजीवेषु अद्भिः सार्धं भूमिः संश्लेषिता । व्योम च वायुना सार्धं संश्लेषितम् । वायुश्च तेजसा सार्धं संश्लेषितः । तेन देहेन त्रिविधा अपि जीवाः स्वस्वयोग्यज्ञानं सम्पाद्य तमसि कुण्ठनाख्यनाशरहिता अधमा भवन्ति । मध्यमगतौ च मध्यमा विकुण्ठा भवन्ति । मुक्तौ च उत्तमा विकुण्ठा भवन्ति । एवं त्रिविधकुण्ठानामप्यधिपतित्वात् वैकुण्ठनामाहम् । 'उभयस्य राजा' इति हि श्रुतिः । उभयस्य सतोऽसतः उभयस्य उभयस्वभावस्य च राजेति श्रुत्यर्थः ।

**पृथिवीनभसी चोभे विश्रुते विश्वतोमुखे ।**
**तयोः संधारणार्थं हि मामधोक्षजमञ्जसा** ॥ १७ ॥

**निरुक्तं वेदविदुषो वेदशब्दार्थचिन्तकाः ।**
**ते मां गायन्ति प्राग्वंशे अधोक्षज इति स्मृतः** ॥ १८ ॥

**विश्रुते विश्वतोमुखे** इत्यत्र **विश्वतोमुखे** सर्वत्र व्याप्ते तयोः सन्धारणार्थं पृथिवीवत् अवतारेषु ईषदीषद् दृष्टत्वेन मूलरूपे व्योमवत् सर्वथा अदृष्टत्वेन च सन्धारणार्थं माम् अक्षजमक्षजनितं ज्ञानम् अधः यस्मादिति व्युत्पत्त्या अधोक्षजम् । यद्वा भूमिस्थितभूम्याख्यलक्ष्मीरूपवत् व्योम्निस्थितश्रीदेव्याख्यलक्ष्मीरूपवच्च स्वप्रसादं विना सर्वथा अदृष्ट-

त्वाद्वा **अधोक्षजः**। 'तदव्यक्तमाह हि'[1] इति सूत्रम्। 'पश्यन्तोऽपि न पश्यन्ति मेरो रूपं विपश्चित'[2] इति स्मृतेः। प्राथमिकयोजनापि प्रामाणिकी। **प्राग्वंशे** देहे यज्ञे वा।

**[3]अधो न क्षीयते यस्माद्वदन्त्यन्येऽप्यधोक्षजम्।**

**अधो न क्षीयते यस्मात्** इत्यत्र न क्षीयत इत्यक्षः। 'क्षि क्षये' इति धातोः। 'आदे च उपदेशेऽशिति च'[4] इति एकारस्य आकारे कृते 'आतोऽनुपसर्गे कः'[5] इति कर्मणि कप्रत्यये च कृते 'आतो लोप इटि च' इति आकारलोपे च सति क्षमिति रूपनिष्पत्तिर्भवति। **अधः** भूलोके **जः** जातोऽपि यः न क्षीयते सः **अधोक्षज** इत्युक्तं भवति।

**शब्दं एकमतैरेष व्याहृतः परमर्षिभिः।**
**नान्यो ह्यधोक्षजो लोके ऋते नारायणं प्रभुम्** ॥ १९ ॥

**एकमतैः** एकैकमतप्रवर्तकैः।

**घृतं ममार्चिषो लोके जन्तूनां प्राणधारणम्।**
**घृतार्चिरहमव्यग्रैर्वेदज्ञैः परिकीर्तितः** ॥ २० ॥

**घृतं ममार्चिष** इत्यत्र **मम** अग्न्यन्तर्यामिणो मम अर्चिः – साधनत्वादर्चिषः। यद्वा, गोघृतस्य सुवर्णवर्णत्वात् घृतं मम **अर्चिषः** अर्चिःसदृशानि। एवं च घृतादर्चिषो यस्य घृतवदर्चिषो यस्येति वा अहं घृतार्चिः। अत एव [6]'घृतप्रतीका' इति श्रुतिः।

---

१. ब्र.सू. ३-२-२३; २. सूत्रभाष्योदाहृतस्मृतिः
३. BORI, पृ. १९१५; ४. पा.सू. ६-१-४५; ५. पा.सू. ३-२-३
६. ऋ.सं. १०-११४-३

**कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते ।**
**तस्माद्वृषाकपिं प्राह कश्यपो मां प्रजापतिः ॥ २४ ॥**

**कपिर्वराहः श्रेष्ठश्च** इत्यत्र वृषपदवाच्यौ कपिवराहौ, आसमन्तात् कं जलं पाययति, श्रेष्ठधर्मयोः अकं दुःखं पिनष्टीति वा वृषाकपिः ।

**तथैवासं[१] त्रिककुदा वाराहं रूपमास्थितः ।**
**त्रिककुत्तेन विख्यातः शरीरस्य तु मापनात् ॥ २८ ॥**

**तथैवासं त्रिककुदा** इत्यत्र भुजद्वये शिरोमूले च त्रयः ककुदः चर्मावृतपृष्ठस्थूलावयवाः यस्य स तथोक्तः । 'आपं चैव हलन्तानाम्' इति वचनात् ककुदेव ककुदा ।

**विद्यासहायवन्तं मामादित्यस्थं सनातनम् ।**
**कपिलं प्राहुराचार्याः साङ्ख्या निश्चितनिश्चयाः ॥ ३० ॥**

**कपिलं प्राहुराचार्या** इत्यत्र **कं** मोक्षसुखं पिबन्त्यनेनेति **कपि** तत्त्वज्ञानम् । तेन लसमानः **कपिलः** ।

**जातीमरणजं दुःखं स्मृत्वा स्मृत्वा पुनः पुनः ।**
**सप्तजातिषु मुख्यत्वाद्योगानां सम्पदं गतः ॥ ३९ ॥**

**सप्तजातिषु** सप्त जन्मसु ।

**क्षिप्तश्च[२] सहसा रुद्रे खण्डनं प्राप्तवांस्तदा ।**
**ततोऽहं खण्डपरशुः स्मृतः परशुखण्डनात् ॥ ५० ॥**

---

१. **'तथैवासं त्रिककुदो'** इति कुं. पाठः ।
२. BORI पृ. १९१९; **'क्षिप्तश्च सहसा तेन'** इति कुं. पाठः ।

**क्षिप्तश्च सहसा रुद्रे खण्डनं प्राप्तवांस्तदा** इत्यत्र तदा रुद्रकरस्थः परशुः खण्डनं प्राप्तवान् । **परशुखण्डनात्** शिवकरस्थितपरशोरेव खण्डनात् खण्डः । खण्डितः परशुर्येनेति व्युत्पत्त्या अहं खण्डपरशुरित्यर्थः ।

॥ इति पञ्चसप्तत्युत्तरशततमोऽध्यायः ॥

## ॥ अथ षट्सप्तत्युत्तरशततमोऽध्यायः ॥

[१]**यस्त्वां वेत्ति स मां वेत्ति यस्त्वामनु स मामनु ।**
**नावयोरन्तरं किञ्चिन्मा तेऽभूद्बुद्धिरन्यथा** ॥ ६७ ॥

**नावयोरन्तरं किञ्चित्** इत्यत्र **अन्तरं** व्यवधानम् । **अन्तरं** तारतम्यं किञ्चिन्न । किन्तु बह्वस्तीति वा ।

॥ इति नारायणीये षट्सप्तत्युत्तरशततमोऽध्यायः ॥

## ॥ अथ सप्तसप्तत्युत्तरशततमोऽध्यायः ॥

[२]**जालपादभुजौ तौ तु पादयोश्चक्रलक्षणौ ।**
**व्यूढोरस्कौ दीर्घभुजौ तथा मुष्कचतुष्किणौ** ॥ ३६ ॥

**तथा मुष्कचतुष्किणौ** इत्यत्र अण्डे चतुर्बीजवन्तौ [३]'मुष्कोण्डकोशो वृषणः' इत्यमरः ।

**तत्र ये पुरुषाः श्वेताः पञ्चेन्द्रियविवर्जिताः ।**
**प्रतिबुद्धाश्च ते सर्वे भक्ताश्च पुरुषोत्तमम्** ॥ ५३ ॥

---

१. कुं.पाठानुसारेण पूर्वाध्याय एवानुसरति ।
२. कुं. ३५३ अध्यायः ।; ३. अ.को. द्वि. मनुष्यवर्गः श्लो. ७६

**पञ्चेन्द्रियविवर्जिता** इत्यत्र प्राकृतपञ्चेन्द्रियरहिता इत्यर्थः ।

॥ इति सप्तसप्तत्युत्तरशततमोऽध्यायः ॥

## ॥ अथ अष्टसप्तत्युत्तरशततमोऽध्यायः ॥

**तस्मादुत्तिष्ठते[१] विप्र देवाद्विश्वभुवः पतेः ।**
**क्षमा क्षमवतां श्रेष्ठ यया भूमिस्तु युज्यते ॥ ६ ॥**

**क्षमा क्षमवतां श्रेष्ठ** इत्यत्र **क्षमा** सहनशक्तिः उत्तिष्ठते ।

॥ इति अष्टसप्तत्युत्तरशततमोऽध्यायः ॥

## ॥ अथ एकोनाशीत्युत्तरशततमोऽध्यायः ॥

**ततस्तद्भावितो[२] नित्यं यजे वैकुण्ठमव्ययम् ।**
**तस्माच्च प्रधृतः[३] पूर्वं ब्रह्मा लोकपितामहः ॥ ५ ॥**

**तस्माच्च प्रधृतः पूर्वम्** इत्यत्र **पूर्वं** प्रलयकाले । **तस्मात्** नारायणात् । ब्रह्मा **प्रधृतः** प्रकर्षेण उदरे धृतः ।

**मम वै पितरं प्रीतः परमेष्ठ्यप्यजीजनत् ।**
**अहं सङ्कल्पजस्तस्य पुत्रः प्रथमकल्पितः ॥ ६ ॥**

**सङ्कल्पजस्तस्य** इत्यत्र **तस्य** नारायणस्य ।

**इज्यते पितृयज्ञेषु मया नित्यं जगत्पतिः ।**
**श्रुतिश्चाप्यपरा देवाः पुत्रा[४] हि पितरौ यजन् ॥ ८ ॥**

---

१. कुं. ३५४ अध्यायः ।; २. कुं. ३५५ अध्यायः ।

३. **'तस्माच्च प्रसृतः'** इति कुं. पाठः ।

४. BORI पृ. १९३६; $T_2$,$G_2$,$K_6$; **'पुत्रान्हि पितरोऽयजन्'** इति कुं.पाठः ।

**देवाः पुत्रा हि पितरौ यजन्** इत्यत्र **पितरौ** मातापितृरूपौ नारायणमूर्ती ।

**वेदश्रुतिः प्रनष्टा च पुनरध्यापिता सुतैः ।**
**ततस्ते मन्त्रदाः पुत्राः[1] पितृत्वमुपपेदिरे ॥ ९ ॥**

**पुत्राः पितृत्वमुपपेदिर** इत्यत्र 'यस्ताविजानात्स पितुष्पितासत्'[2] इति न्यायेन पितृत्वमुपपेदिरे ।

**नूनं सुरैस्तद्विदितं युवयोर्भावितात्मनोः ।**
**पुत्राश्च पितरश्चैव परस्परमपूजयन् ॥ १० ॥**

**परस्परमपूजयन्** इत्यत्र हरिः सम्यगभूदिति मानयामास । देवास्तु पूजामेव चक्रिरे ।

**दंष्ट्राभ्यां प्रविनिर्धूता ममैते दक्षिणां दिशम् ।**
**आश्रिता धरणीं पीड्य तस्मात्पितर एव ते ॥ १९ ॥**

**तस्मात्पितर एव ते** इत्यत्र **तस्मात्** दक्षिणदिशि पतितत्वात् **ते** पिण्डाः **पितरः** पित्रभिमन्यमानत्वात्पितृसंज्ञकाः ।

**त्रयो मूर्तिविहीना वै पिण्डमूर्तिधरास्त्विमे ।**
**भवन्तु पितरो लोके मया सृष्टाः सनातनाः ॥ २० ॥**

**त्रयो मूर्तिविहीना** इत्यत्र 'अमूर्तानां सुमूर्तानाम्' इति वचनात् मानुषैः पूज्यमानाः पितरः अमूर्ताः । मानुषदृग्गोचरमूर्तिरहितत्वाद्

१. BORI पृ. १९३६; **'पुत्राः पितॄणामिति वैदिकम्'** इति कुं. पाठः ।
२. ऋ.स. १-१६४-१६

अमूर्ताः । देवैः पूज्यमानास्तु दृग्गोचरमूर्तित्वात् सुमूर्ता इत्युच्यन्ते । धरण्यां क्रियमाणपूजा मनुष्यसम्बन्धिनीत्यतः अमूर्ता इत्युक्तम् ।

॥ इति नारायणीये एकोनाशीत्युत्तरशततमोऽध्यायः ॥

## ॥ अथ एकाशीत्युत्तरशततमोऽध्यायः ॥

[१] **भूतप्रलयमव्यक्तं शुश्रूषुः नृपसत्तम ॥ १३ ॥**

**भूतप्रलयमव्यक्तं शुश्रूषुर्नृपसत्तम** इत्यत्र भूतप्रलयम् **अव्यक्तम्** अव्यक्तनामकलक्ष्मीतत्त्वम् । यस्य नारायणस्य **शुश्रूषुः** सेवां कुर्वन्ती । लक्ष्म्याः स्त्रीरूपत्वात् स्त्रीलिङ्गपदम् ।

**तमसो ब्रह्मसम्भूतं तमोमूलमृतात्मकम् ।**
**तद्विश्वभावसंज्ञान्तं पौरुषीं तनुमाश्रितम् ॥ १७ ॥**

**तमोमूलमृतात्मकम्** इत्यत्र तमःपदोदितत्रिगुणमूलं किन्तु **ऋतं** यथार्थविज्ञानं तदात्मकम् ।

**सोऽनिरुद्ध इति प्रोक्तस्तत्प्रधानं प्रचक्षते ।**
**तदव्यक्तमिति ज्ञेयं त्रिगुणं नृपसत्तम ॥ १८ ॥**

**तत्प्रधानं प्रचक्षत** इत्यत्र **प्रधानं** प्रकृतिनियामकम् ।

**विद्यासहायवान् देवो विष्वक्सेनो हरिः प्रभुः ।**
**आदिकर्ता स भूतानामप्रमेयो हरिः प्रभुः ॥ १९ ॥**

**विद्यासहायवान् देव** इत्यत्र विद्यैव सहायो यस्य स तथोक्तः । अविद्योपादानकत्वं जगतो निराकर्तुमिदमुक्तम् ।

---

१. कुं. ३५७ अध्यायः । 'भूतप्रलयमव्यक्तं शृणुष्व' इति कुं. पाठः ।

**तस्य चिन्तयतः सृष्टिं महानात्मगुणः स्मृतः ।**
**अहङ्कारस्ततो जातो ब्रह्मा शुभचतुर्मुखः ।**
**हिरण्यगर्भो भगवान् सर्वलोकपितामहः ॥ २१ ॥**

**महानात्मगुणः स्मृत** इत्यत्र **आत्मगुणः** परमात्मनो ज्ञानादि-गुणभरितः । **महान्** महत्तत्त्वाभिमानी ब्रह्मा, **स्मृतः** पुत्र इति स्मृतः ।

**स तामसो मधुर्जातस्तदा नारायणाज्ञया ।**
**कठिनस्त्वपरो बिन्दुः कैटभो राजसस्तु सः ॥ २६ ॥**

**स तामसो मधुर्जात** इत्यत्र **तामसो मधुः** तामसः मधुनामको दैत्यः ।

**ततो विग्रहवन्तस्तान् वेदान् दृष्ट्वाऽसुरोत्तमौ ।**
**सहसा जगृहतुर्वेदान् ब्रह्मणः पश्यतस्तदा ॥ २९ ॥**

**ततो विग्रहवन्तस्तान्** इत्यत्र 'व्यत्ययो बहुलम्'[१] इति वचनात् प्रथमा द्वितीयार्थे । विग्रहवत इत्यर्थः ।

**हरेः स्तोत्रार्थमुद्भूता बुद्धिर्बुद्धिमतां वर ।**
**ततो जगौ परं जप्यं साञ्जलिप्रग्रहः प्रभुः ॥ ३७ ॥**

**प्रग्रहः** भक्तिपाशभरितः ।

**त्वत्तो मे मानसं जन्म प्रथमं द्विजपूजितम् ।**
**चाक्षुषं वै द्वितीयं मे जन्म चासीत्पुरातनम् ॥ ४० ॥**

**त्वत्तो मे मानसं जन्म** इत्यत्र **मानसं** तव मनसा जातं जन्म । **चाक्षुषं** तव चक्षुषो जातम् ।

---

१. पा.सू. ३-१-८५

**त्वत्प्रसादात्तु मे जन्म तृतीयं वाचिकं महत् ।**
**त्वत्तः श्रवणजं चापि चतुर्थं जन्म मे विभो ॥ ४१ ॥**

**वाचिकं** तव वागिन्द्रियाज्जातम् । **श्रवणजं** तव श्रोत्राज्जातम् । नाभेरिव तव मन आदीन्द्रियेभ्योऽपि काले काले बहूनि जन्मानि सन्तीति भावः ।

**कर्णावाकाशपाताले ललाटं भूतधारिणी ।**
**गङ्गासरस्वती पुण्ये भ्रुवावास्तां महाद्युती ॥ ४९ ॥**

**ललाटं भूतधारिणी** इत्यत्र भूतानां पिशाचादीनामाधारभूतम् अन्तरिक्षम् ।

**दन्ताश्च पितरो राजन् सोमपा इति विश्रुताः ।**
**गोलोको ब्रह्मलोकश्च ओष्ठावास्तां महात्मनः ॥ ५१ ॥**

कटी **गोलोकः** स्वर्गलोकः ।

**यां यामिच्छेत्तनुं देवः कर्तुं कार्यविधौ क्वचित् ।**
**तां तां कुर्याद्विकुर्वाणः स्वयमात्मानमात्मना ॥ ७७ ॥**

**तां तां कुर्याद्विकुर्वाण** इत्यत्र **विकुर्वाणः** विविधं कार्यं कुर्वाणः ।

॥ इति नारायणीये एकाशीत्युत्तरशततमोऽध्यायः ॥

* * *

## ॥ अथ द्व्यशीत्युत्तरशततमोऽध्यायः ॥

[१] **ये तु दग्धेन्धना लोके पुण्यपापविवर्जिताः ।**
**तेषां च या हि निर्दिष्टा पारम्पर्यागता गतिः ॥ २ ॥**

**दग्धेन्धनाः** दग्धपापाख्येन्धनाः ।

**नूनमेकान्तधर्मोऽयं श्रेष्ठो नारायणप्रियः ।**
**अगत्वा गतयस्तिस्रो यद्गच्छत्यव्ययं हरिम् ॥ ४ ॥**

**अगत्वा गतयस्तिस्र** इत्यत्र **तिस्रः गतीः** धर्मार्थकामाख्यगतीः ।

**तं कार्तयुगधर्माणं निराशीः कर्मसञ्ज्ञितम् ।**
**जगाम तमसःपारं यत्राव्यक्तं व्यवस्थितम् ॥ ३२ ॥**

**निराशीः कर्मसञ्ज्ञितम्** इत्यत्र फलाशां विना कर्मकर्तृत्वात् **निराशीः** कर्मेति (सर्वज्ञतः) सञ्ज्ञावान् ।

**॥ इति नारायणीये द्व्यशीत्युत्तरशततमोऽध्यायः ॥**

## ॥ अथ त्र्यशीत्युत्तरशततमोऽध्यायः ॥

[२] **कामं देवाश्च ऋषयः सत्त्वस्था नृपसत्तम ।**
**हीनाः सत्त्वेन सूक्ष्मेण ततो वैकारिकाः स्मृताः ॥ ७८ ॥**

**हीनाः सत्त्वेन सूक्ष्मेण** इत्यत्र देवादिषु यथा सूक्ष्मं सत्त्वम् अस्ति तथा सूक्ष्मेण सत्त्वेन हीनाः। प्रायशः सत्त्वगुण एव रताः ते **वैकारिकाः**।

---

१. कुं. ३५८ अध्यायः ।
२. कुं. पूर्वाध्याय एवानुसरति ।

कदाचिदीषद्विकारसहितत्वात् **वैकारिका** इत्युच्यन्ते । मनुष्योत्तमा इति यावत् ।

**सुसूक्ष्मं तत्त्वसंयुक्तं संयुक्तं त्रिभिरक्षरैः ।**
**पुरुषः पुरुषं गच्छेन्निष्क्रियं पञ्चविंशकम् ॥ ८० ॥**

**निष्क्रियः** पुण्यपापादिकर्मरहितः ।

॥ इति एकान्तिकस्वभावे त्र्यशीत्युत्तरशततमोऽध्यायः ॥

## ॥ अथ चतुरशीत्युत्तरशततमोऽध्यायः ॥

**[१]पितामहाद्यं प्रवदन्ति षष्ठं महर्षिमार्षेयविभूतियुक्तम् ।**
**[२]नारायणस्याङ्गजमेकपुत्रं द्वैपायनं वेदमहानिधानम् ॥ ५ ॥**

**पितामहाद्यं प्रवदन्ति षष्ठम्** इत्यत्र नारायणाज्जन्मना सह पितामहात् षष्ठं प्रवदन्ति ।

**नारायणस्याङ्गजमेकपुत्रम्** इत्यत्र नारायणस्य **अङ्गजम्** अपान्तर-तमाख्यप्रथमावतारे वागुच्चारणसमये नारायणस्य आस्याज्जातमित्यर्थः ।

**अपान्तरतमा नाम सुतो वाक्सम्भवः प्रभोः ।**
**भूतभव्यभविष्यज्ञः सत्यवादी दृढव्रतः ॥ ३९ ॥**

**अपान्तरतमा नाम** इत्यत्र वाराहादिरूपवत् ज्ञानकार्याय अपान्तरतम इत्यपि भगवत एव एकरूपम् आदिनारायणाज्जातम् । स एव व्यासो भविष्यति ।

---

१. कुं. ३५९ अध्यायः ।
२. 'नारायणस्यांशजमेकपुत्रम्' इति कुं. पाठः ।

**वीतरागश्च पुत्रस्ते परमात्मा भविष्यति ।**
**महेश्वरप्रसादेन नैतद्वचनमन्यथा ॥ ४८ ॥**

**परमात्मा परमे** नारायणे **आत्मा** चित्तं यस्य स परमात्मा तेन ।

**शनैश्चरः सूर्यपुत्रो भविष्यति मनुर्महान् ।**
**तस्मिन्मन्वन्तरे चैव मन्वादिगणपूर्वकः ।**
**त्वमेव भविता वत्स मत्प्रसादान्न संशयः ॥ ५५ ॥**

**शनैश्चरः सूर्यपुत्र** इत्यत्र शनैः एकसप्ततिमहायुगपर्यन्तं चरतीति **शनैश्चरः** वैवस्वतमनुः ।

**साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।**
**ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ॥ ६४ ॥**

**साङ्ख्यं** षड्दर्शनेष्वेकं साङ्ख्यमतम् । **योगः** योगमतम् ।

**पाञ्चरात्रस्य कृत्स्नस्य वक्ता तु भगवान् स्वयम् ।**
**ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद् विशिष्यते[1] ॥ ६८ ॥**

**ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद् विशिष्यत** इत्यत्र **सर्वेषु** एतेषु ज्ञानेषु पञ्चरात्रं विशिष्यत इत्युक्त्या पञ्चरात्रवेदारण्यकयोः एकार्थत्वात् पञ्चरात्रवैशिष्ट्योक्त्या तेषामपि वैशिष्ट्यसिद्धिः । साङ्ख्याद्यसच्छास्त्र-त्रयस्य तु पञ्चरात्रविरुद्धार्थकत्वात् अप्रामाण्यमेवेति भावः ।

**साङ्ख्यं च योगं च सनातने द्वे**
**वेदाश्च सर्वे निखिलेन राजन् ।**

---

१. 'सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते' इति कुं. पाठः ।

**सर्वैः समस्तैर्ऋषिभिर्निरुक्तो**
**नारायणो विश्वमिदं पुराणम्** ॥ ७३ ॥

**सर्वैः समस्तैर्ऋषिभिः** इत्यत्र समस्तैः ऋषिभिः **सर्वैः** सनातन-साङ्ख्य-योग-वेद-पञ्चरात्रादिसच्छास्त्रैः नारायणो निरुक्तः **विश्वमिदं** शास्त्रम् । **पुराणम्** अनादिकालीनम् ।

॥ इति व्यासप्रादुर्भावो नाम चतुरशीत्युत्तरशततमोऽध्यायः ॥

॥ अथ पञ्चाशीत्युत्तरशततमोऽध्यायः ॥

**[1]उत्सर्गेणापवादेन ऋषिभिः कपिलादिभिः ।**
**अध्यात्मचिन्तामाश्रित्य शास्त्राण्युक्तानि भारत** ॥ ६ ॥

**उत्सर्गेणापवादेन** इत्यत्र **उत्सर्गेण** सामान्येन **अपवादेन** विशेषेण ।

**किं नु तत्सदनं श्रेष्ठं क्षुत्पिपासाविवर्जितम् ।**
**सुरासुरैरध्युषितमृषिभिश्चामितप्रभैः** ॥ १८ ॥

**किं नु तत्सदनं श्रेष्ठम्** इत्यत्र **तत्** प्रसिद्धं **सदनं** सत्यलोकम् ।

**गन्धर्वैरप्सरोभिश्च सततं सन्निषेवितम् ।**
**उत्सृज्येमं गिरिवरमेकाकी प्राप्तवानसि** ॥ १९ ॥

उत्सृज्य इमं गिरिवरं **किं नु प्राप्तवानसि** किं कारणं प्राप्तवान् असि ।

**बहवः पुरुषाः पुत्र त्वया ये समुदाहृताः ।**
**एवमेतदतिक्रान्तं [2]द्रष्टव्यं दैवमित्यपि** ॥ २३ ॥

---

१. कुं. ३६० अध्यायः ।; २. 'द्रष्टव्यं नैवमित्यपि' इति कुं.पाठः ।

**एवमेतदतिक्रान्तम्** इत्यत्र एतत् **एवं** त्वयोक्तं पुरुषबहुत्वं भवत्येव । एतेभ्यः **अतिक्रान्तम्**, अतिशयितं दैवमपि द्रष्टव्यम् ।

**आधारं तु प्रवक्ष्यामि एतस्य[१] पुरुषस्य ते ।**
**बहूनां पुरुषाणां स यथैका योनिरुच्यते ॥ २४ ॥**

**एतस्य पुरुषस्य** एतेषां पुरुषाणां, जात्येकवचनम्, आधारम् । यद्वा एतस्य पुरुषस्य मम आधारम् ।

॥ इति पञ्चाशीत्युत्तरशततमोऽध्यायः ॥

## ॥ अथ षडशीत्युत्तरशततमोऽध्यायः ॥

**[२]अचिन्त्यां चामितं ज्ञात्वा भावसूक्ष्मं चतुष्टयम् ।**
**विचरेद्योऽसमुन्नद्धः स गच्छेत्पुरुषं शुभम् ॥ १२ ॥**

**अचिन्त्यां चामितं ज्ञात्वा भावसूक्ष्मं चतुष्टयम्** इत्यत्र **भाव-सूक्ष्मं** भावेषु जीवेषु सूक्ष्मं **चतुष्टयं** वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाख्यं रूपचतुष्टयं यस्य तं नारायणं ज्ञात्वा ।

**एकं हि परमात्मानं केचिदिच्छन्ति पण्डिताः ।**
**[३]एकाध्यात्मं तथाऽऽध्तात्ममपरेऽध्यानचिन्तकाः ॥ १३ ॥**

**एकं हि परमात्मानम्** इत्यत्र मूलरूपेण एकं परमात्मानं केचिदिच्छन्ति । तेऽपि पण्डिता एव । तथा **एकाध्यात्मम्** एकं बहु-

---

१. **'एकस्य पुरुषस्य ते'** इति कुं.पाठः ।

२. कुं. ३६१ अध्यायः । BORI पृ. १९८१; $K_{1.4}$; **'अचिन्त्यं चापि तम्'** इति कुं. पाठः ।

३. **'एकात्मानं तथाऽऽत्मानमपरेऽध्यात्मचिन्तकाः'** इति कुं. पाठः ।

जीवान्तर्गतत्वेऽप्येकं स्वगत(स्वमत)भेदवर्जितम् अध्यात्मम्। आत्मनः जीवानधिकृत्य वर्तमानं जीवान्तर्यामिणमित्यर्थः। परमात्मानं चेच्छन्ति। **आत्मानं** स्वकर्मजम्। तथाध्यात्मं देहमधिकृत्य वर्तमानं जीवं च इच्छन्ति। तेऽपि पण्डिता एव। **केचित्** एकान्तभक्ताः। मूलरूपे परमात्मन्येव निरताः। केचिच्च परापरतत्त्वचिन्तका इति भावः।

**न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा।**
**कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते ॥ १५ ॥**

**कर्मात्मा त्वपरो योऽसौ** इत्यत्र **अपरः** जीवात्मा।

**ससप्तदशकेनापि राशिना इज्यते च सः।**
**एवं बहुविधः प्रोक्तः पुरुषस्ते यथाक्रमम् ॥ १६ ॥**

**ससप्तदशकेनापि** इत्यत्र पञ्चभूतमनोबुध्याख्यसप्तसहितेन दशकेन इन्द्रियाणां दशकेन।

**यत्तत्कृत्स्नं लोकतन्त्रस्य धाम**
**वेद्यं परं बोधनीयं च वेदैः।**
**मन्ता मन्तव्यं प्राशिता प्राशनीयं**
**घ्राता घ्रेयं स्पर्शिता स्पर्शनीयम् ॥ १७ ॥**

**यत्तत् कृत्स्नम्** इत्यत्र यत् **लोकतन्त्रस्य** लोकव्यापारस्य **धाम** आधारभूतम्। **कृत्स्नं** जगद्व्याप्तं परमं वेदितव्यं पुरुषोत्तमाख्यतत्त्वम्। तस्माज्जीवतत्त्वं **बोधनीयं** बोधयितुं योग्यं भवति। जडतत्त्वं बोध्यं न भवति। एवमुत्तरत्रापि।

**द्रष्टा द्रष्टव्यं श्राविता श्रावणीयं ज्ञाता ज्ञेयं सगुणं निर्गुणं च ।**
**यद्वै प्रोक्तं तात सम्यक्प्रधानं नित्यं चैतच्छाश्वतं चाव्ययं च**
**॥ १८ ॥**

**सगुणं निर्गुणं च** इत्यत्र जीवतत्त्वं कदाचिन्निर्गुणं भवति । जडतत्त्वं तु सदा सगुणमेव ।

**देवाः सर्वे मुनयः साधु दान्तास्तं प्राग्वंशे यज्ञभागं भजन्ते ।**
**अहं ब्रह्मा आद्य ईशः प्रजानां तस्माज्जातस्त्वं च मत्तः प्रसूतः**
**॥ २० ॥**

**प्राग्वंशे** यज्ञशालायाम् ।

**सर्वैर्विभक्तः[१] पुरुषः स क्रीडति यथेच्छति ।**
**एवं स भगवान् देवः स्वेन ज्ञानेन बोधयत् ॥ २२ ॥**

**सर्वैर्विभक्त** इत्यत्र **सर्वैः** जीवैर्जडैश्च **विभक्तः** भिन्नः ॥

॥ इति षडशीत्युत्तरशततमोऽध्यायः ॥

॥ इति श्रीमन्महाभारते शतसहस्रसंहितायां वैयासिक्यां
शान्तिपर्वणि कविकुलतिलकभाविसमीरश्रीमद्वादिराजतीर्थपूज्यचरण-
विरचितलक्षालङ्काराख्यटीकायाम्
उञ्छवृत्त्युपाख्याने एकाधिकद्विशततमोऽध्यायः ॥

॥ समाप्तं च इदं शान्तिपर्व ॥

* * *

१. BORI पृ. १९८२; $T_1$,$G_{3.6}$; **'चतुर्विभक्तः'** इति कुं. पाठः ।

॥ श्रीः ॥

# अनुशासनपर्व

## ॥ अथ प्रथमोऽध्यायः ॥

**अथ तं स्नायुपाशेन बद्ध्वा सर्पममर्षितः ।**
**लुब्धकोऽर्जुनको नाम गौतम्याः समुपानयत् ॥ १९ ॥**

**अथ तं स्नायुपाशेन** इत्यत्र **स्नायुपाशेन** धमन्याख्यपाशेन ।

**विसृजैनमबुद्धिस्त्वमवध्योऽर्जुनक त्वया ।**
**को ह्यात्मानं गुरुं कुर्यात् प्राप्तव्ये सति चिन्तयन् ॥ २२ ॥**

**को ह्यात्मानं गुरुं कुर्यात्** इत्यत्र **गुरुं** हनेत्युपदेष्टारम् ।

**प्लवन्ते धर्मलघवो लोकेऽम्भसि यथा प्लवाः ।**
**मज्जन्ति पापगुरवः शस्त्रं स्कन्नमिवोदके ॥ २३ ॥**

**प्लवन्ते धर्मलघव** इत्यत्र धर्मकरणान्निमित्तात्पापेन लघवः ।

**नास्यामृतत्वं भवितैवं हतेऽस्मिन्**
**जीवत्यस्मिन् कोऽत्ययः स्यादयं ते ।**
**अस्योत्सङ्गे[१] प्राणमुक्तस्य जन्तो-[२]**
**र्मृत्योर्लोकं को न गच्छेदनन्तः ॥ २४ ॥**

---

१. 'अस्योत्सर्गे प्राणयुक्तस्य' इति कुं. पाठः ।
२. 'जन्तोः मृत्युं लोके को न गच्छेदनन्ते' इति कुं.पाठः ।

**अस्योत्सङ्ग** इत्यत्र **उत्सङ्गे** प्राणमुक्तस्य अस्य जन्तोः **अर्थे** आनयनार्थमिति यावत्। **अनन्तः** अमृतः। मृत्योर्लोकं को न गच्छेदित्यन्वयः।

**जानाम्यहं नेह गुणागुणज्ञाः**
**सर्वेर्तियुक्ता[1] गुरवो वै भवन्ति।**
**स्वर्गस्य ते सूपदेशा भवन्ति**
**तस्मात्क्षुद्रं सर्पमेनं हनिष्ये ॥ २८ ॥**

**सर्वेर्तियुक्ता गुरव** इत्यत्र **अर्तिः** आर्तिः तया युक्ताः। **गुरवः** हनेत्युपदेष्टारः।

**[2]हित्वा लाभं श्रेय एवाव्ययं स्यात्**
**सद्यो लाभः स्याद्बलिभ्यः प्रशस्तः।**
**कालाल्लाभो यस्तु सद्यो भवेत**
**श्रेयोलाभः कुत्सिते त्वीदृशी स्यात् ॥ २९ ॥**

**हित्वा लाभम्** इत्यत्र लाभं हित्वा स्थितस्य अबलस्य अव्ययं श्रेय एव स्यात्। न त्वैहिकम्।

**अस्मादेकाद्बहवो रक्षितव्या**
**नैको बहुभ्यो गौतमि रक्षितव्यः।**
**कृतागसं धर्महेतोस्त्यजन्ति**
**सरीसृपं पापमिमं त्यज त्वम् ॥ ३१ ॥**

---

१. BORI पृ. ७; $M_4$; **'सदायुक्ता'** इति कुं.पाठः।
२. BORI पृ. ७; $D_7$.; **'हत्वा लाभः श्रेय एवाव्ययः'** इति कुं.पाठः।

**नैको बहुभ्य** इत्यत्र **बहुभ्यः अर्थे** बहूनां हितार्थम् एकः दुष्टः न रक्षितव्यः। यदृच्छया कृतागसं पुनरद्रोग्धारं धर्मविदस्त्यजन्ति।

**कारणं यदि न स्याद्वै न कर्ता स्यास्त्वमप्युत।**
**विनाशे कारणं त्वं च तस्माद्वध्योऽसि मे मतः ॥ ४४ ॥**

**कारणं यदि न स्यात्** इत्यत्र भवान् **कारणं** स्वतन्त्रकारणं यदि न स्यात् तर्हि 'स्वतन्त्रः कर्ता' इति स्मृतेः त्वं कर्ता न स्याः। त्वं च **विनाशे कारणं** दण्डचक्रादिवत् सामान्यकारणम्।

**[१]असत्यविकृते कार्ये नेह पन्नग लिप्यसे।**
**तस्मान्नात्रैव हेतुः स्याद्वध्यः किं बहु भाषसे ॥ ४५ ॥**

**सर्प** उवाच–

**कार्याभावे क्रिया न स्यात् सत्यसत्यपि कारणे।**
**तस्मात् समेऽस्मिन्हेतौ मे वाच्यो हेतुर्विशेषतः ॥ ४६ ॥**

**असत्यविकृते कार्ये** इत्यत्र विविधैः कृतं न भवतीति **अविकृतम्**। एकेनैव कृतमित्यर्थः। तस्मिन्कार्ये **असति** त्वयि असति सति न लिप्यसे। **अत्र** बहुभिः कृते कार्ये **अत्र** ब्रह्मवधाख्यकार्ये हेतौ समे सति। **विशेषतः** प्रत्यक्षेण दंशनकर्तृत्वाख्यविशेषतः।

**यद्यहं कारणत्वेन मतो लुब्धक तत्त्वतः।**
**अन्यः प्रयोक्ता स्यादत्र किंनु जन्तुविनाशने ॥ ४७ ॥**

---

१. BORI पृ. १०; D5,7,9; **'असत्यपि कृते कार्ये नेह पन्नग लिप्यते'** इति कुं.पाठः।

**अन्यः प्रयोक्ता** इत्यत्र **जन्तुनाशने** तत्रतत्रत्य**जन्तूनां** प्राणिनां नाशने ।

**यथा हवींषि जुह्वाना मखे वै लुब्धकर्त्विजः ।**
**न फलं प्राप्नुवन्त्यत्र [१] फलयोगात् तथा ह्यहम् ॥ ४९ ॥**

**फलयोगात्** स्वर्गाख्यमहाफलयोगात् ।

**यथा वायुर्जलधरान् विकर्षति ततस्ततः ।**
**[२] तद्वज्जलदवच्चाहं कालस्याहं वशानुगः ॥ ५२ ॥**

**तद्वज्जलदवच्चाहम्** इत्यत्र **तद्वत्** वायुवत् कालः । अहं जलदवच्च ।

**॥ इति आनुशासनिके पर्वणि दानधर्मे प्रथमोऽध्यायः ॥**

## ॥ अथ पञ्चमोऽध्यायः ॥

**[३] तच्च राजन् मया सर्वं श्रुतं बुद्धिमतां वर ।**
**[४] आगतो हि परोऽस्माकं त्वत्तः कौरवनन्दन ॥ ३ ॥**

**आगतो हि पर** इत्यत्र **आगतः** अवगतः ।

**गङ्गाया उत्तरे कूले वप्रान्ते राजसत्तम ।**
**गोमत्या दक्षिणे कूले शक्रस्येवामरावतीम् ॥ १९ ॥**

**वप्रान्ते राजसत्तम** इत्यत्र **वप्रान्ते** वप्राख्यनदीतीरे ।

**॥ इति पञ्चमोऽध्यायः ॥**

---

१. BORI पृ. ११; $T_{2.3}$,G,M; **'फलयोगे'** इति कुं.पाठः ।

२. **'तद्वज्जलदवत्सर्प'** इति कुं.पाठः ।

३. कुं. ८ अध्यायः ।; ४. **'आगमो हि'** इति कुं. पाठः ।

## ।। अथ षष्ठोऽध्यायः ।।

**[१] विषये काशिराजस्य ग्रामान्निष्क्रम्य लुब्धकः ।**
**सविषं काण्डमादाय मृगयामास वै मृगम् ।। ३ ।।**

**सविषं काण्डमादाय** इत्यत्र **सविषं** विषार्द्रमुखं **काण्डं** शरं, [२] 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु' इति अमरः ।

**शुक भो पक्षिणां श्रेष्ठ दाक्षेयी [३] सुप्रजा त्वया ।**
**पृच्छे त्वां शुकमेनं त्वं कस्मान्न त्यजसि द्रुमम् ।। १३ ।।**

**दाक्षेयी सुप्रजा त्वया** इत्यत्र **दाक्षेयी** दक्षपुत्री त्वया सुप्रजा ।

**निष्पत्रमफलं शुष्कमरण्यं [४] चाप्यपत्रिणम् ।**
**किमर्थं सेवसे वृक्षं यदा महदिदं वनम् ।। १७ ।।**

**अपत्रिणम्** अन्यपक्षिरहितं, [५] 'पत्री शकुन्तिः शकुनिः शकुन्तः' इति हलः ।

**।। इति शुकेन्द्रसंवादे षष्ठोऽध्यायः ।।**

## ।। अथ सप्तमोऽध्यायः ।।

**[६] कृती सर्वत्र लभते प्रतिष्ठां भाग्यवीक्षितः ।**
**अकृती लभते भ्रष्टः क्षते क्षारावसेचनम् ।। १३ ।।**

---

१. कुं.११ अध्यायः । ; २. अ.को. तृ. नानार्थवर्ग डान्त ४३ श्लोकः
३. BORI पृ. ३७; $T_3, V_1, M_{1.4}, B_{3.5}$; **'सुप्रजास्त्वया'** इति कुं.पाठः ।
४. **'पतत्रिणम्'** इति कुं.पाठः ।; ५. ह.को. २-२३७; ६. कुं. ९ अध्यायः ।

**क्षते क्षारावसेचनम्** इत्यत्र यथा तथेति योग्यपदाध्याहारेण योजना ।

**न तथा मानुषे लोके फलमस्ति शुभाशुभे ।**
**यथा [१]त्रिदशलोके वै फलमल्पेन जायते ॥ २३ ॥**

**फलमल्पेन जायत** इत्यत्र **यथाल्पेनापि** इह कृतेन कर्मणा त्रिदशलोके **फलं** महत् फलं भवति तथा शुभाशुभे कृते सति मानुषे लोके फलं नास्ति । तस्मादिह बहुफलादर्शनात् प्रयत्नस्य वैफल्यं नाशङ्कनीयमिति भावः ।

**कृतः पुरुषकारस्तु दैवमेवानुवर्तते ।**
**[२]न दैवं वाऽकृतं किञ्चित् कस्यचिद्दातुमर्हति ॥ २४ ॥**

**न दैवं वाऽकृतं किञ्चित्** इत्यत्र **अकृतं** पुरुषकृतकर्मणा रहितम् ।

**यथा स्थानान्यनित्यानि दृश्यन्ते दैवतेष्वपि ।**
**कथं कर्म विना दैवं [३]स्थाप्यते स्थापयिष्यति ॥ २५ ॥**

**यथा स्थानान्यनित्यानि** इत्यत्र कर्म विना दैवं कथं **स्थाप्यते** स्वस्वस्थाने स्थाप्यते । कथमन्यं स्थापयिष्यति इति योजना ।

**न दैवतानि लोकेऽस्मिन् व्यापारं यान्ति कस्यचित् ।**
**व्यासङ्गं जनयन्त्युग्रमात्माभिभवशङ्कया ॥ २६ ॥**

**व्यापारं यान्ति कस्यचित्** इत्यत्र **व्यापारं** पुण्यजनने साहाय्या-न्यव्यापारम् ।

---

१. BORI पृ. ४२; S; **'त्रिदशलोके हि'** इति कुं.पाठः ।
२. **'न दैवमकृते'** इति कुं.पाठः ।
३. BORI पृ. ४२; $T_1$,$G_{2.4}$; **'स्थास्यति स्थापयिष्यतः'** इति कुं.पाठः ।

**कथं चास्य समुत्पत्तिर्यथा दैवं प्रवर्तते[१] ।**
**एवं त्रिदशलोकेऽपि प्राप्यते परमं सुखम् ॥ २८ ॥**

**कथं चास्य समुत्पत्तिर्यथा दैवं प्रवर्तत** इत्यत्र दैवमनुसृत्य यथा वर्तते जीवलोकः तथा **अस्य** अन्यजीवलोकस्य समुत्पत्तिः कथं स्यादिति (विग्रहो भवतीति) पूर्वेणान्वयः ।

**कृतं च विकृतं किञ्चित्सिद्ध्यते गुरुकर्मणा ।**
**सुकृतं दुष्कृतं कर्म अकृतार्थे[२] विपद्यते ॥ ३० ॥**

**कृतं च विकृतं किञ्चित्** इत्यत्र **कृतं** कर्मणः कृतार्थस्य किञ्चिद् विकृतमपि कृतं पुण्यं सिद्ध्यते । **सुकृतं** सुष्ठु कृतमपि कृतं कर्म अकृतार्थे **विपद्यते** नष्टं भवति ।

**अश्वत्थामा च रामश्च मुनिपुत्रौ धनुर्धरौ ।**
**न गच्छतः स्वर्गलोकं वेददृष्टेन कर्मणा ॥ ३५ ॥**

**अश्वत्थामा च रामश्च** इत्यत्र रामो नाम कश्चिन्मुनिपुत्रः न तु परशुरामः । तस्य निर्लेपत्वात् ।

**अज्ञानाद्ब्राह्मणं हत्वा स्पृष्टो बालवधेन च ।**
**वैशम्पायनविप्रर्षिः किं दैवेन न वारितः ॥ ३९ ॥**

**वैशम्पायनविप्रर्षिः** इत्यत्र वैशम्पायनाख्योऽप्यन्यः कश्चिद् ऋषिः ।

**॥ इति दैवपुरुषकारनिर्देशो नाम सप्तमोऽध्यायः ॥**

---

१. BORI पृ. ४२; **'कथं तस्य समुत्पत्तिर्यतो'** इति कुं.पाठः ।
२. BORI पृ. ४३; M,S; **'अकृतार्थं प्रपद्यते'** इति कुं.पाठः ।

## ॥ अथ अष्टमोऽध्यायः ॥

**[१] वाहनानि च यानानि योगात्मनि तपोधने ।**
**अग्नीनुपशयानस्य राज्ञः [२] पौरुषमुच्यते ॥ ९ ॥**

**राज्ञः पौरुषमुच्यत** इत्यत्र **पौरुषं** शौर्यं फलमुच्यते ।

**रसानां प्रतिसंहारे सौभाग्यमनुगच्छति ।**
**आमिषप्रतिसंहारे पशून् पुत्रांश्च विन्दति ॥ १० ॥**

**प्रतिसंहारे** प्रतिहारे दाने ।

**यन्मन्त्रे भवति वृथोपयुज्यमाने**
**यत्सोमे भवति वृथाऽभिषूयमाणे ।**
**यच्चाग्नौ भवति वृथाऽभिहूयमाने**
**तत्सर्वं भवति वृथाऽभिधीयमाने ॥ २९ ॥**

**तत्सर्वं भवति वृथाऽभिधीयमान** इत्यत्र पूर्वोक्तानां त्रयाणां मध्ये एकैकस्मिन्वृथाकृते एकैकमेव व्यर्थं भवति । 'धर्मः क्षरति कीर्तनात्' इति वचनात् सम्यक्कृत्वापि सदसि एकस्मिन्नपि धर्मे अभिधीयमाने सति सर्वं कर्म वृथा भवति इत्यर्थः ।

**॥ इति अष्टमोऽध्यायः ॥**

* * *

---

१. कुं.१० अध्यायः ।
२. BORI पृ. ४६; **'पौरुषमेव च'** इति कुं.पाठः ।

## ।। अथ एकादशोऽध्यायः ।।

[१]यथा राज्यं प्रपास्यामि कामक्रोधविवर्जितः ।
एतेन सत्यवाक्येन पादः कुम्भस्य पूर्यताम् ।। ३ ।।

**यथा राज्यं प्रपास्यामि कामक्रोधविवर्जितान् । एतेन सत्यवाक्येन पादः कुम्भस्य पूर्यताम्** इत्यत्र यथा राज्यं **प्रपास्यामि** दिने दिने पालयिष्यामि । 'पा रक्षणे' इति धातुः । **कुम्भस्य पादः** चतुर्भागादेको भागः । कुम्भे एकपादोनतया उदके पूरिते सति उर्वरितः एकः पादः मम वचने सत्यमस्ति चेत् स्वयमेव पूर्यतामित्यर्थः । यथा सत्यबलेनाग्निरनुष्णो भवति तद्वदिति भावः ।

**।। इति इन्द्राग्निशपथोक्तिर्नाम एकादशोऽध्यायः ।।**

## ।। अथ द्वादशोऽध्यायः ।।

[२]वैताने कर्मणि तते कुन्तीपुत्र यथा पुरा ।
[३]उक्तो भगवान् यज्ञार्थे तथा तत्रानृणोऽभवत्[४] ।। २ ।।

**उक्तो भगवान् यज्ञार्थे** इत्यत्र धीमतः कुन्तीपुत्रस्य **यज्ञार्थे** यज्ञाख्यप्रयोजने प्राप्ते सति तदा यद् भगवान् कृष्णः **उक्तः** त्वमेव कर्ता भोक्ता चेत्युक्तः । तेन कारणेन **तत्र** यज्ञे युधिष्ठिरः **अनृणोऽभवत्** देवर्षिपितॄणाम् ऋणान्मुक्तोऽभवदिति योजना ।

---

१. कुं. १४ अध्यायः । BORI पृ. ७९६; $T_1$,M; **'राज्ये विप्रान् प्रपश्यामि कामक्रोधविवर्जितान्'** इति कुं.पाठः ।

२. कुं. १५ अध्यायः ।

३. BORI पृ. ७९६; $D_{10}$,S; **'उक्तः स भगवान् यज्ञे'** इति कुं.पाठः ।

४. **'तत्राशृणोद्भवान्'** इति कुं. पाठः ।

राजसूययागकाले कृष्णं प्रति शल्यो वक्तीत्याह– **मद्रराज** इति ।

**मद्रराज उवाच –**

**कानि तीर्थानि भगवन्फलार्थाश्चेह के श्रमाः ।**
**क इज्यते कश्च यज्ञः को यूपः क्रमते च कः ॥ ३ ॥**

**फलार्थाश्चेह के श्रमा** इत्यत्र **श्रमाः** अश्रमाः ।

**[१]वर्ण्यो ग्रामे गोफले यश्च सोमे कश्चोङ्कारः कश्च वेदार्थमार्गः ।**
**पृष्टस्तन्मे ब्रूहि सर्वं महर्षे लोकज्येष्ठं कस्य विज्ञानमाहुः ॥५॥**

**वर्ण्यो ग्रामे गोफले यश्च सोम** इत्यत्र गोफले ग्रामे वर्ण्यः कः कः इति (वेदोदाहरणे) ।

॥ इति द्वादशोऽध्यायः ॥

## ॥ अथ त्रयोदशोऽध्यायः ॥

**[२]सोमं सद्भावाद्ये च जातं पिबन्ति**
**दीप्तिं कर्म ये विदानाश्चरन्ति ।**
**एकान्तमिष्टं चिन्तयन्तो दिविस्थाः**
**[३]न वै त्यागं प्राप्नुवन्ति प्रतिज्ञाः ॥ ५ ॥**

**न वै त्यागं प्राप्नुवन्ति प्रतिज्ञा** इत्यत्र प्रति प्रति जानन्ति इति प्रतिज्ञाः । ॥ इति त्रयोदशोऽध्यायः ॥

---

१. BORI पृ. ७९७; $M_{1.3.4}$; **'वर्णाश्रमे गोफले कश्च'** इति कुं.पाठः ।
२. कुं. १६ अध्यायः ।
३. BORI पृ. ७९८; M; **'ते वै स्थानं प्राप्नुवन्ति व्रतज्ञाः'** इति कुं.पाठः ।

## ।। अथ चतुर्दशोऽध्यायः ।।

[१] श्रद्धात्यागं निर्वृतिं चापि पूजां

सत्यं धर्मं यः कृतं चाभ्युपैति ।

[२] कामद्वेषौ त्यजतां सर्वतुल्यः

श्रद्धापूतः सर्वयज्ञेषु योग्यः ।। १ ।।

**कामद्वेषौ त्यजतां सर्वतुल्य** इत्यत्र **सर्वतुल्यः** सर्वात्मना तुल्यः सदृशः ।

[३] एकाक्षरं द्व्यक्षरमेकनाम

सदा यजन्ते नियताः प्रतीताः ।

दृष्ट्वा मनागर्चयित्वा स्म विप्राः

सतां मार्गं तं ध्रुवं सम्भजन्ते ।। ३ ।।

**एकाक्षरं द्व्यक्षरमेकनाम** इत्यत्र **एकाक्षरं** प्रणवं **द्व्यक्षरमेकनाम** हरिरिति नाम उक्तमिति योग्यपदाध्याहारः । हरिः ॐ इत्युक्त्वेत्यर्थः ।

[४] एको देवो ब्राह्मणानां बभूव

[५] चतुष्पादो वै सगुणो ब्रह्मशीर्षे ।

---

१. कुं. १७ अध्यायः ।

२. **'कामद्वेषौ त्यज्य सर्वेषु'** इति कुं.पाठः ।

३. **'एकाक्षरं द्व्यक्षरमेकमेव'** इति कुं.पाठः ।

४. BORI पृ. ७९९; $G_2$; **'एको वेदो'** इति कुं.पाठः ।

५. **'चतुष्पादस्त्रिगुणो ब्रह्मशीर्षः'** इति कुं.पाठः ।

**पादं पादं ब्राह्मणा वेद्यमाहु-[1]**

**स्त्रेताकाले चान्तिमे विद्धि शेषम्** ॥ ९ ॥

**चतुष्पादो वै सगुणो ब्रह्मशीर्ष** इत्यत्र **ब्रह्मशीर्षे** उपनिषदि **चतुष्पात्** अनिरुद्धप्रद्युम्नसङ्कर्षणवासुदेवाख्यमूर्तिचतुष्टयवान्। 'पादोऽ-[2]स्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इति श्रुतेः । **एको** नारायणः ब्राह्मणानां देवो बभूव ।

**पादं पादं ब्राह्मणा वेद्यमाहुः** इत्यत्र **त्रेताकाले** त्रेतामारभ्य कलियुगपर्यन्तकाले । **अन्तिमे** काले कलेरन्ते विद्यमाने कृतयुगे शेषं पादं विद्धि ।

**॥ इति दानधर्मे यज्ञप्रशंसनं नाम चतुर्दशोऽध्यायः ॥**

## ॥ अथ पञ्चदशोऽध्यायः ॥

**[3]मा जानन्ते ब्रह्मशीर्षं वरिष्ठं**

**विश्वे विश्वं ब्रह्मयोनिं ह्ययोनिम् ।**

**सर्वत्राहं शाश्वतः शाश्वतेशः**

**कृत्स्नो [4]वेदो दिग्भुजोऽनन्ततेजाः** ॥ ४ ॥

**शाश्वतेशः** नित्यपदार्थानाम् ईशः । **दिग्भुजः** अष्टदिक्षु भुजा यस्य स तथोक्तः । **॥ इति पञ्चदशोऽध्यायः ॥**

---

१. **'वेदमाहुस्त्रेताकाले तं च तं विद्धि शीर्षम्'** इति कुं.पाठः ।

२. ऋ.सं. १०/९०/३

३. कुं. १८ अध्यायः ।

४. **'वेदोऽग्निर्निर्गुणोऽनन्ततेजाः'** इति कुं. पाठः ।

## ।। अथ षोडशोऽध्यायः ।।

युधिष्ठिर उवाच –

गरुडः[१] पक्षिणां श्रेष्ठ इति पूर्वं पितामह ।
उक्तस्त्वया महाबाहो श्वेतवाहं प्रशंसता ।। १ ।।

श्वेतवाहं प्रशंसता इत्यत्र श्वेतवाहम् इन्द्रम् ।

अत्र कौतूहलम् इति श्रवणे जायते मतिः ।
कथं गरुत्मान् पक्षीणां श्रैष्ठ्यं प्राप परन्तप ।। २ ।।

त्वं हि शौरे महाबाहो सुपर्णः प्रोच्यसे पुरा ।। ६ ।।

गरुत्मान् पक्षीणाम् इत्यत्र पक्षीणां पक्षिणाम् । दीर्घः छान्दसः। 'अथो दिव्यः स सुपर्णो गरुत्मान्' इति श्रुतेः सुपर्णः प्रोच्यसे पुरेत्युक्तम् ।

।। इति आनुशासनिके पर्वणि दानधर्मे षोडशोऽध्यायः ।।

## ।। अथ सप्तदशोऽध्यायः ।।

तानि[२] त्वण्डानि तु तयोः कद्रूविनतयोर्द्वयोः ।
सोपस्वेदेषु पात्रेषु निदधुः परिचारिणः ।। १२ ।।

सोपस्वेदेषु पात्रेषु इत्यत्र सोपस्वेदेषु घृतद्रवसहितेषु पात्रेषु ।

निस्सरन्ति तदाऽण्डेभ्यः कद्रूपुत्राः भुजङ्गमाः ।
पञ्चवर्षशते काले दृष्टिश्वासामलौजसः[३] ।। १३ ।।

---

१. कुं.१९ अध्यायः । ; २. कुं.२० अध्यायः ।
३. 'दृष्ट्वाऽमोघबलौजसः' इति कुं.पाठः ।

**दृष्टिश्वासामलौजस** इत्यत्र दृष्टिश्वासाभ्याम् अमलम् **ओजः** सामर्थ्यं येषां ते तथोक्ताः। दृष्ट्या च आस्येन श्वासेन च विषस्राविण इत्यर्थः।

**सापश्यदण्डान्निष्क्रान्तं नतापुत्रं[1] मनस्विनम् ।**
**पूर्वकायोपसम्पन्नं वियुक्तमितरेण ह ॥ १६ ॥**

**नतापुत्रं मनस्विनम्** इत्यत्र **नता** विनता । घटान्तर्द्रष्टुं नम्रीभूता ।

**न त्वया काङ्क्षितः कालो यो[2] वा नेष्योऽभ्यगात्पुरा ।**
**आवां भवाव पुत्रौ ते श्वसनाद्बलवत्तरौ ॥ १९ ॥**

**यो वा नेष्योऽभ्यगात्पुरा** इत्यत्र **नेष्यः** उपरि नेतुं योग्यः । मया काङ्क्षितः यः कालः इतःपरमपि पञ्चशतवर्षात्मकः अयं कालः **पुरा** इतःपूर्वं **नाभ्यागात्** न गतः । अकाले त्वं मामद्राक्षीरिति भावः ।

**॥ इति गरुडोपाख्याने अरुणोत्पत्तिर्नाम सप्तदशोऽध्यायः ॥**

## ॥ अथ अष्टादशोऽध्यायः ॥

**[3]जिता दासी भवेमें त्वमहं चाप्यसितेक्षणे ।**
**नैकवर्णैकवर्णत्वे विनते रोचते च ते ॥ १४ ॥**

**नैकवर्णैकवर्णत्वे** इत्यत्र नैकवर्णत्वे एकवर्णत्वे च ।

**॥ इति अष्टादशोऽध्यायः ॥**

---

१. **'विनापत्रं मनस्विनम्'** इति कुं.पाठः ।
२. **'यावानेवात्यगात्पुरा'** इति कुं.पाठः ।
३. कुं.२१ अध्यायः ।

## ।। अथ एकोनविंशोऽध्यायः ।।

[१]ते यूयमश्वप्रवरमाविशध्वमतन्द्रिताः ।
[२]सर्वे त्वेकं बालधिगा वाला भूत्वाञ्जनप्रभाः ।। ५ ।।

**सर्वे त्वेकं बालधिगा** इत्यत्र **बालधौ** बाले तिष्ठन्ति गच्छन्तीति बालधिगाः ।

**निकृत्या न जयः श्रेयान्मातः सत्या गिरः शृणु ।**
**आयत्यां च तदात्वे च न च धर्मोऽत्र विद्यते ।। ६ ।।**

**आयत्यां च तदात्वे च** इत्यत्र **तदात्वे** तत्काले । **आयत्याम्** उत्तर-काले । [३]'तत्कालस्तु तदात्वं स्यादुत्तरः काल आयतिः' इत्यमरः ।

**सा त्वं धर्मादपेतं वै [४]कालस्यैव हितं वचः ।**
**निकृत्या विजयं मातर्मा स्म कार्षीः कथञ्चन ।। ७ ।।**

**कालस्यैव हितं वच** इत्यत्र **कालस्यैव** इदानीन्तनकालस्यैव हितं वचः ब्रूषे इति सम्बन्धः ।

**यद्यधर्मेण विजयं वयं काङ्क्षामहे कचित् ।**
**त्वया नाम निवार्याः स्म [५]मा कुरुध्वमिति ब्रुवः ।। ८ ।।**

---

१. कुं. २२ अध्यायः ।
२. 'सर्वश्वेतं वालधिषु' इति कुं.पाठः ।
३. अ.को. द्वि.का. क्षत्रवर्गः श्लो २९
४. 'कुलस्यैवाहितं तव' इति कुं.पाठः ।
५. 'मा कुरुध्वमिति ध्रुवम्' इति कुं.पाठः ।

**मा कुरुध्वमिति ब्रुव** इत्यत्र 'ब्रूञ् व्यक्तायां वाचि' इति धातोः हलन्त्यमिति ञकारलोपे क्विप्प्रत्यये च कृते भूरिति शब्दवत् अयं शब्दो ज्ञातव्यः ।

**शृणोमि विविधा वाचो हेतुमत्यः समीरिताः ।**
**वक्रगा[1] मन्निकृत्यर्थं तदहं वो न रोचये ॥ १२ ॥**

**वक्रगा मन्निकृत्यर्थम्** इत्यत्र **मन्निकृत्यर्थं** मम वञ्चनार्थं, मयि कापट्यारोपणार्थं वा ।

**श्वोऽहं प्रभातसमये जिता धर्मेण पुत्रकाः ।**
**शैलूषिणी भविष्यामि विनताया न संशयः ॥ १४ ॥**

**शैलूषिणी** दासी ।

॥ इति एकोनविंशोऽध्यायः ॥
॥ इति विनतापराजयो नाम विंशोऽध्यायः ॥

## ॥ अथ एकविंशोऽध्यायः ॥

**[2]बलेन च पुनस्तब्धो योऽहंमानकृता सदा ।**
**दासीं पन्नगराजस्य मातुरन्तर्गृहे सतीम् ॥ ६ ॥**

**बलेन च पुनस्तब्धो योऽहंमानकृता सदा** इत्यत्र **अहंमानम्** अहङ्कारं करोतीत्यहंमानकृत् । तेन बलेन पुनः पुनः स्तब्धो यस्त्वमिति सम्बन्धः । ॥ इत्यानुशासनिके एकविंशोऽध्यायः ॥

---

१. **'वक्रमार्गनिवृत्त्यर्थम्'** इति कुं. पाठः ।
२. कुं. २४ अध्यायः । **'बलेन दृप्तः सततमहंमानकृतः सदा'** इति कुं.पाठः ।

## ॥ अथ द्वाविंशोऽध्यायः ॥

[१] **पर्वतो वै समुद्रान्ते नभः स्तब्ध्वेव तिष्ठति ।**
**उरगो नाम दुष्प्रापः पुरा देवगणैरपि ॥ १६ ॥**

**उरगो नाम दुष्प्राप** इत्यत्र **उरग** इति पर्वतस्य नाम ।

[२] **गोरुतं तु सविस्तीर्णः पुष्पितद्रुमसानुमान् ।**
**तत्र पन्थाः कृतस्तात कुञ्जरेण बलीयसा ॥ १७ ॥**

**गोरुतं तु सविस्तीर्ण** इत्यत्र **गोरुतं** वृषभस्य ध्वनिः यावति प्रदेशे श्रूयते तावद्विस्तीर्णः, गोरुतमिति परिमाणविशेषो वा ।

[३] **गोरुतान्युदयस्तस्य नव सप्त च पुत्रक ।**
**गच्छताऽगच्छता चैव क्षपितः स महागिरिः ॥ १८ ॥**

**गोरुतान्युदयस्तस्य** इत्यत्र **तस्य** पर्वतस्य **उदयः** उच्छ्रयः **नव सप्त** च गोरुतानि, षोडशसङ्ख्याकानीत्यर्थः ।

[४] **यथा स नागो बृंहति पिपासुस्तं जलाशयम् ।**
**तदैनं कच्छपो रोषात् प्रतियाति महाबलः ॥ २३ ॥**

**यथा स नागो बृंहति** इत्यत्र **बृंहति** बृंहितं करोति । **जलाशयं** जलसमूहम् । **॥ इति दानधर्मे गजकच्छपवर्णनं नाम द्वाविंशोऽध्यायः ॥**

---

१. कुं. २५ अध्यायः ।
२. **'गोरुतानि स विस्तीर्णः'** इति कुं.पाठः ।
३. **'गोरुतान्युच्छ्रयस्तस्य'** इति कुं.पाठः ।
४. **'यदा स नागो व्रजति'** इति कुं.पाठः ।

**॥ इति शास्त्रामोक्षो नाम त्रयोविंशोऽध्यायः ॥**

**॥ इति पितामहवचनं नाम चतुर्विंशोऽध्यायः ॥**

**॥ इति सुपर्णस्य सुपर्णत्वं नाम पञ्चविंशोऽध्यायः ॥**

## ॥ अथ षड्विंशोऽध्यायः ॥

[१] **ततः शचीपतिर्वाक्यमुवाच प्रहसन्निव ।**
**जनिष्यति हृषीकेशः स्वयमेवैष पक्षिराट्** ॥ १९ ॥
**एष ते पाण्डवश्रेष्ठ गरुडोऽथ पतत्रिराट् ।**
**सुपर्णो वैनतेयश्च कीर्तितो भद्रमस्तु ते** ॥ २१ ॥

**सुपर्णो वैनतेयश्च कीर्तितो भद्रमस्तु ते** इत्यत्र **एष** हृषीकेश एव पक्षिराट् सुपर्णो वैनतेयश्च **कीर्तितः** वेदेषु कीर्तितः । तस्मात् हृषीकेशात् ते भद्रमस्तु इति योजना ।

**॥ इति सुपर्णवरलाभो नाम षड्विंशोऽध्यायः ॥**

**॥ समाप्तं सौपर्णम् ॥**

**॥ इति वानरसृगालसंवादो नाम सप्तविंशोऽध्यायः ॥**

## ॥ अथ अष्टविंशोऽध्यायः ॥

[२] **अथ दक्षिणमाश्रित्य बृसीं पश्चिमशीर्षिकाम् ।**
**कृतमन्यायतो दृष्ट्वा तं शूद्रमृषिरब्रवीत्** ॥ ३० ॥

**अथ दक्षिणमाश्रित्य बृसीं पश्चिमशीर्षिकाम्** इत्यत्र **बृसीं** पिण्डस्थापनाय सूक्ष्मकटवत् कृतां दर्भपङ्क्तिम् ।

---

१. कुं.२९ अध्यायः ।

२. कुं. ३१ अध्यायः । BORI पृ. ५९; S,$D_4$; '**अथ दक्षिणमावृत्य बृसीं चरमशैर्षिकीम्**' इति कुं.पाठः ।

**कुरुष्वैतां पूर्वशीर्षां भवांश्चोदङ्मुखः शुचिः ।**
**स च तत्कृतवाञ्शूद्रः सर्वं यद्दपिरब्रवीत्** ॥ ३१ ॥

**भवांश्चोदङ्मुख** इत्यत्र उदग्भावो दक्षिणामुखः उदङ्मुखः ।

**॥ इति उपदेशोपाख्याने अष्टाविंशोऽध्यायः ॥**

**॥ इति श्रिया सह रुग्मिणीसंवादो नाम एकोनत्रिंशोऽध्यायः ॥**

## ॥ अथ त्रिंशोऽध्यायः ॥

[१] **तस्य धर्मस्तु** इत्यत्र **धर्मः** यमः ।

**॥ इति वत्सनाभोपाख्यानं नाम त्रिंशोऽध्यायः ॥**

## ॥ अथ त्रयस्त्रिंशोऽध्यायः ॥

[२] सविस्तरं निरूपितसकलमोक्षदायकविष्णुधर्मो भीष्मः सम्प्रति व्यासस्याभिमतां 'त्रिभाषां यो न जानाति रीतीनां शतमेव च' इत्यादिनोक्तभारतत्रिभाषाभरितत्वस्फोरणाय केवलं शैवदर्शनभाषामाश्रित्योक्तां शिवसम्बन्धिनीं कथां स्वमरणकाले स्वमुखेनैव उच्चारयितुं लज्जावान् असुरजनमोहनार्थमप्यवतीर्णं कृष्णमेव शंसेत्याह– **सुरासुरगुरो देव विष्णो त्वं वक्तुमर्हसि** इत्यादिना ।

वक्ष्यमाणशिवसर्वोत्तमत्वादिकमप्रमाणिकमिति सूचयितुं सुरासुराणां गुरो इति सम्बुद्धिः । असुरजनमोहनार्थं बुद्धादिरूपेण विरुद्धकथाप्रस्तावाय त्वमेव चतुर इति सूचनाय असुराणां गुरो इति च सम्बुद्धिः ।

---

१. मुद्रितकोशेषु एतत्प्रतीकघटितश्लोकः नोपलभ्यते ।

२. कुं. ४५ अध्यायः ।

नन्वस्तु भारतस्य त्रिभाषाभरितत्वम् । वक्ष्यमाणशैवीकथा शैवदर्शन-मालम्ब्य प्रवृत्तेति कथं ज्ञेयमिति चेत् । इत्थम् 'आद्यन्तयोर्विरुद्धं यद्दर्शनं तदुदाहृतम्' इति वचनात् 'नास्ति नारायणसमं न भूतं न भविष्यति' इत्याद्यवचनस्य 'न हि मे केनचिद्देयो वरः पाण्डवनन्दन । इति सञ्चिन्त्य मनसा पुराणं विश्वमीश्वरम् । पुत्रार्थमाराधितवानहमात्मानमात्मना' इति । 'न हि विष्णुः प्रणमति कस्मैचिद्विबुधाय तु । ऋत आत्मान-मेवेति ततो रुद्रं नमाम्यहम् ।' रुद्रं प्रति ब्रह्मणो वाक्यम् । 'न स शक्यस्त्वया द्रष्टुं मयान्यैरपि सत्तम । सगुणो निर्गुणो विश्वो ज्ञानदृश्यो ह्यसौ स्मृतः । अहं ब्रह्मा आद्य ईशः प्रजानां तस्माज्जातस्त्वं च मत्तः प्रसूतः। मत्तो जगत् स्थावरं जङ्गमं च सर्वे वेदाः सरहस्याश्च पुत्र' इति । 'यत्तत् पद्ममभूत्सर्वं यतो ब्रह्मा व्यजायत । ब्रह्मणश्चापि सम्भूतः शिव इत्यवधार्यताम् । शिवात् स्कन्दः सम्बभूव एतत् सृष्टिचतुष्टयम् । अनाश्रित्योच्छ्रयो नास्ति मुख्यमाश्रयमाश्रयेत् । रुद्रं समाश्रिता देवाः रुद्रो ब्रह्माणमाश्रितः । बह्मा मामाश्रितो नित्यं नाहं कञ्चिदुपाश्रितः ।' इति च मध्यभागगतवचनानां 'सत्यं सत्यं पुनः सत्यम् उद्धृत्य भुज-मुच्यते । वेदशास्त्रात् परं नास्ति न दैवं केशवात् परम्' इति अन्तिम-वचनस्य च विरुद्धमिदं प्रमेयं दर्शनान्तरमाश्रित्यैवोक्तमिति प्रेक्षावद्भिरुत्प्रेक्षितुं शक्यत्वात् ।

अपि च 'न हि मे केनचिद्देयो वरः पाण्डवनन्दन । इति सञ्चिन्त्य मनसा पुराणं विश्वमीश्वरम् । पुत्रार्थमाराधितवानहमात्मानमात्मना । न हि विष्णुः प्रणमति कस्मैचिद्विबुधाय तु' इति अव्यवहितपूर्वकालीन-मोक्षधर्मवचने स्पष्टं कैलासयात्रोक्तापातकथाया दूषितत्वाच्च वक्ष्यमाण-कृष्णकैलासयात्राविस्तरः सर्वोऽपि अप्रामाणिक एवेति सिद्धम् ।

अतोऽपि शैवदर्शनभाषयैवेदमनुवर्णितमिति कथं न विमर्शवान् विमृशीत।

किञ्च 'कुमारश्चित् पितरं वन्दमानं प्रति ननाम रुद्रोपयन्तम्।'[१], 'स्तुहि श्रुतं गर्त्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम्।'[२], 'तव श्रिये मरुतो मर्जयन्त रुद्र यत्ते जनिम चारुचित्रम्। पदं यद्विष्णोरुपमं निधायि तेन पासि गुह्यं नाम गोनाम्'[३], 'अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः। विदे हि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावत्।'[४], 'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्।', 'रुद्रस्यैव धनुरार्तिः शिर उत्पिपेष।', 'यं कामये तं तमुग्रं कृणोमि। तं ब्रह्माणं तमृषिं तं सुमेधाम्। अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्त वा उ।', 'उच्छेषणभागो वै रुद्रः ताभिरेनं रुद्रोन्वायत्तः।', 'ईशानासः शवसाक्रन्तसूरयः।'[५] इत्यादि वेदवचनेषु नीचीकृतस्य रुद्रस्य उच्चता न वेदव्यासस्याभिमता। अतोऽपीदं प्रमेयं दर्शनभाषयोक्तम्। किञ्च 'अग्निर्वै देवानामवमो विष्णुः परमः तदन्तरे सर्वा अन्या देवताः'[६] इति श्रुतौ अग्निमवमीकृत्य इतरान् सर्वान् देवान् मध्यमीकृत्य विष्णोरेवोत्तमत्वप्रतिपादनात् निरवकाशैतच्छ्रुतिरविद्धस्मृतिशतस्यापि 'विरोधे त्वनपेक्षं स्यात्'[७] इति सूत्रमर्यादया अप्रामाण्यावश्यम्भावात्। सर्वथाऽप्रामाण्यस्य च 'इतिहासपुराणः पञ्चमो वेदानां वेद' इति छान्दोग्योपनिषदि पञ्चमवेदत्वेनोक्तभारते असम्भवाच्च दर्शनान्तरानु-

१. ऋ. २-३३-१२; २. ऋ. २-३३-११
३. ऋ. ५-३-३; ४. ऋ. ७-४०-५
५. ऋ १-१४१-३; ६. ऐतरेय आरण्यक
७. जैमिनीयसूत्रम् २-३-३

वाद एवेति ज्ञायते । यद्यप्यन्तर्यामिविषयतया योजयितुं शक्यते । तथापि भारते इयमेव मर्यादेति सकलमवदातम् ।

**॥ इत्यानुशासनिके त्रयस्त्रिंशोऽध्यायः ॥**

## ॥ अथ षट्त्रिंशोऽध्यायः ॥

**[१]दैवासुरेऽस्मिन् सङ्ग्रामे त्राता येन वयं विभो ।**
**एतद्विज्ञातुमिच्छामः कुतोऽसौ कश्च तत्त्वतः ॥ २५ ॥**

**त्राता येन वयं विभो** इत्यत्र वयं येन त्राताः स क इति प्रश्नाध्याहारेण योजना ।

**॥ इति गरुडर्षिसंवादो नाम षट्त्रिंशोऽध्यायः ॥**

## ॥ अथ अष्टत्रिंशोऽध्यायः ॥

**[२]चतुर्द्विगुणपीनाङ्गः शङ्खचक्रगदाधरः ।**
**प्रादुर्बभूव पुरुषः पीतवासाः सनातनः ।**
**मध्याह्नार्कप्रतीकाशस्तेजसा भासयन् दिशः ॥ ६ ॥**

**चतुर्द्विगुणपीनाङ्ग** इत्यत्र **चतुर्द्विगुणानि** अष्टसङ्ख्याकानि पीनाङ्गानि यस्य सः अष्टपुष्टाङ्ग इत्यर्थः ।

**संस्तुतः संविदं [३]कृत्वा जगतः श्रेयसे रतः ।**

---

१. कुं. ४० अध्यायः ।
२. कुं. ४१ अध्यायः । '**चतुर्द्विगुणपीनांसः**' इति कुं.पाठः ।
३. BORI पृ. ८२६; M; '**कृत्वा व्रजेति श्रेयसे रतः**' इति कुं.पाठः ।

**प्रागुदीचीं दिशं देवः प्रतस्थे पुरुषोत्तमः ।**
**दिशश्च विदिशश्चैव भासयन् स्वेन तेजसा ॥ ७ ॥**
**तमहं पुरुषं दिव्यं व्रजन्तममितौजसम् ।**
**अनुवव्राज वेगेन शनैर्गच्छन्तमव्ययम् ॥ ८ ॥**

**जगतः श्रेयसे रत** इत्यत्र श्रेयसे रतः अहम् अनुवव्राजेति उत्तरेणा-न्वयः ।

॥ इत्यानुशासनिके सप्तत्रिंशोऽध्यायः ॥

## ॥ अथ द्विचत्वारिंशोऽध्यायः ॥

**[1]सन्ध्योपासनमित्येव सर्वपापहरं न मे ।**
**[2]तस्य बुद्धिरियं किन्नु मोहस्तत्त्वमिदं भवेत् ॥ ७ ॥**

**तस्य बुद्धिरियं किन्नु मोहस्तत्त्वमिदं भवेत्** इत्यत्र मोहः **किन्नु** किम्प्रयोजनः यत्तत्त्वं इदमेव मे भवेत् इतीयं तस्य बुद्धिरभूत् इति योजना ।

॥ इत्यानुशासनिके द्विचत्वारिंशोऽध्यायः ॥
॥ इत्यानुशासनिके ऋषिमाहात्म्यं नाम चतुश्चत्वारिंशोऽध्यायः ॥

## ॥ अथ पञ्चचत्वारिंशोऽध्यायः ॥

**[3]द्वापरे तु परिक्षीणे नन्दिके समुपस्थिते ।**
**लोकवृत्तं च धर्मं च उच्यमानं निबोध मे ॥ १६ ॥**

---

१. कुं. ५१ अध्यायः । ; २. 'तस्य बुद्धिरियं किन्तु' इति कुं.पाठः ।
३. कुं. ५४ अध्यायः ।

**नन्दिके समुपस्थित** इत्यत्र **नन्दिक** इति कलियुगे प्रवर्तमान-धर्मैकपादस्य नाम ।

**अथ वर्णावरे [1] जाताश्चातुर्वर्ण्यायदेशिनः ।**
**दास्यन्ति हव्यकव्यानि तेषां दत्तं क्व गच्छति ॥ २३ ॥**

**अथ वर्णावरे जाताश्चातुर्वर्ण्यायदेशिन** इत्यत्र वर्णावरे ये जाताः तस्मै चातुर्वर्ण्याय इति योजना ।

**॥ इत्यानुशासनिके नारदमार्कण्डेयसंवादे (मन्त्रसंस्कारप्रयोगो नाम) पञ्चचत्वारिंशोऽध्यायः ॥**

## ॥ अथ अष्टचत्वारिंशोऽध्यायः ॥

**[2] श्रुता भार्याश्च पुत्राश्च विस्तरेण महामुने ।**
**[3] आश्रमस्थाश्च या नार्यो न दुष्यन्तीति ब्रूहि भो ॥ १ ॥**

**आश्रमस्थाश्च या नार्य** इत्यत्र **आश्रमस्थाः** एकस्य गार्हस्थ्ये प्राक् स्थिताः या नार्यः ।

**परदारा मुक्तदोषास्ता [4] नार्योऽश्रमसंस्थिताः ।**
**स्वयमीशाः स्वदेहानां काम्यास्तद्गतमानसाः ॥ ३ ॥**

**अश्रमसंस्थिता** इत्यत्र श्रमे कस्यचित् गार्हस्थ्ये संस्थिता न भवन्तीति **अश्रमसंस्थिताः** ।

---

१. **'जाताश्चातुर्वर्ण्योपदेशिनः'** इति कुं.पाठः ।; २. **कुं. ५७ अध्यायः ।**
३. **'आश्रमस्थाः कथं नार्य'** इति कुं.पाठः ।
४. **'नार्यो आश्रमसंस्थिता'** इति कुं.पाठः ।

।। इत्यानुशासनिके पर्वणि दानधर्मे नरचापल्यकथनं नाम
अष्टचत्वारिंशोऽध्यायः ।।
।। इत्यानुशासनिके पर्वणि दानधर्मे योषित्प्रभावकथनं नाम
एकोनपञ्चाशोऽध्यायः ।।

## ।। अथ पञ्चाशोऽध्यायः ।।

**[१]भार्यामपत्यसञ्जातां प्रसूतां पुत्रपौत्रिणीम् ।**
**पुत्रदारपरित्यागी न स प्राप्नोति निष्कृतिम् ।। १२ ।।**

**भार्यामपत्यसञ्जाताम्** इत्यत्र अपत्यं सञ्जातं यस्यां सा अपत्यसञ्जाता, ताम् । (अत्र 'वाहिताग्न्यादिषु' इति असञ्जातशब्दैकदेशस्य सञ्जातशब्दस्य आर्षत्वात् परनिपातः । 'भार्याम् अपत्यां सञ्जाताम्' इति पाठे (लक्षालङ्कारटीका) यथाश्रुतेपि साधुरेव ।)

**अन्यसङ्गां गतापत्यां शूद्रगां [२]परभागिनीम् ।**
**परीक्ष्य त्यजमानानां नराणां नास्ति पातकम् ।। १६ ।।**

**परभागिनीं** परभागवर्तीं व्यभिचारिणीमित्यर्थः ।

**नारद उवाच –**

**देवर्षिपितृतीर्थानि ब्राह्मं मध्येऽथ वैष्णवम् ।**
**नृणां तीर्थानि पञ्चाहुः पाणौ सन्निहितानि वै ।। २५ ।।**

**नृणां तीर्थानि पञ्चाहुः पाणौ सन्निहितानि वै** इत्यत्र पाण्यङ्गुल्यग्रादिषु देवर्षिपितृब्राह्ममानुषाख्यानि पञ्चतीर्थानि (पाणौ) सन्निहितानि ।

---

१. कुं.५९ अध्यायः ।; २. 'परगामिनीम्' इति कुं.पाठः ।

**सर्वस्त्रीषु प्रवृत्ताश्च साधुवेदविवर्जिताः ।**
**मानवाः काण्डपृष्ठाश्च वेदमन्त्रबहिष्कृताः ।**
**नियुक्ता हव्यकव्येषु तेषां दत्तं कथं भवेत्** ॥ ३१ ॥

**काण्डपृष्ठा** इत्यत्र **काण्डाः** बाणाः पृष्ठे येषां ते तथोक्ताः ।

**॥ इत्यानुशासनिके नारदमार्कण्डेयसंवादो नाम पञ्चाशोऽध्यायः ॥**
**॥ नारदमार्कण्डेयसंवादः समाप्तः ॥**

## ॥ अथ एकपञ्चाशोऽध्यायः ॥

[१] **इत्युक्त्वा ते जग्मुराशु चत्वारोऽमिततेजसः ।**
**पृथिवी काश्यपोऽग्निश्च प्रकृष्टायुश्च भार्गवः** ॥ १५ ॥

**प्रकृष्टायुः** मार्कण्डेयः ।

[२] **ये भागा रक्षसां प्राप्तास्त उक्ता भरतर्षभ ।**
**अत ऊर्ध्वं विसर्गस्य परीक्षां ब्राह्मणे शृणु** ॥ ११ ॥

**विसर्गस्य** दानस्य ।

**होतारो वृषलानां च वृषलाध्यापकास्तथा ।**
**तथा वृषलशिष्याश्च राजन्नार्हन्ति केतनम्** ॥ १६ ॥

**नार्हन्ति केतनम्** इत्यत्र **केतनं** 'कित् स्थाने निवासे रोगापनयने च' इति धातोः **केतनं** स्थानम् । 'पितुः स्थाने क्षणः क्रियताम्' इति श्राद्धे स्थानं दातुं (ग्रहीतुं) नार्हन्ति ।

---

१. कुं. ६० अध्यायः ।; २.कुं. ६१ अध्यायः ।

**अनुयोक्ता च यो विप्रो अनुयुक्तश्च भारत ।**
**नार्हतस्तावपि श्राद्धं ब्रह्मविक्रयिणौ हि तौ ॥ १७ ॥**

**अनुयोक्ता च यो विप्रो अनुयुक्तश्च भारत** इत्यत्र **अनुयोक्ता** दाने अध्ययनम् इवादाने नाध्ययनम् इति वदेति नियोगकर्ता ।

**अग्रणीर्यः कृतः पूर्वं वर्णाचारपरिग्रहः ।**[१]
**ब्राह्मणः सर्वविद्योऽपि राजन्नार्हति केतनम् ॥ १८ ॥**

**अग्रणीर्यः कृतः पूर्वम्** इत्यत्र यः पूर्वम् **अग्रणीः** सेनानायकः कृतः पश्चात् वर्णाचारपरिग्रहोऽभूत् इत्यर्थः ।

**स्त्रीपूर्वाः काण्डपृष्ठाश्च यावन्तो भरतर्षभ ।**
**अजपा**[२] **ब्राह्मणाश्चैव श्राद्धे नार्हन्ति केतनम् ॥ २२ ॥**

**काण्डपृष्ठाः** काण्डाः बाणाः पृष्ठे येषां ते तथोक्ताः । तूणीबद्धपृष्ठा इत्यर्थः । 'काण्डोऽस्त्रीदण्डबाणार्ववर्गावसरवारिषु'[३] इति अमरः ।

**क्रियमाणेऽपवर्गे च यो द्विजो भरतर्षभ ।**
**न व्याहरति यद्युक्तं तस्याधर्मो गवानृतम् ॥ ३३ ॥**

**क्रियमाणेऽपवर्गे च** इत्यत्र **अपवर्गे** श्राद्धावसाने । **तस्याधर्मो गवानृतम्** इत्यत्र गवि यदनृतं विप्राय गां दास्यामीति उक्त्वा पुनर्नेति वचनम्, गोः तृणादिकं दर्शयित्वा पुनरदानं गवानृतं तद्वदधर्मो भवतीति वा ।

---

१. BORI पृ. १८१; $M_{1,3}$;'**अग्रणीर्यः कृतः पूर्वं वर्णावरपरिग्रहः**' इति कुं. पाठः ।

२. BORI पृ. १८१; BORI; '**आजपा**' इति कुं.पाठः ।

३. अ.को. तृ.का. नानार्थवर्ग श्लो. ४३

**श्राद्धस्य ब्राह्मणः कालः प्राप्तं दधि घृतं तथा ।**
**सोमक्षयश्च मासश्च यदारण्यं युधिष्ठिर ॥ ३४ ॥**

**सोमक्षयश्च मासश्च** इत्यत्र **मासः** पौर्णमासी । **आरण्यं** तपोवनम् ।

[1]**श्राद्धापवर्गे विप्रस्य स्वधा वै स्वधिता भवेत् ।**
**क्षत्रियस्यापि यो ब्रूयात् प्रीयतां पितरस्त्विति ॥ ४० ॥**

**श्राद्धापवर्गे विप्रस्य स्वधा वै स्वधिता भवेत्** इत्यत्र ॐ स्वधा अस्तु, स्वधा स्वधा स्वधा सम्पद्यन्ताम् । स्वधा इति **स्वधिता** स्वधीता सम्यगधीता भवेत् ।

**विप्रस्य रशना मौञ्जी मौर्वी राजन्यगामिनी ।**
[2]**बाल्वजी चैव वैश्यस्य धर्म एष युधिष्ठिर ॥ ४९ ॥**

**बाल्वजी चैव वैश्यस्य** इत्यत्र **बाल्वजी** काशाख्यदर्भमयी । [3]'उलपा बल्बजाः प्रोक्ता इषीका काश उच्यते' इति हलः ।

[4]**अकल्कस्यापि विप्रस्य रौक्ष्यात्करकृतात्मनः ।**
**वटवो यस्य भिक्षन्ति तेभ्यो दत्तं महाफलम् ॥ ६ ॥**

**अकल्कस्यापि विप्रस्य** इत्यत्र **कल्कम्** औषधम् । तद्रहितस्य वैद्यानुपजीविन इत्यर्थः ।

---

१. BORI पृ. १८३; D3; **'श्राद्धापवर्गे विप्रस्य दातारो वोऽस्त्वितीरयेत्'** इति कुं.पाठः ।

२. **'बाल्वजी ह्येव'** इति कुं.पाठः ।; ३. ह.को. २-१९१

४. कुं. ६२ अध्यायः । **'अकल्कस्य विप्रस्य'** इति कुं. पाठः ।

**शिलाभिः शङ्कुभिर्वाऽपि श्वभ्रैर्वा भरतर्षभ ।**
**ये मार्गमनुरुन्धन्ति ते वै निरयगामिनः ॥ ३३ ॥**

**श्वभ्रैर्वा भरतर्षभ** इत्यत्र श्वभ्रैः भूगर्तैः । [१]'रन्ध्रं श्वभ्रं वपा शुषिः' इत्यमरः ।

**अप्राप्तदमकाश्चैव नासानां वेधकाश्च ये ।**
**बन्धकाश्च पशूनां ये ते वै निरयगामिनः ॥ ३५ ॥**

**अप्राप्तदमकाः** अप्राप्तकाले वृषभाणां वृषणपेषणकर्तारः ।

**॥ इत्यानुशासनिके एकपञ्चाशोऽध्यायः ॥**

## ॥ अथ चतुःपञ्चाशोऽध्यायः ॥

**[२]यस्तु सूर्येण निष्टप्तं गाङ्गेयं पिबते जलम् ।**
**गवां निर्हारनिर्मुक्ताद्यावकात्तद्विशिष्यते ॥ ४० ॥**

**गवां निर्हारनिर्मुक्ताद्यावकात्तद्विशिष्यत** इत्यत्र गवां **निर्हारा**न्नितरामाहारात् **निर्मुक्तात्** गोमयद्वारा निर्मुक्तात् **यावकात्** यवसम्बन्धिधान्यादपि तद्गङ्गाजलं विशिष्यते ।

सुताऽवनीध्रस्य हरस्य भार्या
दिवो भुवश्चापि कृतानुरूपा ।
भव्या पृथिव्यां भागिनी चापि राजन्
गङ्गा लोकानां पुण्यदा वै त्रयाणाम् ॥ ९५ ॥

---

१. अ.को. प्र.का. पातालभोगिवर्ग श्लो.२ ; २. कुं. ६५ अध्यायः ।

**सुताऽवनीध्रस्य** इत्यत्र **अवनीध्रस्य** हिमवतः सुता, हरस्य भार्या, शिरसा धर्तुं योग्या ।

**॥ इत्यानुशासनिके गङ्गामाहात्म्यं नाम चतुःपञ्चाशोऽध्यायः ॥**

## ॥ अथ पञ्चपञ्चाशोऽध्यायः ॥

**[1]अयोनिरभियोनिर्वा यः स्यात् स कुशली भवेत् ।**
**कुशलं तु कुतस्तस्य यस्येयं जननी पितः ॥ २० ॥**

**अयोनिरभियोनिर्वा यः स स्यात् स कुशली भवेत्** इत्यत्र **अयोनिः** द्रोणादिवत् योन्यामजातः। **अभियोनिः अभियुक्ता** प्रशस्ता योनिर्यस्य स तथोक्तः ।

**॥ इत्यानुशासनिके इन्द्रमतङ्गसंवादो नाम पञ्चपञ्चाशोऽध्यायः ॥**

## ॥ अथ षट्पञ्चाशोऽध्यायः ॥

**[2]ततस्तु द्विशते काले लभते काण्डपृष्ठताम् ।**
**काण्डपृष्ठश्चिरं कालं तत्रैव परिवर्तते ॥ ११ ॥**

**लभते काण्डपृष्ठाताम्** इत्यत्र काण्डं शरः पृष्ठे यस्य सः धनुर्बाणधरः इत्यर्थः । [3]'शस्त्राजीवे काण्डपृष्ठ' इत्यमरः ।

**॥ इत्यानुशासनिके षट्पञ्चाशोऽध्यायः ॥**

---

१. कुं.३ अध्यायः । BORI पृ. २१७; M,$T_{2.3}$,$G_{1.3.4}$; **'अन्त्ययोनिरयोनिर्वा कथं स कुशली भवेत्'** इति कुं.पाठः ।

२. कुं. ४ अध्यायः ।

३. अ.को. द्वि. क्षत्रवर्गः श्लो. ६७

## ।। अथ सप्तपञ्चाशोऽध्यायः ।।

**[१] किं मां तुदसि दुःखार्तं मृतं मारयसे च माम् ।**
**[२] किन्तु शोचामि यल्लभ्यं ब्राह्मण्यं न बुभूषसे ।। १४ ।।**

**किन्तु शोचामि यल्लभ्यं ब्राह्मण्यं न बुभूषस** इत्यत्र **लभ्यं** मया लब्धुमभीप्सितं ब्राह्मण्यं न बुभूषसे । न भावयितुमिच्छसि तेन शोचामि इति योजना ।

**।। इत्यानुशासनिके सप्तपञ्चाशोऽध्यायः ।।**

## ।। अथ अष्टपञ्चाशोऽध्यायः ।।

**[३] स वीतहव्यदायादैरागत्य पुरुषर्षभ ।**
**गङ्गायमुनयोर्मध्ये सङ्ग्रामे विनिपातितः ।। १२ ।।**

**स वीतहव्यदायादैः** इत्यत्र वीतहव्य इति हैहयस्यैव नामान्तरम् ।

**।। इत्यानुशासनिके अष्टपञ्चाशोऽध्यायः ।।**

## ।। अथ एकषष्टितमोऽध्यायः ।।

**[४] एतद्राज्ञः कृत्यतममभिषिक्तस्य भारत ।**
**[५] ब्राह्मणानामनुष्ठानमत्यन्तं सुखमिच्छताम् ।। २ ।।**

---

१. **कुं. ५ अध्यायः ।**
२. BORI पृ. २२२; $D_{4.6.10}$; **'त्वां तु शोचामि'** इति कुं.पाठः ।
३. **कुं. ८ अध्यायः ।** ; ४. **कुं. ६८ अध्यायः ।**
५. BORI पृ. २३६; **'ब्राह्मणानां रक्षणं च पूजा च सुखमिच्छतः'** कुं.पाठः ।

**ब्राह्मणानामनुष्ठानम्** इत्यत्र अनुकूलं स्थानम् **अनुष्ठानम्** ।

**॥ इत्यानुशासनिके ब्राह्मणप्रशंसा नाम एकषष्टितमोऽध्यायः ॥**

## ॥ अथ द्विषष्टितमोऽध्यायः ॥

**[1]एते भोगैरलङ्कारैरन्यैश्चैव किमिच्छकैः ।**
**सदा पूज्या नमस्कारै रक्ष्याश्च पितृवन्नृपैः ।**
**ततो राष्ट्रस्य शान्तिर्हि भूतानामिव वासवात् ॥ २ ॥**

**अन्यैश्चैव किमिच्छकैः** इत्यत्र **किमिच्छकैः** किं किम् इच्छन्ति तैः पूज्याः ।

**चित्रायुधांश्चाप्यजयन्नेते कृष्णाजिनध्वजाः ।**
**प्रक्षिप्याथ च कुम्भान्वै [2]पारगामिनमाहरन् ॥ १७ ॥**

**प्रक्षिप्याथ च कुम्भान्वै** इत्यत्र कुम्भान् प्रक्षिप्य पारगामिनः । तांस्तत्र मन्त्रतः स्तम्भयित्वा (तन्त्रयित्वा) आहरन् ।

**॥ इत्यानुशासनिके ब्राह्मणप्रशंसा नाम द्विषष्टितमोऽध्यायः ॥**

## ॥ अथ चतुःषष्टितमोऽध्यायः ॥

**[3]सोऽहमग्रप्रशिष्टानां रसानामवलेहकः ।**
**स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः ॥ ९ ॥**

---

१. **कुं. ६९ अध्यायः ।**
२. BORI पृ. २४१; $T_2$,G; **'पारगामिनमारभेत्'** इति कुं.पाठः ।
३. **कुं. ७१ अध्यायः । 'सोऽहं वागग्रमृष्टानाम्'** इति कुं.पाठः ।

**सोऽहमग्रप्रशिष्टानाम्** इत्यत्र **अग्रं** ब्राह्मणेषु दानं तेन **प्रशिष्टानाम्** उर्वरितानां च रसानामवलेहिता ।

**॥ इति शक्रशम्बरसंवादो नाम चतुःषष्टितमोऽध्यायः ॥**

**॥ इति अतिथिपरीक्षा नाम पञ्चषष्टितमोऽध्यायः ॥**

**॥ इति नारदपञ्चचूडासंवादो नाम षट्षष्टितमोऽध्यायः ॥**

## ॥ अथ सप्तषष्टितमोऽध्यायः ॥

**[१] शम्बरस्य च या माया माया या नमुचेरपि ।**
**[२] बलेः कुम्भीनसानां च सर्वास्ता योषितो विदुः ॥ ७ ॥**

**बलेः कुम्भीनसानां च** इत्यत्र **कुम्भीनसानां** सर्पाणाम् ।

**यदि जिह्वासहस्रं स्याज्जीवेच्च शरदां शतम् ।**
**अनन्यकर्मा [३] स्त्रीदोषान्न चोक्त्वा निधनं व्रजेत् ॥ ९ ॥**

**स्त्रीदोषान्न चोक्त्वा निधनं व्रजेत्** इत्यत्र **निधनम्** अवसानम् ।

**॥ इति सप्तषष्टितमोऽध्यायः ॥**

## ॥ अथ अष्टषष्टितमोऽध्यायः ॥

**[४] इदं तु पुरुषव्याघ्र पुरस्ताच्छ्रुतवानहम् ।**
**यथा रक्षा कृता पूर्वं विपुलेन गुरुस्त्रियाः ॥ १७ ॥**

---

१. कुं.७४ अध्यायः ।
२. BORI पृ. २५४; $M_2$; **'बलेः कुम्भीनसेश्चैव'** इति कुं.पाठः ।
३. BORI पृ. २५४; $M_2$; **'स्त्रीदोषाननुक्त्वा निधनम्'** इति कुं.पाठः ।
४. कुं. ७५ अध्यायः ।

**विपुलेन गुरुस्त्रिया** इत्यत्र **विपुलेन** विपुलनामकेन देवशर्मशिष्येण ।

**॥ इति विपुलोपाख्यानं नाम अष्टषष्टितमोऽध्यायः ॥**
**॥ इति देवशर्मविपुलोपाख्याने एकोनसप्ततितमोऽध्यायः ॥**
**॥ इति विपुलस्वदुष्कृतस्मरणं नाम सप्ततितमोऽध्यायः ॥**
**॥ विपुलोपाख्यानं समाप्तम् ॥**

## ॥ अथ एकसप्ततितमोऽध्यायः ॥

**[१]त्रिंशद्वर्षो दशवर्षां भार्यां विन्देत नग्निकाम् ।**
**एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात्** ॥ १६ ॥

**भार्यां विन्देत नग्निकाम्** इत्यत्र **नग्निकाम्** अनागतार्तवाम् [२]'नग्निकानागतार्तवा' इत्यमरः । [३]'अदृष्टरजसं नारीं नग्निकां तु विदुर्बुधाः' इति हलः ।

**देवदत्तां पतिर्भार्यां वेत्ति धर्मस्य शासनात् ।**
**स दैवीं मानुषीं वाचमनृतां पर्युदस्यति** ॥ २९ ॥

**देवदत्तां पतिर्भार्याम्** इत्यत्र **देवदत्तां** देवताचीटिकादिना प्राप्ताम् । **अनृतां पर्युदस्यति** इत्यत्र **अनृतां** नेत्यागताम्, वाचं पर्युदस्यति ।

**॥ इति दानधर्मे कन्याप्रदाने एकसप्ततितमोऽध्यायः ॥**

* * *

---

१. कुं. ७९ अध्यायः ।
२. अ.को. द्वि. मनुष्यवर्गः श्लो. ८
३. ह.को. २-४८४

## ।। अथ द्विसप्ततितमोऽध्यायः ।।

[१] **अन्यत्र जामया सार्धं प्रजानां पुत्र ईहते ।**
**दुहिताऽन्यत्र जातेन पुत्रेणापि विशिष्यते** ।। १४ ।।

**दुहिताऽन्यत्र जातेन** इत्यत्र **अन्यत्र जातेन** ज्येष्ठकनिष्ठादौ जातेन दास्यादौ वा ।

।। इति द्विसप्ततितमोऽध्यायः ।।
।। इति दायादविभागविधिर्नाम चतुःसप्ततितमोऽध्यायः ।।

## ।। अथ पञ्चसप्ततितमोऽध्यायः ।।

[२] **सर्वानुपायानथ सम्प्रधार्य**
**समुद्धरेत् स्वस्य कुलस्य तन्त्रम् ।**
[३] **ज्येष्ठो यवीयानथ वै द्विजेभ्यः**
**शुश्रूषया दानपरायणः स्यात्** ।। ६ ।।

**ज्येष्ठो यवीयानथ वै द्विजेभ्य** इत्यत्र **यवीयान्** जात्या कनिष्ठः । शूद्रीपुत्रः **ज्येष्ठः** वयसा ज्येष्ठोऽपि यवीयान् इत्यर्थः ।

[४] **तिस्रः क्षत्रियसम्बाधात् द्वयोरात्माऽस्य जायते ।**
**हीनवर्णास्तृतीयायां शूद्रा उग्रा इति स्मृतिः** ।। ७ ।।

**तिस्रः क्षत्रियसम्बाधात्** इत्यत्र क्षत्रियसम्बाधात् क्षत्रिया वैश्या

१. कुं.८० अध्यायः ।; २. कुं. ८३ अध्यायः ।
३. BORI पृ. २९०; $D_{n3}$; **'ज्येष्ठो यवीयानपि यो द्विजस्य'** इति कुं.पाठः ।
४. **'तिस्रः क्षत्रियसम्बन्धात्'** इति कुं.पाठः ।

शूद्रा वेति तिस्रो भार्या भवन्ति । तत्र **द्वयोः** क्षत्रियवैश्ययोः अस्य क्षत्रियस्य आत्मैव **जायते** स्वयमेव जायते । अन्यत् स्पष्टम् ।

**द्वे चापि भार्ये वैश्यस्य द्वयोरात्माऽस्य जायते ।**
**शूद्रा शूद्रस्य चाप्येका शूद्रमेव प्रजायते ॥ ८ ॥**

**द्वे चापि भार्ये वैश्यस्य** इत्यत्र **द्वयोः** वैश्याशूद्रयोर्मध्ये वैश्याया-मात्मैव जायत इति योजना ।

**अयाज्यं क्षत्रियो व्रात्यं सूतं स्तोत्रक्रियापरम् ।**
**[१]वैश्यो वैदेहिकं चापि मौद्गल्यमपवर्जितम् ॥ १० ॥**

**वैश्यो वैदेहिकं चापि मौद्गल्यमपवर्जितम्** इत्यत्र **मौद्गल्यं** मुद्गलाख्ययवनजातीयम् । 'मुगिला' इत्यपभ्रंशभाषा ।

**शूद्रादयोगवश्चापि वैश्यायां ग्राम्यधर्मिणः ।**
**ब्राह्मणैरप्रतिग्राह्यस्तक्षा स्वधनजीवनः ॥ १३ ॥**

**शूद्रादयोगवश्चापि** इत्यत्र **अयोगवो** हीनजातिविशेषः ।

**॥ इति वर्णसङ्करवर्णनं नाम पञ्चसप्ततितमोऽध्यायः ॥**

## ॥ अथ षट्सप्ततितमोऽध्यायः ॥

**युधिष्ठिर उवाच–**

**[२]रेतजं विद्म वै पुत्रं क्षेत्रजस्यागमः कथम् ।**
**अध्यूढं विद्म वै [३]पुत्रं भित्त्वा च समयं कथम् ॥ ३३ ॥**

---

१. BORI पृ. २९०; $D_8$,$G_2$; '**वैश्यो वैदेहकम्**' इति कुं.पाठः ।
२. कुं. ८४ अध्यायः ।
३. BORI पृ. २९९; $D_{4.10}$; '**पुत्रं भित्वा तु समयम्**' इति कुं.पाठः ।

**क्षेत्रजस्यागमः कथम् । अध्यूढं विद्म वै पुत्रं भित्त्वा च समयं कथम्** इत्यत्र क्षेत्रजस्यागमः कथं, यः **समयं** स्वपितुः सङ्केतं भित्त्वा अधिकेन केनचित् अङ्गीकृतः पुत्रः तं च कथं विद्म इति योजना ।

**[१]अन्यस्तु क्षेत्रजः पुत्रो लक्ष्यते भरतर्षभ ।**
**न ह्यात्मा शक्यते हन्तुं दृष्टान्तोपगतो ह्यसौ ॥ ३६ ॥**

**अन्यस्तु क्षेत्रज** इत्यत्र भर्त्राज्ञां विना क्षेत्रजः अन्यः ।

**॥ इति पुत्रभेदकथनं नाम षट्सप्ततितमोऽध्यायः ॥**

## ॥ अथ सप्तसप्ततितमोऽध्यायः ॥

**[२]नदीशैवलदिग्धाङ्गं हरिश्मश्रुजटाधरम् ।**
**[३]लग्नशङ्खनखैर्गात्रे क्रोडैश्चित्रैरिवार्पितम् ॥ १९ ॥**

**लग्नशङ्खनखैः** इत्यत्र **शङ्खनखैः** क्षुद्रशङ्खप्राणिभिः। 'क्षुद्रशङ्खाः शङ्खनखाः शम्बूका जलशुक्तयः'[४] इत्यमरः ।

**॥ इत्यानुशासनिके च्यवनजालग्रहणं नाम सप्तसप्ततितमोऽध्यायः ॥**

**॥इत्यानुशासनिके च्यवननहुषसंवादो नाम अष्टसप्ततितमोऽध्यायः॥**

## ॥ अथ एकोनाशीतितमोऽध्यायः ॥

**[५]प्रगृह्य राजा भृङ्गारं पाद्यमस्मै न्यवेदयत् ।**
**कारयामास सर्वाश्च क्रियास्तस्य महात्मनः ॥ १४ ॥**

---

१. BORI पृ. २९९; $D_{10}$; **'अन्यत्र क्षेत्रजः'** इति कुं.पाठः ।
२. कुं. ८५ अध्यायः ।
३. BORI पृ. ३०३; $G_{1.3.4}$,$B_2$,; **'लग्नैः शङ्खनखैर्गात्रे'** इति कुं.पाठः ।
४. अ.को. प्र. वारिवर्गः श्लो. २३ ; ५. कुं. ८७ अध्यायः ।

**प्रगृह्य राजा भृङ्गारम्** इत्यत्र भृङ्गारं पूर्णकुम्भम्। [1]'भद्रकुम्भः पूर्ण-कुम्भो भृङ्गारः' इत्यमरः ।

**॥ इत्यानुशासनिके पर्वणि एकोनाशीतितमोऽध्यायः ॥**

## ॥ अथ अशीतितमोऽध्यायः ॥

**[2]तौ तथेति प्रतिश्रुत्य क्षुधितौ श्रमकर्शितौ ।**
**[3]शृतपाकेन तैलेन महार्हेणोपतस्थतुः ॥ ९ ॥**

**शृतपाकेन तैलेन** इत्यत्र शृतत्वात् पाको यस्य तेन तैलेन ।

**॥ इत्यानुशासनिके पर्वणि अशीतितमोऽध्यायः ॥**

## ॥ अथ एकाशीतितमोऽध्यायः ॥

**[4]राजन् सम्यग्जितानीह [5]पञ्च पञ्चसु यत्त्वया ।**
**मनःषष्ठानीन्द्रियाणि कृच्छ्रान्मुक्तोऽसि तेन वै ॥ ३४ ॥**

**राजन् सम्यग्जितानीह पञ्च पञ्चसु यत्त्वया** इत्यत्र **पञ्च पञ्चसु** रूपादिविषयेषु ।

**॥ इत्यानुशासनिके पर्वणि एकाशीतितमोऽध्यायः ॥**
**॥ इत्यानुशासनिके पर्वणि बहुदानकथनं नाम चतुरशीतितमोऽध्यायः ॥**
**॥ इत्यानुशासनिके पर्वणि आरामतटाकवर्णनं नाम पञ्चाशीतितमोऽध्यायः ॥**

---

१. अ.को. द्वि. क्षत्रवर्गः श्लो. ३२; २. कुं. ८८ अध्यायः ।
३. **'शतपाकेन तैलेन'** इति कुं.पाठः ।; ४. कुं. ८९ अध्यायः ।
५. BORI पृ. ३२३; **'पञ्च पञ्च स्वयं त्वया'** इति कुं.पाठः ।

## ।। अथ षडशीतितमोऽध्यायः ।।

[१] **को ह्यक्षयप्रसादानां सुहृदामल्पतोषिणाम् ।**
**वृत्तिमर्हत्युपक्षेप्तुं त्वदन्यः कुरुसत्तम ।। २८ ।।**

**वृत्तिमर्हत्युपक्षेप्तुम्** इत्यत्र उपपन्नतया **क्षेप्तुं** निक्षेप्तुम् । तेष्वेवास्थापयितुम् ।

**।। इत्यानुशासनिके पर्वणि दानकथनं नाम षडशीतितमोऽध्यायः ।।**

## ।। अथ सप्ताशीतितमोऽध्यायः ।।

[२] **याच्यमाहुरनीशस्य [३] अभिभारं च भारत ।**
**उद्वेजयन्ति याचन्ति यदा भूतानि दस्युवत् ।। ४ ।।**

**अभिभारं च भारत** इत्यत्र द्रव्यार्थमभितः **भारं** भारणं पलायनम् ।

**।। इत्यानुशासनिके पर्वणि पात्रापात्रपरीक्षणं नाम सप्ताशीतितमोऽध्यायः ।।**

## ।। अथ अष्टाशीतितमोऽध्यायः ।।

[४] **यत्रैतेन करिष्यन्ति कृतं तेन [५] भविष्यति ।**
**यज्ञान्साधय साधुभ्यः स्वाद्वन्नान् दक्षिणावतः ।। ९ ।।**

**यत्रैतेन करिष्यन्ति** इत्यत्र **एतेन** दानेन यज्ञेन च **करिष्यन्ति** ब्राह्मणतर्पणं यत्र करिष्यन्ति तेन सर्वं **कृतं** सम्पूर्णं भवति ।

---

१. कुं. ९४ अध्यायः ।; २. कुं. ९५ अध्यायः ।
३. BORI पृ. ३४०; $D_{10}$; **'अतिहारं च भारत'** इति कुं.पाठः ।
४. कुं.९६ अध्यायः । BORI पृ. ३४३; $D_{10}$; **'यत्ते ते न'** इति कुं.पाठः ।
५. **'ते न'** इति कुं. पाठः ।

**इष्टे[1] दत्ते च मन्येथा आत्मानं दानकर्मणाम्[2] ।**
**पूजयेथा यायजूकांस्तवाप्यंशो भवेद्यथा ॥ १० ॥**

**इष्टे दत्ते च मन्येथा आत्मानं दानकर्मणाम्** इत्यत्र दानानां **कर्मणां** यज्ञानां च **इष्टे** यागे विषये **दत्ते** दाने विषये च **आत्मानं** परमात्मानं मन्येथाः ।

**उपच्छन्नं प्रकाशं वा वृत्त्या तान् प्रतिपालय ।**
**राजसूयाश्वमेधाभ्यां श्रेयस्तत्क्षत्रियान् प्रति ॥ १७ ॥**

**राजसूयाश्वमेधाभ्याम्** इत्यत्र राजसूयाश्वमेधाभ्यां यच्छ्रेयः तत् क्षत्रियान् प्रति विहितम् ।

**॥ इति अष्टाशीतितमोऽध्यायः ॥**

## ॥ अथ एकोननवतितमोऽध्यायः ॥

**नामास्याः[3] प्रियदत्तेति गुह्यं देव्याः सनातनम् ।**
**दानं वाऽप्यथवाऽदानं नामास्याः प्रथमप्रियम् ॥ १२ ॥**

**नामास्याः प्रियदत्तेति** इत्यत्र दत्ता सती प्रिया **प्रियदत्ता** इदं गुह्यं नाम **अस्याः** भूमेः । दानम् आदानं च अस्याः **प्रियं नाम** प्रियं खलु ।

**॥ इत्यानुशासनिके पर्वणि एकोननवतितमोऽध्यायः ॥**

---

१. **'इष्टं दत्तं च मन्येथा'** इति कुं. पाठः ।
२. **'दानकर्मणा'** इति कुं.पाठः ।
३. कुं. ९७ अध्यायः ।

## ।। अथ नवतितमोऽध्यायः ।।

[१] **अन्नदस्यान्नवृक्षाश्च सर्वकामफलप्रदाः ।**
**भवन्ति चेह चामुत्र नृपते नात्र संशयः** ।। १९ ।।

**अन्नदस्यान्नवृक्षाश्च** इत्यत्र अन्नदायककल्पवृक्षाः **अन्नवृक्षाः** ।

**आवाहाश्च विवाहाश्च यज्ञाश्चान्नमृते तथा ।**
**निवर्तन्ते नरश्रेष्ठ ब्रह्म चात्र प्रलीयते** ।। ३३ ।।

**आवाहाश्च विवाहाश्च** इत्यत्र **आवाहाः** देवताप्रतिष्ठाः ।

**।। इत्यानुशासनिके अन्नदानप्रशंसा नाम नवतितमोऽध्यायः ।।**

## ।। अथ एकनवतितमोऽध्यायः ।।

[२] **पूपान् पुनर्वसौ दत्त्वा तथैवान्नानि शोभने ।**
**यशस्वी रूपसम्पन्नो बह्वन्नो जायते कुले** ।। ९ ।।

**पूपान् पुनर्वसौ** इत्यत्र **पूपान्** अपूपान् ।

**घृतक्षीरसमायुक्तं [३] विधिवत्षष्टिकोदनम् ।**
**उत्तराविषये दत्त्वा स्वर्गलोके महीयते** ।। १४ ।।

**विधिवत्षष्टिकोदनम्** इत्यत्र **षष्टिकं** यवसम्बन्धि अन्नं, [४] 'यव्यं यवक्यं षष्टिक्यं यवादिभवनं हि यत्' इत्यमरः ।

---

१. कुं.९८ अध्यायः । BORI पृ. ३५८;'**अन्नदस्यान्नदा वृक्षाः**' इति कुं.पाठः ।
२. कुं. ९९ अध्यायः ।
३. BORI पृ.३६३; D6.7.9; '**विधिवत्षष्टिकौदनम्**' इति कुं.पाठः ।
४. अ.को. द्वि. वैश्यवर्गः श्लो. ७

॥ इत्यानुशासनिके सनद्धर्मकथने नक्षत्रयोगो नाम एकनवतितमोऽध्यायः ॥

॥ इत्यानुशासनिके तिलभूगोप्रदानवर्णनं नाम त्रिनवतितमोऽध्यायः ॥

॥ इत्यानुशासनिके जलदानप्रशंसनं नाम पञ्चनवतितमोऽध्यायः ॥

## ॥ अथ सप्तनवतितमोऽध्यायः ॥

**भीष्म उवाच–**

**[१] तुल्यनामानि देयानि त्रीणि तुल्यफलानि च ।**
**सर्वकामफलानीह गावः पृथ्वी सरस्वती ॥ ४ ॥**

**तुल्यनामानि देयानि त्रीणि** इत्यत्र गवां पृथ्व्याः सरस्वत्याः विद्यादानस्य च गोशब्दवाच्यत्वात् तुल्यनामानीत्युक्तम् ।

**प्रचोदनं देवकृतं गवां कर्मसु वर्तताम् ।**
**[२] पूर्वमेकाक्षरं नान्यदभिधेयं कथञ्चन ॥ ९ ॥**

**पूर्वमेकाक्षरं नान्यदभिधेयं कथञ्चन** इत्यत्र पूर्वं बा, या, गोइत्याद्यपभ्रंशभाषया **एकाक्षरं** प्रियवाक्यमेव गवामाह्वाने वक्तव्यम् । **नान्यत्** अन्यत् निष्ठुरं न वक्तव्यम् ।

॥ इत्यानुशासनिके गोदानलक्षणं नाम सप्तनवतितमोऽध्यायः ॥

## ॥ अथ अष्टनवतितमोऽध्यायः ॥

**[३] निविशन्त्यां कुरूद्वह द्वारवत्यामिति श्रुतिः ।**
**अदृश्यत महाकूपस्तृणवीरुत्समावृतः ॥ २ ॥**

---

१. कुं. १०४ अध्यायः ।

२. BORI पृ. ३८१; $B_3$,; **'पूर्वमेवाक्षरं चान्यदभिधेयं ततः परम्'** कुं.पाठः ।

३. कुं. १०५ अध्यायः । BORI पृ. ३८३; $T_3$; **'निविशन्त्यां पुरा पार्थ'** इति कुं.पाठः ।

**निविशन्त्यां कुरूद्वह द्वारवत्याम्** इत्यत्र **निविशन्त्यां** समुद्रं प्रविश्य स्थितायां द्वारवत्याम्।

**॥ इत्यानुशासनिके नृगोपाख्यानं नाम अष्टनवतितमोऽध्यायः ॥**

## ॥ अथ एकोनशततमोऽध्यायः ॥

**न[१] त्वेतासां दानमात्रं प्रशस्तं**
**पात्रं कालो गोविशेषो विधिश्च।**
**ज्ञात्वा देयं विप्र गवान्तरं[२] च**
**दुःखं ज्ञातुं पावकादित्यभूतम्** ॥ ३० ॥

**ज्ञात्वा देयं विप्र गवान्तरं च** इत्यत्र पावकादित्यभूतं दुःखं हातुं **गवान्तरं** गोशालावकाशं च ज्ञात्वा देयम् । आतपनिर्हरणाय गोराच्छादनवस्त्रं वा ।

**तिस्रो रात्र्यस्त्वद्भिरुपोष्य भूमौ**
**तृप्ता गावस्तर्पितेभ्यः प्रदेयाः।**
**वत्सैः प्रीताः सुप्रजाः सोपचारा-**
**स्त्र्यहं दत्त्वा गोरसैर्वर्तितव्यम्** ॥ ३३ ॥

**तिस्रो रात्र्यस्त्वद्भिरुपोष्य भूमौ** इत्यत्र अद्भिरित्युपलक्षणम् । अद्भिस्तृणैश्च भरितायां भूमौ **उपोष्य** वासं कृत्वा तृप्ता गाव इति सम्बन्धः।

---

१. **कुं.१०६ अध्यायः।**
२. **'गवान्तरं हि'** इति कुं. पाठः।

**तथाऽनड्वाहं ब्राह्मणेभ्यः प्रदाय**
**दान्तं धुर्यं बलवन्तं युवानम् ।**
**[१]कुलाजीवं वीर्यवन्तं बृहन्तं**
**भुङ्क्ते लोकान् सम्मितान् धेनुदस्य ॥ ३५ ॥**

**कुलाजीवम्** इत्यत्र कुलेन **आ** सम्यक् जीवतीति **कुलाजीवः** तं, जीवकुले जातमित्यर्थः ।

**कृच्छ्रोत्सृष्टाः पोषणाभ्यागताश्च**
**द्वारैरेतैर्गोविशेषाः प्रशस्ताः ।**
**[२]अन्तर्जाताः सुक्रियाज्ञानलब्धाः**
**प्राणक्रीताः निर्जिताश्चैकजाश्च ॥ ३२ ॥**

**अन्तर्जाताः सुक्रियाज्ञानलब्धाः प्राणक्रीताः निर्जिताश्चैकजाश्च** इत्यत्र **अन्तर्जाताः** स्वगृह एव जाताः । **सुक्रिया** शोभना युद्धक्रिया तस्याः ज्ञानेन लब्धाः । परराष्ट्रात् सङ्गृहीता इत्यर्थः । **प्राणक्रीताः** प्राणः क्षीरबलं तदनुसारेण क्रीताः **निर्जिताः** नितरां जिताः स्ववशं प्राप्ताः **एकजाः** एकः वत्सः जातो याभ्यस्ताः एकजाश्च **गावः** गाः दद्यादिति सम्बन्धः ।

**अलाभे यो गवां दद्यात् घृतधेनुं यतव्रतः ।**
**तस्यैता घृतवाहिन्यः क्षरन्ते वत्सला इव ॥ ३९ ॥**

---

१. BORI पृ. ३९१; $M_{1.3}$, $T_2$, $G_2$, $D_{1.3}$; **'कुलानुजीव्यम्'** इति कुं.पाठः ।
२. BORI पृ. ३९१; $D_{6.9}$, BORI, $D_3$; **'अन्तर्जाताः सुक्रयज्ञानलब्धाः प्राणक्रीताः सोदकाः सोद्वहाश्च'** इति कुं.पाठः ।

**घृतधेनुं यतव्रत** इत्यत्र धेन्वाकारपात्रविशेषे घृतं परिपूर्य दानं घृतधेनुदानम् । एवं जलधेन्वादावपि । (धेन्वाकारपात्रविशेषे कृतं घृतदानं घृतधेनुदानम् । पाठान्तरम् ।)

**।। इति दानधर्मकथने यमनचिकेतसंवादो नाम शततमोऽध्यायः ।।**

## ।। अथ एकोत्तरशततमोऽध्यायः ।।

**[१] अन्तर्जाताः सक्रयज्ञानलब्धाः**
**प्राणैः क्रीतास्तेजसा यौतकाश्च ।**
**कृच्छ्रोत्सृष्टाः पोषणाभ्यागताश्च**
**द्वारैरेतैर्गोविशेषाः प्रशस्ताः ।। ४१ ।।**

**प्राणैः क्रीतास्तेजसा यौतकाश्च** इत्यत्र **यौतकाः** नित्यं देयाः । 'यौतकादि तु यद्देयं सुदायो हरणं च तत्'[२] इत्यमरः ।

**बलान्विताः शीलवयोपपन्नाः**
**सर्वाः प्रशंसन्ति सुगन्धवत्यः ।**
**यथा हि गङ्गा सरितां वरिष्ठा**
**तथाऽर्जुनीनां कपिला वरिष्ठा ।। ४२ ।।**

**तथाऽर्जुनीनां कपिला वरिष्ठा** इत्यत्र **अर्जुनीनाम्** उत्तमानां गवां मध्ये । [३]'माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी । अर्जुन्यघ्न्या रोहिणी स्यादुत्तमा' इत्यमरः ।

---

१. कुं.१०८ अध्यायः । ; २. अ.को. द्वि. क्षत्रवर्ग श्लो २८
३. अ.को. द्वि. वैश्यवर्गः श्लो ६६

॥ इति दानधर्मे ब्रह्मेन्द्रसंवादे गोदानमाहात्म्यं नाम एकोत्तरशततमोऽध्यायः ॥
॥ इति गोप्रदानकथनं नाम द्व्युत्तरशततमोऽध्यायः ॥
॥ इति सत्यस्तुतिर्नाम त्र्युत्तरशततमोऽध्यायः ॥

## ॥ अथ चतुरुत्तरशततमोऽध्यायः ॥

[१] **ऊर्जस्विन्यदूर्जवहाश्च यज्ञे गर्भोऽमृतस्य जगतश्च प्रतिष्ठा ।**
**क्षिते रोहः प्रवहः शश्वदेव प्राजापत्याः सर्वमित्यर्थवादाः ॥१०॥**

**ऊर्जस्विन्यदूर्जवहाश्च** इत्यत्र ऊर्जं देवान्नम् ।

॥ इति चतुरुत्तरशततमोऽध्यायः ॥

## ॥ अथ षडुत्तरशततमोऽध्यायः ॥

[२] **सार्द्रे चर्मणि भुञ्जीत निरीक्षेद्वारुणीं दिशम् ।**
**वाग्यतः सर्पिषा भूमौ [३] गव्यं व्युष्टिं तथाश्नुते ॥ २१ ॥**

**गव्यं व्युष्टिं तथाश्नुते** इत्यत्र **व्युष्टिः** समृद्धिः । [४] 'व्युष्टिः फले समृद्धौ च' इत्यमरः ।

॥ इति गोप्रदानिके षडुत्तरशततमोऽध्यायः ॥
॥ इति गोदानकीर्तनं नाम सप्तोत्तरशततमोऽध्यायः ॥
॥ इति गोमाहात्म्ये अष्टोत्तरशततमोऽध्यायः ॥
॥ इत्यानुशासनिके व्याससुकसंवादे दशोत्तरशततमोऽध्यायः ॥

---

१. कुं. १११ अध्यायः । 'ऊर्जस्विन्य ऊर्जमेधाश्च' इति कुं.पाठः ।
२. कुं. ११३ अध्यायः ।
३. 'गवां व्युष्टिं सदाऽऽश्नुते' इति कुं.पाठः ।
४. अ.को. तृ. नानार्थवर्ग श्लो ३८

## ।। अथ द्वादशोत्तरशततमोऽध्यायः ।।

**[१]निपात्य भर्जितः स्वर्गो भार्गवं फेनपः किल ।**
**स च प्राणान् पुनर्लब्ध्वा प्रीतो गोलोकमिश्रितः ।। २५ ।।**

**निपात्य भर्जितः स्वर्गो भार्गवं फेनपः किल । स च प्राणान् पुनर्लब्ध्वा प्रीतो गोलोकमिश्रित** इत्यत्र **निपात्य** भूमौ निपात्य **भर्जितः** स्वपालिताभिर्गोभिः शृङ्गखुरताडनादिना चूर्णीकृतः **फेनपः** स भार्गवः । स्वर्गोरिति जात्येकवचनम् । स्वर्गादागतगोभ्यः पुनः प्राणान् लब्ध्वा प्रीतः गोलोकमाश्रितः किलेति योजना ।

**।। इत्यानुशासनिके द्वादशोत्तरशततमोऽध्यायः ।।**

## ।। अथ चतुर्दशोत्तरशततमोऽध्यायः ।।

**[२]ततोऽधयत् स्तनं तस्याः सुरभ्याः सुरसत्तमः ।। ८ ।।**

**तातोऽधयत् स्तनं तस्या** इत्यत्र **अधयत्** अपिबत्, 'धेट् पाने' इति धातुः ।

**।। इत्यानुशासनिके चतुर्दशोत्तरशततमोऽध्यायः ।।**

## ।। अथ एकोनविंशत्युत्तरशततमोऽध्यायः ।।

**[३]केन दुर्गाणि तरति [४]केन दुर्गानवाप्नुते ।**
**केन वा महदाप्नोति इह लोके परत्र च ।। ७ ।।**

---

१. कुं. ११९ अध्यायः । **'निपात्य भक्षितः स्वर्गाद्भार्गवः फेनपः किल । स च प्राणान् पुनर्लब्ध्वा ततो गोलोकमाश्रितः'** इति कुं.पाठः ।

२. कुं. ११९ अध्यायः ।; ३. कुं. १२४ अध्यायः ।

४. **'केन लोकानवाप्नुते'** इति कुं.पाठः ।

**केन दुर्गानवाप्नुत** इत्यत्र **दुर्गान्** गन्तुमशक्यान् देवलोकान् ।

**या मेध्या प्रथमं कर्म इयं धेनुः सरस्वती ।**
**पौर्णमासेन वत्सेन कामं कामगुणान्विता ॥ २९ ॥**

**पौर्णमासेन वत्सेन** इत्यत्र **पौर्णमासेन** पूर्णदशमाससम्बन्धिना वत्सेन ।

**धेनुमेकां समादद्यादहन्यहनि पावनीम् ।**
**तत्तथा प्राप्नुयाद्विप्रः पठन्वै गोमतीं सदा ॥ ३५ ॥**

**पठन्वै गोमतीम्** इत्यत्र गौरस्यां वर्तत इति व्युत्पत्त्या गो-सम्बन्धिनी कथा **गोमती**, ताम् ।

**॥ इत्यानुशासनिके दाने एकोनविंशत्युत्तरशततमोऽध्यायः ॥**

## ॥ अथ विंशत्युत्तरशततमोऽध्यायः ॥

[१] **प्रतिपद्य यागा** इत्यत्र **यागाः** यज्ञाः ।

**॥ इति कपिलावर्णनं नाम विंशत्युत्तरशततमोऽध्यायः ॥**

## ॥ अथ द्वाविंशत्युत्तरशततमोऽध्यायः ॥

व्यास उवाच –

[२] **शृणु तात यथा गोषु विज्ञेया कपिला भवेत् ।**
**नेत्रयोः शृङ्गयोश्चैव खुरेषु वृषणेषु च ॥ २ ॥**

---

१ तत्प्रतीकघटितः श्लोकः मुद्रितकोशेषु नोपलभ्यते ।

२ कुं. १२७ अध्यायः ।

**खुरेषु वृषणेषु च** इत्यत्र वृषभाणां वृषणानि येषु स्थानेषु स्युः तेषु स्थानेष्वित्यर्थः ।

[१] **एवं गायन्ति विप्राश्च गायत्री सत्यमेव च ।**
**वसन्तश्च सुवर्णं च एकतः समजायत ॥ ६ ॥**

**एवं गायन्ति विप्राश्च गायत्री सत्यमेव च । वसन्तश्च सुवर्णं च एकतः समजायत** इत्यत्र गोविप्रादिपञ्चकम् **एकतः** एकभागे समजायत । कपिला एकैव एकतः समजायत । एकैव कपिला विप्रादिपञ्चकसमानेत्यर्थः ।

[२] **नेत्रयोः कपिलायास्तु वाहयेत दुहेत वा ।**
**स पापकर्मा नरकं प्रतिष्ठां प्रतिपद्यते ॥ ७ ॥**

**नेत्रयोः कपिलायास्तु** इत्यत्र क्षीरघृतादिसेवीति योग्यपदाध्याहारः ।

**॥ इति द्वाविंशोत्तरशततमोऽध्यायः ॥**

## ॥ अथ त्रयोविंशत्युत्तरशततमोऽध्यायः ॥

**युधिष्ठिर उवाच –**

[३] **मया गवां पुरीषं वै श्रिया जुष्टमिति श्रुतम् ।**
**एतदिच्छाम्यहं श्रोतुं संशयोऽत्र हि मे महान् ॥ १ ॥**

**मया गवां पुरीषं वै** इत्यत्र **मया** लक्ष्म्या, **जुष्टं** सेवितं तत्र सन्निधानं कृतमित्यर्थः ।

---

१. **'एवं गावश्च विप्राश्च'** इति कुं.पाठः ।
२. **'नेत्रयोः कपिलां यस्तु'** इति कुं.पाठः ।; ३. कुं.१२८ अध्यायः ।

**इच्छामि चापि युष्मासु वस्तुं सर्वासु नित्यदा ।**
**आगत्य प्रार्थये युष्मान् श्रीजुष्टा[1] भवताऽद्य वै ॥ १० ॥**

**श्रीजुष्टा भवताद्य वै** इत्यत्र श्रिया जुष्टाः **श्रीजुष्टाः** ।

श्रीरुवाच –

**[2]किमेतद् धक्षणं गावो यन्मां नेहाभिनन्दथ ।**
**न मां सम्प्रतिगृह्णीध्वं कस्माद्वै दुर्लभां सतीम् ॥ १३ ॥**

**किमेतद् धक्षणं गावो** इत्यत्र **धक्षणं** दाहकवचनम् ।

**॥ इति दाने त्रयोविंशोत्तरशततमोऽध्यायः ॥**

## ॥ अथ चतुर्विंशत्युत्तरशततमोऽध्यायः ॥

**[3]जगत्पतिरनिर्देश्यः सर्वगः सर्वभावनः ।**
**हृच्छयः सर्वभूतानां ज्येष्ठो रुद्रादपि प्रभुः ॥ १७ ॥**

**ज्येष्ठो रुद्रादपि प्रभुः** इत्यत्र रुद्रात् ज्येष्ठपुत्रो जातः । इतररुद्राज्ज्येष्ठ इति वा ।

**अबुद्धिपतितेनाथ नादेन विपुलेन सा ।**
**वित्रस्तोद्भ्रान्तनयना गङ्गा विप्लुतलोचना ॥ ५६ ॥**

**अबुद्धिपतितेनाथ नादेन** इत्यत्र **अबुद्धिपतितेन** अकस्मादुत्पन्नेन ।

**॥ इति सुवर्णोत्पत्तौ कुमारोत्पत्तिर्नाम चतुर्विंशोत्तरशततमोऽध्यायः ॥**

---

१. **'श्रीजुष्टा भवताऽनघाः'** इति कुं.पाठः ।
२. **'किमेतद्धः क्षमं गावो'** इति कुं.पाठः ।; ३. **कुं. १३१ अध्यायः ।**

## ।। अथ पञ्चविंशत्युत्तरशततमोऽध्यायः ।।

**वसिष्ठ उवाच –**

**अपि[1] चेदं पुरा राम श्रुतं मे ब्रह्मसत्तम[2] ।**
**पितामहस्य यद्वृत्तं ब्रह्मणः परमेष्ठिनः[3]** ।। १ ।।

**देवस्य महतस्तात वारुणीं बिभ्रतस्तनुम् ।**
**ऐश्वर्ये वारुणे वाऽथ रुद्रस्येशस्य वै प्रभो** ।। २ ।।

**महतः** महत्तत्त्वाभिमानिनः **परमेष्ठिनः** ब्रह्मणो देवस्य । **पुरा** रुद्रेण क्रियमाणयागसमये यद्वृत्तं, हे राम, तन्मया श्रुतं, वारुणीं तनुं बिभ्रतः, ईशस्य रुद्रस्य, **वारुणे** वरुणसम्बन्धिनि, **ऐश्वर्ये** यज्ञैश्वर्ये यद्वृत्तं, तच्च, हे राम, मया श्रुतं, तत्सर्वं कथयामीति योजना ।

**आजग्मुः सहितास्तत्र तदा भृगुकुलोद्वह ।**
**यज्ञं पशुपतेः प्रीता वरुणस्य महात्मनः** ।। ११ ।।

**वरुणस्य महात्मन** इत्यत्र वरुणान्तर्नियामकत्वाद्वरुणपद-वाच्यस्य **महात्मनः** पशुपतेर्यज्ञमाजग्मुरिति सम्बन्धः । निमित्तमात्रं वरुणः, होमकर्ता तु तद्हृदिस्थो रुद्र इत्यतः व्यामिश्रोक्तिः ।

**ततस्तस्मिन् सम्प्रवृत्ते सत्रे ज्वलितपावके ।**
**ब्रह्मणो जुह्वतस्तत्र प्रादुर्भावो बभूव ह** ।। १४ ।।

**ब्रह्मणो जुह्वतस्तत्र** इत्यत्र **प्रादुर्भावः** वीर्यस्य प्रादुर्भावः ।

---

१. कुं. १३२ अध्यायः ।; २. **'ब्रह्मदर्शनम्'** इति कुं.पाठः ।
३. **'परमात्मनः'** इति कुं.पाठः ।

**ततः स जनयामास भूतग्रामं च वीर्यवान् ।**
**तस्य तत्तेजसस्तस्माज्जज्ञे लोकेषु तैजसम् ॥ १६ ॥**

**जज्ञे लोकेषु तैजसम्** इत्यत्र **तैजसं** रजोगुणः ।

**[१] सगुणस्तेजसो नित्यं तमसोऽकाशमेव च ।**
**सर्वभूतेषु च तथा सत्त्वं तेजस्तथोत्तमम् ॥ १७ ॥**

**सगुणस्तेजसो नित्यम्** इत्यत्र **सगुणः** शब्दगुणसहितः आकाशः तमसः तेजसश्च जातः । रजसः शब्दाख्यगुणः, तमसः आकाश इति विवेकः ।

**[२] भृगित्येव भृगुः पूर्वमङ्गारेऽङ्गिराऽभवत् ।**
**अङ्गारसंश्रयाच्चैव कविरित्यपरोऽभवत् ॥ १९ ॥**

**भृगित्येव भृगुः पूर्वम्** इत्यत्र आज्याहुतिं **भुक्** भुञ्जानः अग्निः यदा भुगित्येव शब्दं कृतवान् तदा पूर्वं भृगुरभवत् ।

**अङ्गारेभ्योऽङ्गिरास्तात वालखिल्याः कुशोच्चयात् ।**
**अत्रैवात्रेति च विभो जातमत्रिं वदन्त्यपि ॥ २१ ॥**

**अत्रैवात्रेति च विभो** इत्यत्र ज्वालाजननाय अत्राज्याहुतिं दिश अत्राज्याहुतिं दिशेत्युक्ते अत्रिर्जात इत्यर्थः ।

**[३] अश्रुभ्योऽस्य समुत्पन्नावश्विनौ रूपसम्मतौ ।**

---

१. **'सगुणस्तेजसो नित्यं तमस्याकाशमेव च'** इति कुं.पाठः ।
२. **'भर्जनाद्भृगुरित्येवं अङ्गारेभ्यो-'** इति कुं.पाठः ।
३. **'अश्रुतोऽस्य'** इति कुं.पाठः ।

**शेषाः प्रजानां पतयः स्रोतोभ्यस्तस्य जज्ञिरे ।**
**ऋषयो रोमकूपेभ्यः स्वेदाच्छन्दो बलान्मनः ॥ २३ ॥**

**अश्रुभ्योऽस्य** इत्यत्र **अश्रुभ्यः** बहुलतास्वादनेन जातानन्दाश्रुभ्यः ।

**रौद्रं लोहितमित्याहुर्लोहितात् कनकं स्मृतम् ।**
**तन्मैत्रमिति विज्ञेयं धूमाच्च वसवः स्मृताः ॥ २६ ॥**

**तन्मैत्रमिति विज्ञेयम्** इत्यत्र तत् कनकं **मैत्रम्** अन्योन्यमैत्रीजनकत्वान्मैत्रम् ।

**[१]ततोऽब्रवीन्महादेवो वरुणः परमात्मनः ।**
**मम सत्रमिदं दिव्यमहं गृहपतिस्त्विह ॥ २९ ॥**

**ततोऽब्रवीन्महादेवो वरुणः परमात्मन** इत्यत्र **वरुणः** वरुणान्तर्यामी रुद्रः परमात्मनः दिव्यमिदं सत्रं **मम** मत्कर्तृकमित्यब्रवीत् ।

**[२]निसर्गाद्वरुणश्चापि ब्रह्मणो यादसां पतिः ।**
**जग्राह वै भृगुं पूर्वमपत्यं सूर्यवर्चसम् ॥ ३६ ॥**

**निसर्गाद्वरुणश्चापि** इत्यत्र ब्रह्मणः निसर्गात् पूर्वं वरुणः भृगुमपत्यार्थे जग्राह, पश्चाच्च रुद्रश्च जग्राहेति योजना ।

॥ इति दानधर्मे पञ्चविंशोत्तरशततमोऽध्यायः ॥
॥ इति सुवर्णोत्पत्तिः समाप्ता ॥

---

१. **'ततोऽब्रवीन्महादेवो वरुणः पवनात्मकः'** इति कुं.पाठः ।
२. BORI पृ. ४५९; B,D8,D10; **'निसर्गाद्ब्रह्मणश्चापि वरुणो'** इति कुं. पाठः ।

## ।। अथ सप्तविंशत्युत्तरशततमोऽध्यायः ।।

**[१]स्त्रियो द्वितीयां जायन्ते तृतीयायां तु वाजिनः ।**
**चतुर्थ्यां क्षुद्रपशवो भवन्ति बहवो गृहे ।। ११ ।।**

**स्त्रियो द्वितीयां जायन्त** इत्यत्र द्वितीया सप्तम्यर्थे 'षट्सु द्वितीया' इति सूत्रात् । द्वितीयायामित्यर्थः ।

**कुप्यभागी भवेन्मर्त्यः कुर्वन्नेकादशीं नृप ।**
**ब्रह्मवर्चस्विनः पुत्रा जायन्ते तस्य वेश्मनि ।। १९ ।।**

**कुर्वन्नेकादशीम्** इत्यत्र **कुप्यं** वस्त्रपात्रादि । **एकादशीं** विद्धैकादशीम् ।

**यथा चैवापरः पक्षः पूर्वपक्षाद्विशिष्यते ।**
**तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते ।। २१ ।।**

**यथा चैवापरः पक्ष** इत्यत्र **अपरः पक्षः** शुक्लपक्षः ।

**।। इति श्राद्धपक्षे तिथिविभागो नाम सप्तविंशत्युत्तरशततमोऽध्यायः ।।**

## ।। अथ अष्टाविंशत्युत्तरशततमोऽध्यायः ।।

**[२]यथा गव्यं तथा युक्तं पायसं सर्पिषा सह ।**
**[३]वार्ध्राणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ।। ९ ।।**

---

१. कुं. १३४ अध्यायः ।
२. कुं. १३५ अध्यायः ।
३. BORI पृ. ४७१; $G_1$; $T_1$,$M_{1.3}$; **'वार्ध्रीणसस्य'** इति कुं.पाठः ।

**वार्ध्राणसस्य मांसेन** इत्यत्र **वार्ध्राणसस्य** वनमहिषस्य, [१]'महिषः सैरिभ उक्तो रक्ताक्षः कासरो लुलायश्च । वार्ध्राणसश्च खड्गी' इति हलः । यद्यपि महिषवार्ध्राणसशब्दौ पर्यायवाचकौ तथापि एकत्र ग्राम्यमहिषः, अपरत्र वन्यमहिषो ग्राह्यः ।

**आजेन वापि लौहेन मघास्वेव यतव्रतः ।**
**हस्तिच्छायासु विधिवत्कर्णव्यजनवीजितम्** ॥ १३ ॥

**हस्तिच्छायासु विधिवत्** इत्यत्र हस्तवत्परितो लम्बमानाः शिफा यस्य स **हस्ती** वटवृक्षः तस्य छायासु ।

**॥ इत्यानुशासनिके श्राद्धकल्पे अष्टाविंशोत्तरशततमोऽध्यायः ॥**

## ॥ अथ एकोनत्रिंशत्युत्तरशततमोऽध्यायः ॥

[२]**श्राद्धं त्वभिजिते कुर्वन् विद्यां श्रेष्ठामवाप्नुयात् ।**
**श्रवणेषु ददच्छ्राद्धं प्रेत्य गच्छेत् स तद्गतिम्** ॥ ११ ॥

**श्राद्धं त्वभिजित** इत्यत्र **अभिजिते** श्रवणनक्षत्रे ।

**बहुकुप्यकृतं वित्तं विन्दते रेवतीं श्रितः ।**
[३]**अश्वांश्चाश्वयुजे वेत्ति भरणीष्वायुरुत्तमम्** ॥ १४ ॥

**अश्वांश्चाश्वयुजे वेत्ति** इत्यत्र **अश्वयुजे** अश्विन्यां, **वेत्ति** विन्दते ।

**॥ इत्यानुशासनिके एकोनत्रिंशोत्तरशततमोऽध्यायः ॥**

---

१. ह.को. २-२२७
२. कुं. १३६ अध्यायः । **'श्राद्धं त्वभिजितौ'** इति कुं.पाठः ।
३. BORI पृ. ४७३; **'अश्विनीष्वश्वान्विन्देत'** इति कुं.पाठः ।

## ।। अथ त्रिंशत्युत्तरशततमोऽध्यायः ।।

**भीष्म उवाच –**

**ब्राह्मणान्न[1] परीक्षेत क्षत्रियो दानधर्मवित् ।**
**दैवे कर्मणि पित्र्ये तु न्याय्यमाहुः[2] परीक्षणम् ।। २ ।।**

**ब्राह्मणान्न परीक्षेत** इत्यत्र **न परीक्षेत** देवपितृकार्यव्यतिरिक्तदानेषु न परीक्षेत ।

**देवताः पावयन्तीह दैवेनैवेह तेजसा ।**
**उपेत्य तस्माद्देवेभ्यः सर्वेभ्यो दापयेन्नरः ।। ३ ।।**

**दैवेन** विश्वेदेवतासम्बन्धिना, **तेजसा** यदृच्छया लब्धद्रव्यसामर्थ्येन ।

**अगारदाही गरदः कुण्डाशी सोमविक्रयी ।**
**सामुद्रिको राजभृत्यस्तैलिकः कूटकारकः ।। ७ ।।**

**कुण्डाशी** इत्यत्र **कुण्डाशी** मृन्मयपात्रभोजी । **सामुद्रिकः** समुद्रे नौकायायी ।

**परिवित्तिश्च यश्च स्याद्दुश्चर्मा गुरुतल्पगः ।**
**कुशीलवो देवलको नक्षत्रैर्यश्च जीवति ।। १० ।।**

**परिवित्तिश्च यश्च स्यात्** इत्यत्र **परिवित्तिः** अनूढः ज्येष्ठः, कनिष्ठे सपत्नीके । [3]'परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात् । परिवित्तिस्तु तज्ज्यायान्' इत्यमरः ।

---

१. कुं. १३७ अध्यायः।;२. BORI पृ. ४७४; **'न्यायमाहुः'** इति कुं.पाठः ।
३. अ.को. द्वि. ब्रह्मवर्गः श्लो ४४,४६

**श्राद्धं भुक्त्वा त्वधीयीत वृषलीतल्पगश्च यः ।**
**पुरीषे तस्य ते मासं पितरस्तस्य सेवते**[1] ॥ १२ ॥

**पितरस्तस्य सेवत** इत्यत्र **तस्य** ब्राह्मणस्य पुरीषे ते **मासं** मास-पर्यन्तं **तस्य** यजमानस्य पितरः ।

**श्वानश्च पङ्क्तिदूषाश्च नावेक्षेरन्कथञ्चन ।**
[2]**तस्मात्परिवृते दद्यात्तिलांश्चान्ववकीरयेत्** ॥ २१ ॥

**तस्मात्परिवृते दद्यात्** इत्यत्र **परिवृते** रक्षार्थं परितः आवरणयुक्ते ।

[3]**ब्रह्मदेवानुसन्तानश्छन्दोगो ज्येष्ठसामगः ।**
**मातापित्रोर्यश्च वश्यः श्रोत्रियो दशपूरुषः** ॥ २७ ॥

**ब्रह्मदेवानुसन्तान** इत्यत्र वेददेवानुकूलसन्तानवानित्यर्थः ।

[4]**क्रोशादर्धं तृतीयात्तु पावयेदेक एव हि ।**
**ब्रह्मदेयानुसन्तान इति ब्रह्मविदो विदुः** ॥ ३८ ॥

**क्रोशादर्धं तृतीयात्तु** इत्यत्र तृतीयात् प्रथमक्रोशमारभ्य तृतीयात् क्रोशादर्धं तावद्देशं पुनातीत्यर्थः ।

**ब्रह्मदेयानुसन्तान** इत्यत्र **ब्रह्म** वेदः **देयं** दातुं योग्यं येषां ते **ब्रह्मदेयाः**, तेषामनुकूलसन्तान इति तं विदुः ।

---

१. '**पितरस्तस्य शेरते**' इति कुं.पाठः ।
२. BORI पृ. ४७५; '**तस्मात्परिसृते**' इति कुं.पाठः ।
३. '**ब्रह्मदेयानुसन्तान**' इति कुं.पाठः ।
४. '**क्रोशादर्धतृतीयाच्च**' इति कुं.पाठः ।

[१] यस्तु श्राद्धे कुरुते सङ्गतानि
न देवयानेन पथा स याति ।
[२] स वै युक्तः पिप्पलबन्धनाद्वा
स्वर्गाल्लोकाच्च्यवते श्राद्धमित्रः ॥ ४३ ॥

**यस्तु श्राद्धे कुरुते सङ्गतानि** इत्यत्र **सङ्गतानि** अन्योन्यसम्बन्धवन्ति मित्राणीति यावत् ।

**स वै युक्तः पिप्पलबन्धनाद्वा** इत्यत्र पिप्पलपदेन देहाख्याश्वत्थवृक्ष उच्यते । 'समानं वृक्षं परिषस्वजाते'[३] इति हि श्रुतिः । तस्य **बन्धनात्** सम्बन्धात् कारणाद्युक्तः सः स्वर्गाल्लोकाच्च्यवते । यद्वा पिप्पलपदेन कर्मफलमुच्यते । एतत्कृतश्राद्धेन तस्य फलं भोजनं तत्कृतश्राद्धेन च अस्य फलं भोजनं तदाख्यबन्धनात् **युक्तः** सहितः, स्वर्गाल्लोकात् च्यवत इति च सम्बन्धः । श्राद्धे मित्राण्येव बहुलानि यस्य सः **श्राद्धमित्रः** ।

[४] सम्भोजनी नाम पिशाचभिक्षा सा नैव देवान्न पितॄनुपैति ।
इहैव सा भ्राम्यति हीनपुण्या शालान्तरे गौरिव नष्टवत्सा ॥४७॥

**सम्भोजनी नाम पिशाचभिक्षा** इत्यत्र सहभोजनयोग्येषु दत्ता **सम्भोजनी** । मित्रश्राद्धमिति यावत् ।

॥ इति श्राद्धविकल्पे पाङ्क्तेयविभागो नाम एकत्रिंशोत्तरशततमोऽध्यायः ॥

---

१. BORI पृ. ४७८; D4.6.9; **'यश्च श्राद्धे'** इति कुं.पाठः ।
२. **'स वै मुक्तः पिप्पलम्'** इति कुं.पाठः ।; ३. आथर्वण ५-१
४. BORI पृ. ४८०; S,D5.10; **'सम्भोजिनी नाम पिशाचदक्षिणा'** इति कुं.पाठः ।

## ।। अथ द्वात्रिंशत्युत्तरशततमोऽध्यायः ।।

**युधिष्ठिर उवाच –**

**[१]केन सङ्कल्पितं श्राद्धं कस्मिन्काले किमात्मकम् ।**
**[२]भृग्वङ्गिरसके काले मुनिना कतरेण वा ।। १ ।।**

**भृग्वङ्गिरसके काल** इत्यत्र भृग्वङ्गिरसादिऋषीणां प्रवृत्तिकाले ।

**अमावास्यां महाप्राज्ञो विप्रानानाय्य पूजितान् ।**
**दक्षिणावर्तिकाः सर्वा बृसीः स्वयमथाकरोत् ।। १२ ।।**

**दक्षिणावर्तिकाः सर्वा** इत्यत्र दक्षिणतः आवर्तो यासां ताः **दक्षिणावर्तिका** इति बृसीनाम् ऋष्यासनानां विशेषणम् ।

**[३]उदकायतने चैव स्तोतव्यो वरुणो विभुः ।**
**ततोऽग्निश्चैव सोमश्च आराध्याविह तेऽनघ ।। २६ ।।**

**उदकायतने चैव** इत्यत्र **उदकायतने** अर्चनोदकपात्रे ।

**देवास्तु पितरो नाम निर्मिता ये स्वयम्भुवा ।**
**ऊष्मपास्तु ये महाभागास्तेषां भागः प्रकल्पितः ।। २७ ।।**

'उष्णपास्तु महाभाग' इति पाठे पञ्चाग्निमध्ये स्थित्वा उष्णं पिबन्तीत्युष्णपा ऋषयः ।

**।। इति श्राद्धधर्मे अत्रिमतं नाम द्वात्रिंशोत्तरशततमोऽध्यायः ।।**

---

१. कुं. १३८ अध्यायः ।; २. **'भृग्वङ्गिरसिके'** इति कुं.पाठः ।
३. **'उदकानयने'** इति कुं.पाठः ।

## ।। अथ त्रयस्त्रिंशत्युत्तरशततमोऽध्यायः ।।

**कुल्माषगोयुगेनाथ[1] युक्तं[2] तत्र रसाजलम् ।**
**पितरोऽभिलषन्ते वै नावं[3] चाप्यधिरोहतः ।। १८ ।।**

**युक्तं तत्र रसाजलम्** इत्यत्र रसायां भूमावेव स्यन्दमानजलेन, न तूद्धृतोदकेन, **कुल्माषः** वन्यमाषः, **गोयुगेन** मन्त्ररूपया गवा दृष्टिरूपया च गवा । जलपावनाय मन्त्रः, जलशोधनाय दृष्टिरिति विवेकः । यद्वा **गोयुगेन** पित्रादिशब्देन तदन्तर्गतप्रद्युम्नादिशब्देन च ।

**पितरोऽभिलषन्ते वै नावं चाप्यधिरोहत** इत्यत्र **अधिरोहतः** स्वर्गमधिरोढुमिच्छतः पुरुषस्य **नावं** 'सोमः पितृमान् यमोङ्गिरस्वान् अग्निः कव्यवाहनादयो ये पितरः तान् पितॄंस्तर्पयामि। भूः पितॄंस्तर्पयामि। भुवः पितॄंस्तर्पयामि । स्वः पितॄंस्तर्पयामि । भूर्भुवःस्वः पितॄंस्तर्पयामि । सर्वान् पितॄंस्तर्पयामि । सर्वपितृपत्नीस्तर्पयामि । सर्वपितृपुत्रांस्तर्पयामि । सर्वपितृगणांस्तर्पयामि ।' इति नवपितृसम्बन्धिनं जलाञ्जलिं, पर्युषितजलनिषेधाय नववारिसम्बन्धि पञ्च जलाञ्जलिं पितरः अभिलषन्ते इति योजना ।

**।। इति त्रयस्त्रिंशोत्तरशततमोऽध्यायः ।।**

**।। श्राद्धकल्पः समाप्तः ।।**

* * *

---

१. कुं. १३९ अध्यायः ।
२. **'युक्तेन तरतो जलम्'** इति कुं.पाठः ।
३. BORI पृ. ४८७; **'नावं चाप्यधिरोहिताः'** इति कुं.पाठः ।

## ।। अथ चतुस्त्रिंशोत्तरशततमोऽध्यायः ।।

**युधिष्ठिर उवाच –**

**[१] द्विजातयो व्रतोपेता हविस्ते यदि भुञ्जते ।**
**अन्नं ब्राह्मणकामाय कथमेतत् पितामह ।। १ ।।**

**द्विजातयो व्रतोपेता** इत्यत्र व्रतोपेता द्विजातयः यद्धविर्भुञ्जते तत् **ब्राह्मणकामाय** दातुर्ब्राह्मणस्य काम्यफलाय कथं भविष्यति । एतद् ब्रूहीति योजना ।

।। इति चतुस्त्रिंशोत्तरशततमोऽध्यायः ।।

## ।। अथ पञ्चस्त्रिंशोत्तरशततमोऽध्यायः ।।

**[२] याज्यात्मजमथो दृष्ट्वा गतासुमृषिसत्तमाः ।**
**अपचन्त तदा स्थाल्यां क्षुधार्ताः किल भारत ।। १० ।।**

**याज्यात्मजम्** इत्यत्र **याज्यात्मजं** याज्याख्यऋषेः दक्षिणार्थं दत्तत्वा-दत्तपुत्रम् ।

**[३] निरद्ये मर्त्यलोकेऽस्मिन्नात्मानं ते परीप्सवः ।**
**कृच्छ्रामापेदिरे वृत्तिमन्नहेतोस्तपस्विनः ।। ११ ।।**

**निरद्ये** अदनयोग्यान्नरहिते ।

कुलम्भराननडुहः शतं शतान् धुर्यान् श्वेतान् सर्वशोऽहं ददामि ।
प्रष्ठौहीनां पीवराणां च तावदग्र्या गृष्टीर्धेनवः सुव्रताश्च ।। १६ ।।

---

१. कुं. १४० अध्यायः ।; २. कुं. १४१ अध्यायः ।; ३. 'नाजीव्ये' कुं.पाठः ।

**प्रष्ठौहीनां पीवराणाम्** इत्यत्र **प्रष्ठौहीनां** बाल्य एव गर्भिणीनां, 'प्रष्ठौही बालगर्भिणी'[1] इत्यमरः ।

**क्षेत्रं हि दैवतमिव ब्राह्मणान् समुपाश्रितम् ।**
**अमलो ह्येष तपसा प्रीतः प्रीणाति देवताः ॥ २१ ॥**

**अमलो ह्येष** इत्यत्र एषः अत्रत्यो ऋषिवर्गः ।

**अह्नायेह तपो जातु ब्राह्मणस्योपजायते ।**
**तद्दाव इव निर्दह्यात् प्राप्तो राजप्रतिग्रहः ॥ २२ ॥**

**अह्नायेह** इत्यत्र **अह्नाय** शीघ्रम् ।

**उदुम्बराण्यथान्यानि हेमगर्भाण्युपाहरन् ।**
**भृत्यास्तेषां ततस्तानि प्रग्रहीतुमुपाद्रवन् ॥ २७ ॥**

**उदुम्बराण्यथान्यानि हेमगर्भाणि** इत्यत्र **हेमगर्भाणि** अन्तःपूरित-सुवर्णानि ।

**भरद्वाज उवाच –**

**उत्पन्नस्य रुरोः शृङ्गं वर्धमानस्य वर्धते ।**
**प्रार्थनापुरुषस्येव तस्य मात्रा न विद्यते ॥ ३२ ॥**

**प्रार्थनापुरुषस्य** इत्यत्र प्रार्थनाशीलपुरुषस्य ।

**जमदग्निरुवाच –**

**प्रतिग्रहे संयमो वै तपो धारयते ध्रुवम् ।**
**तद्धनं ब्राह्मणस्येह लभ्यमानस्य विस्रवेत् ॥ ३६ ॥**

---

१. अ.को. द्वि. वैश्यवर्गः श्लो. ७०

**प्रतिग्रहे संयमो वै** इत्यत्र **प्रतिग्रहे** विषये **संयमः** उपरमः प्रतिग्रहनिरोध इत्यर्थः ।

॥ इति पञ्चत्रिंशोत्तरशततमोऽध्यायः ॥

## ॥ अथ षट्त्रिंशोत्तरशततमोऽध्यायः ॥

**अथापश्यन् सुपीनांसपाणिपादमुखोदरम् ।[1]**
**परिव्रजन्तं स्थूलाङ्गं परिव्राजं शुनस्सखम् ॥ २ ॥**

**अथापश्यन् सुपीनांसपाणिपादमुखोदरम्** इत्यत्र ऋषीणां रक्षणाय इन्द्रस्त्रिदण्डिरूपेण तत्रागत इति कथा ज्ञातव्या ।

**अरुन्धती तु तं दृष्ट्वा सर्वाङ्गोपचितं शुभम् ।**
**भवितारो भवन्तो वै नैवमित्यब्रवीदृषीन् ॥ ३ ॥**

**भवितारो भवन्तो वै नैवमित्यब्रवीदृषीन्** इत्यत्र एवं पीनसर्वाङ्गसन्यासिवत् । यूयं भवितारो नैव इत्यब्रवीदिति योजना ।

**नैतस्येदं यथाऽस्माकं त्रिकालोह्यं हि राङ्कवम् ।[2]**
**एकैकं वै त्रिचर्मीयं तेन पीवाञ्शुनस्सखः ॥ १० ॥**

**नैतस्येदं यथाऽस्माकं त्रिकालोह्यं हि राङ्कवम्** इत्यत्र **राङ्कवं** रङ्कुः कृष्णमृगः तच्चर्म राङ्कवम् ।

**एकैकं हि त्रिचर्मीयम्** इत्यत्र त्रिचर्मणामन्योन्यसम्बन्धेन कृतम् ।

---

१. कुं. १४२ अध्यायः ।

२. BORI पृ. ४९७; $M_2$; **'नैतस्येह यथाऽस्माकं त्रिकौशेयं च राङ्कवम् । एकैकं हि त्रिवर्षीयम्-'** इति कुं.पाठः ।

**वसिष्ठोऽस्मि वरिष्ठोऽस्मि वसे वासगृहेष्वपि ।**
**वरिष्ठत्वाच्च वासाच्च वसिष्ठ इति विद्धि माम् ॥ २७ ॥**

**वरिष्ठत्वाच्च** इत्यत्र अतिशयेन वसन् वसिष्ठ इति निरुक्तिर्ज्ञेया ।

**कश्यप उवाच –**

**कुलात्कुलं[1] च गच्छामि कुवमः कश्यपो द्विजः ।**
**काश्यः काशनिकाशत्वादेतन्मे नाम धारय ॥ २९ ॥**

**कुलात्कुलं च गच्छामि** इत्यत्र लोके प्रकाशयोग्यत्वात् काश्यं कुलं, **कुलात्** देवकुलात् **कुलं** दैत्यनागसर्पादिकुलं गच्छामि । अतः कुलपालकत्वात् काश्यप इत्यर्थः ।

**जमदग्निरुवाच –**

**जाजमद्यजनायाग्नेर्जिहानीह[2] जिजायिषे ।**
**जमदग्निरिति ख्यातमतो मां विद्धि शोभने ॥ ३७ ॥**

**जाजमद्यजनायाग्नेर्जिहानीह जिजायिषे जमदग्निः** इत्यत्र यतः अहम् **अग्नेर्यजनाय** पूजनाय **जं** स्वगृहे जातं दधि, आसमन्ताज्जातम् अरणिरूपं दारु च मथ्नातीति जाजमत् । एवं च अग्निमुद्दिश्य **जं** गृहे जातं **जम्** अरण्ये जातं वा मथ्नातीति जमदग्निः । एवं सति अग्निजमदिति वक्तव्यम् । जमदग्निरिति कथम् । सत्यम् । निरुक्तत्वा-

---

१. BORI पृ. ४९९; $M_2$; **'कुलं कुलं च कुवमः'** इति कुं.पाठः ।
२. BORI पृ. ५००; $M_{1.3}$, BORI; **'जाजमद्यजजानेऽहं जिजाहीह जिजायिषि । जमदग्निरिति ख्यातं ततो मां विद्धि शोभने ॥'** इति कुं.पाठः ।

दग्निपदस्योपरि निपातः। तथा, अग्नेर्यजनाय **जिहानि** दिने दिने जातं पापं प्राणायामादिना त्यजामि । अत्रापि अग्निमुद्दिश्य **जं** पापपुरुषं मथ्नातीति जमदग्निः । पूर्ववदग्निपदस्योपरि निपातः । तथा अग्नेर्यजमानाय इह लोके **जिजायिषे** जनितुमिच्छामि, अनेनापि अग्निमुद्दिश्य **जं** जन्मवत् मनुत इति जमदग्निः। 'मनु अवबोधने' इति धातोः कर्तरि औणादिके डक्प्रत्यये कृते मदिति शब्दनिष्पत्तिर्भवति। अत्रापि पूर्ववदग्निपदस्योपरि निपातः। हे **शोभने** यातुधानि अतः मां जमदग्निं विद्धीति योजना।

**धरां धरित्रीं वसुधां भर्तुस्तिष्ठाम्यनन्तरम्।**
**मनोऽनुरुन्धती भर्तुरिति मां विद्ध्यरुन्धतीम्** ॥ ३९ ॥

**धरां धरित्रीम्** इत्यत्र 'डुधाञ् धारणपोषणयोः' इति धातोः **धर्तिं** धरित्रीं, भर्तारं विना **अरुम्** अरोचमानां **माम्** अरुन्धतीं प्राहुरित्यर्थः।

**गण्डोवाच –**

**गण्डं[१] गण्डं गण्डवती गण्ड गण्डेति सञ्ज्ञिता।**
**गण्ड गण्डवगण्डेति विद्धि माऽनलसम्भवे** ॥ ४१ ॥

**गण्डं गण्डं गण्डवती गण्ड गण्डेति सञ्ज्ञिता। गण्ड गण्डवगण्डेति विद्धि माऽनलसम्भवे** इत्यत्र **गण्डं** स्थूलं **गण्डं** कपोलं गतवती नारी। गण्डगण्डेति सञ्ज्ञिता । गण्ड गण्डेव स्थितां मामपि गण्डगण्डेति विद्धि। हे **अनलसम्भवे** कृत्यारूपयातुधानि।

---

१. **'वक्त्रैकदेशो गण्डेति धातुमेतं प्रचक्षते। तेनोन्नतेन गण्डेति विद्धि माऽनल-सम्भवे'** इति कुं.पाठः ।

'वक्त्रैकदेशे गण्डेति धातुमेनं प्रचक्षते ।

तेनोन्नतेन गण्डेति विद्धि माऽनलसम्भवे ॥' इति पाठे धातुमेनं प्रचक्षत इत्यनेन 'गण्डं स्थूलकपोलयोः' इति धातुः सूचितः । [१]'गलिकाः स्थूलपाषाणाः गण्डशैलास्तु च्युताः स्थूलोपलागिरेः' इत्यमरः ।

**॥ इत्यानुशासनिके पर्वणि दानकथने सप्तर्षिवृषादर्विसंवादो नाम षट्त्रिंशोत्तरशततमोऽध्यायः ॥**

**॥ इति पुष्करस्तैन्यकथनं नाम सप्तत्रिंशोत्तरशततमोऽध्यायः ॥**

**॥ इति अन्नप्रशंसा नाम अष्टत्रिंशोत्तरशततमोऽध्यायः ॥**

## ॥ अथ चत्वारिंशोत्तरशततमोऽध्यायः ॥

[२]**श्रौषट् वौषट् चमान्वीषी** इत्यत्र 'अस्तु श्रौषट् वौषट्'[३] इत्यादि वैदिकमन्त्रान् **अनु** अनुसृत्य **इषी** इच्छावान्न, शूद्रधर्मोऽयम् ।

[४]**रक्षोयक्षजनद्वेषी शेषान्नकृतभोजनः ।**
[५]**वर्णत्रयं मधु यथा भ्रमरो धर्ममाचरेत्** ॥ ११ ॥

**वर्णत्रयं मधु यथा भ्रमरो धर्ममाचरेत्** इत्यत्र मधु अनुसृत्य भ्रमरो यथा तथा वर्णत्रयमनुसृत्य **धर्मं** परिचर्याख्य(रूप)धर्ममाचरेत् ।

**अमार्गेण प्रयातानां प्रत्यक्षादुपलभ्यते ।**
**चातुर्वर्ण्यव्यपेतानां जातिमूर्तिपरिग्रहः** ॥ १४ ॥

---

१. अ.को. द्वि. शैलवर्गः श्लो. ६;
२. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
३. ऋ. २-२३९-१; ४. कुं.१४६ अध्यायः ।
५. 'वर्णत्रयान्मधु' इति कुं.पाठः ।

**चातुर्वर्ण्यव्यपेतानाम्** इत्यत्र **चातुर्वर्ण्यव्यपेतानां** म्लेच्छादीनां जातिमूर्तिपरिग्रहः अमार्गस्थानां शूद्राणां भवतीति पूर्वेणान्वयः।

**[१]सर्वे कमण्डलुं गृह्य पार्श्वे दिग्भ्यामवान्तरम्।**
**शौचं कुर्याच्छनैर्वीरो बुद्धिपूर्वमसङ्करम्** ॥ ३६ ॥

**सर्वे कमण्डलुं गृह्य पार्श्वे दिग्भ्यामवान्तरम्** इत्यत्र **दिग्भ्यां** प्राचीनदक्षिणदिग्भ्याम्। **अवान्तरम्** अन्तरकोणदिशि कोणदिङ्मुखः शौचं कुर्यात्। न तु प्रधानदिङ्मुख इत्यर्थः।

**तस्मात्पाणितले देया मृत्तिकास्तु पुनः पुनः।**
**बुद्धिपूर्वं प्रयत्नेन यथा नैव स्पृशेत्स्फिचौ** ॥ ४० ॥
**[२]यथोद्घातो हि न भवेत्क्लेदजः परिधानके।**
**तथा गुदं प्रमार्जेत शौचार्थं तु पुनः पुनः** ॥ ४१ ॥

**स्फिचौ** कटी। **परिधानके** वस्त्रे। **उद्घातः** स्पर्शः। **क्लेदजः** गुद-प्रक्षालनजः।

**सव्ये द्वादश देयाः स्युस्तिस्रस्तिस्रः पुनः पुनः।**
**देयाः कूर्परके हस्ते पृष्ठे बन्धे पुनः पुनः** ॥ ४२ ॥

**देयाः कूर्परके हस्त** इत्यत्र **कूर्परके** कपोणौ। [३]'स्यात्कपोणिस्तु कूर्पर' इत्यमरः। **बन्धे** मणिबन्धे।

---

१. **'स्थाप्यं कमण्डलुं गृह्य पार्श्वोरुभ्यामथान्तरे'** इति कुं.पाठः।
२. **'यथा घातो'** इति कुं. पाठः।
३. अ.को. द्वि. मनुष्यवर्गः श्लो. ८०

१ **तथैव दशके त्वर्धः चतस्रस्तूभयोरपि ।**

२ **उभयोर्हस्तयोः सर्वास्तत्र सप्त प्रभावयेत् ॥ ४३ ॥**

**तथैव दशके त्वर्ध** इत्यत्र वामहस्ते दीयमानमृत्तिका **दशके अर्धः** पञ्च, चतस्रश्च ।

**उभयोर्हस्तयोः सर्वास्तत्र सप्त प्रभावयेत्** इत्यत्र तत्र स्थूलैः मृत्तिकापिण्डैः **सर्वाः** कफोणिमारभ्य अङ्गपर्यन्तं हस्तावयवाः **प्रभावयेत्** शुद्धीकुर्यात् ।

३ **मलोपहतता चेत् स्यात् द्विगुणं तु विधीयते ।**

**सहपादमथोरुभ्यां हस्तशौचमसंशयम् ॥ ४६ ॥**

**मलोपहतता चेत् स्यात्** इत्यत्र हस्तपादादीनां साक्षान्मलस्पर्शः स्याच्चेदित्यर्थः । **सहपादं** मलैः सहितपादम् ।

**अवधीरयमाणस्य** ४ **संयोग उपजायते ।**

**यथा यथा विशुद्ध्येत तत्तथा तदुपक्रमे ॥ ४७ ॥**

**अवधीरयमाणस्य** इत्यत्र **अवधीरयमाणस्य** शौचविधिं धिक्कुर्वाणस्य । **संयोगः** मलसंयोगः ।

५ **सकर्दमाशुभार्द्रासु गृह्यमाविश्य सङ्कटम् ।**

**हस्तयोर्मृत्तिकास्तिस्रः पादयोः षट् प्रदापयेत् ॥ ४८ ॥**

---

१ '**तथैवादर्शके दद्याच्चतस्रस्तूभयोरपि**' इति कुं.पाठः ।

२ '**उभयोर्हस्तयोरेवं सप्त सप्त प्रदापयेत्**' इति कुं. पाठः ।

३ '**मलोपहतचेलस्य**' इति कुं.पाठः ।; ४. '**सन्देह**' इति कुं.पाठः ।

५ '**सकर्दमं तु वर्षासु गृहम्**' इति कुं.पाठः ।

**सकर्दमाशुभार्द्रासु** इत्यत्र कर्दमसहितानि यान्यशुभानि अमेध्यानि तैः, **आर्द्रासु** स्थालीषु **गृह्यं** ग्रहणयोग्यं हस्तम् ।

**[१]वामे कृत्वा गुदे दद्यात्तिस्रः पञ्च्यां तथैव च ।**
**हस्तशौचं प्रकर्तव्यं मूत्रशौचविधेस्तथा ॥ ४९ ॥**

**वामे कृत्वा** इत्यत्र **कृत्वा** शौचं कृत्वा ।

**अप्रक्षालितपादस्तु [२]पाणिनाऽऽपादबन्धनात् ।**
**अधस्तादुपरिष्टाच्च ततः पाणिमुपस्पृशेत् ॥ ५५ ॥**

**पाणिनाऽऽपादबन्धनात्** इत्यत्र **आपादबन्धनात्** पादबन्धनं गुल्फपर्यन्तम् ।

**॥ इत्यानुशासनिके दानकथने महाशौचं नाम चत्वारिंशोत्तरशततमोऽध्यायः ॥**
**॥ इत्यानुशासनिके शूद्रधर्मकथनं नाम एकचत्वारिंशोत्तरशततमोऽध्यायः ॥**
**॥ इत्यानुशासनिके पर्वणि शुश्रूषा नाम द्विचत्वारिंशोत्तरशततमोऽध्यायः ॥**

## ॥ अथ त्रिचत्वारिंशोत्तरशततमोऽध्यायः ॥

**[३]यदोपयातन्तु भवेत्स्त्रीकृतः परिचारके ।**
**[४]अन्नावकाशशयनं तस्य संवत्सरं स्मृतम् ॥ १५ ॥**

**यदोपयातन्तु भवेत्** इत्यत्र **परिचारके** शूद्रे **स्त्रीकृतं** स्त्रिया बलात्कारेण कृतम् **उपयातम्** उपगमनं यदा भवेत् तदा **तस्य**

---

१. **'कामं दत्त्वा'** इति कुं.पाठः ।; २. **'पाणिमामणिबन्धनात्'** इति कुं.पाठः ।
३. **कुं. १४९ अध्यायः** ।; **'यदपवादस्तु भवेत्स्त्रीकृतः'** इति कुं.पाठः ।
४. **'अभ्रावकाशशयनं'** इति कुं.पाठः ।

परिचारकस्य **अन्नावकाशशयनम्** अन्नस्य **अवकाशः** उदरे अवकाशो यथा भवति तथा **शयनं** स्थण्डिलशयनं निरशनतया स्थण्डिलशयनमित्यर्थः। संवत्सरं स्मृतम्, अन्यथा तस्य शान्तिर्नैव भवेत्।

**एवं प्रवर्तमानस्तु विनीतः प्रयतात्मवान्।**
**निर्णयं पुण्यपापाभ्यामचिरेणोपगच्छति ॥ २६ ॥**

**निर्णयं पुण्यपापाभ्याम्** इत्यत्र **पुण्यपापाभ्यां**, पुण्यपापयोः सकाशात् **निर्णयः** नितरां नयः अपगमनं (उपगमनं) यस्मिन् मुक्तिस्थाने तदित्यर्थः।

**॥ इत्यानुशासनिके पर्वणि दानधर्मकथने पराशरगीतायां त्रिचत्वारिंशोत्तरशततमोऽध्यायः ॥**
**॥ इत्यानुशासनिके पर्वणि दानधर्मकथने अरिष्टकथनं नाम चतुश्चत्वारिंशोत्तरशततमोऽध्यायः ॥**
**॥ इत्यानुशासनिके पर्वणि दानधर्मकथने यतिधर्मकथनं नाम पञ्चचत्वारिंशोत्तरशततमोऽध्यायः ॥**

## ॥ अथ षट्चत्वारिंशोत्तरशततमोऽध्यायः ॥

**उपलभ्य[१] त्रिभिर्ज्ञानं ज्ञानं वाऽप्यनसूयकः।**
**तथैव वर्तेद्गुरुषु भूयांसं वा समाहितः ॥ १२ ॥**

**उपलभ्य त्रिभिर्ज्ञानम्** इत्यत्र **त्रिभिः** वेदैः।

**॥ इत्यानुशासनिके दानधर्मे षट्चत्वारिंशोत्तरशततमोऽध्यायः ॥**
**॥ इति पराशरगीता समाप्ता ॥**

---

१. कुं. १५२ अध्यायः।; 'उपलभ्य तु विज्ञानं ज्ञानम्' इति कुं.पाठः ।

## ।। अथ सप्तचत्वारिंशोत्तरशततमोऽध्यायः ।।

[१]**धनं विद्यास्तथैश्वर्यं येषां न चलयेन्मतिम् ।**
**चलितां ये निगृह्णन्ति तान्नित्यं पूजयाम्यहम्** ।। १० ।।

**धनं विद्यास्तथैश्वर्यम्** इत्यत्र लब्ध्वेति योग्यपदाध्याहारः ।

**इष्टैर्दारैरुपेतानां शुचीनामग्निहोत्रिणाम् ।**
**चतुष्पादकुटुम्बानां मातले प्रणमाम्यहम्** ।। ११ ।।

**चतुष्पादकुटुम्बानाम्** इत्यत्र **चतुष्पादाः** गावः कुटुम्बा इव येषां ते तथोक्ताः ।

**।। इत्यानुशासनिके दानधर्मे सप्तचत्वारिंशोत्तरशततमोऽध्यायः ।।**

## ।। अथ अष्टचत्वारिंशोत्तरशततमोऽध्यायः ।।

[२]**अगरुः सारिणां श्रेष्ठो यक्षराक्षसभोगिनाम् ।**
**दैत्यानां सल्लकीजश्च काङ्क्षितो यश्च तद्विधः** ।। ४१ ।।

**अगरुः सारिणाम्** इत्यत्र **सारिणाम्** अन्तःसारवतां वृक्षाणां, [३]'सारो मज्ज्ञा समौ त्वक् स्त्री' इत्यमरः ।

**।। इत्यानुशासनिके सुवर्णमनुसंवादे अष्टचत्वारिंशोत्तरशततमोऽध्यायः ।।**
**।। इत्यानुशासनिके मनुसंवादे पञ्चाशोत्तरशततमोऽध्यायः ।।**
**।। इत्यानुशासनिके पर्वणि अगस्त्यसंवादः समाप्तः ।।**

---

१. कुं. १५३ अध्यायः । 'धनं विद्यां तथैश्वर्यम्' इति कुं. पाठः ।
२. कुं. १५५ अध्यायः ।
३. अ.को. द्वि. वनौषधिवर्गः श्लो १२

## ।। अथ एकपञ्चाशोत्तरशततमोऽध्यायः ।।

**चण्डाल उवाच –**

[1] **ब्राह्मणस्य गवां राजन् ह्रियन्तीनां रजः पुरा ।**
**सोममुद्ध्वंसयामास तं सोममपिबन् द्विजाः ।। ६ ।।**

**ब्राह्मणस्य गवां राजन् ह्रियन्तीनाम्** इत्यत्र **ह्रियन्तीनां** यज्ञकर्त्रा तेन राज्ञैव बलाद् ह्रियन्तीनां ब्राह्मणगवामिति सम्बन्धः । यद्यपि गोपदरजःपातेन पावित्र्यमेव । तथापि बलादपहृतब्रह्मस्वभूताः याः गावः तद्गोरजोऽपि ब्रह्मस्वसम्बन्धित्वात् ब्रह्मस्वमेव । गौर्ब्रह्मस्वमिति किं वक्तव्यमिति भावः ।

**जघ्नुस्ताः पयसा पुत्रांस्तथा पौत्रान्विधूय तान् ।**
[2] **पशूनवेक्षमाणानां साधुवृत्तेन दम्पती ।। १० ।।**

**साधुवृत्तेन दम्पती** इत्यत्र **दम्पती** भार्याभर्तारौ तौ ब्राह्मणौ च **साधुवृत्तेन** स्वकीयतपसा ह्रियमाणपशून् अवेक्षमाणान् सर्वांश्च जघ्नतुः ।

[3] **आदीप्तमिव तैलान्ते भ्रमरैरिव चार्दितम् ।**
**धावमानं सुसंरब्धं पश्य मां रजसाऽन्वितम् ।। २४ ।।**

**आदीप्तमिव तैलान्त** इत्यत्र **तैलान्ते** तैलमध्ये, **आदीप्तं** सम्यक् भर्जितमिव भर्जितश्यामाङ्गम् । **भ्रमरैः** दंशभ्रमरैः । **आर्दितं** सर्वाङ्गेषु अर्दितमिव च श्यामाङ्गम् । **।। इति एकपञ्चाशोत्तरशततमोऽध्यायः ।।**

---

१. **कुं. १५८ अध्यायः ।**; BORI पृ. ५४०; BORI; **'ब्राह्मणस्य गवां राजन् प्रगान्तीनाम्'** इति कुं.पाठः ।

२. BORI पृ. ५४१; $T_{2.3}$,$G_{2.4}$,$M_4$; **'पशूनवेक्षमाणश्च'** इति कुं.पाठः ।

३. BORI पृ. ५४२; $T_3$,$M_2$; **'आदीप्तमिव चैलान्तम्'** इति कुं.पाठः ।

## ।। अथ द्विपञ्चाशोत्तरशततमोऽध्यायः ।।

**गौतम उवाच –**

**यत्र प्रेतो नन्दति पुण्यकर्मा यत्र प्रेतः शोचते पापकर्मा ।**[1]
**वैवस्वतस्य सदने महात्मनस्तत्र त्वाऽहं हस्तिनं यातयिष्ये १४**

**तत्र त्वाऽहं हस्तिनं यातयिष्य** इत्यत्र हस्तिनं नयतीति हस्तिनः तम् । 'णीञ् प्रापणे' इति धातोः औणादिको डप्रत्ययः ।

**गौतम उवाच –**

**मन्दाकिनी वैश्रवणस्य राज्ञो महाभागा भोगिजनप्रवेश्या ।**
**गन्धर्वयक्षैरप्सरोभिश्च जुष्टा तत्र त्वाहं हस्तिनं यातयिष्ये ।।१८।।**

**मन्दाकिनी वैश्रवणस्य राज्ञ** इत्यत्र एतादृशपुण्यलोकेऽपि त्वां **यातयिष्ये** यातनावन्तं करिष्ये ।

**गौतम उवाच –**

**यत्रोत्तराः कुरवो भान्ति रम्या**
**देवैः सार्धं मोदमाना नरेन्द्र ।**
**यत्राग्नियौनाश्च वसन्ति विप्रा**
**अब्योनयः पर्वतयोनयश्च ।। २५ ।।**

**यत्राग्नियौनाश्च वसन्ति** इत्यत्र अग्निरेव **योनिः** कारणं येषां ते **अग्नियौनाः** ।

---

१. कुं. १५९ अध्यायः ।

[१] यस्मादिदं लोकपदं प्रजानां
मत्वागमं परिपादे गजस्य ।
तस्माद्भगवान् प्रणतं माऽनुशास्तु
ब्रवीषि यत्तत्करवाणि सर्वम् ॥ ५६ ॥

**यस्मादिदं लोकपदं प्रजानाम्** इत्यत्र यस्मात् प्रजानाम् इदं **लोकपदं**, लोक्यत इति लोकः तत् पदम् । गजानां **परिपादे** (पादस्य) पदे मत्वा आगमं, 'सर्वं हस्तिपदे मग्नम्' इति वचनात् । सर्वोन्नत-पदत्वात् गजं नेतुम् आगमम् इत्यर्थः ।

श्वेतं करेणुं मम पुत्रं हि नागं
प्रियं तु मे षष्टिवर्षं तु बालम् ।
यो मे वने वसतोऽभद्वितीय-
स्तमेव मे देहि सुरेन्द्र नागम् ॥ ५७ ॥

करेणुम् अपालयमिति सम्बन्धः ।

॥ इत्यानुशासनिके पर्वणि दानधर्मे द्विपञ्चाशोत्तरशततमोऽध्यायः ॥

## ॥ अथ त्रिपञ्चाशोत्तरशततमोऽध्यायः ॥

[२] स्रोतश्च यावद्गङ्गायाश्छन्नमासीज्जगत्पते ।
दक्षिणाभिः प्रवृत्ताभिर्मम नागां च तत्कृते ॥ २४ ॥

---

१. BORI पृ. ५५२; BORI,$M_1$,$D_{10}$;'मघवाऽहं लोकपथं प्रजानाम् मन्वागमं परिवादे गजस्य' इति कुं.पाठः ।

२. कुं. १६० अध्यायः ।

**स्रोतश्च यावद्गङ्गायाश्छन्नमासीत्** इत्यत्र गङ्गायाः स्रोतः **यावत्** यावद्भिर्नागैश्छन्नमासीत् दक्षिणाभिः प्रवृत्ताभिः तावन्नागाः **तत्कृते** दक्षिणाकृते दत्ताः । मम नागाश्च तावन्त इति योजना ।

**शम्याक्षेपैरयजं यच्च[१] स शस्त्राणामयुतैश्चापि यत्र ।**
**त्रयोदशद्वादशाहैश्च देव सपौण्डरीकैर्न च तेषां फलेन ॥२८॥**

**स शस्त्राणामयुतैश्चापि यत्र** इत्यत्र सः अहं **शस्त्राणां** गानरहित-वेदमन्त्राणाम् अयुतैः देवानयजमिति सम्बन्धः ।

**एकादशाहैरयजं सदक्षिणैर्द्वि-**
**र्द्वादशाहैरश्वमेधैश्च देव ।**
**[२]अर्कायनैः षोडशभिश्च ब्रह्मं-**
**स्तेषां फलेनेह न चागतोऽस्मि ॥ ३२ ॥**

**अर्कायनैः षोडशभिश्च** इत्यत्र सूर्यस्य उत्तरायणे दक्षिणायने च क्रियमाणा यज्ञा **अर्कायनाः** ।

**[३]इन्द्रेण गुह्यं विहितं वै गुहायां**
**यद्भार्गवस्तपसेहाभ्यविन्दत् ।**
**जाज्वल्यमानमुशनास्तेजसेह**
**[४]तत्साधयामासाहं वरेण ॥ ३९ ॥**

---

१. **'यच्च देवाञ्शतैः क्रतूनामयुतैश्चापि यच्च'** इति कुं.पाठः ।
२. BORI पृ. ५५७; $D_{1.4.9}$; **'गवां धनैः षोडशभिश्च'** इति कुं.पाठः ।
३. **'इन्द्रेण गुह्यं निहितम्'** इति कुं.पाठः ।
४. BORI पृ. ५५८; $D_{5.7.9}$; **'तत्साधयामासमहं वरेण्य'** इति कुं.पाठः ।

**इन्द्रेण गुह्यं विहितं वै गुहायाम्** इत्यत्र इन्द्रेण गुहायां विहितं गुह्यं जाज्वल्यमानम् अनशनाख्यं यत्तपः भार्गवः उशनाः तपसा अभ्यविन्दत् तत्तपः अहं वरेण साधयामास ।

**॥ इत्यानुशासनिके पर्वणि दानधर्मकथने पितामहभगीरथसंवादो नाम त्रिपञ्चाशोत्तरशततमोऽध्यायः ॥**

## ॥ अथ चतुःपञ्चाशोत्तरशततमोऽध्यायः ॥

**[१]त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् ।**
**अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते** ॥ ४२ ॥

**अदृष्टमद्भिर्निर्णिक्तम्** इत्यत्र **अदृष्टं** शूद्रादीनामदर्शनम् ।

**अग्निमालभ्य तोयेन सर्वान् प्राणानुपस्पृशेत् ।**
**गात्राणि चैव सर्वाणि नाभिं पाणितले तथा** ॥ ६३ ॥

**सर्वान् प्राणानुपस्पृशेत्** इत्यत्र **प्राणान्** इन्द्रियाणि ।

**[२]नाधितिष्ठेत् कदाचन केशभस्मकपालिकाः ।**
**अन्यस्य चाप्यवस्नातं दूरतः परिवर्जयेत्** ॥ ६४ ॥

**नाधितिष्ठेत् कदाचन** इत्यत्र पुरीषमूत्रोत्सर्जनकाले नाधितिष्ठेत् ।

**रक्तं शिरसि धार्यं तु [३]तथा कालेयमित्यपि ।**
**काञ्चनीयापि माला या न सा दुष्यति कर्हिचित्** ॥ ८९ ॥

---

१. कुं. १६१ अध्यायः । ; २. **'नाधितिष्ठेत्तुषं जातु'** इति कुं.पाठः ।
३. **'तथा वानेयमित्यपि'** इति कुं.पाठः ।

**तथा कालेयमित्यपि** इत्यत्र **कालेयं** तत्तदृतुकालोत्पन्नम्। [१]'कालेयकं च कालानुसार्यम्' इत्यमरः।

**पानीयं पायसं सक्तून्दधिसर्पिर्मधून्यपि।**
**[२]निरस्य दोषमन्येषां न प्रदेयं तु कस्यचित्** ॥ १०४ ॥

**निरस्य दोषमन्येषाम्** इत्यत्र **निरस्य** धिकृत्य।

**भुञ्जानो मनुजव्याघ्र नैव शङ्कां समाचरेत्।**
**[३]अभिगम्योदपानं तु न कर्तव्यं भवार्थिना** ॥ १०५ ॥

**अभिगम्योदपानम्** इत्यत्र **अभिगम्य** अभितो गत्वा **उदपानम्** उदकपानम्। इतस्ततो गच्छन् (ता) उदकपानं न कर्तव्यमित्यर्थः।

**न दिवा मैथुनं गच्छेन्न कन्यां न च बन्धकीम्।**
**न चास्नातां स्त्रियं गच्छेत्तथाऽऽयुर्विन्दते महत्** ॥ ११३ ॥

**न कन्यां न च बन्धकीम्** इत्यत्र **बन्धकीं** पुंश्चलीम्। [४]'पुंश्चली बन्धकी धर्षणीबन्धक्यसती कुलटेत्वरी' इति अमरः।

**गृहे पारावता धार्याः शुकाश्च सहशारिकाः।**
**देवताप्रतिमाऽऽदर्शाश्चन्दनाः पुष्पवल्लिकाः** ॥ १२० ॥

**शुकाश्च सहशारिका** इत्यत्र **शारिका** शुकी।

---

१. अ.को. द्वि. मनुष्यवर्गः श्लो. १२६
२. **'निरस्य शेषमन्येषाम्'** इति कुं.पाठः।
३. **'दधि चाप्यनुपानं वै'** इति कुं.पाठः।
४. अ.को. द्वि. मनुष्यवर्गः श्लो. १०

[१] शुद्धं जलं सुवर्णं च रजतं गृहमङ्गलम् ।
गृहेष्वेते न पापाय निविष्टास्तैलपायिकाः ॥ १२१ ॥

**निविष्टास्तैलपायिका** इत्यत्र **तैलपायिकाः** सारसपक्षिणां योषितः । [२] 'हंसस्य योषिद्वरटा सारसस्य तु लक्ष्मणा । जतुकाजिनपत्रा स्यात् परोष्णी तैलपायिका' इत्यमरः ।

[३] उपदीपाश्च गृध्राश्च कपोता भ्रमरास्तथा ।
निविशेयुर्यदा तत्र शान्तिमेव तदाऽऽचरेत् ॥१२२॥

**उपदीपाः** पतङ्गाः ।

ब्राह्मणस्थपतिभ्यां च निर्मितं यन्निवेशनम् ।
तदा वसेत् सदा प्राज्ञो भवार्थी मनुजेश्वर ॥ १२६ ॥

**ब्राह्मणस्थपतिभ्यां च निर्मितं यन्निवेशनम्** इत्यत्र ब्राह्मणेन शुद्धिः कर्तव्या । स्थपतिना गृहं कर्तव्यमिति विवेकः ।

सौहित्यं न च कर्तव्यं रात्रौ न च समाचरेत् ।
न भुक्त्वा मैथुनं गच्छेन्न धावेन्नातिहासकम् ॥ १३० ॥

**सौहित्यं न च कर्तव्यम्** इत्यत्र **सौहित्यं** पितृतर्पणम् । [४] 'सौहित्यं तर्पणं तृप्तिः' इत्यमरः ।

---

१ BORI पृ. ५७२; $D_{10}$,S; **'गृहेष्वेते न पापाय यथा वै तैलपायिकाः'** इति कुं.पाठः ।

२ अ.को. प्र. सिंहादिवर्गः श्लो. २५-२६

३ BORI पृ. ५७२; $D_{4.7.9.10}$,$T_{2.3}$,$G_3$; **'उद्दीपकाश्च'** इति कुं.पाठः ।

४ अ.को. द्वि. वैश्यवर्गः श्लो. ५६

**नक्षत्रे न च कुर्वीत यस्मिञ्जातो भवेन्नरः ।**
**न प्रोष्ठपदयोः कार्यं तथाऽऽग्नेये च भारत ॥ १३५ ॥**
**दारुणेषु च सर्वेषु [१] प्रत्यारम्भं विवर्जयेत् ।**
**ज्योतिषे यानि चोक्तानि तानि सर्वाणि वर्जयेत् ॥ १३६ ॥**

**नक्षत्रे न च कुर्वीत** इत्यत्र आदौ प्रत्यारम्भमिति वक्ष्यमाणं कर्म योज्यम् । अभिनवकार्यारम्भः **प्रत्यारम्भः** ।

**पञ्चमे दिवसे नारी षष्ठेऽहनि पुमान् भवेत् ।**
**आषोडशाद्दतुर्मुख्यः पुत्रजन्मनि शब्दितः ॥ १६६ ॥**

**पञ्चमे दिवसे नारी** इत्यत्र **नारी** कन्या प्रसूता भवेत् । षष्ठेऽहनि पुमान् प्रसूतो भवेत् ।

**॥ इति दानधर्मकथने आयुष्यप्रमाणकथनं नाम**
**चतुःपञ्चाशोत्तरशततमोऽध्यायः ॥**

## ॥ अथ पञ्चपञ्चाशोत्तरशततमोऽध्यायः ॥

**[२] अनुजस्य पितुर्दायं जङ्घाश्रयबलोऽध्वगः ।**
**स्वयमीहेत लब्धं तु नाकामो दातुमर्हति ॥ ११ ॥**

**अनुजस्य पितुर्दायं जङ्घाश्रयबलोऽध्वग** इत्यत्र जङ्घाबलवान् आश्रयबलवान् । **अध्वगः** सन्मार्गरतो ज्येष्ठः । लब्धं पितुर्दायं स्वयमीहेत । **अकामः** तदीयदुश्चरित्रदर्शनेन दातुमिच्छारहितः दातुं नार्हति ।

---

१. BORI पृ. ५७४; $B_1$,$D_{4.10}$;**'प्रत्यरिं च विवर्जयेत्'** इति कुं.पाठः ।
२. कुं.१६२ अध्यायः । M2, BORI पृ. ५७८; **'अनुजस्य पितुर्दायो जङ्घाश्रमफलोऽध्वगः'** इति कुं.पाठः ।

**भ्रातॄणामविभक्तानामुत्थानमपि चेत्सह ।**
**न पुत्रभागं विषमं पिता दद्यात् कदाचन ॥ १२ ॥**

**भ्रातॄणामविभक्तानामुत्थानमपि चेत्सह** इत्यत्र **उत्थानम्** उत्पत्तिश्च सह चेत् एकमातृजश्चेदित्यर्थः । भिन्नमातृजत्वे एक एव पुत्रः बहूनां भागमर्हति ।

**ज्येष्ठो नैवाऽवमन्येत[१] दुष्कृतः सुकृतोऽपि वा ।**
**गुरूणामपराधो हि शक्यः क्षन्तव्य एव च ॥ १३ ॥**

**ज्येष्ठो नैवाऽवमन्येत दुष्कृतः सुकृतोऽपि वा** इत्यत्र **दुष्कृतः** दुःखेन गृह्यकृत्यादिकार्यकृतः । **सुकृतः** सुखेन कार्यकृतश्च भ्रातॄन्नावमन्येत ।

**यदि स्त्रियो यद्यवरजाः[२] श्रेयः पश्येत्तदाचरेत् ।**
**धर्मार्थः श्रेय इत्याहुस्त्रयो ज्ञाता विधायकाः ॥ १४ ॥**

**अवरजाः स्त्रियः** सहोदरीः स्त्रियः । यथा पश्येत् तथा तेषामपि श्रेयः आचरेत् ।

**॥ इत्यानुशासनिके पर्वणि पञ्चपञ्चाशोत्तरशततमोऽध्यायः ॥**

## ॥ अथ षट्पञ्चाशोत्तरशततमोऽध्यायः ॥

**ब्रह्मक्षत्रं[३] त्रिरात्रं तु विहितं कुरुनन्दन ।**
**द्विस्त्रिरात्रमथैकाहं निर्दिष्टं पुरुषर्षभ ॥ ११ ॥**

---

१. **'न ज्येष्ठो वाऽवमन्येत'** इति कुं.पाठः ।
२. **'यदि स्त्री यद्यवरजः'** इति कुं. पाठः ।
३. कुं. १६३ अध्यायः । **'ब्रह्मक्षत्रे'** इति कुं.पाठः ।

**ब्रह्मक्षत्रं त्रिरात्रं तु** इत्यत्र त्रिरात्रम् उपवासः । **द्विस्त्रिरात्रं** षड्रात्रम् **एकाहम्** एकरात्रिम् । काम्योपवासविधिरयम् ।

**[1]चतुर्थभक्ताक्रमणं वैश्ये शूद्रे विधीयते ।**
**त्रिरात्रं न तु धर्मज्ञैर्विहितं ब्रह्मवादिभिः ॥ १३ ॥**

**चतुर्थभक्ताक्रमणं** चतुर्थयामे **भक्तस्य** अन्नस्य **आक्रमणं** भोजनम् ।

**यस्तु संवत्सरं पूर्णं चतुर्थं भक्तमश्नुते ।**
**अहिंसानिरतो नित्यं सत्यवाग्विजितेन्द्रियः ॥ ४० ॥**

**चतुर्थं भक्तमश्नुत** इत्यत्र एकदिने उपोष्य परदिने रात्रिभोजनं चतुर्थं भक्तम् ।

**अष्टमेन तु भक्तेन जीवन्संवत्सरं नृप ।**
**गवामयनयज्ञस्य फलं प्राप्नोति मानवः ॥ ४४ ॥**

**अष्टमेन तु भक्तेन** इत्यत्र षष्ठकालवत् सप्तकालानुपोष्य तद्रात्रौ भोजनेनेत्यर्थः ।

**पक्षे पक्षे गते राजन्योऽश्नीयाद्वर्षमेव तु ।**
**षण्मासानशनं तस्य भगवानङ्गिराऽब्रवीत् ।**
**षष्टिं वर्षसहस्राणि दिवमावसते च सः ॥ ४६ ॥**

**पक्षे पक्षे गते** इत्यत्र एकपक्षे उपवासेन गते पुनः पक्षान्तरे योऽश्नीयादित्यर्थः ।

---

१. **'चतुर्थभक्तक्षपणम्'** इति कुं.पाठः ।

**क्षीणस्याप्यायनं दृष्टं क्षतस्य क्षतरोहणम् ।**
**व्याधितस्यौषधग्रामः क्रुद्धस्य च प्रसादनम् ॥ ५६ ॥**

**क्षतस्य क्षतरोहणम्** इत्यत्र **क्षतस्य** यदृच्छया जातस्य क्षतस्य औषधादिना तस्मात् क्षतात् **रोहणम्** आरोहणं परिहार इत्यर्थः ।

**क्रुद्धस्य च प्रसादनम्** इत्यत्र क्रुद्धस्य सतः स्वस्य अन्यैः क्रियमाणं प्रसादनम् ।

॥ इति दाने उपवासविधिर्नाम षट्पञ्चाशोत्तरशततमोऽध्यायः ॥

## ॥ अथ सप्तपञ्चाशोत्तरशततमोऽध्यायः ॥

**यस्तु[1] काल्यं तथा सायं भुञ्जानो नान्तरा पिबेत् ।**
**अहिंसानिरतो नित्यं जुह्वानो जातवेदसम् ।**
**षड्भिरेव स वर्षैस्तु सिध्यते नात्र संशयः ॥ ६ ॥**

**यस्तु काल्यं तथा सायम्** इत्यत्र **काल्यम्** अहर्भोजनस्य यो विहितः कालः तत्र विद्यमानम् ।

**आवर्तनानि चत्वारि तथा पद्मानि द्वादश ।**
**दाराग्निपरिमाणश्च[2] तत्रासौ वसते सुखम् ॥ २२ ॥**

**दाराग्निपरिमाणश्च** इत्यत्र दारगुल्मसम्बन्धोऽग्निः **दाराग्निः**, तत् **परिमाणः** तद्वत् भासमानः ।

॥ इत्यानुशासनिके उपवासविधिर्नाम सप्तपञ्चाशोत्तरशततमोऽध्यायः ॥

---

१. कुं. १६४ अध्यायः ।; BORI पृ. ५८८; T,G,$M_4$; 'यस्तु कल्यम्' इति कुं.पाठः ।

२. 'शराग्निपरिमाणं च' इति कुं.पाठः ।

## ।। अथ अष्टपञ्चाशोत्तरशततमोऽध्यायः ।।

[१] **नारायणेऽथ रुद्रे वा भक्तिस्तीर्थं परं मतम् ।**
[२] **शौचलक्षणमेतत्तु सर्वत्रैवान्ववेक्षणम्** ।। ६ ।।

**शौचलक्षणमेतत्तु सर्वत्रैवान्ववेक्षणम्** इत्यत्र 'दृष्टिपूतं न्यसेत् पादं वस्त्रपूतं जलं पिबेत् । सत्यपूतां वदेद्वाणीं मनःपूतं समाचरेत्' इति वचनात् **सर्वत्र** पादविन्यासजलपानादौ स्थलशुद्ध्यादिकमनुसृत्य अन्ववेक्षणं सर्वत्रान्ववेक्षणमित्यर्थः ।

**।। इत्यानुशासनिके दाने शौचतीर्थवर्णनं नाम**
**अष्टपञ्चाशोत्तरशततमोऽध्यायः ।।**
**।। इत्यानुशासनिके पर्वणि उपवासकथनं नाम**
**एकोनषष्ट्युत्तरशततमोऽध्यायः ।।**
**।। इत्यानुशासनिके पर्वणि युधिष्ठिरबृहस्पतिसंवादे**
**संसारचक्रवर्णनं नाम षष्ट्युत्तरशततमोऽध्यायः ।।**
**।। इत्यानुशासनिके पर्वणि अन्नदानप्रशंसा नाम**
**एकषष्ट्युत्तरशततमोऽध्यायः ।।**

## ।। अथ द्विषष्ट्युत्तरशततमोऽध्यायः ।।

[३] **यथा परः प्रक्रमते परेषु तथा परे प्रक्रमन्ते परस्मिन् ।**
**निषेवते स्वसमां जीवलोके यथा धर्मो [४] निपुणेनोपदिष्टः** ।।१०।।

१. कुं. १७० अध्यायः ।
२. BORI पृ. ६०३; **'शौचलक्षणमेतत्ते सर्वत्रैवान्ववेक्षतः'** इति कुं.पाठः ।
३. **कुं. १७५ अध्यायः ।**
४. BORI पृ. ६२३; $D_{N2}$; **'नैपुणेनोपदिष्टः'** इति कुं.पाठः ।

**यथा धर्मो निपुणेनोपदिष्ट** इत्यत्र निपुणेन यथा उपदिष्टः तथैव धर्मस्तिष्ठति न तु स्वेच्छया ।

**॥ इत्यानुशासनिके पर्वणि दानधर्मकथने द्विषष्ट्युत्तरशततमोऽध्यायः ॥**
**॥ इति युधिष्ठिरबृहस्पतिसंवादः समाप्तः ॥**

## ॥ अथ त्रिषष्ट्युत्तरशततमोऽध्यायः ॥

**[१] चतुर्विधेयं निर्दिष्टा ह्यहिंसा ब्रह्मवादिभिः ।**
**एकैकतोऽपि विभ्रष्टा न भवन्त्यरिसूदन ॥ ४ ॥**

**चतुर्विधेयं निर्दिष्टा** इत्यत्र मनसा अहिंसा, वाचा अहिंसा, कायेन अहिंसा, कर्मणा अहिंसेति **चतुर्विधा** प्रोच्यते ।

**यथा सर्वश्चतुष्पादैः त्रिभिः पादैर्न तिष्ठति ।**
**तथैवेयं महीपाल प्रोच्यते[२] कारणैस्त्रिभिः ॥ ५ ॥**

**कारणैस्त्रिभिः** इत्यत्र मनोवाक्कर्मदण्डाख्यैः **त्रिभिः** कारणैः ।

**[३] रसश्च प्रतिजिह्वायां ज्ञानं प्रज्ञायते तथा ।**
**तथा शास्त्रेषु नियतं रागो [४]ह्यास्वादनाद् भवेत् ॥ १४ ॥**

**रसश्च प्रतिजिह्वायाम्** इत्यत्र प्रतिजिह्वायां यथा रसो जायते यथा च शास्त्रेषु नियतं ज्ञानं प्रज्ञायते तथा आस्वादनाद् रागो जायत इति योजना ।

---

१. कुं. १७६ अध्यायः ।
२. BORI पृ. ६२४; **'कारणैः प्रोच्यते त्रिभिः'** इति कुं.पाठः ।
३. BORI पृ. ६२५; $V_1$,B,$M_{1.2}$; **'रसश्च हृदि जिह्वाया'** इति कुं.पाठः ।
४. BORI पृ. ६२५; $M_2$; **'ह्यास्वादिताद्'** इति कुं. पाठः ।

**संस्कृतासंस्कृताः पक्का लवणालवणास्तथा ।**
**प्रजायन्ते यथा भावास्तथा चित्तं निरुध्यते ॥ १५ ॥**

**संस्कृतासंस्कृताः पक्का लवणालवणास्तथा** इत्यत्र असंस्कृते अपक्के अलवणे च यथा असारत्वान्मनो(मतो)निरोधः क्रियते तथा संस्कृतादिमांसमपि दोषहेतुत्वान्नापेक्षितमिति मनोनिरोधः कर्तव्य इत्यर्थः ।

**रसगृद्ध्याऽभिभूता ये प्रशंसन्ति फलार्थिनः ।**
**[1]प्रशंसामेव मांसस्य दोषकर्मफलान्विता ॥ १९ ॥**

**प्रशंसामेव मांसस्य दोषकर्मफलान्विता** इत्यत्र दोषकर्मफलान्विताः मांसस्य प्रशंसामेव कुर्वन्ति इति योग्यपदाध्याहारेण योजना ।

**एवमेषा महाराज [2]चतुर्भिः कारणैः वृता ।**
**अहिंसा तव निर्दिष्टा सर्वधर्मानुसंहिता ॥ २२ ॥**

**चतुर्भिः कारणैः वृता** इत्यत्र कायदण्डेन सह चतुर्भिः कारणैर्वृता इत्यर्थः ।

**॥ इत्यानुशासनिके पर्वणि अहिंसास्तुतिर्नाम त्रिषष्ट्युत्तरशततमोऽध्यायः ॥**

## ॥ अथ चतुःषष्ट्युत्तरशततमोऽध्यायः ॥

**[3]सर्वे वेदा न तत्कुर्युः सर्वे यज्ञाश्च भारत ।**
**यो भक्षयित्वा मांसानि पश्चादपि निवर्तते ॥ १८ ॥**

---

१. BORI पृ. ६२५; $M_2$, BORI; **'प्रशंसा ह्येव मांसस्य दोषकल्पफलान्विता'** इति कुं.पाठः ।

२. BORI पृ. ६२५; **'चतुर्भिः कारणैः स्मृता'** इति कुं.पाठः ।

३. कुं. १७७ अध्यायः ।

**सर्वे वेदा न तत्कुर्युः** इत्यत्र **तत्** मांसत्यागजनितपुण्यम् ।

**किं पुनर्हन्यमानानां तरसा जीवितार्थिनाम् ।**
**अरोगाणामपापानां पापैर्मांसोपजीविभिः ॥ २२ ॥**

**पापैर्मांसोपजीविभिः** इत्यत्र हन्यमानानामिति पूर्वेण सम्बन्धः ।

**मृत्युतो भयमस्तीह[१] शङ्कायां दुःखमुत्तरम् ।**
**धर्मस्यायतनं तस्मान्मांसस्य परिवर्जनम् ॥ २३ ॥**

**मृत्युतो भयमस्तीह** इत्यत्र **मृत्युतः** मरणात् स्वमरणादित्यर्थः ।

**यदि चेत्खादको न स्यान्न तदा घातको भवेत् ।**
**[२]घातकः खादनार्थाय यथा भवति वै नरः ॥ ३० ॥**

**घातकः खादनार्थाय यथा भवति वै नर** इत्यत्र तथा स्वयमपि कस्यचित् खादनार्थाय भवति ।

**॥ इत्यानुशासनिके पर्वणि मधुमांसभक्षणनिवृत्तिर्नाम चतुःषष्ट्युत्तरशततमोऽध्यायः ॥**

## ॥ अथ पञ्चषष्ट्युत्तरशततमोऽध्यायः ॥

**[३]मां स भक्षयते यस्माद्भक्षयिष्ये तमप्यहम् ।**
**एतन्मांसस्य मांसत्वमनुबुध्यस्व भारत ॥ ३७ ॥**

---

१. BORI पृ. ६२८; $V_1$,$B_{1.2.4.6}$; **'भयमस्तीति'** इति कुं.पाठः ।
२. BORI पृ. ६२९; $M_1$,$G_3$; **'घातकः खादनार्थाय तद्घातयति वै नरः'** इति कुं.पाठः । ३. **कुं. १७८ अध्यायः ।**

**एतन्मांसस्य मांसत्वम्** इत्यत्र मां यो भक्षयति सः मम भक्ष्य इति व्युत्पत्तिः इत्यर्थः ।

**॥ इत्यानुशासनिके पर्वणि अहिंसास्तुतिर्नाम पञ्चषष्ट्युत्तरशततमोऽध्यायः ॥**

## ॥ अथ सप्तषष्ट्युत्तरशततमोऽध्यायः ॥

**[१] वाग्बुद्धिपाणिपादैश्च समुपेता विपश्चितः ।**
**किमायाति मनुष्यस्य [२] मन्त्रार्थस्यापि जीवतः ॥ ५ ॥**

**मन्त्रार्थस्यापि जीवत** इत्यत्र मन्त्रार्थौ (मन्त्राणाम् अर्थौ) यस्मिन् तस्य मनुष्यस्य **जीवतः** जीवात् किं पुण्यं हीयते ।

**क्रमात्तेऽहं विनेष्यामि ब्रह्मत्वं यदि चेच्छसि ॥ ७ ॥**

**ब्रह्मत्वं** ब्राह्मणत्वम् ।

**[३] मम ते दर्शनं प्राप्तं तच्चैव सुकृतं त्वया ।**
**तिर्यग्योनौ स्म जातेन मम चाभ्यर्चनात्तथा ॥ १९ ॥**

**मम ते दर्शनं प्राप्तं तच्च वै सुकृतं त्वया** इत्यत्र तत् मम दर्शनहेतुभूतं मातृसेवाख्यं पुण्यं च त्वया **सुकृतं** सुष्ठु कृतं ते सुकृतम् । तेन, त्वया मम दर्शनं प्राप्तम् ।

**॥ इत्यानुशासनिके पर्वणि सप्तषष्ट्युत्तरशततमोऽध्यायः ॥**

---

१. कुं. १८० अध्यायः ।
२. BORI पृ. ६४३; $D_{4.10}$; **'मन्दस्यार्थस्य जीवतः'** इति कुं.पाठः ।
३. BORI पृ. ६४५; **'ममैतद्दर्शनं प्राप्तं तच्च वै सुकृतं पुरा'** इति कुं.पाठः ।

## ।। अथ अष्टषष्ट्युत्तरशततमोऽध्यायः ।।

**भो[१] भो ब्रह्मर्षभ श्रीमन् मा[२] व्यथिष्ठाः कदाचन ।**
**शुभकृच्छुभयोनीषु पापकृत्पापयोनिषु** ।। ९ ।।

**भो भो ब्रह्मर्षभ श्रीमन् मा व्यथिष्ठाः कदाचन** इत्यत्र **मा व्यथिष्ठाः** मृत्योर्मा व्यथिष्ठाः इत्यर्थः ।

**।। इत्यानुशासनिके पर्वणि अष्टषष्ट्युत्तरशततमोऽध्यायः ।।**

## ।। अथ एकोनसप्तत्युत्तरशततमोऽध्यायः ।।

**कृष्णद्वैपायनो[३] राजन्नज्ञातचरितं चरन् ।**
**वाराणस्यामुपातिष्ठन्मैत्रेयं स्वैरिणीकुले** ।। ३ ।।

**वाराणस्यामुपातिष्ठन्मैत्रेयं स्वैरिणीकुल** इत्यत्र स्वेच्छया आ-समन्तात् मेरोः चतुर्दिक्षु **ईरणं** प्रवाहरूपेण गमनं यस्याः सा स्वैरिणी गङ्गा नदी । तस्याः **कुले** वंशे । यद्वा उक्तव्युत्पत्त्या स्वेच्छया प्रवहन्तीनां पञ्चसरितां कुलं समूहो यस्मिन् तस्मिन् स्थले । स्वेन सता त्रिविक्रमरूपेण आसमन्तात् **ईरणं** प्रेरणं यस्याः सा स्वैरिणी गङ्गा तस्याः **कुले** तीरे ।

**पृथगाचरितं तात पृथगाचरितात्मनः ।**
**अल्पान्तरमहं मन्ये विशिष्टमपि चान्वयात्** ।। ८ ।।

---

१. कुं. १८१ **अध्यायः** ।
२. BORI पृ. ६४६; $D_{8.9}$; **'मा व्यथिष्ठाः कथञ्चन'** इति कुं.पाठः ।
३. कुं. १८२ **अध्यायः** ।

**अल्पान्तरमहं मन्य** इत्यत्र आवयोः अहम् अल्पान्तरं मन्ये । **अन्वयात्** शास्त्रसमन्वयात् त्वां विशिष्टं च मन्ये । ऋषिकुलत्वात् कुलमुभयोः समानम् । ज्ञानेन तु त्वमेव विशिष्ट इति भावः ।

**व्यास उवाच –**

**अतिच्छेदातिवादाभ्यां विस्मयो[१]ऽयं समागतः ।**
**असत्यं वेदवचनं कस्माद्वेदोऽनृतं वदेत् ॥ ९ ॥**

**अतिच्छेदातिवादाभ्याम्** इत्यत्र वेदे तत्र तत्र अतिशयितकर्मणो यो वादः सोऽतिवादः । तत्फलतया कथ्यमानः अतिशयितपापच्छेदो यः सोऽतिच्छेदः । ताभ्यां तथैव ज्ञायमानाभ्यां निमित्ताभ्यां अयं विस्मयः समागतः ।

**[२]अतो दानपवित्रेण प्रीतोऽस्मि तपसैव च ।**
**दूरात्पुण्यवतो गन्धः पुण्यस्यैव च दर्शनात् ॥ १४ ॥**

**अतो दानपवित्रेण** इत्यत्र दानात् पवित्रेण, तपसा पवित्रं दानं वा दानपवित्रं तेन ।

**॥ इत्यानुशासनिके दाने मैत्रेयभिक्षा नाम एकोनसप्तत्युत्तरशततमोऽध्यायः ॥**

## ॥ अथ सप्तत्युत्तरशततमोऽध्यायः ॥

**[३]यदेव ददतः पुण्यं तदेव प्रतिगृह्णतः ।**
**न ह्येकचक्रं वर्तेत इत्येवमृषयो विदुः ॥ १६ ॥**

---

१. **'स्मयोऽयं समुपागतः'** इति कुं.पाठः ।
२. BORI पृ. ६४९; **'ततो दानपवित्रेण'** इति कुं.पाठः ।
३. कुं. १८३ अध्यायः ।

**न ह्येकचक्रं वर्तेत** इत्यत्र दातुः प्रतिग्रहीतुर्वा अभावे **एकचक्रं** यानमिव न वर्तेत ।

**।। इति आनुशासनिके पर्वणि दानधर्मे मैत्रेयभिक्षा नाम सप्तत्युत्तरशततमोऽध्यायः ।।**

**।। इति सुमनाशाण्डिलीसंवादे एकसप्तत्युत्तरशततमोऽध्यायः ।।**

**।। इति दानधर्मे पुण्डरीकनारदसंवादे नारायणस्य सर्वोत्तमत्वकथनं नाम द्विसप्तत्युत्तरशततमोऽध्यायः ।।**

## ।। अथ त्रिसप्तत्युत्तरशततमोऽध्यायः ।।

**[१]असत्सु विनिविष्टेषु ब्रुवतो मुक्तसंशयम् ।**
**गुणास्ते न विराजन्ते तेनासि हरिणः कृशः ।। २५ ।।**

**असत्सु विनिविष्टेषु ब्रुवतो मुक्तसंशयम्** इत्यत्र मुक्तसंशयं यथा भवति तथा **ब्रुवतः** पुरुषस्य गुणा इति सम्बन्धः ।

**।। इति दानधर्मे हरिणकृशीयं नाम त्रिसप्तत्युत्तरशततमोऽध्यायः ।।**

## ।। अथ चतुःसप्तत्युत्तरशततमोऽध्यायः ।।

**[२]घृष्टो वटकषायेण अनुलिप्तः प्रियङ्गुणा ।**
**क्षीरेण षष्टिकान् भुक्त्वा सर्वपापैः प्रमुच्यते ।। ५० ।।**

**घृष्टो वटकषायेण** इत्यत्र **षाष्टिकान्** यवान्नानि । [३]'यव्यं यवक्यं षष्टिक्यम्' इत्यमरः ।

---

१. कुं. १८७ अध्यायः ।; BORI पृ. ६६०; S,B; **'असत्सु विनिविष्टेषु न गुणान्वदतः स्वयम्'** इति कुं.पाठः ।

२. कुं. १८८ अध्यायः । ; ३. अ.को. द्वि वैश्यवर्गः श्लो. ७

**नीलषण्डप्रमोक्षेण अमावास्यां तिलोदकैः ।**
**वर्षासु दीपकैश्चैव पितॄणामनृणो भवेत्** ॥ ७० ॥

**नीलषण्डप्रमोक्षेण** इत्यत्र **षण्डो** वृषभः ।

॥ इत्यानुशासनिके पितृवाक्यं नाम
चतुःसप्तत्युत्तरशततमोऽध्यायः ॥

## ॥ अथ पञ्चसप्तत्युत्तरशततमोऽध्यायः ॥

[१]**नित्याभिवाद्या विप्रेन्द्रा भुक्त्वा पादौ तथाऽऽत्मनः ।**
**तेषां तुष्यामि मर्त्यानां यश्चक्रे च बलिं हरेत्** ॥ ३ ॥

**यश्चक्रे च बलिं हरेत्** इत्यत्र **चक्रे** चक्राकारमण्डले । **बलिं** वैश्वदेव-बलिम् ।

**वामनं ब्राह्मणं दृष्ट्वा** [२]**वराहं च जटोच्छ्रितम् ।**
**उद्धृतां धरणीं चैव मूर्ध्ना धारयते तु यः ।**
**न तेषामशुभं किञ्चित्कल्मषं चोपपद्यते** ॥ ४ ॥

**वामनं ब्राह्मणं दृष्ट्वा वराहं च जटोच्छ्रितम्** इत्यत्र **वामनं** कुब्जं ब्राह्मणं च दृष्ट्वा वामनमिव यः मूर्ध्ना धारयेत् । जटोच्छ्रितं ब्राह्मणं दृष्ट्वा वराहमिव यः मूर्ध्ना धारयेत् । 'शिरसा धारयिष्यामि रक्षस्व मां पदे पदे' इति श्रुतेः । ताभ्यामुद्धृतां धरणीं दृष्ट्वा तन्मृत्तिकां च यः मूर्ध्ना धारयेत् । तेषाम् अशुभं नेति योजना ।

---

१. कुं. १८९ अध्यायः ।
२. **'वराहं च जलोत्थितम्'** इति कुं.पाठः ।

**गजच्छायायां पूर्वस्यां कुतपे दक्षिणामुखः ।**
**यदा भाद्रपदे मासि भवते बहुले मघा ॥ ३३ ॥**

**गजच्छायायां पूर्वस्याम्** इत्यत्र पूर्वस्यां गजमस्तकच्छायायां सत्याम् ईषदपराह्ण इत्यर्थः ।

**॥ इति आनुशासनिके दानधर्मकथने पञ्चसप्तत्युत्तरशततमोऽध्यायः ॥**

## ॥ अथ षट्सप्तत्युत्तरशततमोऽध्यायः ॥

**अङ्गिरा उवाच –**

[१] **यस्तु संवत्सरं पूर्णं दद्याद्दीपं करञ्जके ।**
**सुवर्चलामूलहस्तः प्रजा तस्य विवर्धते ॥ ८ ॥**

**सुवर्चलामूलहस्त** इत्यत्र **सुवर्चलायाः** शोभनकान्तेः **मूले** मूलभूते **हस्ते** हस्तानक्षत्रे ।

**कुक्कुटे शुनके चैव हविर्नाश्नन्ति देवताः ।**
**वृक्षमूले ध्रुवं सत्त्वं तस्माद्वृक्षं न रोपयेत् ॥ १६ ॥**

**वृक्षमूले ध्रुवं सत्त्वम्** इत्यत्र **सत्त्वं** पिशाचादिप्राणी ध्रुवं तिष्ठति ।

**॥ इत्यानुशासनिके पर्वणि षट्सप्तत्युत्तरशततमोऽध्यायः ॥**

## ॥ अथ अष्टसप्तत्युत्तरशततमोऽध्यायः ॥

[२] **गवां शतसहस्रं च यो दद्याज्ज्येष्ठपुष्करे ।**
**न तद्धर्मफलं तुल्यमतिथिर्यस्य तुष्यति ॥ ७ ॥**

---

१. कुं. १९० अध्यायः । ; २. कुं. १९३ अध्यायः ।

**यो दद्याज्ज्येष्ठपुष्कर** इत्यत्र ज्येष्ठमासस्य **पुष्करे** कलापोषकरे दिने पौर्णमास्यामित्यर्थः । 'पुष पुष्टौ' इति धातुः ।

**॥ इति आनुशासनिके पर्वणि अष्टसप्तत्युत्तरशततमोऽध्यायः ॥**
**॥ इति आनुशासनिके पर्वणि प्रथमरहस्यं नाम**
**अशीत्युत्तरशततमोऽध्यायः ॥**
**॥ इति दिग्गजानां रहस्यं नाम एकाशीत्युत्तरशततमोऽध्यायः ॥**

## ॥ अथ द्व्यशीत्युत्तरशततमोऽध्यायः ॥

[१] **निरुद्विग्नस्तु यो दद्यान्मासमेकं गवाह्निकम् ।**
**एकभक्तं तथाश्नीयात् श्रूयतां तस्य यत्फलम्** ॥ ३ ॥

**मासमेकं गवाह्निकम्** इत्यत्र गवाम् अहन्यहनि दीयमानो बलिः **गवाह्निकः** ।

**॥ इत्यानुशासनिके महादेवरहस्यं नाम द्व्यशीत्युत्तरशततमोऽध्यायः ॥**
**॥ इत्यानुशासनिके पर्वणि सर्वरहस्यं नाम त्र्यशीत्युत्तरशततमोऽध्यायः ॥**
**॥ इति आनुशासनिके पर्वणि**
**भोज्याभोज्यप्रशंसना नाम चतुरशीत्युत्तरशततमोऽध्यायः ॥**

## ॥ अथ पञ्चाशीत्युत्तरशततमोऽध्यायः ॥

[२] **यस्तु शूद्रैः सहाश्नीयाद्ब्राह्मणोऽप्येकभोजने ।**
**अशौचं विधिवत्तस्य शौचमत्र विधीयते** ॥ २० ॥

१. कुं. १९६ अध्यायः ।
२. कुं.१९९ अध्यायः । ; BORI पृ.९१९; **'यस्तु शूद्रैः समश्नीयात्'** इति कुं. पाठः ।

**यस्तु शूद्रैः सहाश्नीयात्** इत्यत्र सहभोजनम् एकपङ्क्तौ भोजनम् । वैश्यक्षत्रिययोरपि भिन्नपङ्क्तावेव भोजनं विहितम् । न त्वेकपङ्क्तौ । अतः प्रायश्चित्तम् ।

**अशौचं विधिवत्तस्य शौचमत्र विधीयत** इत्यत्र यावद्दिनैः सूतकस्य शुद्धिर्भवति तावद्दिनपर्यन्तं **शौचं** त्रिषवणस्नानगायत्रीजपादिना शौचं विधीयते ।

**यद्युच्छिष्टमथान्योन्यं सम्प्राशेन्नात्र संशयः[१] ।**
**रोचना विरजा रात्रिर्मङ्गलालम्भनानि च ॥ २५ ॥**

**यद्युच्छिष्टमथान्योन्यम्** इत्यत्र यद्युच्छिष्टम् अन्योन्यं सम्प्राशेत् (सम्प्रविशेत्) तर्हि गायत्रीष्ट्यादिकं जुहुयात् । अत्र संशयो नेति योजना । **रोचना** गोरोचनाधारणं, **विरजाः** धौतवस्त्रधारणं **रात्रिर्मङ्गलालम्भनानि** रात्रौ दूर्वादिमङ्गलद्रव्यस्पर्शश्च कर्तव्यः ।

**॥ इत्यानुशासनिके पर्वणि दानधर्मकथने प्रायश्चित्तविधिर्नाम पञ्चाशीत्युत्तरशततमोऽध्यायः ॥**

## ॥ अथ षडशीत्युत्तरशततमोऽध्यायः ॥

**अवर्षति[२] च पर्जन्ये सर्वभूतानि देवराट् ।**
**वसिष्ठो जीवयामास येन यातोऽक्षयां गतिम् ॥ १३ ॥**

**सर्वभूतानि देवराड्** इत्यत्र देवः **राट्** राजा यस्य, देवेन राजत इति वा **देवराड्** वसिष्ठः ।

---

१. '**तथोच्छिष्टमथान्योन्यम्**' इति कुं.पाठः ।
२. कुं. २०० अध्यायः ।

**ब्रह्मदत्तश्च पाञ्चाल्यो राजा धर्मभृतांवरः ।**
**[१]निधिं शङ्खमनुप्राप्य जगाम परमां गतिम् ॥ १७ ॥**

**निधिं शङ्खमनुप्राप्य** इत्यत्र कुबेरात् शङ्खं निधिमनुप्राप्य, तद्वसु विप्रेभ्यो दत्वा चेति ग्राह्यम् ।

॥ इत्यानुशासनिके दानधर्मप्रशंसा नाम षडशीत्युत्तरशततमोऽध्यायः ॥
॥ इति आनुशासनिके पर्वणि ऋषिजनकृष्णसंवादो नाम अष्टाशीत्युत्तरशततमोऽध्यायः ॥

## ॥ अथ एकोननवत्युत्तरशततमोऽध्यायः ॥

**[२]अयं नारायणः [३]साक्षात् पुत्रार्थे व्रतकाङ्क्षया ।**
**दीक्षितोभून्महाबाहुः पुरा द्वादशवार्षिकम् ॥ १ ॥**

शिवप्रसादात् प्रद्युम्नः कृष्णपुत्रोऽभूदित्यपवादं परिहर्तुं भीष्मः काञ्चित्कथां कथयति । 'अयं नारायण' इत्यादिना समग्राध्यायेन । अत्र हि 'असुरः साम्प्रतं कश्चित्' इत्यादिना सार्धश्लोकेन कैलासशिखरे वक्रनामासुरोऽभूत् । स च प्रद्युम्नाख्येन कृष्णपुत्रेणैव वध्य इत्युच्यते । 'ततो ममात्मजो देहात्सोऽग्निर्भूत्वा विनिःसृतः' इति वचनात् ।

प्राग्जातं प्रद्युम्नमेव स्वोदरे निधायागतः । स एवाग्निर्भूत्वा कृष्णदेहाद्विनिःसृतः सन् वनेन सह तमसुरं ददाह । 'स तु वह्निर्महान् भूत्वा दग्ध्वा गिरिमशेषतः । पुनरेवाविशत्कृष्णं तदद्भुतमिवाभवत्' इति वचनात् । तमसुरं दग्ध्वा पुनः प्रद्युम्नरूपेणैव कृष्णोदरं सम्प्राविशदिति

---

१. BORI पृ.९२१; $B_3$,$D_{5.8}$; **'निधिं शङ्खमनुज्ञाप्य'** इति कुं.पाठः ।
२. कुं. २०३ अध्यायः । ३. **'श्रीमान् पुत्रार्थे'** इति कुं. पाठः ।

च गम्यते। इयं कथा सर्वैर्मुनिभिर्दृष्टा। कृष्णेन च उक्तविधया वर्णिता। अतः प्रागुत्पन्नस्य प्रद्युम्नस्य पुनरुत्पत्त्ययोगात् शिवप्रसादात् कृष्णस्य प्रद्युम्नः पुत्रोऽभूदिति वार्ता असुरजनमोहनार्थेति सारं स्पष्टमवगम्यते। इदमेव प्रमेयं स्वहृदि निधाय पूर्णप्रज्ञाचार्योऽपि स्वग्रन्थे निबबन्ध। अतः कृष्णस्य कृष्णभक्ताग्रेसरस्य च एकमेव मतमिति स्थितम्।

**[१]त्वत्तस्त्वन्यं न पश्यामो यल्लोके ते न विद्यते।**
**दिवि वा भुवि वा किञ्चित्तत्सर्वं हि त्वया ततम् ॥ ११ ॥**

**यल्लोके ते न विद्यत** इत्यत्र ते त्वया **न विद्यते** न ज्ञायते।

**॥ इति दानधर्मकथने ऋषिकेशवसंवादो नाम एकोननवत्युत्तरशततमोऽध्यायः ॥**
**॥ इति आनुशासनिके पर्वणि उमामहेश्वसंवादो नाम नवत्युत्तरशततमोऽध्यायः ॥**

## ॥ अथ चतुर्नवत्युत्तरशततमोऽध्यायः ॥

**[२]पोषणार्थं स्वदाराणामग्निकार्यार्थमेव च।**
**[३]गावश्च कर्षकाश्चैव सर्वमेतद्विधीयते ॥ ३९ ॥**

**गावश्च कर्षकाश्चैव** इत्यत्र **कर्षकाः** धनधान्यानयनादिकृषिकर्तारो भृत्याः।

**[४]अल्पग्रहा वारहव्या** इत्यत्र **अल्पग्रहाः** अल्पपरिग्रहाः **वारहव्याः** एकवारभोजनाः। **॥ इति चतुर्नवत्युत्तरशततमोऽध्यायः ॥**

---

१. कुं. २०४ अध्यायः।; २.कुं. २०९ अध्यायः।
३. **'गावश्च कर्षणम्'** इति कुं.पाठः।
४. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते।

## ।। अथ पञ्चनवत्युत्तरशततमोऽध्यायः ।।

[१]**लोकान् वै विवराणां तु धर्ममिच्छामि मानद।**
**कृपया परयाऽऽविष्टः तन्मे ब्रूहि महेश्वर** ।। १४ ।।

**लोकान् वै विवराणां तु** इत्यत्र विगताः वराः यासां ताः **विवराः** विधवा इत्यर्थः।

**उमोवाच–**

**तेषां [२]चक्रधराणां च धर्ममिच्छामि वै प्रभो** ।। २० ।।

**तेषां चक्रधराणाम्** इत्यत्र चक्रपदोदितशकटेन स्वभारं सर्वं धारयन्तीति **चक्रधराः** वयोवृद्धाः कुटुम्बिन इत्यर्थः।

[३]**तस्मादन्धस्त्वृषिगणः तपस्तप इति प्रिये** ।। ४२ ।।

**तस्मादन्ध** इत्यत्र **अन्धः** तपसोऽन्यत्रानवलोकनादन्धः।

**।। इति पञ्चनवत्युत्तरशततमोऽध्यायः ।।**

## ।। अथ षण्णवत्युत्तरशततमोऽध्यायः ।।

[४]**काले सम्प्राप्तमतिथिं भोक्तुकाममुपस्थितम्।**
[५]**वित्तं सम्भावयेत्तस्य न्यासोऽयमिति निश्चितः** ।। २१ ।।

**वित्तं सम्भावयेत्तस्य न्यासोऽयमिति निश्चित** इत्यत्र **न्यासो** विन्यस्तधनम् इति निश्चितः।

---

१. कुं. २१० अध्यायः।; **'एषां यथा वराणां तु'** इति कुं. पाठः।
२. **'चक्रचराणाम्'** इति कुं.पाठः ।; ३. **'तस्मादयम्'** इति कुं. पाठः।
४. कुं. २११ अध्यायः।
५. **'यस्तं सम्भावयेत्तत्र व्यासोऽयं समुपस्थितः'** इति कुं.पाठः ।

**[१] तस्य प्रभां यथाशक्त्या सौम्यचित्तः प्रयोजयेत् ।**
**चित्तमूलो भवेद्धर्मो धर्ममूलं भवेद्यशः ॥ २२ ॥**

**तस्य प्रभां यथाशक्त्या** इत्यत्र प्रकृष्टा भाः कान्तिर्यया सा **प्रभा** भोजनमित्यर्थः ।

**॥ इति दानधर्मे षण्णवत्युत्तरशततमोऽध्यायः ॥**

## ॥ अथ द्विशततमोऽध्यायः ॥

**[२] अपरे यत्नकुर्वन्तः न लभन्ते तु किञ्चन ।**
**केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ३ ॥**

**अपरे यत्नकुर्वन्त** इत्यत्र यत्नं कुर्वन्तः **यत्नकुर्वन्तः** ।

**॥ इत्यानुशासनिके द्विशततमोऽध्यायः ॥**

## ॥ अथ द्व्युत्तरद्विशततमोऽध्यायः ॥

[३] (*)**दानधर्मगताश्च य** इत्यत्र दानधर्मौ गतौ येभ्यस्ते दानधर्मगताः ।

(*)**स्वधर्मनिरता** इत्यत्र सु अधर्मनिरताः स्वधर्मनिरताः ।

(*)**विवर्णवचनास्तथा** इत्यत्र श्रमवशात् विगतं वर्णं विगताक्षरं यथा भवति तथा अङ्गुली सञ्ज्ञादिना वचनं येषां ते **विवर्णवचनाः** ।

---

१. **'तस्य पूजाम्'** इति कुं.पाठः ।
२. कुं. २१८ अध्यायः ।; **'अपरे यतमानाश्च'** इति कुं.पाठः ।
३. (*) चिह्नितस्थलेषु तत्तत्प्रतीकघटितः श्लोकः मुद्रितकोशेषु नोपलभ्यते ।

**उमोवाच –**

**भगवन् भगनेत्रघ्न मानुषेषु च केचन[1]।**
**क्लीबा नपुंसकाश्चैव प्रदृश्यन्ते च षण्डकाः[2] ॥ २८ ॥**

**क्लीबा नपुंसकाश्चैव प्रदृश्यन्ते च षण्डका** इत्यत्र **क्लीबाः** जात्यैव सूक्ष्मशिश्नाः । **नपुंसकाः** शिखण्डिनः । स्थूलशिश्नत्वेऽपि पुंशक्तिरहिताः । **षण्डकाः** छिन्नशिश्नाः इति विभागः ।

**नीचकर्मपरा लोके निर्लज्जा वीतसम्भ्रमाः ।**
**परनिन्दां बहिष्कृत्य[3] ते भवन्ति स्वकर्मणा ॥ ३५ ॥**

**परनिन्दां बहिष्कृत्य** इत्यत्र स्वमुखात् बहिष्कृत्य स्पष्टमुच्चार्येत्यर्थः ।

(*)**असिक्तषण्डकाः केचित्** इत्यत्र **असिक्तषण्डकाः** स्त्रीयोनौ रेतस्सेकेऽपि पुत्रोत्पादनशक्तिरहिताः । **नारीषु षण्डकाः** नारीषु रमणेच्छारहिताः स्वमपि स्त्रियन्त्यजन्त इत्यर्थः । **पक्षेषण्डकाः** आमरणान्तपक्षे पक्षेषण्डकाः । **त्वात्कारकृताः** मन्त्रौषधच्छेदादिना निर्वीर्याः कृताः । स्वदारस्वोदरपोषणादावशक्ये नटेषु प्रविश्य स्त्रीवेषधारणादिबहुरूपं कृत्वा नित्यं परयाश्रयापि स्वकुटुम्बपोषको शिखण्डीति भावेनाह **स्त्रीवेषधारिण इत्यादिना ।**

(*)**तत्र तेषां भवेदिति** इत्यत्र प्रीतिर्भवेदिति योग्यपदाध्याहारः ।

---

१. **कुं.२२१ अध्यायः ।** ; २. **'दृश्यन्ते षण्डकास्तथा'** इति कुं.पाठः ।
(*) चिह्नितस्थलेषु तत्तत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
३. **'परान् दीनान् बहिष्कृत्य'** इति कुं.पाठः ।

(*)[1]**अर्शो भगश्वर** इत्यत्र **अर्शः** मूलव्याधिः । **आनाहिः** मलमूत्र-बन्धनम् । **प्रवातिका** अतिमैथुनोत्पन्ना वातशूला ।

(*)**वस्तिशूलेन पीड्यन्त** इत्यत्र नाभेरधः शूला वस्तिशूला । **वृत्तिशूलं** वृत्या जातं शूलम् ।

**महेश्वर उवाच –**

**ये**[2] **पुरा मनुजा देवि क्रोधलोभसमन्विताः ।**
**मनुजा देवतास्थानं स्वपादैः**[3] **संस्पृशन्त्युत ॥ ४१ ॥**

**स्वपादैः संस्पृशन्त्युत** इत्यत्र देवतायाः **स्थानं** प्रतिमाम् ।

(*)**विचर्चिकाः पादतल** इत्यत्र पादतले **विचर्चिकाः** विगताः स्नानाः विगता सञ्चारा वा । 'चर गति भक्षणयोः' इति धातुः । [4]'स्नानं चर्चा तु चर्चिक्यम्' इत्यमरः ।

(*)**वल्मिकाश्चैव जायन्त** इत्यत्र वल्मीकवत् परितः व्रणच्छिद्रा-सहिताः **वल्मीकाः** ।

(*)**केचित् विपादसंयुक्ता** इत्यत्र द्विपादयोः व्याधिसंयुक्ताः ।

(*)**ग्रहीतुं च न शक्यं हि** इत्यत्र **ग्रहीतुं** निग्रहीतुम् ।

**॥ इत्यानुशासनिके दानधर्मकथने कर्मविपाके द्व्युत्तरद्विशततमोऽध्यायः ॥**

---

१. (*)चिह्नितस्थलेषु तत्तत्प्रतीकघटितः श्लोकः मुद्रितकोशेषु नोपलभ्यते ।
२. कुं. २२० अध्यायः ।
३. **'स्वपादैः भ्रंशयन्त्युत'** इति कुं.पाठः ।
४. अ.को. द्वि. मनुष्यवर्गः श्लो. १२२

## ।। अथ त्र्युत्तरद्विशततमोऽध्यायः ।।

[१] **अपरे मानुषा देव दृश्यन्ते कुणिबाहवः ।**
**केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।। २ ।।**

**कुणिबाहव** इत्यत्र **कुणिबाहवः** कुत्सितकराः । [२] 'स्यादेडे बधिरः कुब्जे गडुलः कुकरे कुणिः' इत्यमरः ।

**एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।**
[३] **वामनाश्चैव ह्रस्वाङ्गाः कुब्जाश्चैव भवन्ति ते ।। ६ ।।**

**वामनाश्चैव ह्रस्वाङ्गा** इत्यत्र **वामनाः** ह्रस्वाः, सर्वशरीरेषु ह्रस्वाः । ह्रस्वानि केवलमङ्गानि येषां ते **ह्रस्वाङ्गाः** । **कुब्जाः** वक्रशरीराः ।

**मोहयन्ति परान् [४] भोगैर्मदलैर्लोभकारणात् ।**
**वृद्धान् गुरूंश्च ये मूर्खा वृथैवापहसन्ति च ।। ९ ।।**

**मदलैर्लोभकारणात्** इत्यत्र **मदलैः** उन्मादजनकैः भोगैः ।

।। इति आनुशासनिके कर्मविपाको नाम त्र्युत्तरद्विशततमोऽध्यायः ।।

## ।। अथ चतुरुत्तरद्विशततमोऽध्यायः ।।

[५] **पशुभूतास्तथा चान्ये भवन्ति धनहारकाः ।**
**तत्तथा क्षीयते कर्म तेषां पूर्वापराधजम् ।। २८ ।।**

---

१. कुं. २२१ अध्यायः । ; अ.को. द्वि. मनुष्यवर्गः. श्लो. ४८
३. **'ह्रस्वाङ्गा वामनाश्चैव'** इति कुं.पाठः ।
४. **'मदनैर्लोभकारणात्'** इति कुं.पाठः ।; ५. कुं. २२२ अध्यायः ।

**पशुभूतास्तथा चान्य** इत्यत्र **पशुभूताः** भारवाहकपशुवद्भूताः। भारवाहका इत्यर्थः।

**तत्तथा क्षीयते कर्म** इत्यत्र यथा पूर्वोक्तपापिष्ठानां कर्म नरकभोगात् क्षीणम्। एतेषामपि तथा क्षीयते।

**किन्तु मोक्षविधिस्तेषां (चान्ये) सर्वथा[1] तत्प्रसादजः।**
**[2]अयथावन्मोक्षदस्तेषां पुनर्जन्मनि चेष्यते ॥ २९ ॥**

**किन्तु मोक्षविधिस्तेषाम्** इत्यत्र **तेषां** परधनापहारिणां **तत्प्रसादजः** यस्य धनमपहृतं जन्मान्तरे तस्य दासो भूत्वा तत्प्रसादात् सम्पादिते सति, जातस्तत्प्रसादजः मोक्षविधिः। एकस्मिन् जन्मनि **अयथावन्मोक्षदः** यथावन्मोक्षदो न भवति चेत् पुनर्जन्मनि च इष्यत इति योजना।

**[3]यथाहं कारयेत्कर्म दण्डकारणतः क्षिपेत्।**
**वृद्धान् बालांस्तथा क्षीणान् पालयन्धर्ममाप्नुयात् ॥ ३२ ॥**

**यथाहं कारयेत्** इत्यत्र **यथाहम्** अहः अनतिक्रम्य।

**॥ इति आनुशासनिके कर्मविपाको नाम चतुरुत्तरद्विशततमोऽध्यायः ॥**

## ॥ अथ पञ्चोत्तरद्विशततमोऽध्यायः ॥

**[4]नीचकर्मरता देव सर्वेषां मलहारकाः।**
**दुर्गताः क्लेशभूयिष्ठा विरूपा दुष्टचेतसः ॥ २ ॥**

---

१. 'सर्वथा तत्प्रसादनम्' इति कुं.पाठः।
२. 'अयथावन्मोक्षकामः' इति कुं. पाठः। ; ३. 'यथार्हम्' इति कुं.पाठः।
४. कुं. २२३ अध्यायः।

**दुर्गताः क्लेशभूयिष्ठा** इत्यत्र **दुर्गताः** दरिद्राः । [१]'निस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः' इत्यमरः ।

**[२]ये स्वधर्माश्रितं कार्यं अतिमानान्न कुर्वते ।**
**परान् संनामयन्त्येव [३]अज्ञानात्मनि ये बलात् ॥ ९ ॥**

**ये स्वधर्माश्रितम्** इत्यत्र कालं स्वधर्मेण आश्रितं न कुर्वन्ति । काले काले स्वधर्मं न कुर्वन्तीत्यर्थः । **अज्ञानात्मनि** अज्ञानस्वभावे ।

**[४]नान्यव्यवस्थारूपाणां चण्डालानपि बुद्धिमान् ।**
**न च निन्देन्नापि कुप्येद् भुञ्जते स्वकृतं फलम् ।**
**चण्डाला आपि तां जातिं शोचन्तः शुद्धिमाप्नुयुः ॥ १० ॥**

**नान्यव्यवस्थारूपाणाम्** इत्यत्र अन्येषु चण्डालेष्वेव विशेषेण अवस्था स्वभावानां न, पूर्वोक्तं शुचित्वमपि न ।

**उत्कोचनपराश्चैव पिशुनाश्च तथाविधाः ।**
**परद्रव्यहरा घोराश्चौर्याद्वाऽन्येन कर्मणा ॥ २३ ॥**

**उत्कोचनपरा** इत्यत्र **उत्कोचनं** परपरिहासादिकम् ।

[५]**प्रायशः प्राणिनिन्दया** इत्यत्र प्राणिभिः कृतनिन्दया तदसहमाना नार्यो वा नरा वा प्रायशः असुभिर्वियुज्यन्ते तथैवेत्युत्तरेणान्वयः ।

---

१. **अ.को.तृ. विशेष्यनिघ्नवर्गः श्लो. ४९**
२. **'ये स्वधर्मार्पणम्'** इति कुं.पाठः ।
३. **'आज्ञयात्मनि'** इति कुं.पाठः ।
४. **'तानप्यवस्थाकृपणान्'** इति कुं.पाठः ।
५. एतत्प्रतीकघटितः श्लोकः मुद्रितकोशेषु नोपलभ्यते ।

[१] **सत्यं प्रमाणकरणं नित्यमव्यभिचारि च ।**
**यैः पुरा मनुजैर्देवि यस्मिन्काले यथा कृतम्** ॥ ७२ ॥

**सत्यं प्रमाणकरणम्** इत्यत्र **प्रमाणकरणं,** प्रमाणे जयकारणं सत्यं यथा मम वाक्यमपि एवमित्यवधारय ।

**॥ इत्यानुशासनिके कर्मविपाककथनं नाम पञ्चोत्तरद्विशततमोऽध्यायः ॥**

## ॥ अथ षडुत्तरद्विशततमोऽध्यायः ॥

[२] (*)**प्रेत्य देव कदा भुङ्क्ष** इत्यत्र प्रेत्य कदा भुङ्क्षे **तदा** तदापि **कथं** केन प्रकारेण भुङ्क्षे ।

(*)**कर्मणः फलमात्रं तु** इत्यत्र **कर्मणः** स्वकृतचौर्यादिकर्मणः **फलमात्रं** सकलफलम् ।

[३] **अदण्डिता वा ये मिथ्या मिथ्या वा दण्डिता भुवि ।**
**तान्यमो दण्डयत्येव स हि वेद कृताकृतम्** ॥ ५५ ॥

**मिथ्या वा दण्डिता भुवि** इत्यत्र यथोचितदण्डनं विना चोराद्रव्यं गृहीत्वा मासमात्रं, पक्षमात्रं वा, शृङ्खलाबन्धमात्रेण दण्डिताः ।

**महेश्वर उवाच –**

[४] **स्थाने संशयितुं देवि शृणु तत्त्वं समाहिता** ॥ ५३ ॥

---

१. **'सत्यप्रमाणकरणान्नित्यमव्यभिचारि च'** इति कुं.पाठः ।
२. (*) चिह्नितस्थले तत्तत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
३. कुं.२२३ अध्यायः ।
४. **'स्थाने संशयितम्'** इति कुं.पाठः ।

**स्थाने संशयितुम्** इत्यत्र हे देवि, अस्मिन् अर्थे संशयितुं **स्थाने** योग्यम् ।

**केवलं चाभिसन्धाय सम्भवाद्यः[१] करोति चेत् ।**
**कर्मणस्तस्य नाशस्तु न कथञ्चन विद्यते ॥ ६२ ॥**

**सम्भवाद्यः करोति चेत्** इत्यत्र **सम्भवात्** सम्भवम् उत्पत्तिमारभ्य । ल्यब्लोपनिमित्ता पञ्चमी ।

**लोकसंव्यवहारार्थं प्रायश्चित्तादिरिष्यते ।**
**विद्ध्येवं पापके कार्ये निर्विशङ्का भव प्रिये ॥ ६५ ॥**

**लोकसंव्यवहारार्थम्** इत्यत्र बुद्धिपूर्वं पापकर्तुरपीति योग्यपदाध्याहारेण योजना ।

**॥ इति आनुशासनिके षडुत्तरद्विशततमोऽध्यायः ॥**

## ॥ अथ सप्तोत्तरद्विशततमोऽध्यायः ॥

[२]**स्वयम्भूर्भुज्यते फलम्** इत्यत्र **स्वयं** स्वयमेव **भूः** शुभाऽशुभकर्मणां भूमिः अतः फलमपि **स्वयं** स्वेनैव भुज्यते ।

[३]**तत्रापि सुमहद्भुक्त्वा पूर्वमल्पं पुनः शुभे ।**
**एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥ १८ ॥**

**तत्रापि सुमहद्भुक्त्वा पूर्वमल्पं पुनः शुभे** इत्यत्र **तत्रापि** स्वर्ग-

---

१. **'संरम्भाच्च करोति यत्'** इति कुं.पाठः ।
२. एतत्प्रतीकघटितः श्लोकः मुद्रितकोशेषु नोपलभ्यते ।
३. **कुं.२२५ अध्यायः ।**

नरकयोरपि पापं सुमहच्चेत् तत् नरके पूर्वं भुक्त्वा **अल्पं** पुण्यं पुनः स्वर्गे भुज्यते । पुण्यं सुमहच्चेत् तदेव पूर्वं स्वर्गे भुक्त्वा पुनः **अल्पं** पापं नरके भुज्यत इति विवेकः ।

**शरीरात्मसमाहारो [1] जनुरित्यभिधीयते ।**
**तत्रात्मानं नित्यमाहुरनित्यं क्षेत्रमुच्यते ॥ २१ ॥**

**जनुरित्यभिधीयत** इत्यत्र **जनुः** जन्म, [2] 'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः' इत्यमरः ।

[3] **सतां तु गुणतो ध्यानम्** इत्यत्र **गुणतः** गुणानाम् ।

**॥ इति आनुशासनिके उमामहेश्वरसंवादो नाम सप्तोत्तरद्विशततमोऽध्यायः ॥**

## ॥ अथ अष्टोत्तरद्विशततमोऽध्यायः ॥

[4] **निर्विकारी सदा चात्मा स्त्रीत्वं पुंस्त्वं न चात्मनि ।**
**कर्मप्रकारेण तथा जात्यां जात्यां प्रजायते ॥ ४ ॥**

**निर्विकारी सदा चात्मा स्त्रीत्वं पुंस्त्वं न चात्मनि** इत्यत्र कदाचित् स्त्रीत्वं, कदाचित् पुंस्त्वमिति अव्यवस्थितस्त्रीत्वपुंस्त्वे आत्मनि न । तत्र हेतुर्निर्विकारी सदा चात्मेति । किन्तु अनाद्यनन्तकालेऽपि स्त्री-

१. **'जन्तुरित्यभिधीयते'** इति कुं.पाठः ।
२. **अ.को. प्र. कालवर्गः श्लो. ३०**
३. एतत्प्रतीकघटितः श्लोकः मुद्रितकोशेषु नोपलभ्यते ।
४. कुं. २२६ अध्यायः ।; BORI पृ.५७५; **'निर्विकारः सदैवात्मा'** इति कुं. पाठः ।

जीवाः स्त्रिय एव पुञ्जीवास्तु पुमांस एव । अन्यथा मुक्तौ स्त्रीपुम्भेदो न स्यादिति शिवस्य भावः । अन्यथा कर्तारमव्ययमिति पूर्वविरोधः ।

**[१]देहहानौ भवेदात्मा वेदनाभिर्न चाल्यते ।**
**तिष्ठेत् कर्मफलं [२]यावत्त्यजेत् कर्मक्षये पुनः ॥ २० ॥**

**देहहानौ भवेदात्मा** इत्यत्र यः आत्मा देहहानौ भवेत् स कस्मात् कर्मणां फलं भुङ्क्ते ? देहेन सह भुङ्क्ते । कर्मकरणे सहायभूतोऽपि देहः भोगकाले नष्टत्वान्न भोगोपयोगी, किन्त्वात्मैव भोगभोक्ता । न हि गमनसहायोऽप्यश्वः भोजनकालेऽपि राज्ञा सह भुङ्क्ते इति भावः । तिष्ठेत्कर्मफलं (या)तावत्त्यजेत्कर्मक्षये पुनरिति वदता शिवेन कर्मक्षये कर्मार्जितं देहं जीवस्त्यजेदेव न तु स्वयं तेन सह विनश्यति, किन्तु स्वर्गं नरकं मोक्षं वा गच्छतीति उत्तरं दत्तमिति ज्ञेयम् ।

**॥ इति आनुशासनिके अष्टोत्तरद्विशततमोऽध्यायः ॥**

## ॥ अथ नवोत्तरद्विशततमोऽध्यायः ॥

**[३]तेषामुद्भिदजा वृक्षा लतावल्ल्यश्च वीरुधः ।**
**दंशयूकादयश्चान्ये स्वेदजाः क्रिमिजातयः ॥ १० ॥**

**दंशयूकादयश्चान्ये** इत्यत्र **यूनां** युवतीनां च **कं** शिरः युङ्क्ष इति यूकः शिरःस्वेदजो जन्तुः ।

**॥ इति आनुशासनिके नवोत्तरद्विशततमोऽध्यायः ॥**

---

१. **'देहक्षयेऽपि नैवात्मा'** इति कुं.पाठः ।
२. **'यावद् व्रजेत्'** इति कुं.पाठः ।
३. कुं. २२७ अध्यायः ।

## ।। अथ दशोत्तरद्विशततमोऽध्यायः ।।

[१] **तत्र स्त्रियस्तु स्त्रीभावम्** इत्यत्र **स्त्रियः** जात्या स्त्रियः न तु पुरुषवत् नैमित्तिकस्त्रियः । ताः स्त्रीभावमेव पुनः पुनः प्राप्नुवन्ति । न कदाचिदपि पुम्भावम् । पुरुषस्तु स्वभावतः पुमान् कर्मवशात् स्त्रीभावं च प्राप्नोति । अन्यथा शिखण्डिनः पुम्भावाय यक्षाख्यपुरुषानुप्रवेशो वृथा (पृथक्) स्यात् इति शिवस्य भावः ।

[२] **कृत्वा कर्म पुमान्स्त्री वा स्त्री पुमानपि जायते ।**
**स्त्रीभावं यत्पुमान्कृत्वा कर्मणा प्रमदा भवेत्** ।। ५ ।।

**स्त्री पुमानपि जायत** इत्यत्र **स्त्री** नैमित्तिकस्त्री, अन्यथा पूर्वोत्तर-विरोधः ।

**उमोवाच –**

**भगवन् सर्वलोकेश [३] यद्यात्मा न करोति चेत् ।**
**कोऽन्यः कर्मकरो देहे तन्मे त्वं वक्तुमर्हसि** ।। ६ ।।

**यद्यात्मा न करोति चेत्** इत्यत्र न करोति प्रकृतिसंयोगं विना न करोति । (अन्यथा तस्मादात्मानमव्यग्रं विद्धि ।)

**महेश्वर उवाच –**

**शृणु भामिनि कर्तारम् [४] आत्मायं नैव कर्मकृत् ।**
**प्रकृत्या गुणयुक्तेन क्रियते कर्म नित्यशः** ।। ७ ।।

---

१. एतत्प्रतीकघटितः श्लोकः मुद्रितकोशेषु नोपलभ्यते ।
२. कुं. २२६ अध्यायः ।; ३. **'कर्मात्मा न करोति चेत्'** इति कुं.पाठः ।
४. **'आत्मा हि न च कर्मकृत्'** इति कुं.पाठः ।

**आत्मायं नैव कर्मकृत्** इत्यत्र प्रकृत्या गुणयुक्तेन क्रियते कर्म नित्यश इति प्रकृतिगुणयुक्तस्य आत्मन एव कर्तृत्वकथनात् **आत्मा** शरीररहितः केवलमात्मा **कर्मकृत्** सांसारिकपुण्यफलाख्यकर्मकृत् न ।

**[१] यथैवात्मकृतं कर्म देशान्तरगता नराः ।**
**विद्युस्तथैवान्तकाले सुकृतं पौर्वदैहिकम्** ॥ २९ ॥

**यथैवात्मकृतं कर्म** इत्यत्र **कर्म** अपराधादि कर्म ।

**॥ इति आनुशासनिके दशोत्तरद्विशततमोऽध्यायः ॥**
**॥ इति आनुशासनिके नरकवर्णनं नाम त्रयोदशोत्तरद्विशततमोऽध्यायः ॥**

## ॥ अथ चतुर्दशोत्तरद्विशततमोऽध्यायः ॥

**[२] यमजौ यत्र जायेते** इत्यत्र **यमजौ** स्त्रीपुंरूपौ पुत्रौ ।

**[३] सापदेशमवश्यं तु कर्तव्यमिति यत्कृतम् ।**
**कथञ्चित्तत्कृतमपि कर्ता तेन स लिप्यते** ॥ १८ ॥

**सापदेशमवश्यं तु कर्तव्यमिति यत्कृतम्** इत्यत्र एतज्जातीयस्थेन इदं कर्तव्यमिति स्मृतावाज्ञा **अपदेशः** ।

**दुर्भिक्षे चात्मवृत्त्यर्थमेका[४]यनगतस्तथा ।**
**अकार्यं वाऽप्यभक्ष्यं वा कृत्वा पापान्न लिप्यते** ॥ २४ ॥

---

१. कुं. २२८ अध्यायः । **'यथैवात्मकृतं विद्युर्देशान्तरगता'** इति कुं.पाठः ।
२. एतत्प्रतीकघटितः श्लोकः मुद्रितकोशेषु नोपलभ्यते ।
३. कुं. २३१ अध्यायः ।; BORI पृ.९८८; **'सापदेशमवश्यं तत्कर्तव्यमिति तत्कृतम्'** इति कुं.पाठः ।
४. **'-कायतनगस्तथा'** इति कुं. पाठः ।

**एकायनगतस्तथा** इत्यत्र यत्र दुर्भिक्षं तस्मिन्नेव स्थाने गतः **एकायनगतः**।

**उमोवाच –**

**भगवन् पानदोषांश्च [1]प्रेक्षयाऽपेयकारणान्।**
**एतदिच्छाम्यहं श्रोतुं तन्मे वद महेश्वर ॥ २८ ॥**

**प्रेक्षयाऽपेयकारणान्** इत्यत्र **अपेयकारणान्** पानदोषान् **प्रेक्षय** सम्यक् प्रदर्शय (दर्शय)।

**[2]काकृत्वमथ दासत्वं प्रेष्यतामेत्य पानपाः।**
**सर्वकर्मकराश्चासन् पशुवद्रज्जुबन्धिताः ॥ ४४ ॥**

**काकृत्वमथ दासत्वम्** इत्यत्र **काकृत्वं** कुत्सितकार्यकर्तृत्वम्।

॥ इति आनुशासनिके पर्वणि चतुर्दशोत्तरद्विशततमोऽध्यायः ॥

## ॥ अथ पञ्चदशोत्तरद्विशततमोऽध्यायः ॥

**[3]त्रैविध्यदोषोपरमे यस्तु दोषव्यपेक्षया।**
**स हि प्राप्नोति सकलं सर्वदुष्कृतवर्जनात् ॥ ४ ॥**

**त्रैविध्यदोषोपरमे यस्तु दोषव्यपेक्षया** इत्यत्र दोषेषु विगता अपेक्षा **दोषव्यपेक्षा** तया।

**निवृत्तिः [4]पापकर्मभ्यस्तदौपरिमितं प्रिये।**
**मनोवाक्कायजा दोषाः शृणु मे वर्जनाच्छुभम् ॥ ३ ॥**

---

१. 'पेयापेयत्वकारणम्' इति कुं.पाठः।; २. 'कारूत्वमथ' इति कुं.पाठः।
३. कुं. २३२ अध्यायः।
४. BORI पृ.९९०; $G_{1.3}$,$M_2$; 'पापकर्मभ्यस्तदौपरमिकम्' इति कुं.पाठः।

**निवृत्तिः पापकर्मभ्यस्तदौपरिमितं प्रिये** इत्यत्र पापकर्मभ्यो निवृत्तिरिति यत् तत् **औपरिमितम्** । बहूनामपि पापानां गणनाया उपरि निवृत्तिरित्येकोक्त्या कथनात् यन्निमित्तं परिमाणं तत्सम्बन्धि औपरिमितम् । अग्निष्टोमादिसुकृतानि अनन्तत्वात् अपरिमितं सुकृतमित्युच्यन्ते । दोषनिवृत्तिरूपं सुकृतं तु उक्तविधया मितत्वात्परिमितमित्युच्यत इति भावः । यद्वा सर्वेषां पुण्यानामुपरि इति **मितं** सज्जनैः प्रमितं तदुपरिमितं तत्सम्बन्धि औपरिमितम् । पुण्यनिकरदोषत्यागस्तु दुष्कर इति भावः ।

**प्रथमं वर्जयेद्दोषान् युगपत्पृथगेव वा ।**
**तथा धर्ममवाप्नोति दोषत्यागो हि दुष्करः** ॥ ५ ॥

व्रतवान् (प्रभवात्) वर्जयेद्दोषान् युगपत् ।

**अहो नृशंसाः पच्यन्ते मानुषाः स्वल्पबुद्धयः ।**
**एतादृशं न बुध्यन्ते आत्माधीनं च निर्व्यथाः** ॥ ७ ॥

**स्वल्पबुद्धय** इत्यत्र स्वल्पबुद्धय इत्यस्य उत्तरेणान्वयः ।

**तपो दानं महादेवि दोषमल्पं हि निर्भरेत् ।**
**सुकृतं यामिकं प्रोक्तं वक्ष्ये निरुपसाधनम्**[१] ॥ १३ ॥

**सुकृतं यामिकं प्रोक्तम्** इत्यत्र पापनियमनात् यमनामसम्बन्धि **यामिकम्** ।

**यथा श्रुतं यथा दृष्टमात्मना यद्यथा कृतम् ।**
**तथा सत्योपकारेण वचनं सत्यलक्षणम्**[२] ॥ १७ ॥

१. BORI पृ.९९१; '**सुकृतं यामिकं चोक्तम्**' इति कुं.पाठः ।
२. '**तथा तस्यान्विकारेण**' इति कुं.पाठः ।

**तथा सत्योपकारेण** इत्यत्र **सत्याः** सन्तः ।

**।। इत्यानुशासनिके पर्वणि पञ्चदशोत्तरद्विशततमोऽध्यायः ।।**

## ।। अथ षोडशोत्तरद्विशततमोऽध्यायः ।।

(*)[१]**भवेयुरसुखिनस्तथा** इत्यत्र तथा सुखिनश्च न भवेयुरिति नञा-वृत्त्या योजना ।

**।। इत्यानुशासनिके पर्वणि षोडशोत्तरद्विशततमोऽध्यायः ।।**

## ।। अथ सप्तदशोत्तरद्विशततमोऽध्यायः ।।

(*)**दन्दह्यते** अतिशयेन दहति इति ।

**।। इत्यानुशासनिके पर्वणि सप्तदशोत्तरद्विशततमोऽध्यायः ।।**

## ।। अथ अष्टादशोत्तरद्विशततमोऽध्यायः ।।

(*)**स्वधर्मोपचितः पुरुष** इत्यत्र सुष्ठु अधर्मः **स्वधर्मः** ।

(*)**नात्मच्छिन्नेन लिप्यन्त** इत्यत्र **आत्मच्छिन्नेन** मृतेन इमानि धर्मादीनि न लिप्यन्ते । पुनर्धर्मादिकं नार्जयतीति भावः ।

(*)**तेषामयोगे यः कुर्यात्** इत्यत्र **अयोगे** भाग्ययोगाभावे दरिद्रतायामित्यर्थः । **नाथत्वं** धनादिदानेन निर्वहितृत्वम् ।

(*)**सङ्गतानां च पारग** इत्यत्र **पारगे** पारगमने ।

(*)**उदकेन गृहीता च** इत्यत्र स्वपित्रा धारापूर्वकं गृहीता, **उदकेन गृहीता**, सापत्नजननीत्यर्थः ।

---

१. (*)चिह्नितस्थलेषु तत्तत्प्रतीकघटितः श्लोकः मुद्रितकोशेषु नोपलभ्यते ।

१
(*)**नरकस्तु सुदुर्गम** इत्यत्र सुदुर्गमः नरकस्तु नरक एव ।

**॥ इति अष्टादशोत्तरद्विशततमोऽध्यायः ॥**

## ॥ अथ एकोनविंशोत्तरद्विशततमोऽध्यायः ॥

(*)**ये च देवं प्रयुञ्जन्ति** इत्यत्र स्वकार्याय प्रयुञ्जन्ति । देवप्रतिमां विक्रीय स्वोदरं पूरयन्तीत्यर्थः ।

**॥ इति एकोनविंशोत्तरद्विशततमोऽध्यायः ॥**

## ॥ अथ विंशोत्तरद्विशततमोऽध्यायः ॥

(*) **तेपां निक्षेपधर्मेण प्रयोगादथवा पुन** इत्यत्र **तेषां** येषु धनं निक्षिप्तं वृद्ध्यर्थं वा दत्तं तेषाम् । जन्मान्तरऋणस्थानां दत्वा न प्रतियाचन्त इत्यन्वयः ।

(*)**तेन संयुज्यते देवि** इत्यत्र **तेन** नरकेण ।

(*)**वातस्य योगेन** इत्यत्र **वातस्य** विषबिन्दुमिश्रितवातस्य ।

**॥ इत्यानुशासनिके दानधर्मे उमामहेश्वरसंवादे कर्मविपाको नाम विंशोत्तरद्विशततमोऽध्यायः ॥**

## ॥ अथ एकविंशोत्तरद्विशततमोऽध्यायः ॥

(*)**उपागुल्मलतावल्ल्य** इत्यत्र **उपा** उलपाः ।

२
**आत्मन्येव रतान् मत्वा निर्बन्धव्रतमाचरेत् ।**
**व्रतमामरणाद्वाऽपि कालच्छेदेन वा हरेत्** ॥ २४ ॥

---

१. (*) चिह्नितस्थलेषु तत्तत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।

२. कुं.२३२ अध्यायः ।; '**आत्मनैव तथाऽऽत्मानं निवेद्य व्रतवच्चरेत्**' इति कुं. पाठः ।

**आत्मन्येव रतान् मत्वा निर्बन्धव्रतमाचरेत्** इत्यत्र **आत्मन्येव** परमात्मन्येव रतान् मत्वा **निर्बन्धव्रतं** निर्बन्धकरव्रतम् आचरेत् । ज्ञानरहितव्रतस्य निष्फलत्वात् । एतत्सर्वं परमात्माधीनमिति मत्वा स्वशरीरशोषकव्रतमारभेदिति भावः ।

**[१]औषधार्थं यथाज्ञानात् गुरूणां वचनादपि ।**
**अनुग्रहार्थं बन्धूनां व्रतभङ्गो न दुष्यते ॥ २७ ॥**

**औषधार्थं यथाज्ञानात्** इत्यत्र **यथाज्ञानात्** यथार्थज्ञानात् यथार्थ-ज्ञानलाभे सतीति यावत् ।

**[२]आमृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ।**
**एवमापदि संशुद्धिरेवं शौचं विधीयते ॥ ३७ ॥**

**आमृष्टमद्भिर्निर्नि(र्णि)क्तम्** इत्यत्र **अद्भिर्निर्नि(र्णि)क्तम्** आर्द्री-कृतम्, हस्तेन ईषदुदकं गृहीत्वा आर्द्रीकृतमित्यर्थः । तदपि **आमृष्टं,** सम्यक् शुद्धं भवति ।

**यच्च वाचा प्रशस्यत** इत्यत्र **यच्च वाचा,** नारायणादिनाम्ना भगवान् प्रशस्यत इति यत् तच्च आमृष्टं भवति । आपदि हरिनामो-च्चारणमात्रेणापि शुद्धिर्भवतीत्यर्थः ।

**॥ इत्यानुशासनिके एकविंशोत्तरद्विशततमोऽध्यायः ॥**

## ॥ अथ द्वाविंशोत्तरद्विशततमोऽध्यायः ॥

**[३]हतानामुद्गतप्राणं क्रीत्वा न्यायेन भामिनि ।**
**ब्राह्मणातिथिपूजार्थं भोक्तव्यं हितमिच्छता ॥ १६ ॥**

---

१. '**औषधार्थं यदज्ञानात्**' इति कुं.पाठः ।; २. '**अदृष्टमद्भिर्निर्णिक्तम्**' कुं.पाठः
३. कुं.२३३ अध्यायः । ; '**सूनायां च गतप्राणान्**' इति कुं.पाठः ।

**हतानामुद्गतप्राणम्** इत्यत्र अन्येन हतानां प्राणिनाम् उद्गतप्राणं मांसं विक्रीय ।

**।। इत्यानुशासनिके भक्ष्याभक्ष्यकथनं नाम द्वाविंशोत्तरद्विशततमोऽध्यायः ।।**
**।। इति गुरुसेवातीर्थस्नानप्रकरणं नाम त्रयोविंशोत्तरद्विशततमोऽध्यायः ।।**

## ।। अथ चतुर्विंशोत्तरद्विशततमोऽध्यायः ।।

**दाता[१] प्रकृतिहीनश्च देयं सोपक्रमं तथा ।**
**देशकालौ च यत्त्वेतद्दानं षड्गुणमुच्यते** ।। ४ ।।

**दाता प्रकृतिहीनश्च** इत्यत्र **प्रकृतिहीनः** प्रकृत्या स्वभावेन हीनः । द्रव्यहीनः दरिद्र इत्यर्थः । **दाता** देवपितृकार्यादिषु धनविनियोग-कर्तृत्वम्, इदं द्वयं प्रतिग्रहीतुः विशेषणम् ।

**कुहकः[२] शुनिः** इत्यत्र **शुनि** श्वसम्बन्धवान् श्वरक्षणकृदित्यर्थः ।

**अतिशक्त्या परं दानं यथाशक्ति तु मध्यमम् ।**
**तृतीयं[३] त्ववरं दानं दानरूपमिवात्मनः** ।। १९ ।।

**तृतीयं त्ववरं दानं दानरूपमिवात्मन** इत्यत्र **तृतीयं दानं** शक्तौ सत्यामप्यल्पदानम् **अवरम्** । तस्य निदर्शनम् दानेन रूप्यत इति दान-रूपम् । आत्मनः दानफलमिव । स्वस्य फलं यथा तुच्छं तथा तद्दानमपि तुच्छमिति भावः ।

---

१. कुं.२३४ अध्यायः ।; **'दाता प्रतिग्रहीता च'** इति कुं.पाठः ।
२. एतत्प्रतीकघटितः श्लोकः मुद्रितकोशेषु नोपलभ्यते ।
३. **'तृतीयं चापरं दानं नानुरूपम्'** इति कुं.पाठः ।

**शरद्वसन्तकालश्च पुण्यमासस्तथैव च ।**
**शुद्धपक्षश्च[1] पक्षान्तः पौर्णमासी च पर्वसु ॥ २३ ॥**

**शुद्धपक्षश्च पक्षान्त** इत्यत्र **पक्षान्तः** अपरपक्षान्तः अमावास्येत्यर्थः ।

॥ इति दानधर्मे अन्नदानप्रशंसा नाम चतुर्विंशोत्तरद्विशततमोऽध्यायः ॥
॥ इति आनुशासनिके दानधर्मे गोदानप्रशंसा नाम
सप्तविंशोत्तरद्विशततमोऽध्यायः ॥
॥ इति आनुशासनिके अष्टाविंशोत्तरद्विशततमोऽध्यायः ॥
॥ इति आनुशासनिके दानधर्मे सुवर्णदानप्रशंसा नाम
एकोनत्रिंशोत्तरद्विशततमोऽध्यायः ॥

## ॥ अथ त्रिंशोत्तरद्विशततमोऽध्यायः ॥

**[2]यत्किञ्चित् कुरुते पापं पुरुषो वृत्तिकर्शितः ।**
**अपि गोकर्णमात्रेण भूमिदानेन मुच्यते ॥ ५६ ॥**

**गोकर्णमात्रेण,** गोकर्णाख्यपरिमाणेन । [3]'प्रादेशतालगोकर्णा' इत्यमरः ।

॥ इत्यानुशासनिके भूदानप्रशंसा नाम त्रिंशोत्तरद्विशततमोऽध्यायः ॥

## ॥ अथ एकत्रिंशोत्तरद्विशततमोऽध्यायः ॥

**[4]तथा दर्भेषु पिण्डांस्त्रीन्निर्वपेद्दक्षिणामुखः ।**
**अपसव्यमपाङ्गुष्ठं नामधेयपुरस्कृतम् ॥ २७ ॥**

---

१. 'शुक्लपक्षश्च पक्षाणाम्' इति कुं. पाठः ।; २. कुं.२३५ अध्यायः ।
३. अ.को. द्वि. मनुष्यवर्गः श्लो. ८३; ४. कुं.२३८ अध्यायः ।

**अपसव्यमपाङ्गुष्ठम्** इत्यत्र अपगतमङ्गुष्ठं यथा भवति तथा। पिण्डमङ्गुष्ठेन न स्पृशेदित्यर्थः।

**स्थाने संशयितं देवि शृणु कल्याणि तत्त्वतः।**
**गुह्यानां परमं गुह्यं हितानां परमं हितम्** ॥ ४३ ॥

**स्थाने** = योग्यम्।

**॥ इति आनुशासनिके पर्वणि श्राद्धप्रशंसा नाम एकत्रिंशोत्तर-द्विशततमोऽध्यायः ॥**

## ॥ अथ द्वात्रिंशोत्तरद्विशततमोऽध्यायः ॥

[१] **यत्सारस्तु नरो लोके तद्दानं चोत्तमं स्मृतम्।**
**सर्वदानविधिं प्राहुस्तदेव भुवि शोभने** ॥ ३ ॥

**यत्सारस्तु नरो लोक** इत्यत्र **यत्सारः** यद्द्रव्यबलवान् भवति शिलोञ्छादिस्ववृत्त्या यावल्लब्धं तावद्द्रव्यबलवानित्यर्थः।

**धर्मार्थकामभोगेषु [२] शक्यं दानं तु मध्यमम्।**
**स्वद्रव्यादतिहीनं तु तद्दानमधमं स्मृतम्** ॥ ६ ॥

**धर्मार्थकामभोगेषु शक्यं दानं तु मध्यमम्** इत्यत्र धर्मार्थ-कामभोगेषु शक्यं यथा भवति तथा दानमिति सम्बन्धः।

**॥ इति आनुशासनिके पर्वणि द्वात्रिंशोत्तरद्विशततमोऽध्यायः ॥**
**॥ इत्यानुशासनिके देवलोकप्रशंसा नाम त्रयस्त्रिंशोत्तरद्विशततमोऽध्यायः ॥**

---

१. कुं.२३९ **अध्यायः।**
२. **'शक्त्यभावस्तु मध्यमम्'** इति कुं.पाठः।

## ।। अथ चतुस्त्रिंशोत्तरद्विशततमोऽध्यायः ।।

[१](*)**दुष्प्रतीपमना यस्तु** इत्यत्र दुः दुःखे **प्रतीपे** विपरीते च मनो यस्य स तथोक्तः ।

(*)**तेन मे शंस कर्माणि** इत्यत्र तेन कृतानि कर्माणि मे शंसेति योग्यपदाध्याहारेण योजना ।

**।। इति आनुशासनिके पर्वणि दानधर्मकथने स्वर्गनरकप्राप्तिविचारो नाम चतुस्त्रिंशोत्तरद्विशततमोऽध्यायः ।।**

## ।। अथ पञ्चत्रिंशोत्तरद्विशततमोऽध्यायः ।।

(*)**भावाभावेषु भगवन्यद्यथा सम्प्रवर्तत** इत्यत्र भवत्यनेन भाग्यवानिति **भावः** शुभहेतुः कालः । **अभावः** तु अशुभहेतुः काल इत्यर्थः ।

**।। इति आनुशासनिके दानधर्मे पञ्चत्रिंशोत्तरद्विशततमोऽध्यायः ।।**

## ।। अथ षट्त्रिंशोत्तरद्विशततमोऽध्यायः ।।

**[२]गुरोः पूर्वं समुत्तिष्ठेत् [३]जन्यं तस्य न संविशेत् ।**
**नैवाविज्ञाप्य भर्तारमावश्यकमपि व्रजेत्** ।। ३२ ।।

**जन्यं तस्य न संविशेत्** इत्यत्र तस्य गुरोरर्थे **जन्यं** जातं वस्तु न संविशेत् । आसनशयनीयादिषु न संविशेदित्यर्थः ।

---

१. (*)चिह्नितस्थलेषु तत्तत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
२. कुं.२४३ अध्यायः ।
३. **'जघन्यं तस्य'** इति कुं.पाठः ।

[१] द्विरह्ना स्नानसादेन प्राक्सन्ध्यमभिषेचनम् ।
एककालाशनं चास्य विहितं यतिभिः पुरा ॥ ३३ ॥

**द्विरह्ना स्नानसादेन** इत्यत्र स्नानात् **सादो** भयं यस्य तेन प्राक् सन्ध्यं सन्ध्यायामेव **अभिषेचनं** स्नानं कर्तव्यम् इत्यर्थः ।

अनिष्टोऽनहङ्कारो [२] निर्वेदं भृतको यथा ।
वीतशोकभयाबाधं प्राप्नोत्यनुत्तमम् ॥ ३८ ॥

**निर्वेदं भृतको यथा** इत्यत्र **भृतकः** भारवाहकः ।

॥ इति मोक्षधर्मप्रशंसा नाम षट्त्रिंशोत्तरद्विशततमोऽध्यायः ॥

## ॥ अथ अष्टत्रिंशोत्तरद्विशततमोऽध्यायः ॥

[३] साङ्ख्यज्ञानं प्रवक्ष्यामि यथावत्ते शुचिस्मिते ।
यज्ज्ञात्वा न पुनर्मर्त्यः संसारेषु [४] पुनः पतेत् ॥ १ ॥

**यज्ज्ञात्वा न पुनर्मर्त्य** इत्यत्र **पुनः** शब्दद्वयस्य पुनः पुनः न पतेदिति योजना ।

अव्यक्तं सर्वदेहेषु [५] मर्त्येष्वमरसाश्रितम् ।
यः पश्येत् परमात्मानं बन्धनैः स विमुच्यते ॥ ४५ ॥

**अव्यक्तं सर्वदेहेषु मर्त्येष्वमरसाश्रितम्** इत्यत्र अमरैः सह आश्रितः **अमरसाश्रितः**, तं, परमात्मानम् ।॥ इति अष्टत्रिंशोत्तरद्विशततमोऽध्यायः ॥

---

१. **'द्विरह्नि स्नानशाटेन सन्ध्ययोरभिषेचनम्'** इति कुं.पाठः ।
२. **'निर्द्वन्द्वो वीतमत्सरः'** इति कुं. पाठः ।; ३. कुं.२४५ **अध्यायः**
४. **'प्रवर्तते'** इति कुं. पाठः ।; ५. **'मर्त्येष्वमरमाश्रितम्'** इति कुं.पाठः ।

॥ अथ एकोनचत्वारिंशोत्तरद्विशततमोऽध्यायः ॥

[१] **अवदध्यान्मनः पूर्वं मत्स्यः पातमिवामिषम् ।**
**एकान्ते विजने देशे सर्वतः संवृते शुचौ** ॥ ९ ॥

**अवदध्यान्मनः पूर्वम्** इत्यत्र **अवदध्यात्** अवधानं कुर्यात् । **मत्स्यः पातमिवामिषम्** इत्यत्र पातयतीति पातनहेतुमामिषमिव ।

[२] (*)**चिन्तयित्वा शरीरिणम्** इत्यत्र शरीरमस्य वशे वर्तत इति **शरीरी** नारायणः, तम् । **परं** परब्रह्म ।

(*)**आवयोस्तनुरेकैव** इत्यत्र अभिमानितया अभिधेयतया च एकस्मिन्मनसि मम च विष्णोश्च स्थितत्वाद्वा । स्वेनैव वक्ष्यमाणोत्तराध्यायरीत्या एकस्यामेव हरिहरमूर्तौ अर्धेन मम अर्धेन हरश्च स्थितत्वाद्वा आवयोस्तनुरेकैवेत्युक्तम् । एकस्थानगतैवेत्यर्थः । साक्षादैक्यस्य 'हरिश्चैव हरश्चैव द्वावप्येकायितौ हि यत्' इति वक्ष्यमाणरीत्या स्वेनैव निरस्तत्वात् । 'एकवदाचरमाणौ हि एकायितौ' इति मीमांसासूत्रकृद् व्यासः । तस्य चार्थः पूर्वोत्तरमीमांसयैव लभ्यते । न तूष्णीम् ऐक्यवादिनोऽपि मते विशिष्टयोश्चैक्याभावेन विशिष्टजडयोः सुतरामैक्याभावेन चोक्त एवार्थः ।

(*)**मया सर्वं सृजत्येष** इत्यत्र मया सह सर्वं जगत् एष नारायणः सृजतीत्यर्थः । 'सहयोगे तृतीया' इति हि वैयाकरणाः । पूजाया

---

१. कुं.२४६ अध्यायः; BORI पृ.१०२०; **'अवरुध्यात्मनः पूर्वं मत्स्यघात'** इति कुं.पाठः ।

५. (*)चिह्नितस्थलेषु तत्तत्प्रतीकघटितः श्लोकः मुद्रितकोशेषु नोपलभ्यते ।

अविशेषो नाम पूजायोग्यफलपुष्पोपहारादौ एकप्रकारता । करद्वयेन उभयोः सह पूजाया असम्भवात् । आदौ पूज्यमानस्य च प्राधान्यापरिहारात् न पूज्यमानवस्तुनोरविशेषाभावः । स च प्रधानो हरिरेव । ईशानाख्यकोणदिगधिपतेः शिवस्य इन्द्रादिवत् परिवार-पङ्क्तिस्थतायाः सुप्रसिद्धत्वात् । अत एव शिवोऽपि विष्णोः प्राधान्यं, स्वप्रभृतीनां परिवारतया अप्राधान्यं च स्थिरीकर्तुम् अस्मदादिपूजया स्वर्गप्राप्तिः, प्राधान्येन विष्णोः पूजया अन्ते विष्णुलोकप्राप्तिरिति फलविशेषमाह । स्वर्गलोकाद्विष्णुलोकस्य प्राधान्यं सर्वजनसम्प्रति-पन्नम् ।

**।। इति आनुशासनिके दानधर्मे साङ्ख्ययोगप्रशंसा नाम एकोनचत्वारिंशोत्तरद्विशततमोऽध्यायः ।।**

## ।। अथ चत्वारिंशोत्तरद्विशततमोऽध्यायः ।।

**अहं[१] पशुपतिर्नाम मद्भक्ता ये च मानवाः ।**
**सर्वे पाशुपता ज्ञेया भस्मदिग्धतनूरुहाः ।। १३ ।।**

पूर्वाध्याये वैदिकयोगं विस्तरेणोक्त्वा इदानीं हर्याज्ञया असुर-जनमोहनाय स्वकृतपाशुपतशास्त्रोक्ततामसयोगमाह **'अहं पशुपतिर्नाम'** इत्यादिना । कापालिकैराचर्यमाणसर्वाङ्गभस्मलेपनकपालधारणभिक्षा-टनादीनां वैदिकैरक्रियमाणत्वात् अहं पशुपतिरिति पाशुपतशास्त्र-प्रवर्तकस्वकीयरूपविशेषस्य प्राक् प्रस्तावाच्च पाशुपतशास्त्रोक्तकर्माङ्ग एवायं न वैदिकमार्ग इति कथं न ज्ञेयम् ?

**।। इति आनुशासनिके दानधर्मे शिवपूजाकथनं नाम चत्वारिंशोत्तरद्विशततमोऽध्यायः ।।**

---

१. कुं.२४७ अध्यायः ।

## ॥अथ एकचत्वारिंशोत्तरद्विशततमोऽध्यायः॥

गते[१] किल महादेव तत्रैका या पतिव्रता।
देवप्रियायां तिष्ठन्त्यां पुण्यलोकं जगाम सा ॥ १९ ॥

**देवप्रियायां तिष्ठन्त्याम्** इत्यत्र **देवप्रियायां** नार्यां तिष्ठन्त्यां सत्याम्।

**॥ इति दानधर्मे पतिव्रताधर्मे एकचत्वारिंशोत्तरद्विशततमोऽध्यायः ॥**

## ॥ अथ द्विचत्वारिंशोत्तरद्विशततमोऽध्यायः ॥

[२](*) **तिरश्चामृतुकालेषु नारीणामुत्सवेषु च** इत्यत्र **नारीणां** कन्यानाम् ऋतुकालेषु। **उत्सवेषु** अपत्यानां विवाहाद्युत्सवेषु। **तिरश्चां** पशूनां पोषणेषु च निष्ठां कुरुते। न तु पतिसेवायाम्।

(*) **दासीत्वेऽपि परो नास्ति दासत्वेऽपि तथैव च** इत्यत्र **परः** परलोको नास्ति।

(*) **तत्रापकारं कुर्वन्ती महादेहप्रसूतिभिः** इत्यत्र **महादेहप्रसूतिभिः** कुञ्जरमहिषादिदेहोत्पत्तिभिः इत्यर्थः।

(*) **लम्बिकासु नदीषु च** इत्यत्र **लम्बिकासु** वृक्षादिषु अधोमुखतया लम्बमानपक्षिजातिषु, **नदीषु** नदीगतमत्स्यादियोनिषु इत्यर्थः।

(*) **जातमात्रा वियुज्यत** इत्यत्र **वियुज्यते** देहैर्वियुज्यते। 'विरुत्स्यते' इति पाठे सर्वैर्विरोधं प्राप्स्यति।

---

१. कुं.२४९ अध्यायः।
२. (*)चिह्नितस्थलेषु तत्तत्प्रतीकघटितः श्लोकः मुद्रितकोशेषु नोपलभ्यते।

(*) **उच्छिन्दकं याचितकम्** इत्यत्र **उच्छिन्दकं** कस्यचित् करादुच्छिद्य बलात्कृत्य आनीतम् । **शक्तिद्वयात्** निजधैर्यशक्तिः कपटशक्तिश्चेति शक्तिद्वयम् ।

(*) **तस्मात् निर्गुणस्तु तथैव स्यात्** इत्यत्र यद्यपि वृद्धविरूपादि दोषग्रस्तो भर्ता स्यात् । तदा स्वयमपि **तथैव स्यात्** यथा मनसि दुःखं न भवति तथैव स्यात् ।

**॥ इति आनुशासनिके दानधर्मे द्विचत्वारिंशोत्तरद्विशततमोऽध्यायः ॥**

## ॥ अथ त्रिचत्वारिंशोत्तरद्विशततमोऽध्यायः॥

**दशवर्षसहस्राणि[१] बदर्यामेष[२] सात्त्वतः ।**
**तपश्चचार विपुलं सह गाण्डीवधन्वना ॥ ५५ ॥**

**तपश्चचार विपुलं सह गाण्डीवधन्वना** इत्यत्र नररूपेण गाण्डीव-धन्वना सह **सात्त्वतः** नारायणरूपः कृष्णः तपश्चचारेति योजना ।

(*)**देवेभ्यो भारतं हविः** इत्यत्र **देवेभ्यः** अर्थे वेदाब्धिं निर्मथ्य **भारतं** भारताख्यं **हविः** देवहविः अमृतमुद्धृतम् ।

**॥ इति आनुशासनिके दानधर्मे त्रिचत्वारिंशोत्तरद्विशततमोऽध्यायः ॥**

**॥ उमामहेश्वरसंवादः समाप्तः ॥**

**॥ इति आनुशासनिके दानधर्मे भारतस्तुतिर्नाम चतुश्चत्वारिंशोत्तरद्विशततमोऽध्यायः ॥**

---

१. कुं. २५२ अध्यायः ।
२. BORI पृ. १०३७; **'बदर्यामेष शाश्वतः'** इति कुं.पाठः ।

## ॥ अथ पञ्चचत्वारिंशोत्तरद्विशततमोऽध्यायः ॥

[1]

**जपश्चतुर्विधः प्रोक्तो वैदिकस्तान्त्रिकोऽपि च ।**
[2]
**पौरस्तिकोऽर्थोविद्वद्भिः कथितः स्मार्त एव च ॥ ४ ॥**

**पौरस्तिकोऽर्थोविद्वद्भिः** इत्यत्र **पुरस्तात्** अनादिकालमारभ्य विद्यमानः **पौरस्तिकः** ।

॥ इति आनुशासनिके दानधर्मे विद्वत्संरक्षणं नाम पञ्चचत्वारिंशोत्तरद्विशततमोऽध्यायः ॥

## ॥ अथ षट्चत्वारिंशोत्तरद्विशततमोऽध्यायः ॥

### ॥ श्री विष्णुसहस्रनामस्तोत्रव्याख्यानम् ॥

**यानि नामानि गौणानि विख्यातानि महात्मनः ।**
**ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥**

**यानि नामानि गौणानि** इत्यत्र गौणानि, सकलनाम्नां भगवति योगवृत्त्या प्रवर्तनात् एकैकभगवद्गुणप्रतिपादकानि, न तु अमुख्यानि, मुख्यवाच्यस्यान्यस्याप्रसिद्धत्वात्, विश्वादिनाम्नां च विष्णावमुख्यत्वस्य व्याहतत्वाच्च ।

**विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ।**
**भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः ॥**

---

१. कुं.२५३ अध्यायः ।
२. **'पौराणिकोऽथ'** इति कुं.पाठः ।

**विश्वं** विशेषेण गतिर्ज्ञानं, बुद्धिः परिपूर्णता च यस्य (सः विश्वः) तद्विश्वम् । नपुंसकं तु विष्णोः परब्रह्मत्वज्ञापनार्थम् । 'टुओश्वि गति-वृद्ध्योः' इति धातोः, 'वृतु वर्तने' इति धातोः डप्रत्यये कृते, विशां प्रवर्तको वा विश्वः । 'विश प्रवेशने' इति धातोः सर्वेषां हृदि प्रविष्टत्वात् वा विश्वः, विश्ववाचकसर्वनामत्वे मङ्गलामङ्गलसकलपदार्थवाचकत्वात् अपाठ्यमेव स्यात् । 'विष्णोः सहस्रनामानि' इति प्रक्रमविरोधाच्च । न च विश्वात्मकत्वाद्विश्व इति वाच्यं, जडजगदभेदानङ्गीकारेण अप-सिद्धान्तात् । 'भूतभव्यभवत्प्रभुः, मुक्तानां परमा गतिः' इति च वक्ष्यमाणनामविरोधाच्च ।

**विष्णुः** 'विष्लृ व्याप्तौ' इति धातोर्व्याप्तत्वाद्विष्णुः । विशिष्टौ षणौ बलप्रेरकत्वाख्यगुणौ यस्य सः विष्णुः । ताच्छीलिकत्वात् उन् प्रत्ययः । ''षकारो बलं णकारः प्राण आत्मा''[१] इति श्रुतिः ।

**वषट्कारः** वं बलं, षट् पूर्णज्ञानादि षड्गुणा एव, कारः, आकारो यस्य सः वषट्कारः, वषट् इति यज्ञे आक्रियमाणत्वाद्वा वषट्कारः । यद्वा ''वा गतिगन्धनयोः' इति धातोः यावज्ज्ञानाय परलोकगतये वैदिकपदवासनार्थं वा, इतिहासपुराणाभ्यां सह पञ्च वेदाः निर्णायकब्रह्ममीमांसासूत्रं चेति षट्शास्त्राणि करोतीति वषट्कारः ।

**योगो योगविदां नेता प्रधानपुरुषेश्वरः ।**
**नारसिंहवपुः श्रीमान् केशवः पुरुषोत्तमः ॥**

**योगः** युनक्ति सकलगुणानिति योगः । 'युजिर्योगे' इति धातुः ।

---

१. ऐतरेय.उ. २-८-७/३

**प्रधानपुरुषेश्वरः** **प्रधानं** = प्रकृतिः, पुरुषाः = जीवाः तेषामीश्वरः प्रधानपुरुषेश्वरः।

**नारसिंहः** 'निहन्मि भजमानानां नारसिंहस्ततो ह्यहम्' इति नारसिंहः।

**केशवः** कश्च ईशश्च केशौ, तौ वाति = प्रवर्तयतीति केशवः, शोभनकेशवान्वा केशवः।

**सर्व शर्व शिवः स्थाणुर्भूतादिर्निधिरव्ययः।**
**सम्भवो भावनो भर्ता प्रभवः प्रभुरीश्वरः ॥**

**सर्वः** सरति गच्छति, युद्धे दैत्यचक्रं वारयति चेति सर्वः।

**शर्वः** मरणानन्तरमपि दैत्यानां **शं** सुखं वारयतीति शर्वः।

**शिवः** शोभनः।

**स्थाणुः** स्थिरत्वात् स्थाणुः।

शिवादिनामान्यपि भगवत एव नामानि। शिवादयस्तु भगवन्नामधारका एवेति सूचनायेदमुक्तम्। [१] ''यो देवानां नामधा एक एवे''ति श्रुतिः।

**निधिः** नितरां सज्जनैः हृदि धार्यत इति निधिः।

**सम्भवः** सम्यग्जगद्भवत्यस्मादिति सम्भवः।

**भावनः** त्रिविधजीवानामपि **भावं** स्वभावं नयतीति भावनः।

**प्रभवः** प्रकृष्टः **भवः** शोभनं यस्मात्स प्रभवः।

**स्वयम्भूः शम्भुरादित्यः पुष्कारक्षो महास्वनः।**
**अनादिनिधनो धाता विधाता धातुरुत्तमः ॥**

१. ऋ.सं. १०-८२-३

**शम्भुः** सुखभूमित्वात् शम्भुः ।

**आदित्यः** वामनरूपेण अदित्यां जातत्वात् आदित्यः ।

**धाता** जगद्धारकः ।

**विधाता** विशिष्टानां पोषकः। 'डुधाञ् धारणपोषणयोः' इति धातुः ।

**अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ।**
**विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ॥**

**अप्रमेयः** प्रकर्षेण मेयो न भवतीत्यप्रमेयः ।

**हृषीकेशः** हृषीकाणाम् इन्द्रियाणाम् ईशः हृषीकेशः । (हृषी)-हर्षरूपकेशवान्वा हृषीकेशः ।

**विश्वकर्मा** विश्वस्य कर्म, पुण्यपापाख्यं कर्म यस्मात्स विश्वकर्मा ।

**मनुः** 'मनु अवबोधने' इति धातोः सर्वज्ञः ।

**त्वष्टा** आदौ चतुर्दशभुवनाख्यप्रासादकर्ता । जगद्वर्धकिरित्यर्थः । यद्वा प्रलये जगतः अल्पीकरणाद्वा त्वष्टा । 'तक्षू त्वक्षू तनूकरणनिर्भर्त्सनयोः' इति धातुः ।

**स्थविष्ठः** अनादिकालीनत्वात् बहुवयस्कः ।

**स्थविरः** तिष्ठतीति **स्थं** जगत् तत्र विशेषेण राजत इति वा, विशेषेण रमणरूपत्वाद्वा स्थविरः ।

**अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ।**
**प्रभूतस्त्रिककुब्धाम पवित्रं मङ्गलं परम् ॥**

**प्रतर्दनः** प्रकर्षेण भीषकत्वात् प्रतर्दनः ।

**प्रभूतः** प्रकर्षेण भुवि **उतो** व्याप्तः प्रभूतः । 'वेञ् तन्तुसन्ताने' इति धातुः ।

**त्रिककुत्** वराहावतारे भुजद्वयं स्कन्धमूलं चेति त्रयः ककुदो यस्य सः तथोक्तः।

**धाम** आधारभूतः।

**ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः।**
**हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥**

**प्राणः** प्रकृष्टयज्ञादिप्रेरकः, प्रकर्षेण आसमन्तात् णं सुखं यस्येति वा प्राणः। 'णश्च निर्वृतिवाचकः' इति स्मरणात्।

**ज्येष्ठः** अतिशयेन वयसा ज्यायान् ज्येष्ठः।

**श्रेष्ठः** अतिशयेन महिम्ना श्रेयान् श्रेष्ठः।

**ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः।**
**अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥**

**विक्रमः** त्रिविक्रमावतारे विशेषेण पादविक्षेपो यस्य सः। 'क्रमु पादविक्षेपे' इति धातुः।

**क्रमः** करोतीति क्रा परिचारिका मा लक्ष्मीर्यस्य सः क्रमः।

**अनुत्तमः** न विद्यते उत्तमं यस्मात्सोऽनुत्तमः।

**कृतिः** 'कृती छेदने' इति धातोः दुःखच्छेदनकर्ता।

**सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः।**
**अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः ॥**

**अहः** हेयो न भवतीत्यहः। 'ओ हाक् त्यागे' इति धातुः।

**संवत्सरः** सम्यक् वत्सान् स्वशिशुप्रायान् भक्तान् रमयतीति संवत्सरः।

**व्यालः** वि विशिष्टान् विषयान् आसमन्तात् लेढि, 'लिह आस्वादने' इति धातोः लिहत्यास्वादयतीति वा व्यालः। यद्वा 'लीङ् क्षये' इति धातोः विशेषेण आसमन्तात् जगतः क्षयो यस्मात्। 'लीङ् श्लेषणे' इति धातोः विशेषेण आसमन्तात् श्लेषो यस्येति। 'लस प्रकाशने' इति धातोः विशेषेण आसमन्तात् प्रकाशनं यस्येति वा व्यालः। सर्वत्र धातोर्भावे डप्रत्ययः। "शुभं पिबत्यसौ विष्णुः"[१] इति स्मृतेः।

**प्रत्ययः** प्रति प्रति विषयान् जानातीति प्रत्ययः। 'अयपयगतौ' इति धातुः। गत्यर्थानां ज्ञानार्थत्वात्।

**अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः।**
**वृषाकपिरमेयात्मा सर्वयोगविनिःसृतः ॥**

**सिद्धिः** 'षिञ् बन्धने' इति धातोः स्वस्मिन् स्नेहबन्धनवान्। 'धिञ् पोषणे' इति धातोः पोषयतीति सिद्धिः।

**वृषाकपिः** सुखं वर्षयतीति वृषः। अकं दुःखं पिनष्टीति अकपिः, वृषश्चासावकपिश्चेति विग्रहः।

**वसुर्वसुमनाः सत्यः समात्मा सम्मितः समः।**
**अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ॥**

**वसुः** वसतीति वसुः।

**वसुमनाः** वसुनि मनो यस्य सः वसुमनाः।

**सत्यः** समीचीने आनन्दज्ञाने यस्य सः। 'अथ यत्सत्

१. ब्र.सू.भा. १-२-३

तदमृतं यत्ति तन्मर्त्यं ते उभे यमयति' इति श्रुतेः। मुक्तामुक्तनियामको वा सत्यः।

**समात्मा** नीचोच्चप्राणिष्वपि समः, ज्ञानानन्दादिगुणैरेकप्रकारः आत्मा स्वरूपं यस्य सः समात्मा।

**सम्मितः** सम्यक् मितः प्रमितः ज्ञातः सम्मितः।

**समः** मया लक्ष्म्या सहितः समः।

**वृषकर्मा** वृषवत् नन्दिवत् कर्म गमनागमनाख्यं कर्म यस्य सः।

**वृषाकृतिः** वृषवत् नन्दिवत् भयङ्करी आकृतिर्यस्य सः वृषाकृतिः।

**रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः।**
**अमृतः शाश्वतः स्थाणुर्वरारोहो महातपाः ॥**

**रुद्रः** रुजं द्रावयतीति रुद्रः।

**बभ्रुः** कपिलवर्णः, भरणशीलो वा बन्धकभ्रूमण्डलो वा बभ्रुः।

**शुचिश्रवाः** **शुचि** शुद्धं **श्रवः** श्रवणं यस्य स तथोक्तः शुचिश्रवाः।

**स्थाणुः** सर्वत्र तिष्ठति **स्थः** अणुश्चेति स्थाणुः।

**सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः।**
**वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित्कविः ॥**

**भानुः** प्रकाशनशीलः "भा दीप्तौ" इति धातुः।

**विष्वक्सेनः** **विष्वक्** सर्वत्र **सेना** स्वभटसेना यस्य सः विष्वक्सेनः।

**जनार्दनः** दुष्टजनम् अर्दयति, भक्तानां **जनं** जननम् अर्दयतीति वा जनार्दनः।

**वेदः** वेत्तीति वेदः।

**वेदवित्** वेदं वेत्तीति वेदवित्।

**अव्यङ्गः** व्यङ्गो न भवतीति अव्यङ्गः।

**वेदाङ्गः** वेदाः अङ्गेषु यस्य सः।

**वेदवित्** वेदेन लभ्यत इति वेदवित्। 'विद्लृ लाभे' इति धातुः। वेदः **वित्** वेदको यस्य सः वेदवित्।

**लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः।**
**चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥**

**कृताकृतः** कृतः अकृतः मोक्षो येन सः कृताकृतः। पराधीन-विशेषावाप्तिरूप जन्मना **कृता** उत्पादिताः **अकृताः** नित्याः कालाकाशादयो येन स तथोक्तः।

**भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः।**
**अनघो विजयो जेता विश्वयोनिः पुनर्वसुः ॥**

**भोजनं** भक्तान् भोजयतीति भोजनम्।

**पुनर्वसुः** पुनः पुनर्वसु यस्मात्स पुनर्वसुः।

**उपेन्द्रो वामनः प्रांशुरमोघः शुचिरूर्जितः।**
**अतीन्द्रः सङ्ग्रहः सर्गो धृतात्मा नियमो यमः ॥**

**अतीन्द्रः** इन्द्रमप्यतिक्रम्य वर्तमानः अतीन्द्रः।

**सङ्ग्रहः** सङ्गृह्णातीति सङ्ग्रहः।

**सर्गः** सृजतीति सर्गः।

**नियमः** नितरां यमयतीति नियमः।

**यमः** संहर्ता।

**वेद्यो वेद्यस्सदायोगी वीरहा माधवो मधुः ।**
**अतीन्द्रियो महामायो महोत्साहो महाबलः ॥**

**वैद्यः** विद्यासम्बन्धी ।
**माधवः** लक्ष्मीपतिः ।
**मधुः** मधुकुलोत्पन्नः, मधुरो वा ।
**महामायः** महामाहात्म्यः ।

**महेष्वासो महीभर्ता श्रीनिवासस्सतांगतिः ।**
५ **अनिरुद्धस्सुरानन्दो गोविन्दो गोविदांपतिः ॥**

**गोविन्दः** वेदविदां पतिः ।

**मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः ।**
**हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः ॥**

**सुपर्णः** सुष्ठु पूर्णः ।
**पद्मनाभः** पद्मं नाभौ यस्य सः पद्मनाभः । **पदोः** पादयोः मा, लक्ष्मीर्यस्य सः पद्मः, नभस्सम्बन्धी नाभः । पद्मश्चासौ नाभश्चेति विग्रहः ।
**प्रजापतिः** प्रजासु **अपतिः** = पतिर्यस्य न, स प्रजापतिः ।

**अमृत्युः सर्वदृक् सिंहः सन्धाता सन्धिमान् स्थिरः ।**
**अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा ॥**

**सर्वदृक्** सर्वत्र दृक् दृष्टिर्यस्य सः। [१]'विश्वतश्चक्षुः' इति हि श्रुतिः ।

---

१. ऋ.सं. १०-८२-३

**सिंहः** 'सिंहो वर्णविपर्ययात्' इति वचनात् हिंसाशीलः ।

**अजः** अ इति **जम्** आजानजं स्वतःसिद्धं स्वाभाविकं नाम यस्य सः । 'अ इति ब्रह्म'[१] इति श्रुतिः ।

**गुरुर्गुरुतमो धामः सत्यः सत्यपराक्रमः ।**
**निमिषोऽनिमिषस्स्रग्वी वाचस्पतिरुदारधीः ॥**

**धाम** धा धारयन्ती भूः **अमा** सहायो यस्य तद्धाम । परं ब्रह्म ।

**सत्यः** सत् यं ज्ञानं यस्य सः सत्यः ।

**निमेषः** निमिषति प्रलये स्वनयनमिति निमेषः ।

**अनिमिषः** तदापि **अनी** मुख्यप्राणः **मिषन्** पश्यन् यस्य सोऽनिमिषः ।

**अग्रणीर्ग्रामणीः श्रीमान्न्यायो नेता समीरणः ।**
**सहस्रमूर्धा विश्वात्मा सहस्राक्षस्सहस्रपात् ॥**

**न्यायः** नितराम् आयो यस्य सः न्यायः ।

**आवर्तनो निवृत्तात्मा संवृतस्सम्प्रमर्दनः ।**
**अहः संवर्तको वह्निरनिलो धरणीधरः ॥**

**अहः** न हीयत इत्यहः ।

**संवर्तकः** सम्यक् प्रवर्तकः ।

**वह्निः** वनं खाण्डववनं हिनस्तीति वह्निः ।

**अनिलः** न विद्यते **इला** आधारभूता भूमिर्यस्य सः अनिलः । 'किंस्विदासीदधिष्ठानम्'[२] इति हि श्रुतिः ।

---

१. ऐ.आ. २-३-८७; २. ऋ.सं. १०-८१-२

**सुप्रसादः प्रसन्नात्मा विश्वधृग्विश्वभुग्विभुः ।**
**सत्कर्ता सत्कृतिः साधुर्जन्हुर्नारायणो नरः ॥**

**सत्कृतिः** सती **कृतिः** कर्म आकृतिर्वा यस्य सः तथोक्तः ।

**जह्नुः** जनं हुङ्करोतीति जह्नुः । जातं वस्तु **निह्नुते** निराकरोति संहरतीति वा जह्नुः ।

**नारायणः** सर्वगुणपरिपूर्णः ।

**नरः** न रीयते न क्षीयते इति नरः। 'रीङ् क्षये' इति धातुः ।

**वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः ।**
**वर्धनो वर्धमानश्च विविक्तः श्रुतिसागरः ॥**

**वृषाही** **वृषं** वृषभासुरम् **आ** सम्यक् हिनस्तीति वृषाही ।

**वृषभः** श्रेष्ठः ।

**विष्णुः** **विषं** कालियनागस्य विषं **नुदति** नाशयतीति विष्णुः । 'णुद प्रेरणे' इति धातुः ।

**वृषपर्वा** वृषाणि अभीष्टवर्षकाणि पर्वाणि पञ्च पर्वाणि यस्य सः तथोक्तः ।

**सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः ।**
**नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः ॥**

**वसुः** वासयति दिक्पालतया स्थाने देवान् इति वसुः ।

**शिपिविष्टः** **शिपिषु** काष्ठेषु अग्न्यन्तर्यामितया **विष्टः** प्रविष्टः शिपिविष्टः ।

**ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः ।**
**ऋद्धस्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः ॥**

**ऋद्धः** अभिवृद्धः ।

**अष्टाक्षरः** 'ॐ नमो नारायणाय' इति अष्ट अक्षराणि यस्य सः तथोक्तः ।

**मन्त्रः** मननशीलः ।

**अमृतांशूद्भवो भानुः शशबिन्दुस्सुरेश्वरः ।**
**औषधं जगतः सेतुः सत्यधर्मपराक्रमः ॥**

**भानुः** सूर्यादि भासम् आसमन्तात् नयतीति भानुः ।

**शशबिन्दुः** मृगयायां शशस्य बिन्दुर्यस्य स तथोक्तः ।

**औषधं** व्याधीनामूष्मणा दग्धाः औषाः, 'उष दाहे' इति धातुः, तान् धन्वन्तरिरूपेण धारयतीत्यौषधम् ।

**भूतभव्यभवन्नाथः पवनः पावनोऽनलः ।**
**कामहा कामकृत्कान्तः कामः कामप्रदः प्रभुः ॥**

**भूतभव्यभवन्नाथः** भूतभव्यभवन्तः **नाथाः** याचका यस्य स तथोक्तः। 'नाथृयाञ्चायाम्' इति धातुः ।

**पवनः** पं चक्रवर्तिसमूहं **वनति** भाग्यदानेन भजतीति पवनः । 'वन सम्भक्तौ' इति धातुः ।

**अनलः** भक्ताभीष्टदाने न विद्यते अलम्बुद्धिर्यस्य सोऽनलः ।

**कामहा** दुर्जनानां कामहन्ता ।

**कामकृत्** कामं करोतीति कामकृत् । कामपिता ।

**कामः** काम्यते इति कामः ।

**इष्टो विशिष्टश्शिष्टेष्टः शिखण्डी नहुषो वृषः ।**

**क्रोधहा क्रोधकृत्कर्ता विश्वबाहुर्महीधरः ॥**

**शिखण्डी** कृष्णावतारे बाल्ये चूडाधारी बर्हधारी वा, यद्वा 'शीङ् स्वप्ने' इति धातोः **शिं** निद्रां खण्डयतीति शिखण्डी ।

**नहुषः** 'नह बन्धने' इति धातोः, 'षोऽन्तकर्मणि' इति च धातोः संसारे जीवान् बध्नाति, ज्ञाने सति संसारान्तं च करोतीति नहुषः ।

**वृषः** वृताः **षाः** षड्गुणाः येन सः वृषः ।

**अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः ।**

**अपां निधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥**

**प्राणः** प्राणम्, प्रकृष्टान् स्ववैकुण्ठलोकं प्रत्यानयतीति प्राणः।

**स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः ।**

**वासुदेवो बृहद्भानुरादिदेवः पुरन्दरः ॥**

**स्कन्दः** 'सृ गतौ' इति धातोः डप्रत्यये कृते । **सं** ज्ञानं **कं** सुखं च भक्तानां ददातीति स्कन्दः । दुर्जनहृदयात् स्यन्दनात् स्कन्धः ।

**स्कन्दधरः** स्कन्दं षण्मुखं धारयतीति स्कन्दधरः ।

**वायुवाहनः** वायुं श्वासवायुं वहन्तीति **वायुवाहा** जीवाः तान् नयति प्रेरयतीति वायुवाहनः ।

**बृहद्भानुः** महाकान्तिमान् ।

**पुरन्दरः** परपुरं दारयतीति पुरन्दरः ।

**अशोकस्तारणस्तारः शूरः शौरिजनेश्वरः ।**
**अनुकूलः शतावर्तः पद्मी पद्मनिभेक्षणः ॥**

**तारः** 'तॄ प्लवनतरणयोः' इति धातुः, कर्तरि घञिकृते वृद्धौ च कृतायां 'तत् सृष्ट्वा तदेवानुप्राविशत्'[१] इति ''असङ्गो ह्ययं पुरुषः'' इति श्रुतेश्च सृष्ट जगदन्तः प्लवते, तत्रापि संसारादुत्तीर्ण इति तारः ।

**शतावर्तः शतम्** अमृतपानयोग्यदेवानां शतगणम् आसमन्तात् तत्त्वदेवतारूपेण प्रवर्तयतीति शतावर्तः ।

**पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत् ।**
**महर्धिॠद्धो वृद्धात्मा महाक्षो गरुडध्वजः ॥**

**शरीरभृत् शरी** अमोघशरवान् **ईरः** प्रेरकः **भृत्** धारकश्चेति शरीरभृत्। यद्वा पञ्चात्मको मारुत एव बाण इति वचनात् **शरी** शराकारवान्, **ईरो** मुख्यप्राणः, तं बिभर्तीति शरीरभृत् । प्रलयकाले स्वशरीरान्तः जगद्बिभर्तीति वा शरीरभृत् ।

**अतुलश्शरभो भीमस्समयज्ञो हविर्हरिः ।**
**सर्वलक्षणलक्षण्यो लक्ष्मीवान् समितिञ्जयः ॥**

**शरभः** परशरान् भञ्जयतीति शरभः । त्रिपुरघ्नशराग्रे भातीति वा शरभः ।

**हविः** **हा** हन्ता ज्ञाता रक्षोहा वा, **विः** विशिष्टश्चेति हविः ।

**विक्षरो रोहितो मार्गो हेतुर्दामोदरस्सहः ।**
**महीधरो महाभागो वेगवानमिताशनः ॥**

---

१. तै.उ. २-१४

**विक्षरः** क्षरणरहितः ।

**रोहितः** रुग्मवर्णः ।

**मार्गः** मारयति संसारं गमयत्यपवर्गमिति मार्गः ।

**सहः** सहनशीलः ।

**महीधरः** **मही** भूमिः, **धरा** जगद्धारयित्री येन सः महीधरः ।

**उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः ।**
**करणं कारणं कर्ता विकर्ता गहनो गुहः ॥**

**गुहः** आच्छन्नः । 'गुहू संवरणे' इति धातुः ।

**व्यवसायो व्यवस्थानः संस्थानस्स्थानदो ध्रुवः ।**
**परर्धिः परमस्पष्टस्तुष्टः पुष्टश्शुभेक्षणः ॥**

**व्यवसायः** निश्चयवान् ।

**व्यवस्थानः** दैत्यान् प्रति **वि** विरुद्धतया अवस्थानं यस्य स तथोक्तः ।

**संस्थानः** देवान् प्रति **सं** सम्यक् अवस्थानं यस्य सः संस्थानः ।

**स्थानदः** 'ष्ठा गतिनिवृत्तौ' इति धातोः त्रिविधजीवानामपि पुनरावृत्तिशून्यतत्तद्योग्यस्थानप्रदः ।

**ध्रुवः** **ध्रून्** धारणशीलान् देवान् वर्तयतीति ध्रुवः ।

**रामो विरामो विरजो मार्गो नेयो नयोऽनयः ।**
**वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः ॥**

**विरामः** आरब्धकार्यस्य विरामवान् । आरब्धान्तगामीत्यर्थः ।

**मार्गः** **मारं** कामं कैलासशृङ्गे वक्रनामकासुरवधाय स्वोदराद्बहिर्गमयतीति मार्गः ।

**नेयः** शिष्यादिषु व्याख्यानेन नेतुं निर्णेतुं योग्यः नेयः ।

**नयः** नीतिमान् ।

**अनयः** तदर्थमेव, **अनं** मध्वरूपं वायुं भूलोकं प्रति यापयतीति अनयः ।

**वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः ।**
**हिरण्यगर्भश्शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥**

**वैकुण्ठः** कुण्ठनरहितदेहसुखज्ञानादिमान् ।

**पुरुषः** **पुरवः** पूर्णाः, **षाः** षड्गुणाः यस्य सः पुरुषः ।

**प्राणः** प्रकर्षेण देवाः शिष्यादिषु यं नयन्ति स प्राणः 'तं देवाः प्राणयन्त'[१] इति श्रुतेः ।

**प्राणदः** उत्पत्तिसमये प्राणं ददातीति, मरणसमये 'दो अवखण्डने' इति धातोः **प्राणं** श्वासवायुं **द्यति** खण्डयतीति च प्राणदः ।

**प्रणवः** प्रकर्षेण सदा **नवः** अभिनवः ।

**हिरण्यगर्भः** **हिरण्यं** सौवर्णं ब्रह्माण्डं गर्भे यस्य स तथोक्तः ।

**वायुः** 'वा गतिगन्धनयोः' इति धातोः वं ज्ञानम्, अङ्गपरिमलः निरवधिकमायुश्च यस्य स तथोक्तः ।

**अधोक्षजः** **अक्षजम्** अक्षजनितं ज्ञानं यस्मादधः सोऽधोक्षजः ।

**ऋतुस्सुदर्शनः कालः परमेष्ठी परिग्रहः ।**
**उग्रस्संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥**

---
१. ऐ.आ.२-१-५

**ऋतुः(क्रतुः)**(कृती प्रयत्ने) 'ऋती प्रयत्ने' इति धातोः महा-प्रयत्नवान् ।

**उग्रः** उत्कृष्टान् जीवान् रमयतीत्युग्रः ।

**संवत्सरः** सम्यक् वत्सरो यस्मात्प्रवर्तते स संवत्सरः । **संवान्** सामीचीन्यवान् **सरः** कण्ठमाला सरो यस्येति वा संवत्सरः ।

**विश्रामः** कार्ये श्रमरहितः ।

**विश्वदक्षिणः** विश्वस्मिन् कार्ये **दक्षिणः** कुशलः विश्वदक्षिणः ।

**विस्तारस्स्थावरस्स्थाणुः प्रमाणं बीजमव्ययम् ।**
**अर्थोऽनर्थो महाकोशो महाभोगो महाधनः ॥**

**विस्तारः** व्याप्तः ।

**स्थावरः** **स्थाः** सत्यादिलोकेषु स्थिता देवाः **अवरा** यस्मात्स तथोक्तः ।

**स्थाणुः** **अणुषु** परमाणुषु स्थितः स्थाणुः ।

**प्रमाणम्** प्रकृष्टं **मानं** परिमाणं यस्य तत्प्रमाणम् ।

**अव्ययः** **अविं** मेषरूपं शङ्करमारुह्य **अयः** योगिनीयुद्धाय अगच्छदित्यव्ययः । 'अय गतौ' इति धातुः । 'मेषरूपशङ्करवाहनः'[१] इति स्मृतेः ।

**अर्थः** सकलवेदार्थः ।

**अनर्थः** दैत्यानर्थकारी यद्वा **अनर्थः** जगत् सृष्ट्यादौ स्वप्रयोजनरहितः ।

---

१. वासुदेवसहस्रनाम श्लो.१९९

**अनिर्विण्णस्स्थविष्ठोभूर्धर्मयूपो महामखः ।**
**नक्षत्रनेमिर्नक्षत्री क्षमः क्षामस्समीहनः ॥**

**अनिर्विण्णः** भक्तानामभीष्टं दत्वा दत्वापि पश्चान्निर्वेदरहितः ।

**स्थविष्ठः** अतिशयेन स्थवीयान् **स्थिरः** स्थविष्ठः ।

**भूः** 'भू सत्तायाम्' इति धातोः सदा विद्यमानः ।

**धर्मयूपः** धर्मो **यूपः** यस्य अधिष्ठानं स तथोक्तः ।

**महामखः** महान् **मखः** यस्य पूजायूपः स तथोक्तः ।

**नक्षत्रनेमिः** **नक्षत्रं** ज्योतिर्मण्डलमेव **चक्रनेमिः** स्वचक्रस्थानीयं यस्य, शिंशुमाररूपेण ज्योतिर्मण्डलं चक्रवत्पर्यावर्तयन्नित्यर्थः ।

**नक्षत्री** क्षत्रा न भवन्तीति **नक्षत्राः** ब्राह्मणाः तद्वान् ब्राह्मणप्रिय इत्यर्थः ।

**क्षमः** समर्थः ।

**क्षामः** क्षमासम्बन्धी क्षमावान् वा । भूधरो वा ।

**यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः ।**
**सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥**

**यज्ञः** 'यज देवपूजासङ्गतिकरणदानेषु' इति धातोः लीलया यज्ञकर्ता, पातालादिलोकानाम् अन्योन्यसङ्गतिकर्ता, भक्तानामभीष्टदाता चेति यज्ञः ।

**क्रतुः** करणशीलः ।

**सत्रम्** 'त्रैङ् पालने'इति धातोः जगत्पालनेन सहितं सत्रम् ।

**सर्वदर्शी** सर्वे **दर्शाः** अमावास्याः पूजाविशेषयोग्यतया अस्य सन्तीति सर्वदर्शी ।

**स्वापनः स्ववशो व्यापी नैकात्मा नैककर्मकृत् ।**
**वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥**

**नैकात्मा** **एकात्मा** जीवैः सह एकात्मा न भवतीति नैकात्मा ।
**वत्सरः** कृष्णावतारे वत्सैः सह रमत इति वत्सरः ।
**वत्सलः** वात्सल्यवान् ।
**वत्सी** श्रीवत्सवान् ।

**धर्मकृद्धर्मगुब्धर्मी सदसत्क्षरमक्षरम् ।**
**अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः ॥**

**सदसत्** **सत्** निर्दुष्टम्, **असत्** अवसादनायोग्यं 'षद्लृ विशरणगत्यवसादनेषु' इति धातुः ।
**क्षरम्** क्षरयति जगदिति क्षरम् ।
**अक्षरम्** नाशरहितम् ।
**विधाता** **वेः** गरुडस्य **धाता** पोषकः विधाता । **विः** गरुड एव **धाता** धर्ता वाहनं यस्येति वा विधाता ।

**गभस्तिनेमिः सत्त्वस्थः सिंहो भूतमहेश्वरः ।**
**आदिदेवो महादेवः देवेशो देवभृद्गुरुः ॥**

**गभस्तिनेमिः** गभस्तयः स्वकान्तयः नेमिवत् यस्य सः गभस्तिनेमिः। सहस्रोल्क इत्यर्थः ।
**सिंहः** शरीरार्धेन सिंहाकारवान् ।

**उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।**
**शरीरीभूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः ॥**

**उत्तरः** अतिशयेन उत्कृष्टः उत्तरः ।

**शरीरी** प्रशस्तशरीरवान् । 'प्राशास्त्ये मतुप्' ।

**कपीन्द्रः** कं सुखं पिबन्तीति कपयो मुक्ताः । तेषामिन्द्रः कपीन्द्रः । रामावतारे कपीनामिन्द्रो वा ।

**सोमपोऽमृतपः सोमः पुरुजित्पुरुसत्तमः ।**
**विनियोज्यः(विनियो जयः) सत्यसन्धो दाशार्हः सात्वतां पतिः**

**सोमः** उ क्लेशो न भवतीति **उमा** सौख्यं, तेन सहितः सोमः।

**जीवो विनयिता साक्षी मुकुन्दोऽमितविक्रमः ।**
**अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ॥**

**जीवः** 'जीव प्राणधारणे' इति धातोः इन्द्रियाणामाधारः ।

**विनयिता** कालीयनागफणान् विनमयन् ।

**साक्षी** साक्षादीक्षत इति ।

**अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः ।**
**आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः ॥**

**अजः** 'अमानोनाः प्रतिषेधे' इति वचनात् **आत्** 'नेति नेति निषेधात्' **जः** इत्यजः । 'नेतिनेत्यात्मा अगृह्यो न हि गृह्यत'[१] इति श्रुतेः ।

**महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः ।**
**त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत् ॥**

१. बृहदारण्यकोपनिषत् ५-९-२६

**कृतज्ञः** कृतं पौरुषेयग्रन्थं जानातीति कृतज्ञः।

**महाशृङ्गः** मत्स्यावतारे महत् शृङ्गं यस्य सः तथोक्तः।

**महावराहो गोविन्दः सुषेणः कनकाङ्गदी।**
**गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥**

**सुषेणः** शोभना सेना यस्य सः सुषेणः। 'षिञ् दाने' इति धातोः सुष्ठु दाता वा।

**वेधाः स्वाङ्गोऽजितः कृष्णो दृढः सङ्कर्षणोऽच्युतः।**
**वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ॥**

**स्वाङ्गः** सुष्ठु आसमन्तादङ्गानि यस्य सः स्वाङ्गः।

**कृष्णः** कर्षतीति कृष्णः।

**वरुणः** **वम्** अमृतं दैत्येषु रुणद्धीति वरुणः। **वम्** अमृतं देवेषु न रुणद्धीति वा वरुणः।

**वृक्षः** 'वृती छेदने' इति धातोः दैत्यछेत्ता।

**पुष्कराक्षः** 'पुष पुष्टौ' इति धातोः भक्तान् ज्ञानभक्त्यादिगुणैः पुष्टान् करोतीति पुष्करम् **अक्षि** यस्य सः पुष्कराक्षः।

**भगवान्भगहानन्दी वनमाली हलायुधः।**
**आदित्योज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ॥**

**भगहा** दैत्यानां **भगं** भाग्यं हन्तीति भगहा। यद्वा **भौ** भारूपौ सूर्याचन्द्रमसौ पर्वणि पर्वणि गच्छतीति **भगो** राहुः तं हन्तीति भगहा।

**नन्दी** आनन्दवान्।

**आदित्यः** **आदिनी** अनादिकालमारभ्य वर्तमाने त्ये आनन्दज्ञाने यस्य सः आदित्यः । द्वितीयादित्यपदस्य 'अद भक्षणे' इति धातोः **आदिनः** प्रजाभक्षणशीला दैत्याः तान् त्यजतीत्यादित्यः । 'त्यज विसर्गे' इति धातोः कर्तरिप्रत्ययः ।

**सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः ।**
**दिवस्स्पृक् सर्वदृग्व्यासो वाचस्पतिरयोनिजः ॥**

**सर्वदृक्** सर्वैर्वेदैः दृश्यत इति सर्वदृक् । सर्वे वेदाः दर्शयन्ति स्वं स्वमर्थं यस्मादिति **सर्वदृक्** सकलवेदव्याख्यातेत्यर्थः ।

**व्यासः** विशेषेण बदरिकाश्रमे **आवासः** उपवेशनं यस्येति व्यासः ।

**त्रिसामा सामगः साम निर्वाणं भेषजं भिषक् ।**
**सन्न्यासकृच्छमः शान्तो निष्ठा शान्तिः परायणः ॥**

**त्रिसामा** निधनोद्गीथप्रतिहाराख्यानि त्रीणि सामानि यस्य प्रियाणि स त्रिसामा ।

**सामगः** सामवचनेन कुरुसुतान् प्रति सन्धानाय गतत्वात् सामगः ।

**साम** समज्ञानादिगुणसम्बन्धी साम ।

**निर्वाणम्** निर्गतं वाणं प्राकृतं शरीरं [illegible] [illegible] वेदमार्गा [illegible] परावृत्य गताः वाणा यस्मादिति वा निर्वाणम् ।

**भेषजम्** संसाराख्यव्याधेः औषधभूतम् ।

**भिषक्** [illegible] भिषक् ।

**सन्न्यासकृत्** सम्यग्दोषाणां न्यासकृत् ।

**शमः** शमाख्यगुणवान् ।

**शान्तः** वेदोक्त शतानन्दपरम्परायाः **अन्तः** अन्तिमः 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'[१] इति श्रुत्युक्तः निरवधिकानन्दो यस्य सः तथोक्तः ।

**निष्ठा** नितरां स्थितिर्देवेषु यस्याः सा नारायणी, मूर्तिः निष्ठा ।

**शान्तिः** प्राकृतसुखस्य **अन्तिः** अवसानं यस्य स तथोक्तः ।

**शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः ।**
**गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ॥**

**कुमुदः** कौ भूमौ मोदयतीति कुमुदः ।

**कुवलेशयः** 'वली परिवर्तने' इति धातोः **कोः** भूमेः **बलेः** सकाशात् **वले** परिवर्तने शयः आशयो यस्य सः तथोक्तः । यद्वा **कोः** भूमेः **बले** 'तादर्थ्ये सप्तमी' बलाय श्वेतद्वीपे शेत इति । 'वबयोरभेद' इति वचनात् ।

**गोप्ता** गोपयति आच्छादयति स्वात्मानं इति गोप्ता ।

**वृषप्रियः** धर्मप्रियः ।

**अनिवर्ती निवृत्तात्मा सङ्क्षेप्ता क्षेमकृच्छिवः ।**
**श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतां वरः ॥**

**अनिवर्ती** युद्धान्न निवर्तत इत्यनिवर्ती ।

**निवृत्तात्मा** दुर्जनहृदयान्निवृत्तस्वरूपः ।

---

१. तै.उ. ९ वल्ली

**सङ्क्षेप्ता** सम्यक् दुन्दुभिशरीरस्य रामावतारे अङ्गुष्ठेन क्षेपणकर्ता । 'शश क्षेपणे' इति धातोः । सम्यक् कर्ता नन्दगोपप्रीत्यै वा बाहूत्क्षेपणकर्ता वा ।

**शिवः** **शी** सुखरूपं **वं** ज्ञानं यस्य सः तथोक्तः ।

**श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः ।**
**श्रीधरः श्रीकरः श्रेयः श्रीमान् लोकत्रयाश्रयः ॥**

**श्रीनिवासः** श्रियः स्वगात्रपरिमलेन नितरां वासयतीति श्रीनिवासः।

**स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिगणेश्वरः ।**
**विजितात्मा विधेयात्मा सत्कीर्तिश्छिन्नसंशयः ॥**

**शतानन्दः** अपरिमितानन्दः । शतमिति शब्दो बहुत्ववाची ।

**नन्दिः** **नं** नयनं ज्ञानाख्यनेत्रं दिशतीति नन्दिः । 'दिश अतिसर्जने' इति धातोः डिप्रत्ययः ।

**विजितात्मा** भक्तैर्विजितस्वरूपः ।

**विधेयात्मा** विशेषेण हृदि धारणायोग्यस्वरूपो विधेयात्मा ।

**उदीर्णस्सर्वतश्चक्षुरनीशः शाश्वतस्थिरः ।**
**भूशयो भूषणो भूतिर्विशोकश्शोकनाशनः ॥**

**उदीर्णः** उत्कृष्टः ।

**भूषणः** भूषयतीति भूषणः ।

**अर्चिष्मादर्चितः कुम्भो विशुद्धात्मा विशोधनः ।**
**अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥**

**कुम्भः** कुं भूमिं वासयतीति कुम्भः।

**कालनेमिनिहा वीरश्शौरिश्शूरजनेश्वरः।**
**त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥**

**कालनेमिनिहा** कालनेमिं नितरां हन्तीति स तथोक्तः।

**शौरिः** उः क्लेशस्य अरिः **औरिः** शं चासौ औरिश्च शौरिः।

**केशवः** केशेन कृष्णरूपी सन् जगति वर्तत इति केशवः। केशेन वाति गन्धयतीति वा केशवः।

**हरिः** **हनां** हन्तॄणां दैत्यानां क्षयो यस्मात्स हरिः। 'रीङ् क्षये' इति धातोर्डिप्रत्ययः।

**कामदेवः कामपालः कामी कान्तः कृतागमः।**
**अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जयः ॥**

**कान्तः** दैत्यसुखान्तकारी।

**विष्णुः** **विषं** नदीजलं नुदति प्रेरयतीति विष्णुः। 'एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्याः नद्यः स्यन्दन्ते'[१] इति श्रुतिः।

**वीरः** **वौ** पक्षिणि रमत इति वा, **विं** पक्षिणम् ईरयतीति, विशेषेण राजत इति वा वीरः।

**अनन्तः** देशतः कालतो गुणतश्च **अन्तः** परिमितिः तया रहितः अनन्तः।

**ब्रह्मण्यो ब्रह्मकृद्ब्रह्म ब्रह्म ब्रह्मविवर्धनः।**
**ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥**

---
१. बृ.उ.५-८-९

**ब्रह्मकृत्** ब्रह्माणं करोतीति ब्रह्मकृत् ।

**ब्रह्मा** गुणपूर्णः ।

**ब्रह्म** बृहती मा लक्ष्मीर्यस्य तत् ब्रह्म ।

**ब्रह्मविवर्धनः** वेदविवर्धनः ।

**ब्रह्मवित्** वेदवित् ।

**ब्राह्मणः** वेदपाठकः ।

**ब्रह्मी** 'बृहजीवजातिकमलासनशब्दराशिषु' इति वचनात् । ब्राह्मणस्वामी, उदरे चतुर्मुखब्रह्मवान्वा, वैदिकानन्तशब्दराशिमान् वा।

**ब्रह्मज्ञः** ब्रह्म ज्ञापयतीति वा, ब्रह्मा ज्ञः ज्ञाता यस्येति वा ब्रह्मज्ञः ।

**महाक्रमो महाकर्मा महातेजा महोरगः ।**
**महाक्रतुर्महायज्वा महायज्ञो महाहविः ॥**

**महाक्रमः** महान् क्रमः जीवेषु तारतम्यं यस्मात्सः महाक्रमः ।

**महोरगः** महान् उरगः शयनीयं यस्य सः महोरगः । महताम् उरसि हृदये गतत्वाद्वा महोरगः ।

**स्तव्यस्स्तवप्रियस्स्तोत्रं स्तुतिस्स्तोता रणप्रियः ।**
**पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः ॥**

**स्तोत्रम्** स्तोतरि रमत इति स्तोत्रम् ।

**स्तुतिः** स्तूयत इति स्तुतिः । स्तुवन्त्येनमिति वा स्तुतिः ।

**स्तोता** स्तुतिरूपेतिहासपुराणकर्ता ।

पुण्यः स्वप्रभया सकलपुंसः न्यक्करोतीति पुण्यः। 'स्वतेजसा ग्रस्तसमस्ततेजाः'[१] इति वचनात्।

**मनोजवस्तीर्थकरो वसुरेता वसुप्रदः।**
**वसुप्रदो वासुदेवो वसुर्वसुमना हविः ॥**

वासुदेवः वासनाद्देवनाच्च वासुदेवः।

वसुः 'वस आच्छादने' इति धातोः वसुः आच्छादनशीलः।

वसुमनाः वसुरूपाय भीष्माय मनं मननं ज्ञानं यस्मात्स वसुमनाः।

हरिः हरत्याहरति षोडशसाहस्रकन्या इति हरिः। परसैनिकपुरजा हरतीति वा हरिः।

**सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः।**
**शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः ॥**

सन्निवासः सतां निवासः सन्निवासः।

सुयामुनः विषहरणात् सु शोभनं यामुनं जलं यस्मात्स सुयामुनः।

**भूतावासो वासुदेवः सर्वासुनिलयोऽनलः।**
**दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः ॥**

वासुदेवः 'सत्त्वं विशुद्धं वसुदेवशब्दितम्' इति वचनात् वसुदेवाख्यसत्त्वगुणप्रवर्तकः।

अनलः अनं मुख्यप्राणम् अङ्के आरोप्य लालयतीति अनलः।

---

१. भाग. ६-८-३४

**एको नैकः सवः कः किं यत्तत्पदमनुत्तमम् ।**
**लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः ॥**

**एकः** प्रधानः ।

**नैकः** मुक्तामुक्ताभ्यामेकीभूतो न भवतीति नैकः ।

**सवः** 'षूङ् प्राणिप्रसवे' इति धातोः जगत्प्रसवकर्ता ।

**कः** सुखरूपः । 'को न आत्मा किं तद् ब्रह्मे'ति श्रुतौ स्मृतौ च विचार्यमाणत्वाद्वा कः ।

**किम्** 'तृतीयोऽतिशाय' इति वचनात् अतिशयितसुखरूपः। कः किं इति पुण्यनामद्वयवान् ।

**यत्** ज्ञानरूपम् ।

**तत्** व्याप्तम् ।

**पदम्** मुक्तैः पद्यत इति पदम् ।

**माधवः** लक्ष्मीपतिः ।

**सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ।**
**वीरहा विषमश्शून्यो घृताशीरचलश्चलः ॥**

**शून्यः** दुर्जनानां शमूनं कुरुत इति शून्यः ।

**घृताशी** घृतमश्नातीति घृताशीः ।

**अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृक् ।**
**सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ॥**

**मेधजः** मेधया प्रादुर्भूतः ।

**तेजोवृषो द्युतिधरः सर्वशस्त्रभृतां वरः ।**
**प्रग्रहो निग्रहोव्यग्रो नैकशृङ्गो गदाग्रजः ॥**

**वृषः** श्रेष्ठः ।

**प्रग्रहः** प्रकृष्टान् गृह्णातीति प्रग्रहः ।

**निग्रहः** नीचान् निगृह्णातीति निग्रहः ।

**नैकशृङ्गः** अग्न्यन्तर्यामिरूपेण बहुशृङ्गत्वात् नैकशृङ्गः । 'चत्वारि शृङ्गा'[१] इति श्रुतेः । वृषभावतारे शृङ्गद्वयवान्वा ।

**समावर्तोनिवृत्तात्मा दुर्जयो दुरतिक्रमः ।**
**दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ॥**

**समावर्तः** समतया आसमन्ताद्वर्तमानः समावर्तः ।

**निवृत्तात्मा** नि नितरां सकलविषयेषु **वृत्तः** प्रवृत्तः **आत्मा** अन्तःकरणं यस्य सः निवृत्तात्मा ।

**दुर्गमः** ज्ञातुम् अशक्यः ।

**दुरारिहा** दुः दुष्टान् आसमन्तात् अरीन् हन्तीति दुरारिहा ।

**शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः ।**
**इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः ॥**

**महाकर्मा** महत् **कर्म** पुण्यकर्म यस्मात्स महाकर्मा ।

**उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः ।**
**अर्को वाजसनिः शृङ्गी जयन्तः सर्वविज्जयी ॥**

---

१. ऋ.सं. ४-५८-३

उद्भवः उत्कृष्टो भवतीत्युद्भवः।

सुन्दः सुं सुखं ददातीति सुन्दः।

अर्कः प्रकाशरूपः।

वाजसनिः वाजम् अन्नं ददातीति वाजसनिः। 'षणि दाने' इति धातुः।

शृङ्गी गोवर्धनशृङ्गधारी। शृङ्गाख्यवाद्यधारी वा।

सर्ववित् सर्वं विन्दत इति सर्ववित्। 'विद्लृ लाभे' इति धातुः।

**सुवर्णविन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः।**
**महाह्रदो महागर्तो महाभूतो महानिधिः ॥**

महाह्रदः 'ह्रदी हर्षे' इति धातोः महाहर्षवान्।

महागर्तः महतां हृदयगुहा गर्तः सदनं यस्य सः महागर्तः। 'स्तुहि श्रुतं गर्तसदं युवानम्'[१] इति श्रुतेः।

**कुमुदः कुन्दरः कुन्दः पर्जन्यः पावनोऽनिलः।**
**अमृताशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः ॥**

कुमुदः कुं कुत्सितानां मुं मुदं द्यति खण्डयतीति कुमुदः।

कुन्दरः कुं कुत्सितं बलिं दारयतीति कुन्दरः।

कुन्दः इन्द्राय तत्पृथिवीं ददातीति कुन्दः। [२]'गोत्रा कुः पृथिवी पृथ्वी' इत्यमरः।

पर्जन्यः परजन्या यस्मात्स पर्जन्यः।

---

१. ऋ.सं. २-३३-११

२. अ.को. द्वि. भूमिवर्गः श्लो. ३

**पवनः** ‘पूञ् पवन’ इति धातोः **पवनः** पवित्रः ।

**अनलः** न विद्यते अलम् आलस्यं यस्य सोऽनलः ।

**अमृतांशः** **अमृताः** मरणरहिताः **अंशाः** मत्स्याद्याः यस्य सोऽमृतांशः ।

**सर्वज्ञः** सर्वे ज्ञः जीवाः यस्मात् भवन्ति सः सर्वज्ञः । ‘ज्ञोऽत एव’[1] इति हि ब्रह्मसूत्रम् ।

**सर्वतोमुखः** **सर्वतः** सर्वस्मादपि **मुखः** प्रधानः ।

**सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः ।**
**न्यग्रोधोदुम्बरोऽश्वत्थश्चाणूरान्ध्रनिषूदनः ॥**

**न्यग्रोधः** न्यक् वर्तते हीनान् रुन्ध इति न्यग्रोधः ।

**उदुम्बरः** उत् अतिशयेनोत्कृष्टम् उं ब्रह्मादिसज्जीवसमूहं वरयतीति उदुम्बरः ।

**अश्वत्थः** अश्वेषु अगमनशीलेषु न तिष्ठतीत्यश्वत्थः । हयग्रीवाख्याश्वरूपेण तिष्ठतीति वा अश्वत्थः ।

**सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः ।**
**अमूर्तिरनघोऽचिन्त्यो भयकृद्भयनाशनः ॥**

**सहस्रार्चिः** अ[illegible]न्तर्यामिरूपेण सहस्रार्चिः ।

**सप्तैधाः** सप्तवाहनः सप्तमूर्तिः सप्त समिदाख्यावनकर्ता । अग्निष्टोमादि सप्त क्रतून् वहतीति च तन्नामा ।

**अमूर्तिः** [illegible]धर्मारहितः ।

---

[1] ब्र. सू. २-३-१७

**अणुर्बृहत्कृशः स्थूलो गुणभृन्निर्गुणो महान्।**
**अधृतः स्वधृतः स्वास्यः प्राग्वंशो वंशवर्धनः ॥**

**अधृतः** अन्यैरधृतः।

**स्वधृतः** स्वेनैव धृतः।

**स्वास्यः** शोभनमास्यं यस्य सः स्वास्यः।

**प्राग्वंशः** देवासुरादिवंशेभ्यः प्राग्विद्यमानः। **प्राक्** प्रकृष्टः मुरली-वंशो यस्येति वा।

**भारभृत्कथितो योगी योगीशः सर्वकामदः।**
**आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः ॥**

**आश्रमः** सनत्कुमारकृष्णनृसिंहव्यासादिरूपेण ब्रह्मचर्यादि-चतुराश्रमवान्।

**श्रमणः** संसारश्रमं नयतीति।

**क्षामः** **क्षः** क्षयः आसमन्तात् **मा** न, यस्य स क्षामः।

**सुपर्णः** प्रलयकाले सुष्ठु **पर्णं** वटपत्रं यस्य सः सुपर्णः।

**वायुवाहनः** जीवोत्क्रमणसमये वायुरेव वाहनं यस्य स तथोक्तः।

**धनुर्धरो धनुर्वेदो दण्डो दमयितादमः।**
**अपराजितः सर्वसहो नियन्ता नियमो यमः ॥**

**धनुर्वेदः** रणरङ्गे धनुःकौशलं वेदयतीति धनुर्वेदः।

**नियन्ता** नितराम् अर्जुनसारथिः।

**नियमः** नियमयति परकीयं ब्रह्मास्त्रादिकमिति नियमः।

**यमः** यमयति क्षणे क्षणे अर्जुनाय सुबुद्धिमिति यमः।

**सत्ववान् सात्विकः सत्यः सत्यधर्मपरायणः ।**
**अभिप्रायः प्रियार्होऽर्हः प्रियकृत्प्रीतिवर्धनः ॥**

**सत्यः** सतां प्रियः सत्यः ।
**अभिप्रायः** अभितः प्रकृष्टः **आयो** यस्य स अभिप्रायः ।

**विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग्विभुः ।**
**रविर्विरोचनः सूर्यः सविता रविलोचनः ॥**

**ज्योतिः** ज्यायसी **ऊतिः** सन्ततिर्यस्य स ज्योतिः ।
**रविः** रन्ता चासौ विशिष्टश्च रविः ।
**विरोचनः** प्रकाशनः ।
**सूर्यः** सूरिभिः प्राप्यः सूर्यः ।
**सविता** प्रसविता ।

**अनन्तो हुतभुग्भोक्ता सुखदो नैकजोऽग्रजः ।**
**अनिर्विण्णः सदाऽमर्षी लोकाधिष्ठानमद्भुतः ॥**

**अनन्तः** **अनं** मुख्यप्राणं तनोतीत्यनन्तः । [१]'स प्राणमसृजत' इति श्रुतेः ।

**हुतभुक्** हिरण्यकशिपुना कोपाग्नौ हुतं प्रह्लादं **भुङ्क्ते** भोजयतीति **भुनक्ति** पालयतीति वा हुतभुक् । 'भुज पालनाभ्यावहारयोः' इति धातुः ।

**नैकजः** एकस्मादपि जातो न भवतीति नैकजः ।

**अनिर्विण्णः** **निर्विण्णः** नितरां विन्नः दुःखितो न भवतीति अनिर्विण्णः । ज्ञातो न भवतीति वा अनिर्विण्णः ।

---

१. तैत्तिरीय. उ.

**सनात्सनातनतमः कपिलः कपिरव्ययः ।**
**स्वस्तिदः स्वस्तिकृत्स्वस्ति स्वास्तिभुक् स्वस्तिदक्षिणः ॥**

**सनात्** सदा विद्यमानः ।

**सनातनतमः** अतिशयेन सनातनः सनातनतमः ।

**कपिलः** कपिलावतारे कपिलनामवान् । सीताचूडारत्नानयन-काले **कपिं** हनूमन्तं लालयतीति वा कपिलः । **कं** सुखं पिबतीति कपिलः ।

**अव्ययः** कृष्णावतारे अविभिः सह अयतीति अव्ययः । जरा-सन्धादियुद्धेषु रोम्णामपि व्ययरहितो वा ।

**स्वस्तिभुक्** शोभनहविर्भोक्ता ।

**सन्तः** सम्यक् ततः ।

**अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः ।**
**चतुरस्रो गभीरात्मा विदिशो व्यादिशो दिशः ॥**

**विदिशः** असतां विरुद्धां गतिं दिशतीति विदिशः ।

**व्यादिशः** सतां विशिष्टं तत्त्वम् आदिशतीति व्यादिशः ।

**दिशः** सुखमेव दिशतीति दिशः ।

**अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः ।**
**जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥**

**भुवः** भुवि वर्तमानः ।

**लक्ष्मीः** लक्ष्मीवान् ।

**भीमः** दुर्जनानां भीः सतां मोक्षः यस्मात्स भीमः ।

**आधारनिलयो धाता पुष्पहासः प्रजागरः ।**
**ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ॥**

**प्राणदः** रामावतारे मृतसेनाप्राणदायकः ।

**प्रणवः** प्रणवप्रतिपाद्यः 'णु स्तुतौ' इति धातोः प्रकर्षेण स्तव्यो वा ।

**पणः** पान् चक्रवर्तिनो नयतीति पणः ।

**प्रमाणं प्राणनिलयः प्राणभृत् प्राणजीवनः ।**
**तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः ॥**

**प्रमाणम्** सकलप्रमाणवेद्यः ।

**तत्त्वम्** स्वतन्त्रतत्त्वरूपः ।

**भूर्भुवस्स्वस्तरुस्तारः सवि(पि)ता प्रपितामह ।**
**यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥**

**भूर्भुवस्वः** भूर्भुवस्वराख्यत्रैलोक्यकर्ता ।

**तरुः** भक्तानां कल्पतरुः ।

**तारः** 'तमु ग्लानौ' इति धातोः कर्तरि डप्रत्यये कृते ताः, तान्ताः, सान्ताः (श्रान्ता ?) इत्यर्थः । तान् आसम्यक् राति आदत्त इति तारः ।

**यज्ञः** यजनयोग्यः ।

**आत्मयोनिः स्वयञ्जातो वैखानः सामगायनः ।**
**देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः ॥**

**वैखानः** **विखनाः**, खननायोग्याः मुक्ताः तत्सम्बन्धी वैखानः ।

**शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः ।**
**रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः ॥**

**सर्वप्रहरणायुधः** सर्वान् प्रहरन्तीति सर्वप्रहरणानि, तानि आयुधानि चक्रगदादीनि यस्य सः सर्वप्रहरणायुधः ।

**॥ इति श्रीमन्महाभारते शतसाहस्रिकायां संहितायां वैयासिक्याम् आनुशासनिके पर्वणि दानधर्मे विष्णोर्दिव्यसहस्रनामव्याख्याने श्रीमद्वादिराजतीर्थपूज्यचरणविरचितलक्षालङ्काराख्यटीकायां षट्चत्वारिंशोत्तरद्विशततमोऽध्यायः ॥**
**॥ इति फलकथनं नाम सप्तचत्वारिंशोत्तरद्विशततमोऽध्यायः ॥**
**॥ इति सावित्रीस्तोत्रं नाम अष्टचत्वारिंशोत्तरद्विशततमोऽध्यायः ॥**
**॥ इति ब्राह्मणप्रशंसा नाम एकोनपञ्चाशोत्तरद्विशततमोऽध्यायः ॥**

## ॥ अथ पञ्चाशदुत्तरद्विशततमोऽध्यायः ॥

**ब्राह्मणाः[१] संश्रिताः क्षत्रं न क्षत्रं ब्राह्मणाश्रितम् ।**
**क्षिता[२] ब्रह्मपरा विप्राः खादन्ति क्षत्रियान् भुवि ॥१७॥**

**क्षिता ब्रह्मपरा विप्रा** इत्यत्र **ब्रह्मपराः** वेदपराः विप्राः क्षत्रियान् क्षिताः सन्तः **खादन्ति** अश्नन्तीत्यन्वयः ।

**कथितं[३] हि मया सत्यं गायत्र्या कन्यया भुवि ।**
**विजेष्याम्यवशान् सर्वान् ब्रह्माणांश्चर्मवाससः ॥ २० ॥**

---

१. कुं. २५७ अध्यायः ।; २. **'श्रिता ब्रह्मोपधा '** इति कुं.पाठः ।
३. **'कथितं त्वनया असत्यं गायन्त्या कन्यया दिवि'** इति कुं.पाठः ।

**कथितं हि मया सत्यं गायत्र्या कन्यया भुवि** इत्यत्र गायत्र्या कन्यया साक्षिभूतया भुवि मया सत्यं कथितम् ।

**अहो त्वयाऽयं विप्रेषु भक्तिरागः प्रदर्शितः ।**
**यादृशं पृथिवीभूतः[1] तादृशं ब्रूहि मे द्विजम्** ॥ २७ ॥

**यादृशं पृथिवीभूत** इत्यत्र **पृथिवीभूतः** पृथिवीसमानः ।

**॥ इति ब्राह्मणप्रशंसनं नाम पञ्चाशदुत्तरद्विशततमोऽध्यायः ॥**

## ॥ अथ एकपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥

**[2]त्यक्त्वा महीत्वं भूमिस्तु स्पर्धया काश्यपस्य ह ।**
**नाशं जगाम तां विप्रो व्यस्तम्भयत कश्यपः** ॥ २ ॥

**त्यक्त्वा महीत्वं भूमिस्तु** इत्यत्र **मही** महती तस्याः भावं **महीत्वं** धनधान्यादिसम्पत्करित्वमित्यर्थः ।

**सुवर्णवर्णो निर्धूमः [3]संहतोर्ध्वशिखः कपिः ।**
**क्रुद्धेनाङ्गिरसा शप्तो गुणैरेतैर्विवर्जितः** ॥ ८ ॥

**संहतोर्ध्वशिखः कपिः** इत्यत्र बडवारूपेण **कं** समुद्रजलं पिबतीति **कपिः** अग्निः ।

**तथा प्रजापतिर्ब्रह्मा अव्यक्तप्रभवोऽव्ययः ।**
**येनेदं विपुलं विश्वं जनितं स्थावरं चरम्** ॥ १५ ॥

---

१. $T_3$,$G_4$; BORI पृ. ७१९; **'पृथिवीभूतम्'** इति कुं. पाठः ।
२. कुं. २५८ अध्यायः ।
३. $G_4$,$T_2$,$D_{10}$,BORI पृ. ७२१; **'सङ्गतोर्ध्वशिखः कविः'** इति कुं.पाठः ।

ब्रह्मणोऽपि ब्राह्मणाग्रेसरत्वात् तं स्तौति – **तथा प्रजापतिर्ब्रह्मा** इत्यादिना ।

**तिष्ठेत्कथमिति ब्रूयान्न किञ्चिद्धि तदा भवेत् ।**
**अहङ्कार इति प्रोक्तः सर्वतेजोगतः प्रभुः ॥ १८ ॥**

**अहङ्कार इति प्रोक्त** इत्यत्र **अहम्** अहङ्काराख्यतत्त्वं करोतीत्यहङ्कारः ।

**नास्त्यन्तमस्ति तु ब्रह्मा स राजा लोकभावनः ।**
**इत्युक्तः स तदा तूष्णीमभूद्वायुस्तमब्रुवन्[१] ॥ १९ ॥**

**तूष्णीमभूद्वायुस्तमब्रुवन्** इत्यत्र **अब्रुवन्** किमपि अवदन् वायुः ।

॥ इति एकपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥

॥ अथ द्विपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥

**[२] ततस्तदीरणं जातं समुद्रस्यावसर्पतः ।**
**तस्माद्देशान्नदीं चैव प्रोवाचासौ द्विजोत्तमः ॥ २६ ॥**

**ततस्तदीरणं जातम्** इत्यत्र ततः तत् स्थलम् **ईरणम्** ऊषरभूमिः जाता ।

**प्रतिगृह्य तु तां भार्यामुचथ्यः सुमनाऽभवत् ।**
**[३] मुमोच च ततो दुःखात् मरुतश्चैव निर्मलाः ॥ २९ ॥**

---

१. **'तूष्णीमभूद्वायुस्तमब्रवीत्'** इति कुं.पाठः ।
२. कुं. २५९ अध्यायः ।
३. **'मुमोच च जगद्दुःखान्मरुतश्चैव'** इति कुं.पाठः ।

**मुमोच च ततो** दुःखात् इत्यत्र **ततः** पुरिशोषणादिदुःखात्, **मुमोच** मोचयामास ।

**एष राजन्नीदृशो वै उचथ्यो ब्राह्मणर्षभः ।**
**[१] ब्रवीम्यहं ब्रूहि वा त्वमुचथ्यात् क्षत्रियं वरम्** ॥ ३२ ॥

**ब्रवीम्यहं ब्रूहि वा त्वम्** इत्यत्र अहम् एनम् उचथ्यं ब्राह्मणं वरं ब्रवीमि इति योजना ।

**॥ इति द्विपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥**
**॥ इति पवनार्जुनसंवादे त्रिपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥**

## ॥ अथ चतुःपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥

**[२] तच्छ्रुत्वा प्रेषितो दूतो ब्राह्मणेभ्यो धनी कपैः ।**
**स च तान् ब्राह्मणानाह धनी कपवचो यथा** ॥ ८ ॥

**ब्राह्मणेभ्यो धनी कपैः** इत्यत्र **धनी** धनिनामको दूतः ।

**॥ इति चतुःपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥**
**॥ इति पवनार्जुनसंवादः समाप्तः ॥**

## ॥ अथ पञ्चपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥

**[३] एष ते केशवः सर्वमाख्यास्यति महामतिः ।**
**व्युष्टिं ब्राह्मणपूजायां [४] व्युष्टिं दृष्ट्वा महाव्रत** ॥ ३ ॥

---

१. BORI पृ. ७२५; 'ब्रवीमि हान्यं ब्रूहि' इति कुं.पाठः ।
२. कुं. २६२ अध्यायः । 'कपैः सुरविशेषैः' इति कुंभघोणपुस्तकीयटिप्पणी ।
३. कुं. २६३ अध्यायः । ; ४. 'दृष्ट्वा व्युष्टिम्' इति कुं.पाठः ।

**व्युष्टिं दृष्ट्वा** इत्यत्र **व्युष्टिः** फलम्। [१]'व्युष्टिः फले समृद्धौ च' इत्यमरः।

**अस्य नाभ्यां पुष्करं सम्प्रसूतं यत्रोत्पन्नः स्वयमेवामितौजाः।**
**येनाच्छिन्नं तत्तमः पार्थ घोरं यत्र तिष्ठन्त्यर्णवास्तच्छयानाः॥९॥**

**यत्रोत्पन्नः स्वयमेवामितौजा** इत्यत्र **अमितौजाः** ब्रह्मा, **यत्र** नाभिकमले **स्वयं** स्वतन्त्रान्नारायणात् उत्पन्नः इत्यर्थः।

**कृते युगे धर्म आसीत्समग्रस्त्रेताकाले यज्ञमनुप्रपन्नः।**
**[२]फलं चासीद्द्वापरे पार्थ कृष्णः कलौ त्वधर्मः क्षितिमेवाजगाम १०**

**फलं चासीद्द्वापरे पार्थ कृष्ण** इत्यत्र कृतयुगे कृत सकलधर्माणां त्रेतायुगे सकलयज्ञानां च **फलं** फलभूतः कृष्णः द्वापरे कृष्ण आसीदिति योजना।

**[३]स पूर्वदेवो निजघान दैत्यान्**
**स एव देवश्च बभूव सम्राट्।**
**स भूतानां भावनो भूतभव्यः**
**स विश्वस्यास्य जगतश्चाभिगोप्ता ॥ ११ ॥**

**स पूर्वदेवो निजघान दैत्यान्** इत्यत्र देवानां पूर्वः **पूर्वदेवः** देवाग्रेसर इत्यर्थः। **सः** कृष्णः।

---

१. अ.को. तृ. नानार्थवर्गः श्लो. ३८
२. 'बलं त्वासीद्द्वापरे पार्थ कृष्णः' इति कुं.पाठः ।
३. BORI पृ. ७३६; 'स एव पूर्वं निजघान दैत्यान्' इति कुं.पाठः ।

[१] त्याज्यांस्त्यक्त्वा चासुराणां वधाय
कार्याकार्ये कारणं चैव पाति ।
कृतं करिष्यत्क्रियते च देवो
राहुं सोमं विद्धि च शक्रमेनम् ॥ १३ ॥

**त्याज्यांस्त्यक्त्वा चासुराणां वधाय** इत्यत्र **त्याज्यान्**, कलियुग-प्रवर्तनाय त्यक्तुं योग्यान् कांश्चिद्दैत्यान् त्यक्त्वा ।

[२] राक्षसाश्चापि नमन्ति
रायस्पोषः स विजिगीषुरेकः ॥ १५ ॥

**राक्षसांश्चापि नमन्ति** इत्यत्र **राक्षसाः** प्रह्लादाद्याः । **रायस्पोषः** द्रव्यपोषकः । [३] 'राः सारं स्वापतेयमर्थः स्वम्' इति हलः ।

स पौराणीं ब्रह्मगुहां प्रविष्टो
[४] यस्मिन् सत्रं भारताग्रे ददर्श ।
स चैव गामुद्दधाराग्र्यकर्मा
विक्षोभ्य दैत्यानुरगान्दानवांश्च ॥ १७ ॥

**स पौराणीं ब्रह्मगुहां प्रविष्ट** इत्यत्र **ब्रह्मगुहां** वेदहृदयं, **यस्मिन्** वेदे, **सत्रं** यज्ञं ददर्श । हे भारत ।

---

१. BORI पृ. ७३७; $D_{10}$,S; **'त्याज्यांस्त्यक्त्वा चासुराणां वधेन'** इति कुं. पाठः ।

२. **'तं राक्षसाश्च परिसंवदन्ति राजन्यानाम्'** इति कुं.पाठः ।

३. ह.को. १-८०

४. **'मही सत्रम्'** इति कुं. पाठः ।

तं घोपार्थे गीर्भिरिन्द्राः स्तुवन्ति
स चापीशो भारतैकः पशूनाम् ।
तस्य भक्षान् विविधान् वेदयन्ति
तमेवाजौ वाहनं वेदयन्ति ॥ १८ ॥

**तं घोपार्थ** इत्यत्र **घोपार्थे** गोकुलरक्षणार्थम् ।

**आजौ वाहनम्** इत्यत्र **वाहनं** निर्वाहिकम् ।

तस्यान्तरिक्षं पृथिवीं दिवं च सर्वं वशे तिष्ठति शाश्वतस्य ।
स कुम्भेरेतः ससृजे सुराणां यत्रोत्पन्नमृषिमाहुर्वसिष्ठम् ॥ १९ ॥

**स कुम्भेरेत** इत्यत्र **स** परमात्मा सुराणामर्थे **कुं** पृथ्वीं भासयतीति व्युत्पत्त्या **कुम्भेरेतः** हिरण्यरेतोरूपं ब्रह्माण्डं ससृजे । **वसिष्ठं** चिरकाल-स्थायिनम् ब्रह्माणम् ।

स एव पार्थाय श्वेतमश्वं प्रायच्छत्
स एवाश्वानथ सर्वांश्चकार ।
त्रिबन्धुरस्तस्य[१] रथस्त्रिचक्र-
स्त्रिवृच्छिराश्चतुरस्रश्च तस्य ॥ २६ ॥

**त्रिबन्धुरस्तस्य रथ** इत्यत्र **त्रिबन्धुरः** मध्ये पार्श्वद्वये च युगन्धर-दारुत्रयस्य आदिभागे बन्धकीभूतारत्रययुक्तः । **त्रिचक्रः** अथर्वणः वेदत्रये अन्तर्भूतत्वात् त्रिपदोक्ताश्चत्वारो वेदा एव चक्रचतुष्टयं यस्य स त्रिचक्रः । त्रीणि काष्ठानि वृणोतीति **त्रिवृत्** शिरो यस्य सः । **चतुरस्रः रथः** अर्जुनरथः । तस्य वशे तिष्ठति ।

---

१. BORI पृ. ७३९.; '**सबन्धुरस्तस्य ...शिराश्चतुरश्वस्त्रिनाभिः**' इति कुं.पाठः

अलङ्घयद्[१] सरितो वै जिघांसुश्चक्रं वज्रं[२] प्रहरन्तं निरस्य ।
स महेन्द्रः स्तूयते वै महाध्वरे विप्रैरेको ऋक्सहस्रैः पुराणैः॥२८॥

अलङ्घयद् सरितो वै जिघांसुः इत्यत्र प्रहरन्तं वज्रं निरस्य,चक्रं प्रयुज्य, सतामुपरि सरतः सरणशीलान् पर्वतान् जिघांसुः स कृष्णः अलङ्घयद्वै भूमिमितस्ततो लङ्घयामास वै ।

दुर्वासा वै तेन नान्येन शक्यो गृहे राजन्वासयितुं महौजाः ।
तमेवाहुर्ऋषिमेकं पुराणं स विश्वकृद्विदधात्यात्मभावान् ॥२९॥

दुर्वासा वै इत्यत्र तेन कृष्णेन स्वगृहे वासितः इति योग्यपदाध्याहारेण योजना ।

ज्योतींषि शुक्लानि हि सर्वलोके त्रयो लोका लोकपालास्त्रयश्च ।
त्रयोऽग्नयो व्याहृतयश्च तिस्रः सर्वे देवा देवकीपुत्र एव॥ ३१ ॥

देवकीपुत्र एव इत्यत्र देवकीपुत्रे इति पदच्छेदः ।

॥ इति कृष्णमाहात्म्यकथनं नाम पञ्चपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥

॥ इति ब्राह्मणप्रशंसा नाम षट्पञ्चाशदुत्तरद्विशततमोऽध्यायः ॥

॥ इति ईश्वरप्रशंसा नाम सप्तपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥

॥ इति महेश्वरप्रशंसा नाम अष्टपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥

* * *

---

१. BORI पृ. ७४०; $V_1$,B,$M_1$,Dn,$D_{4.6.8.9}$;'अलङ्घयद्वै सरितो जिघांसञ्शक्रम्' इति कुं.पाठः ।
२. 'वज्रं प्रहरन्तं निरास' इति कुं.पाठः ।

## ।। अथ एकोनषष्ट्युत्तरद्विशततमोऽध्यायः ।।

**[१]निर्णये वा महाबुद्धे सर्वधर्मविदांवर ।**
**प्रत्यक्षमागमो वेति किं तयोः कारणं भवेत् ।। २ ।।**

**किं तयोः कारणं भवेत्** इत्यत्र तयोः प्रत्यक्षागमयोः मध्ये एतस्य आगमस्य ।

**।। इति श्रीधर्ममार्गविचारो नाम एकोनषष्ट्युत्तरद्विशततमोऽध्यायः ।।**

## ।। अथ षष्ट्युत्तरद्विशततमोऽध्यायः ।।

**[२]अर्चेद्देवानदम्भेन सेवेताऽमायया गुरून् ।**
**धनं निदध्यात् पात्रेषु [३]यात्रार्थं दानशेपितम् ।। ४२ ।।**

**यात्रार्थं दानशेषितम्** इत्यत्र दाने कृते सति यच्छेषितं वस्तु तत् **दानशेषितम्, यात्रार्थं**, देहयात्रार्थं प्रकल्पयेदिति योजना ।

**।। इति धर्मस्वरूपकथनं नाम षष्ट्युत्तरद्विशततमोऽध्यायः ।।**
**।। इति धर्मविचारकथनं नाम एकषष्ट्युत्तरद्विशततमोऽध्यायः ।।**
**।। इति धर्मस्वरूपकथनं नाम द्विषष्ट्युत्तरद्विशततमोऽध्यायः ।।**

## ।। अथ त्रिषष्ट्युत्तरद्विशततमोऽध्यायः ।।

**[४]पितामहो जगन्नाथः सावित्री [५]ब्रह्मणः तथा ।**
**वेदभूरथ कर्ता च विष्णुर्नारायणः प्रभुः ।। ९ ।।**

---

१. कुं. २६७ अध्यायः ।; २. कुं. २६८ अध्यायः ।
३. BORI पृ. ७६५; **'परत्रार्थं समावृतम्'** इति कुं.पाठः ।
४. कुं. २७१ अध्यायः ; ५. **'ब्रह्मणः सती'** इति कुं.पाठः ।

**सावित्री ब्रह्मणस्तथा** इत्यत्र **ब्रह्मणः** चतुर्मुखस्य, **सावित्री** नाभिकमलात् प्रसवकर्त्री, मातेति नारायणस्य विशेषणम् ।

**।। इति देवर्षिसङ्कीर्तनं नाम त्रिषष्ट्युत्तरद्विशततमोऽध्यायः ।।**

**।। इति युधिष्ठिरपुरप्रवेशो नाम चतुःषष्ट्युत्तरद्विशततमोऽध्यायः ।।**

**।। इति भीष्मस्वर्गारोहणं नाम षट्षष्ट्युत्तरद्विशततमोऽध्यायः ।।**

**।। इति आनुशासनिकपर्व समाप्तम् ।।**

* * *

# ॥ अथ आश्वमेधिकपर्व ॥

## ॥ अथ सप्तमोऽध्यायः ॥

**मरुत्त उवाच –**

**[१] पित्र्यमस्मि तव क्षेत्रं बहुमन्ये च ते भृशम् ।**
**तवास्मि याज्यतां प्राप्तो भजमानं भजस्व माम् ॥ ७ ॥**

**पित्र्यमस्मि तव क्षेत्रम्** इत्यत्र तव **पित्र्यम्** अङ्गिरसः सम्बन्धि क्षेत्रम् ।

**[२] मा चापि शुभबुद्धित्वं लभेयमिह कर्हिचित् ।**
**[३] भोगेषु सम्यगज्ञानं त्यजेयं सङ्गतं यदि ॥ २३ ॥**

**भोगेषु सम्यगज्ञानम्** इत्यत्र यदि ते **सङ्गतं** समागमः तर्हि भोगेषु **अज्ञानम्** अविवेकं सम्यक् त्यजेयम् इत्यन्वयः ।

**॥ इति आश्वमेधिके सप्तमोऽध्यायः ॥**

## ॥ अथ अष्टमोऽध्यायः ॥

**रुद्राय शितिकण्ठाय सरूपाय सुवर्चसे ।**
**कपर्दिने करालाय [४] हर्यक्षवरदाय च ॥ १४ ॥**

**हर्यक्षवरदाय च** इत्यत्र हरौ **अक्षम्** इन्द्रियं येषां तेषां विष्णुभक्तानां **वरदाय** हर्यक्षवरदाय । **॥ इति आश्वमेधिके अष्टमोऽध्यायः ॥**

---

१. कुं. ६ अध्यायः । ; २. कुं. ७ अध्यायः ।
३. **'विपर्यैः सङ्गतं चास्तु'** इति कुं.पाठः ।
४. **'हर्यक्ष्णे'** इति कुं.पाठः ।

## ।। अथ नवमोऽध्यायः ।।

इन्द्र उवाच –

नादण्डको दण्डयानोऽस्म्यलिङ्गान्[1] न कारुसोमं प्रपिबामि वह्ने ।
न कारुर्वै[2] विसृजामि वज्रं को[3] मेऽसुखाय प्रहरेन्मनुष्यः ।। २९ ।।

**नादण्डको दण्डयानोऽस्म्यलिङ्गान्** इत्यत्र अहम् अदण्डको न, किन्तु **अलिङ्गान्** स्वस्वचिह्नरहितान् दण्डयानः अस्मि । **कारुसोमं** कारुणास्पृष्टं सोमं न पिबामि ।

**को मेऽसुखाय प्रहरेत्** इत्यत्र असुखायेति पदच्छेदः ।

प्रव्राजयेयं कालकेयान् पृथिव्या-
मपाकर्षन्दानवानन्तरिक्षात् ।
दिवः[4] प्रह्लादं व्यथमानं नयेत
को मेऽसुखाय प्रहरेत मानवः ।। ३० ।।

**दिवः प्रह्लादं व्यथमानं नयेत** इत्यत्र **व्यथमानं** मनुष्यं **दिवः प्रह्लादं** स्वर्गसम्बन्धि प्रकृष्टसुखं मां विना को वा नयेत ।

ततो रोषात् सर्वतो घोररूपं संवर्तं[5] ते जनयामास भूयः ।
मदं नाम्ना चासुरं विश्वरूपं यं त्वं दृष्ट्वा चक्षुषी संन्यमीलः।।३३।।

---

१. 'नगण्डकाकारयोगं करेऽणुं न चारिसोमम्' इति कुं.पाठः ।
२. 'न क्षीणशक्तौ प्रहरामि वज्रम्' इति कुं. पाठः ।
३. BORI पृ. ३५;'को मे सुखाय प्रहरेत मर्त्यः' इति कुं.पाठः ।
४. 'दिवः प्रह्लादमवसानमानयम्' इति कुं.पाठः ।
५. 'सपत्नं ते' इति कुं.पाठः ।

**संवर्तं ते जनयामास** इत्यत्र **संवर्तं** प्रलयसमानं, **मदं** नामासुरम् इति सम्बन्धः ।

**॥ इति आश्वमेधिके नवमोऽध्यायः ॥**

## ॥ अथ दशमोऽध्यायः ॥

**संवर्त उवाच –**

**यदि प्रीतस्त्वमसि वै देवराज तस्मात् स्वयं शाधि यज्ञे विधानम् ।**
**स्वयं सर्वान्कुरु[1] मार्गान्सुरेन्द्र जानात्वयं सर्वलोकश्च देव ॥२५॥**

**स्वयं सर्वान्कुरु मार्गान्** इत्यत्र **मार्गान्** यज्ञापेक्षितपरिवेषणादिमार्गान् ।

**आग्नेयं वै लोहितमालभन्तां वैश्वदेवं बहुरूपं हि राजन् ।**
**नीलं चोक्षाणं मेध्यमप्यालभन्तां चलच्छिश्नं सम्प्रदिष्टं द्विजाग्र्याः ॥ ३० ॥**

**आग्नेयं वै लोहितमालभन्ताम्** इत्यत्र **आग्नेयम्** अग्निसम्बन्धि **लोहितं** रक्तम् उक्षाणम् आलभन्ताम् । **वैश्वदेवं** विश्वेदेवसम्बन्धि नीलं चोक्षाणमालभन्तामिति सम्बन्धः ।

**ततः संवर्तश्चैत्यगतो महात्मा यथा वह्निः प्रज्वलितो द्वितीयः ।**
**हवींष्युच्चैराह्वयन् देवसङ्घाञ्जुहावाग्नौ मन्त्रवत्सुप्रतीतः ॥ ३२ ॥**

**चैत्यगतः** यज्ञवेदीगतः ।

**॥ इति आश्वमेधिके मरुत्तयज्ञप्रशंसनं नाम दशमोऽध्यायः ॥**

---

१. BORI पृ. ४१; **'सर्वान् कुरु भागान्सुरेन्द्र'** इति कुं.पाठः ।

## ।। अथ एकादशोऽध्यायः ।।

**तं नृपं दीनमनसं निहतज्ञातिबान्धवम् ।**
**उपप्लुतमिवादित्यं सधूममिव पावकम्** ।। २ ।।

**उपप्लुतमिवादित्यम्** इत्यत्र **उपप्लुतं** राहुग्रस्तम् । ‘उपराग उपप्लव’[1] इति हलः ।

**वासुदेव उवाच –**

**सर्वं जिह्मं मृत्युपदमजिह्मं ब्रह्मणः पदम् ।**
**एतावान् ज्ञानविषयः किं प्रलापः करिष्यति** ।। ४ ।।

**सर्वं जिह्मं मृत्युपदम्** इत्यत्र **ब्रह्मणः** परब्रह्मणः नारायणस्य **पदं** वैकुण्ठादिपुरत्रयम् **अमृतं** मृतिरहितम् अन्यत्सर्वं **जिह्मं** कुटिलं सत्यलोकादिस्थानं **मृत्युपदं** मरणस्थानम्, एवञ्च मृत्युस्थाने स्थितानां मरणे सति प्रलापो व्यर्थ इति भावः ।

**वृत्रेण पृथिवी व्याप्ता पुरा किल नराधिप ।**
**दृष्ट्वा च पृथिवीं व्याप्तां गन्धस्य विषये हते ।**
**धराहरणनिर्गन्धो[2] विषयः समपद्यत** ।। ७ ।।

**दृष्ट्वा च पृथिवीं व्याप्तां गन्धस्य विषये हत** इत्यत्र **गन्धस्य विषये** गन्धाख्यविषये हते सति, **व्याप्तां** वृत्रेण व्याप्तां, पृथिवीं निर्गन्धां दृष्ट्वेत्यर्थः । **विषयः** सर्वोऽपि देशः **धराहरणनिर्गन्धः** धरायाः **हरणात्** गन्धहरणात् निर्गन्धः समपद्यत ।

---

१. ह.को. १-४१ ; २. ‘धराहरणदुर्गन्धो-’ इति कुं.पाठः ।

**स वध्यमानो वज्रेण तस्मिन्नमिततेजसा ।**
**आकाशमभिदुद्राव[1] तं शक्रं विषयं ततः ॥ १५ ॥**

**अभिदुद्राव तं शक्रम्** इत्यत्र ततः इन्द्रात् **विपयं** सम्यक् ज्ञानाख्यम् ।

**ततो वृत्रं शरीरस्थं जघान भरतर्षभ ।**
**शतक्रतुरदृश्येन वज्रेणेतीह नः श्रुतम् ॥ १९ ॥**

**अदृश्येन वज्रेण** इत्यत्र इन्द्रादन्यैरदृश्येन वज्रेणेत्यर्थः ।

**॥ इति आश्वमेधिके एकादशोऽध्यायः ॥**

## ॥ अथ द्वादशोऽध्यायः ॥

**वासुदेव उवाच –**

**द्विविधो जायते व्याधिः शारीरो मानसस्तथा ।**
**परस्परं तयोर्जन्म निर्द्वन्द्वं नोपपद्यते ॥ १ ॥**

**निर्द्वन्द्वम्** अन्योन्यसम्बन्धरहितम् ।

**तेषामन्यतमोत्सेके विधानमुपदिश्यते ।**
**हर्षेण[2] वध्यते शोको हर्षः शोकेन वध्यते ॥ ६ ॥**

**हर्षेण वध्यते शोक** इत्यत्र सत्त्वगुणोद्रेको नाम हर्षोद्रेकः । तमोगुणोद्रेको नाम दुःखोद्रेकः । दुःखे सति सुखस्य च यत्स्मरणं स तु रजोगुणोद्रेकः । तेषाम् अप्यन्योन्यघातकत्वमस्तीति भावः ।

---

१. **'आकाशमभिदुद्राव जग्राह विषयं ततः'** इति कुं.पाठः ।

२. BORI पृ. ४७; $M_{2.4}$; **'हर्षेण बाध्यते शोको हर्षः शोकेन बाध्यते'** इति कुं.पाठः ।

**स त्वं न दुःखी दुःखस्य न सुखी सुसुखस्य वा ।**
**[१] स्मर्तुमर्हसि कौन्तेय दैवं हि बलवत्तरम् ।**
**अथवा ते स्वभावोऽयं येन पार्थावकृष्यसे ॥ ८ ॥**

**स त्वं न दुःखी** इत्यत्र **दुःखी** वनवासे बहुदुःखवान् स त्वं **दुःखस्य** वनवासदुःखं न स्मर्तुमर्हसि, **सुखी** राज्यप्राप्त्याख्यसुखवान् **सुसुखस्य** न्यायप्राप्तराज्यलाभाख्यसुसुखश्च स्मर्तुं नेच्छसि ।

**तस्मादभ्युपगन्तव्यं युद्धाय भरतर्षभ ।**
**[२] पारमव्यक्तरूपस्य परं मुत्त्या स्वकर्मभिः ॥ १४ ॥**

**पारमव्यक्तरूपस्य** इत्यत्र **अव्यक्तरूपस्य** बृहन्नळारूपेण अव्यक्तरूपस्य अर्जुनस्य, **स्वकर्मभिः** स्वकीययुद्धकौशलैः, **मुत्त्या** मोचनेन युद्धपरिसमाप्तये इत्यर्थः । परं **पारम्** अवसानं न स्मरसि ।

**यत्र नैव शरैः कार्यं न भृत्यैर्न च बन्धुभिः ॥ १५ ॥**

**यत्र** गोग्रहणयुद्धे शरैः कार्यं न, शमीवृक्षे अज्ञातवासे रक्षणाय आच्छाद्य निक्षिप्तत्वादिति भावः ।

**॥ इति आश्वमेधिके द्वादशोऽध्यायः ॥**

## ॥ अथ त्रयोदशोऽध्यायः ॥

**वासुदेव उवाच –**

**न बाह्यं द्रव्यमुत्सृज्य सिद्धिर्भवति भारत ।**
**शरीरं द्रव्यमुत्सृज्य सिद्धिर्भवति वा न वा ॥ १ ॥**

---

१. BORI पृ. ४८; $G_{1,2}$; **'स्मर्तुमिच्छसि'** इति कुं. पाठः ।
२. BORI पृ. ४८; $G_3,K_1$,; **'परमव्यक्तरूपस्य पारं युक्त्या'** इति कुं.पाठः

**न बाह्यं द्रव्यमुत्सृज्य** इत्यत्र **बाह्यं** धनकनकादि द्रव्यमुत्सृज्य राज्ञां सिद्धिर्न भवत्येव । (शरीरवद् द्रव्यं)। शरीराख्यमिदमन्तर्द्रव्यम् तप आदिक्लेशेनोत्सृज्य राज्ञां सिद्धिर्भवति वा न वा, विप्राणामेव स धर्मः । राज्ञां तु राज्यपरिपालनं त्यक्त्वा तपःकरणमनुचितमेवेति भावः ।

**कामात्मानं न प्रशंसन्ति लोके**
**नेहाकामा काचिदस्ति प्रवृत्तिः ।**
**सर्वे कामा मनसोऽङ्ग प्रभूता**
**यान् पण्डितः संहरते विचिन्त्य ।**
**भूयो भूयो जन्मनोऽभ्यासयोगा-**
**द्योगी योगं सारमार्गं विचिन्त्य ॥ ९ ॥**

**कामात्मानं** दुर्विषयकामात्मानम् । (अकामान् परलोककाम-रहितान् )।

**यो मां प्रयतते हन्तुं यज्ञैर्विविधदक्षिणैः ।**
**जङ्गमेष्विव धर्मात्मा पुनः प्रादुर्भवाम्यहम् ॥ १४ ॥**

**यज्ञैः** काम्ययज्ञैः ।

**यो मां प्रयतते हन्तुं [१] वेदैर्वेद्यं न साधकैः ।**

**वेदैर्वेद्यम्** इत्यत्र **वेदैः** काम्यकर्मप्रतिपादकवेदैः, **वेद्यम्** आपाततः वेद्यं मां हन्तुमिच्छति, **साधकैः** तत्त्वज्ञानसाधकैः वेदैः हन्तुं नेच्छतीत्यर्थः ।

**स्थावरेष्विव [२] शान्तात्मा तस्य प्रादुर्भवाम्यहम् ॥१५॥**

---

१. BORI पृ. ५१; $M_{1.3}$,$K_{1.3.5}$; **'वेदैर्वेदान्तसाधनैः'** इति कुं.पाठः ।
२. BORI पृ. ५१; **'भूतात्मा'** इति कुं.पाठः ।

**स्थावरेषु** वृक्षादिषु, **शान्तात्मा** बहिः कामादर्शनेऽपि मूले जल-पानादिरूपेण शान्तात्मा काम इव ।

**यो मां प्रयतते हन्तुं धृत्या सत्यपराक्रमः ।**
**भावो भवामि तस्याहं स च मां नावबुध्यते ॥ १६ ॥**

**धृत्या सत्यपराक्रम** इत्यत्र **धृत्या** मनसा धारणमात्रेण ।

**यो मां प्रयतते हन्तुं तपसा संशितव्रतः ।**
**ततस्तपसि तस्याथ पुनः प्रादुर्भवाम्यहम् ॥ १७ ॥**

**तपसा** काम्यतपसा ।

**यो मां प्रयतते हन्तुं मोक्षमास्थाय पण्डितः ।**
**तस्य[१] मोक्षमतिस्थस्य नृत्यामि च हसामि च ।**
**अवध्यः सर्वभूतानामहमेकः सनातनः ॥ १८ ॥**

**मोक्षमतिस्थस्य** इत्यत्र मोक्षमतिस्थस्य हरिप्रसादं विना केवलं स्वप्रयत्नादेव मोक्षमतिस्थस्य ।

**तस्मात्त्वमपि तं कामं यज्ञैर्विविधदक्षिणैः ।**
**धर्मे कुरु महाराज तत्र ते स भविष्यति ॥ १९ ॥**

**धर्मे कुरु** इत्यत्र **धर्मे** धर्मे एव, न तु तज्जन्यस्वर्गादिफले, विष्णु-प्रसादजनकधर्मेष्वेव कामं कुर्वित्यर्थः ।

**॥ इति आश्वमेधिके त्रयोदशोऽध्यायः ॥**

---

१ BORI पृ. ५१; $G_{1.2}$; **'तस्य मोक्षरतिस्थस्य'** इति कुं.पाठः ।

## ।। अथ चतुर्दशोऽध्यायः ।।

**सोऽनुनीतो भगवता विष्टरश्रवसा स्वयम् ।**
**द्वैपायनेन कृष्णेन देवस्थानेन चाभिभूः ।। २ ।।**

**देवस्थानेन** देवस्थानाख्यऋषिणा ।

**।। इति आश्वमेधिके युधिष्ठिरराज्यपालनं नाम चतुर्दशोऽध्यायः ।।**

## ।। अथ पञ्चदशोऽध्यायः ।।

**[१] केन वाहं त्वया सार्धमरण्येष्वपि पाण्डव ।**
**किमु यत्र जनोऽयं वै पृथा चामित्रकर्शन ।। १७ ।।**

**केन वाहं त्वया सार्धम्** इत्यत्र **अयं** धर्मराजः **यत्र** अक्षे स्वयं प्राक् जितः तमक्षम् अरण्येष्वपि त्वया वा केन वा सार्धं करोति उत वृथा वा तिष्ठति इति केशवः कथयामासेत्यन्वयः । यद्वा अक्षक्रीडां करवामेति पार्थेनोक्तः कृष्णः प्रत्याह – अरण्येषु त्वया सार्धं लीलया सञ्चरण-समयेऽपि त्वया सार्धम् अक्षक्रीडा केन वा कारणेन ? न केनापि, सर्वापि क्रीडा अस्तु इयमेका मास्त्विति भावः ।

**।। इति आश्वमेधिके अनुगीतासु पञ्चदशोऽध्यायः ।।**

## ।। अथ षोडशोऽध्यायः ।।

**[२] अन्तर्धानगतिज्ञं च श्रुत्वा तत्त्वेन काश्यपः ।**
**तथैवान्तर्हितैः सिद्धैः [३] यातः चक्रधरैः सह ।। २३ ।।**

---

१. कुं.१६ अध्यायः । **'रमे चाहम्'** इति कुं.पाठः ।

२. कुं.१७ अध्यायः । ; ३. **'यान्तं चक्रधरैः'** इति कुं.पाठः ।

**यातश्चक्रधरैः सह** इत्यत्र **चक्रधरैः** सुदर्शनचक्रधरैः परमवैष्णवैरित्यर्थः ।

**।। इति आश्वमेधिके षोडशोऽध्यायः ।।**

## ।। अथ एकोनविंशोऽध्यायः ।।

[१] **चार्यं निबाह्यत** इत्यत्र **चार्यं** सञ्चरणीयम् ।

**।। इति आश्वमेधिके अनुगीतासु एकोनविंशोऽध्यायः ।।**

## ।। अथ विंशोऽध्यायः ।।

[२] **मोहमेव निगच्छन्ति कर्मिणो ज्ञानवर्जिताः ।**
**नैष्कर्म्यं न च लोकेऽस्मिन्मौर्तमित्युपलभ्यते** ।। ७ ।।

**नैष्कर्म्यं न च लोकेऽस्मिन्मौर्तमित्युपलभ्यत** इत्यत्र इति वक्ष्यमाणप्रकारेण, **मौर्तं** भगवन्मूर्तिविषयं, **नैष्कर्म्यं** प्रवृत्तिकर्म । श्रद्धारहितेन सम्पाद्यमानं मोक्षसाधनं ज्ञानम् अस्मिन्लोके प्रायशो नोपलभ्यते ।

**कर्मणा मनसा वाचा शुभं वा यदि वाऽशुभम् ।**
[३] **जन्मादिमूर्तिभेदाद्वै कर्म भूतेषु वर्तते** ।। ८ ।।

**जन्मादिमूर्तिभेदात्** ब्राह्मणक्षत्रियादिषु जन्मादिना यो **मूर्तिभेदः** शरीरवैजात्यं तस्मात् **भूतेषु** प्राणिषु **कर्म** प्रवृत्तिकर्म बहुशो वर्तते ।

---

१. एतत्प्रतीकघटितः श्लोकः मुद्रितकोशेषु नोपलभ्यते ।
२. कुं.२१ अध्यायः ।
३. '**जन्मादिमूर्तिभेदानां कर्म भूतेषु वर्तते**' इति कुं.पाठः ।

**रक्षोभिर्वध्यमानेषु दृश्यादृश्येषु[१] कर्मसु ।**
**आत्मस्थमात्मना तेन दृष्टमायतनं मया ॥ ९ ॥**

रक्षोभिर्वध्यमानेषु सत्सु, **तेन आत्मना** परमात्मना तत्प्रसादेनेत्यर्थः । **आत्मस्थं** मम अन्तर्यामितया विद्यमानम् **आयतनं** ब्रह्मादि-सकलजगतोऽप्याधारभूतं तत् परमात्मस्वरूपं मया दृष्टम् । एवञ्च मम ज्ञाननिष्ठत्वात् प्रवृत्तिकर्मणि न श्रद्धां करोमि । त्वं तु अज्ञलोकवत् कर्मकरणात् ज्ञानमार्गमविज्ञाय मामपहससीति भावः ।

**यत्र तद्ब्रह्म निर्द्वन्द्वं यत्र सोमः सहाग्निना ।**
**व्यवायं कुरुते नित्यं धीरो भूतानि धारयन् ॥ १० ॥**

यत्र मोक्षे **निर्द्वन्द्वं** शीतोष्णादिपीडाऽगोचरं तत् ब्रह्म तिष्ठति **यत्र सोमः** मुक्तसोमः अग्निना सह **व्यवायं** विशेषेण मुक्तजीवैरवगतम् **आयं** सुखलाभमेव कुरुते न तु शीतोष्णादिना दुःखं दिशतीत्यर्थः ।

**चक्षुषा न विषह्यं च यत्किञ्चिच्छ्रवणात्परम् ।**
**अगन्धमरसस्पर्शमरूपं शब्दवर्जितम् ।**
**यतः प्रवर्तते तन्त्रं यत्र चैतत्प्रतिष्ठितम् ॥ १३ ॥**

**अगन्धमरसस्पर्शम्** इत्यत्र प्राकृतगन्धरसादिरहितत्वात् तद्ग्राहक-घ्राणादिरहितत्वात् तद्ग्राहकघ्राणादिप्राकृतेन्द्रियाणामपि अविषयभूत-मित्यर्थः । **तन्त्रं** जगत्तन्त्रम् ।

**घ्रेये पेये च दृश्ये च स्पृश्ये श्राव्ये तथैव च ।**
**मन्तव्येऽप्यथ बोद्धव्ये सुभगे पश्य सर्वदा ॥ २२ ॥**

---

१. BORI पृ. ८३; $C_1$,$D_{n1}$. ; 'दृश्यश्राव्येषु कर्मसु' इति कुं.पाठः ।

**घ्रेये पेये च** इत्यत्र बहिस्थविषयप्रापकेन्द्रियाणां पञ्चत्वात् पञ्चक इति ज्ञेयम् ।

॥ इति दम्पत्योर्विवादे विंशोऽध्यायः ॥

## ॥ अथ एकविंशोऽध्यायः ॥

**[1]सर्वमेवात्र विज्ञेयं [2]चित्तं ज्ञानमवेक्षते ।**
**[3]चेतः शरीरभोक्ता च विज्ञाता तु शरीरभृत्** ॥ ७ ॥
**[4]शरीरभृद्गार्हपत्यस्तस्मादन्यः प्रणीयते ।**
**[5]ततश्चाहवनीयस्तु तस्मिन् प्रक्षिप्यते हविः** ॥ ८ ॥
**ततो [6]वाचस्पतिर्यज्ञे मनसा पर्यवेक्षते ।**
**रूपं भवति वै वक्त्रं तदनुद्रवते मनः** ॥ ९ ॥

**चेतः शरीरभोक्ता च** इत्यत्र **चेतः** चित्ताभिमानी ब्रह्मा, **शरीरभोक्ता** शरीरस्थभोगसारभोक्ता नारायणः, **विज्ञाता** विज्ञाततत्त्वाभिमानिन्यः सरस्वत्युमाद्याः, **शरीरभृत्** शरीरधारको मुख्यप्राणः इमे पञ्चदेवाः । एतेषु शरीरभृत् मुख्यप्राण एव **गार्हपत्यः** गार्हपत्याग्निस्थानीयः । **तस्मादन्यः** विज्ञानतत्त्वाभिमानिनी दक्षिणाग्निः दक्षिणाग्निस्थानीयः ।

१. कुं.२२ अध्यायः ।
२. '**चित्ते ज्ञानमवेक्षता**' इति कुं.पाठः ।
३. BORI पृ. ८६; $G_3$,$M_4$; '**रेतःशरीरभृत्काये**' इति कुं.पाठः ।
४. BORI पृ. ८६; '**शरीरभृद्गार्हपत्यस्तस्मादग्निः**' इति कुं.पाठः ।
५. BORI पृ. ८७; '**मनश्चाहवनीयस्तु**' इति कुं.पाठः ।
६. BORI पृ. ८७; BORI,$G_3$; '**वाचस्पतिर्जज्ञे तं मनः पर्यवेक्षते**' इति कुं. पाठः ।

ततः **आहवनीयः** आहवनयोग्यो जठराग्निः जायते । ततः **वाचस्पति**-र्वागभिमानी देवः, तदनन्तरं मनसा पर्यवेक्षते । वेत्तुस्तस्य मनसः सकाशात् **रूपं भवति वै** ध्यानयोग्यप्रतिमारूपमित्यर्थः ।

**तत्** मनः अनुद्रवते, प्राणभृतः विज्ञानस्य च अवस्थाभेदेन रूपद्वयमादाय दशहोतारो भवन्ति ।

**ब्राह्मण उवाच–**

**[1]तामुदानः पतिर्भूत्वा तस्मात्प्रेक्षत्यपानिति ।**
**तां मतिं मनसः [2]प्राहुर्मनस्तस्मादवेक्षते ॥ १२ ॥**

**तामुदानः पतिर्भूत्वा** इत्यत्र **तां** मतिम् **उदानः** उदानवायुः पतिर्भूत्वा **तस्मात्** पतिभावात् **प्रेक्षति** सदा पश्यति । **अपानिति** अधस्तादेव चेष्टयति । तां मतिं मनसः सकाशात् जातां प्राहुः । **तस्मात्** उदानात् मनः **अवेक्षते** विषयान् पश्यति ।

**ब्राह्मण उवाच–**

**स्थावरं जङ्गमं चैव विद्ध्युभे मनसी मम ।**
**स्थावरं मत्सकाशे वै जङ्गमं विषये तव ॥ १६ ॥**

**स्थावरं जङ्गमं चैव विद्ध्युभे मनसी मम** इत्यत्र मनःसृष्टत्वाद्वा, 'मनु अवबोधने' इति धातोः ज्ञानहेतुत्वाद्वा मनःशब्दवाच्ये विद्धि । **स्थावरं** स्थिरत्वात् स्थावरशब्दवाच्यो मुख्यप्राणः मत्सकाशे, मम सत्यलोके तिष्ठति । अहमिव सर्वैर्जीवैः पूज्यमान एव । न त्वन्यमनु-

---

१. **'तन्मनस्थः पतिर्भूत्वा तस्मात्प्रेहन्निवायति'** इति कुं.पाठः ।
२. BORI पृ. ८७ ; **'प्राहुर्मनस्तस्मादपेक्षते'** इति कुं.पाठः ।

सरति, अतः स्थिरत्वात् स्थावरमित्युच्यते । **जङ्गमं** मन्वन्तरे मन्वन्तरे कल्पे कल्पे च जं जातमिन्द्रादिकमनुसृत्य वर्तमानं तव वर्णमन्त्र-स्वरादिकं जङ्गममित्युच्यते, तत्तु तव विषये वर्तते त्वदधीनं तिष्ठती-त्यर्थः ।

**[१]यस्मादिदं त्वं मा वोचः स्वयमभ्येत्य शोभने ।**
**तस्मादुच्छ्वासमासाद्य [२]मा वक्ष्यसि सरस्वति ॥ १८ ॥**

**यस्मादिदं त्वम्** इत्यत्र **स्वयं** स्वेच्छया स्वाभिमानिवायुसहायं विना **मा** मां प्रति इदं वाक्यमवोचः । **तस्मादुच्छ्वासम्,** ऊर्ध्वं श्वासम् आसाद्य **मा** मां वक्ष्यसि । ऊर्ध्वश्वाससमये तव प्रवृत्तिर्न भवेदिति भावः ।

**घोषिणी जातनिर्घोषा नित्यमेव प्रवर्तते ।**
**तयोरपि च घोषिण्या निर्घोषैव गरीयसी ॥ २१ ॥**

**गौरिव प्रस्रवत्यर्थान् [३]रसमुत्तमपालिनी ।**
**सततं स्यन्दते ह्येषा शाश्वतं ब्रह्मवादिनी ॥ २२ ॥**

प्राणेन प्रेर्यमाणा **घोषणी** अल्पघोषवती । **जातनिर्घोषा** जातो नितरां घोषो यस्याः सा तथोक्ता, प्रवर्तते । प्राणप्रेरणाया **रसं** ज्ञानरसम्, **उत्तमान्** जीवान् पालयतीति **उत्तमपालिनी** । उभयोः प्राणभारत्योः ।

---

१. BORI पृ. ८८; $G_3$,$M_4$; **'तस्माद्भवितुमर्हामि स्वयमभ्येत्य शोभने'** इति कुं.पाठः ।
२. BORI पृ. ८८; **'प्रवक्ष्यामि सरस्वति'** इति कुं. पाठः ।
३. **'रसमुत्तमशालिनी'** इति कुं.पाठः ।

**ततः समाने प्रतितिष्ठतीह**
**इत्येव[१] सर्वं प्रजजल्प वागपि ।**
**तस्मान्मनः स्थावरत्वात्[२] विशिष्टः**
**तथा देवी जङ्गमत्वाद्विशिष्टा ॥ २६ ॥**

**इत्येव सर्वं प्रजजल्प** इत्यत्र **इत्येव** उक्तविधया पञ्चविधप्राणमनुसृत्यैव मे प्रवृत्तिः। न स्वेच्छयेति **प्रजजल्प** ब्रह्माणं प्रत्यादावुक्तवती ।

**तस्मान्मन** इत्यत्र **मनः** मनःशब्दवाच्यो मुख्यप्राणः **स्थावरत्वात्** अन्याननुसारित्वेन स्थिरत्वात् । उपलक्षणं चैतत् । वाग्रूपायाः भारत्याः प्रवृत्तिहेतुत्वाच्च **विशिष्टः** सर्वजीवेभ्योऽप्युत्कृष्टः, तथा **देवी** वाग्देवी **जङ्गमत्वात्** सर्वापेक्षितमन्त्रस्वरवर्णप्रेरकत्वात् प्राणादनन्तरं सर्वेभ्योऽपि विशिष्टेत्यर्थः ।

**॥ इति अनुगीतासु एकविंशोऽध्यायः ॥**

## ॥ अथ द्वाविंशोऽध्यायः ॥

**गुणज्ञानामभिज्ञानं[३] गुणज्ञानामभिज्ञता ।**
**परस्परं गुणानेते नाभिजानन्ति कर्हिचित् ॥ ५ ॥**

**गुणज्ञानामभिज्ञानं गुणज्ञानामभिज्ञता** इत्यत्र एकस्य स्वयोग्यगुणज्ञानम् अभिज्ञानं नाम भिन्नम् । पुनरन्यस्य च स्वयोग्यगुणज्ञानम्

१. '**इत्येव पूर्वं प्रजजल्प**' इति कुं.पाठः ।
२. BORI पृ. ८९; $K_5$; '**विशिष्टम्**' इति कुं.पाठः ।
३. कुं.२३ अध्यायः । BORI पृ. ९०; $G_{2.3}$,$M_{3.4}$; '**गुणज्ञानेषु विज्ञानम्**' इति कुं.पाठः ।

अभिज्ञता नाम च भिन्नम् । एवमन्येषामपीति योजना । अतो न पौनरुक्त्यम् ।

॥ इति आश्वमेधिके द्वाविंशोऽध्यायः ॥

## ॥ अथ त्रयोविंशोऽध्यायः ॥

**[१]एकः स्थिरश्चराश्चान्ये विशेषात् पञ्च वायवः ।**
**[२]एक एव ममैवात्मा बहुधाऽप्युपचीयते ॥ २४ ॥**

वायोरेव ब्रह्मपदवीयोग्यत्वात् **एक एव** ममैव आत्मेत्युक्तम् । पञ्चरूपा अपि भवन्तः एकः मुख्यप्राण एव । स च **ममैवात्मा** भावि ब्रह्मैव । अतः कलहो न कर्तव्य इत्यर्थः ।

॥ इति आश्वमेधिके अनुगीतासु त्रयोविंशोऽध्यायः ॥

## ॥ अथ चतुर्विंशोऽध्यायः ॥

**[३]अग्निर्वै देवताः सर्वा इति देवस्य शासनात् ।**
**सञ्जायते हि प्राणेषु ज्ञानं बुद्धिसमन्वितम् ॥ १० ॥**
**तस्य धूमस्तमोरूपं [४]रजो भस्म सुरेतसः ।**
**सत्वं सञ्जायते तस्य यत्र प्रक्षिप्यते हविः ॥ ११ ॥**

**अग्निर्वै देवताः सर्वा** इत्यत्र अग्निः सर्वदेवानाम् आहुतिदानेन

---

१. कुं.२४ अध्यायः ।; २. BORI पृ. ९७; **'एक एव च सर्वात्मा'** कुं.पाठः
३. कुं.२५ अध्यायः ।
४. BORI पृ. ९८; **'-रजो भस्म सुतेजसः । सर्वं सञ्जायते-'** इति कुं.पाठः ।

तृप्तिकरत्वात् सर्वा देवता इत्युक्तम् । अतः ब्राह्मणानां जठरस्थो वैश्वानराग्निरपि प्राणाग्निहोत्रेण सकलेन्द्रियाभिमानि देवानाम् अन्नरसाहुतिदानेन तृप्तिकरत्वात् देहेऽपि सर्वा देवता इत्युच्यते । एवमग्निना मन आदिसकलेन्द्रियपोषणे कृते सति पूर्वं **ज्ञानम्** इदं करोमि तद्वा करोमीति संशयात्मकमुत्पद्यते । पुनः **बुद्धिः** एतदेव करोमीति निश्चयात्मिका बुद्धिः सञ्जायते । **तस्य** अग्नेः ज्ञानं **धूमः** धूमस्थानीयम् । बुद्धिः **रूपं** शुक्लभास्वररूपस्थानीयम् । **सुरेतसः** पुत्रोत्पादनयोग्यरेतसः **यद्रजः** अन्नरसोत्पादिताः कणाः तत् भस्म, तत्तु रजः **सत्त्वं** देहस्य बलरूपं च **सञ्जायते** सन्तानरूपेण प्राणी च जायते । अतः कारणात् यत्र जाठराग्नौ हविः प्रक्षिप्यते, असावग्निः समानो व्यानश्च समानव्यानाख्यवाय्वधीनः । अधिकरसदाने अजीर्त्याग्नेः अशान्तिः स्यात् । अतः समानोऽपेक्षितः । सर्वनाडीषु अग्निशिखासञ्चाराय व्यानोऽप्यपेक्षित इति भावः ।

**एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ।**
**निर्द्वन्द्वमिति यत्त्वेतत्तन्मे निगदतः शृणु ॥ १३ ॥**

**एतद्रूपमुदानस्य** इत्यत्र एतत् समानादिचतुष्टयम् उदानस्य रूपम् । **निर्द्वन्द्वं** नितरां बहुशो विद्यमानं द्वन्द्वं निर्द्वन्द्वम् ।

**अहोरात्रमिदं द्वन्द्वं तयोर्मध्ये हुताशनः ।**
**एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ॥ १४ ॥**

**अहोरात्रमिदं द्वन्द्वम्** इत्यत्र रात्र्यपगमे अहरारम्भे, पुनः सायम् अहरपगमे रात्र्यारम्भे चाग्नेः सेव्यमानत्वात् तयोर्मध्ये हुताशन इत्युक्तम् ।

**[1] उभे चैवायने द्वन्द्वं तयोर्मध्ये हुताशनः।**
**एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ॥ १५ ॥**

**उभे शुभाशुभे द्वन्द्वं तयोर्मध्ये हुताशनः।**
**एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ॥ १६ ॥**

**उभे चैवायने** इत्यत्र दक्षिणायनापगमे उत्तरायणारम्भे यज्ञाद्यारम्भरूपेणाग्नेः सत्त्वात्, उत्तरायणापगमे च घर्मरूपेणाग्नेः सत्त्वात् तयोर्मध्ये हुताशन इत्युक्तम्। सत्यापगमे अनृतारम्भे नरकरूपाग्निः, अनृतापगमे सत्यारम्भे च तेजोमयलोकप्राप्त्याग्निः एवं शुभाशुभादावपि द्रष्टव्यम्।

**[2] शान्त्यर्थं वामदेवश्च शान्तिर्ब्रह्म सनातनम्।**
**एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ॥ १९ ॥**

**शान्त्यर्थं वामदेवश्च** इत्यत्र **वामदेवश्च** वामदेवादि ऋषिवर्गः, शान्त्यर्थमुत्पन्नं सनातनं **ब्रह्म** वेदश्च, **शान्तिः** शमाख्यगुणदातृत्वात् शान्तिः।

॥ इति आश्वमेधिके चतुर्विंशोऽध्यायः ॥

## ॥ अथ पञ्चविंशोऽध्यायः ॥

**[3] घ्राणं जिह्वा च चक्षुश्च त्वक्च श्रोत्रं च पञ्चमम्।**
**मनो बुद्धिश्च सप्तैते ज्ञेयाः [4] करणहेतवः ॥ ४ ॥**

---

१. **'उभे सत्यानृते'** इति कुं.पाठः।
२. **'शान्त्यर्थं वामदेव्यम्'** इति कुं.पाठः।; ३. **कुं.२६ अध्यायः।**
४. BORI पृ. १००; T,G,$M_{3.4}$; **'कारणहेतवः'** इति कुं.पाठः।

**करणहेतवः** करणरूपहेतवः ।

**घ्राता भक्षयिता द्रष्टा स्प्रष्टा श्रोता च पञ्चमः ।**
**मन्ता बोद्धा च सप्तैते विज्ञेयाः कर्तृहेतवः ॥ ६ ॥**
**[१]स्वगुणं भक्षयन्त्येते गुणवन्तः शुभाशुभान् ।**
**[२]अहं च निर्गुणोऽत्रेति सप्तैते मोक्षहेतवः ॥ ७ ॥**

**स्वगुणं भक्षयन्त्येते** इत्यत्र **एते** सप्तकर्तृहेतवः । **अत्र** करणहेतु-कर्महेतु-कर्तृहेतूनां मध्ये । **अहम्** अहंशब्दवाच्यो जीवः यदा मद्वत् **निर्गुणः** गुणाशारहितो भवति तदा एते सर्वे मोक्षहेतवो भवन्तीति योजना ।

**विदुषां बुध्यमानानां स्वं स्वं स्थानं यथाविधि ।**
**गुणास्ते देवता भूत्वा सततं भुञ्जते हविः ॥ ८ ॥**

**गुणास्ते देवता भूत्वा** इत्यत्र देवताः ते **गुणा भूत्वा** गुणप्रवर्तका भूत्वा **हविः** नानागुणस्वादनोत्थसुखाख्यं हविः सततं भुञ्जते ।

**[३]माद्यमन्नमदन् विद्वान् पुनर्जनयतीश्वरः ।**
**[४]स चान्नाज्जायते तस्मिन् सूक्ष्मो नामव्यतिक्रमः ॥ ११ ॥**

**माद्यमन्नमदन् विद्वान्** इत्यत्र **माद्यं** 'मदी हर्षे' इति धातोः, सन्तोषकरम् **अन्नं** ज्ञानिना दत्तमन्नम् अदन् **विद्वान्** ईश्वरः परमात्मा ।

१. BORI पृ. १००; **'स्वगुणान्भक्षयन्त्येते'** इति कुं.पाठः ।
२. BORI पृ. १००; **'असन्तो निर्गुणाश्चैते'** इति कुं.पाठः ।
३. **'हन्ता ह्यन्नमिदम्'** इति कुं.पाठः ।
४. BORI पृ. १०१; **'न चान्नाज्जायते'** इति कुं.पाठः ।

अन्नं पुनः पुनर्जनयति । **स च** ज्ञानी तस्मादन्नात् भुक्तात् । **नाम-व्यतिक्रमः** ग्रासे ग्रासे भगवन्नामकीर्तनेन सकलदुरितव्यतिक्रमवान्, **सूक्ष्मः** बाह्यदेहभङ्गे सति सूक्ष्मः सन्, तस्मिन्नेव **तस्मिन्** परमात्मनो वा जायते ।

**स्पर्शेन स्पृश्यते यच्च घ्राणेन घ्रायते च यत् ।**
**[1]मनःषष्ठानि संयम्य हवींष्येतानि सर्वशः ॥ १३ ॥**
**[2]गुणवित्पावको मह्यं [3]दीप्यते हव्यवाहनः ।**

मनःषष्ठानि **एतानि** इन्द्रियव्यापारान् **हवींषि** परमात्मनो हवींषि, **संयम्य** सङ्कल्प्य, **गुणवित्** परमात्मनः स्वातन्त्र्याख्यगुणवित् हव्य-वाहनः पावक इव दीप्यते ।

**योगयज्ञः प्रवृत्तो मे [4]ज्ञानब्रह्ममनोभवः ।**
**प्राणस्तोत्रोऽपानशस्त्रः सर्वत्यागसुदक्षिणः ॥ १४ ॥**

**ज्ञानब्रह्ममनोभवः** ज्ञानदायकादेव मननाज्जातः । योगयज्ञः **मे** मम प्रवृत्तः ।

**कर्ताऽनुमन्ता ब्रह्मात्मा होताऽध्वर्युः कृतस्तुतिः ।**
**[5]कृतप्रशास्ता तच्छास्त्रमपवर्गोऽस्य दक्षिणा ॥ १५ ॥**

---

१. BORI पृ. १०१; '**मनस्येतानि**' इति कुं.पाठः ।
२. '**गुणवत्पावको**' इति कुं. पाठः । BORI पृ. १०१
३. '**दीव्यतेऽन्तःशरीरगः**' इति कुं. पाठः ।
४. '**ज्ञानं ब्रह्ममयो हविः**' इति कुं.पाठः ।
५. BORI पृ. १०२; '**ऋतं प्रशास्ता तच्छस्त्रम्**' इति कुं.पाठः ।

**कर्ताऽनुमन्ता ब्रह्मात्मा** इत्यत्र मे योगयज्ञकर्तुः मम **कर्ता** सर्वकर्ता नारायण एव । **अनुमन्ता**, 'ओश्रावय, अस्तु, श्रौषट्, वायुमुपब्रूहि, विष्णुमुपब्रूहि' इत्यादिना अनुमतिं कुर्वन् ऋत्विग्विशेषोऽपि कर्ता नारायण एव । **ब्रह्म** ब्रह्माख्यऋत्विक् **कर्ता** सर्वकर्ता नारायण एव । अध्वर्युः कर्ता नारायण एव । **कृतस्तुतिः** कृता स्तुतिर्येन सः इति **कृतस्तुतिः** उद्गातापि **कर्ता** नारायण एव, **कृतप्रशास्ता,** कृतं कर्म प्रकर्षेण शास्तीति **कृतप्रशास्ता** आचार्योऽपि **कर्ता** नारायण एव । **तच्छास्त्रं** कर्ममीमांसाशास्त्रमपि **कर्ता** नारायण एव । **अपवर्गः** योगयज्ञफलीभूतः मोक्षः (मोक्षदः) । अस्य दक्षिणापि, **कर्ता** नारायण एव । सर्वं तदधीनम् इत्यर्थः ।

**ऋचश्चाप्यत्र शंसन्ति नारायणविदो जनाः ।**
**[1]नारायणाय देवाय अबध्नन् पशुं पुरा ॥ १६ ॥**

**ऋचश्चाप्यत्र शंसन्ति** इत्यत्र **अत्र** योगयज्ञे ता ऋचः नारायणविदो जनाः शंसन्ति । 'अबध्नन् पुरुषं पशुम्'[2] इत्याद्या या ऋचः नारायणाय देवाय पुरा **पशुं** पुरुषपशुम् **अबध्नन्** बन्धयामासुः । अन्तर्णीतो णिच् ।

**तत्र सामानि गायन्ति [3]तानि चाहुर्निदर्शनम् ।**
**देवं नारायणं भीरु सर्वात्मानं निबोध मे[4] ॥ १७ ॥**

**तत्र** नारायणे सामानि गायन्ति । तानि च नारायणविदो जनाः

---

१. **'नारायणाय देवाय यदविन्दन् पशून् पुरा'** इति कुं.पाठः ।
२. यजु. आ. ३-१२-३४
३. **'तत्र'** इति कुं. पाठः ।
४. **'निबोध तम्'** इति कुं. पाठः ।

निदर्शनमाहुः । हे **भीरु** ब्राह्मणि ! **सर्वात्मानं** सर्वस्वामिनं नारायणं देवं **मे** मयि **निबोध** मम मनसि स्थितं जानीहि ।

॥ इति आश्वमेधिके अनुगीतासु पञ्चविंशोऽध्यायः ॥

## ॥ अथ षड्विंशोऽध्यायः ॥

**ब्राह्मण उवाच –**

**एकः[१] शास्ता न द्वितीयोऽस्ति शास्ता**
**यो हृच्छयस्तमहमनु ब्रवीमि ।**
**तेनैति[२] युक्तः प्रवणादिवोदकं**
**यथा नियुक्तोऽस्मि तथा वहामि ॥ १ ॥**

**तेनैति युक्तः प्रवणादिवोदकम्** इत्यत्र **तेन** नारायणेन **युक्तः** नियुक्तः पुरुषः **प्रवणात्** क्रमनिम्नभूप्रदेशात् उदकमिव **एति** प्रवर्तते । 'प्रवणः क्रमनिम्नोर्व्याम्'[३] इत्यमरः ।

**एको गुरुर्नास्ति ततो द्वितीयो**
**यो हृच्छयस्तमनु[४] प्रब्रवीमि ।**
**येनानुशिष्टा[५] गुरुणा सदैव**
**पुरा हता दानवाः सर्व एव ॥ २ ॥**

---

१. कुं.२७ अध्यायः ।
२. BORI पृ. १०२; $S_1$,$K_1$; **'तेनैव युक्तः'** इति कुं.पाठः ।
३. अ.को. तृ. नानार्थवर्गः श्लो. ५६
४. **'हृच्छयस्तमहमनु ब्रवीमि'** इति कुं.पाठः ।
५. **'तेनानुशिष्टा'** इति कुं.पाठः ।

**तमनु प्रब्रवीमि** इत्यत्र तं नारायणम् अनुसृत्य प्रवचनं करोमि ।

**येनानुशिष्टा** इत्यत्र **येन** सर्वे दानवाः पराभूताः तेन **गुरुणा** नारायणेन अनुशिष्टोऽस्मीत्यन्वयः ।

**एकः श्रोता नास्ति ततो द्वितीयो**
**यो हृच्छयस्तमहमनु ब्रवीमि ।**
**तस्मिन् गुरौ गुरुवासं निरूप्य**
**शक्रो गतः सर्वलोकामरत्वम्** ॥ ४ ॥

**गुरुवासं** गुरुकुलवासम् ।

**एको द्वेष्टा नास्ति ततो द्वितीयो**
**यो हृच्छयस्तमहमनु ब्रवीमि ।**
**तेनानुशिष्टा गुरुणा सदैव**
**लोके द्विष्टाः पन्नगाः सर्व एव** ॥ ५ ॥

**एको द्वेष्टा नास्ति ततो द्वितीय** इत्यत्र **द्वेष्टा** दुर्जनं द्वेषयोग्यं कुर्वन्, दुर्जनेषु द्वेषं कुर्वन् वा ।

[१] **तेषां प्रद्रवतामेव उपदेशार्थमात्मनः ।**
**सर्पाणां दंशने भावः प्रवृतं पूर्वमेव तु** ॥ ९ ॥

**तेषां प्रद्रवतामेव उपदेशार्थमात्मन** इत्यत्र **आत्मनः** परमात्मनः **उपदेशार्थं** स्वशिष्येषूपदेशार्थं **पूर्वमेव** उपदेशात् पूर्वमेव, **सर्पाणां दंशने** लोकानां दंशने **भावः** चित्तं प्रवृतम् इति योजना ।

---

१. BORI पृ. १०३; $M_3$,$G_3$; **'तेषां प्रद्रवमाणानामुपदेशं च शृण्वताम् । सर्पाणां दंशने भावः प्रवृत्तः-'** इति कुं.पाठः ।

**एवं[1] वक्तारमासाद्य शब्देनैकेन सत्कृताः ।**
**एवं[2] धर्मं व्यवसिताः सर्वे सर्पदेवर्षिदानवाः ॥ ११ ॥**

**एवं वक्तारमासाद्य** इत्यत्र **वक्तारं** ब्रह्माणम् **एकेन शब्देन** ॐकाराख्यशब्देन सत्कृताः । **एवं** पूर्वोक्तप्रकारेण **धर्मं** स्वस्वजातियोग्यं धर्मं व्यवसिताः । गुरोः मन्त्रस्य चैकप्रकारत्वेऽपि अधिकारिणां स्वभाव-वैचित्र्यात् फलवैचित्र्यमासीदिति भावः ।

**शृणोत्ययं प्रोच्यमानं गृह्णाति च यथातथम् ।**
**पृच्छतस्तावतो[3] भूयो गुरोरन्योऽनुमन्यते ॥ १२ ॥**

**पृच्छतस्तावतो भूय** इत्यत्र यावन्तोऽर्थाः अपेक्षिताः तावतः भूयोभूयः **पृच्छतः** शिष्यात् **गुरोः** वक्तुः गुरोश्च सकाशात् **अन्यः** तटस्थोऽपि श्रद्धावांश्चेदनुमन्यते ।

**तस्य चानुमते कर्म ततः पश्चात् प्रवर्तते ।**
**गुरुर्बन्धुश्च[4] शत्रुश्च द्वेष्टा च हृदि संस्थितः ॥ १३ ॥**

**गुरुर्बन्धुश्च** इत्यत्र **शत्रुः** कामक्रोधादीनां शत्रुः । **द्वेष्टा** कल्यादे-द्वेष्टा । गुरुर्बन्धुश्च हृदये स्थितः नारायणः । सर्वेषां मुख्यतो गुरुः श्रीहरिरेव, अन्ये त्ववान्तरगुरव इति भावः ।

---

१. BORI पृ. १०४; $G_3$; **'एकं शास्तारमासाद्य शब्देनैकेन संस्कृताः'** इति कुं.पाठः ।

२. **'नानाव्यवसिताः'** इति कुं.पाठः ।

३. BORI पृ. १०४; **'पृच्छतस्तदतो भूयो गुरुरन्यो न विद्यते'** इति कुं.पाठः ।

४. BORI पृ. १०४; BORI, $M_{1.2}$; **'गुरुर्बन्धुश्च शास्ता च द्वेष्टा च हृदि संश्रिताः'** इति कुं.पाठः ।

**ब्रह्मैव समिधस्तस्य ब्रह्माग्निर्ब्रह्मसंस्तरः ।**
**आपो ब्रह्म गुरुर्ब्रह्म स ब्रह्मणि समाहितः ॥ १७ ॥**

**समिधस्तस्य ब्रह्माग्निः** इत्यत्र **तस्य** ज्ञानयज्ञरतस्य समिधोऽपि ब्रह्मैव, अग्निरपि ब्रह्मैव, संस्तरोऽपि ब्रह्मैव ।

**एतदेवेदृशं सूक्ष्मं ब्रह्मचर्यं विदुर्बुधाः ।**
**विदित्वा चान्वपद्यन्त [1]क्षेत्रज्ञेनानुदर्शिना ॥ १८ ॥**

**क्षेत्रज्ञेनानुदर्शिना** इत्यत्र **अनुदर्शिना** सर्वज्ञेन, **क्षेत्रज्ञेन** नारायणेन प्रेरिताः यदि **वाचा** बाह्यवाग्व्यापारेण प्रवर्ज्यन्ते, तर्हि ब्रह्मयज्ञे अधिकारो भवति नान्यथा । उक्तविधया आन्तरब्रह्मयज्ञरतस्य मम यज्ञो नास्तीति भ्रमस्त्वया न कार्यं इति स्वभार्यां प्रति ब्राह्मणस्य वचनम् ।

**॥ इति षड्विंशोऽध्यायः ॥**

## ॥ अथ सप्तविंशोऽध्यायः ॥

**[2]विषयैकान्त्यकाध्वानं कामक्रोधविरोधिकम् ।**
**तदतीत्य महादुर्गं प्रविष्टोऽस्मि महद्वनम् ॥ २ ॥**

**विषयैकान्त्यकाध्वानम्** इत्यत्र **विषयैकान्त्यं** विषयेष्वेव नियमेन स्थितिः । स एव **काध्वा** कापथो यस्य तम् । कामक्रोधाद्या एव विरोधिनो वैरिणो यत्र तं, **कामक्रोधविरोधिकम्** ।

---

१. BORI पृ. १०५; $G_3$,$B_5$,$D_{5.6}$; **'क्षेत्रज्ञेनानुदर्शिताः'** इति कुं.पाठः ।
२. कुं.२८ अध्यायः । BORI पृ. १०५; $K_1$,$G_3$; **'विषयैकात्यायाध्वानं कामक्रोधकिरातकम्'** इति कुं.पाठः ।

**ब्राह्मण उवाच –**

**[1] नैतदस्ति पृथग्भावे मन्दस्य च ततः सुखम् ।**
**[2] न तदस्त्यपृथग्भावे किञ्चिद्दूरतरं ततः ॥ ४ ॥**

**न तदस्त्यपृथग्भाव** इत्यत्र **एतत्** मोक्षाख्यं वनम् **अपृथग्भावे** जीवब्रह्मैक्ये अङ्गीकृते सति नास्ति, **मन्दस्य** चञ्चलबुद्धेर्मध्यमजीवस्य **पृथग्भावे** भेदे अङ्गीकृतेऽपि **तत्** कैवल्यवनं नास्ति । भेदे स्थैर्या-भावादित्यर्थः । **ततः** अधमजीवगतेः अन्धतमसः **दूरतरम्** अतिशयेन दूरम् । **ततः** मध्यमजीवगतेः त्रिदिवनरकभूम्याख्यत्रैलोक्यात् किञ्चिद्दूर-तरम् । 'कियत्यध्वनि तद्वनम्' इत्यस्येदमुत्तरम् ।

**तस्माद् ह्रस्वतरं नास्ति [3] न ततोऽस्ति बृहत्तरम् ।**
**नास्ति तस्माद्दुःखतरं नास्त्यन्यत्तत्समं सुखम् ॥ ५ ॥**

**तस्माद् ह्रस्वतरं नास्ति** इत्यत्र 'अणोरणीयान्महतो महीयान्'[4] इति श्रुतेः तस्मात् ह्रस्वतरं नास्ति, तस्मात् बृहत्तरमपि नास्ति इत्यर्थः । दुःखं तारयतीति **दुःखतरम्** ।

**न तत्राविश्य शोचन्ति न प्रहृष्यन्ति च द्विजाः ।**
**न च बिभ्यति केभ्यश्चिन्नैभ्यो बिभ्यति केचन ॥ ६ ॥**

---

१. 'नैतदस्ति पृथग्भावः किञ्चिदन्यत्ततः सुखम्' इति कुं. पाठः । $G_3$; BORI पृ. १०५.

२. BORI पृ. १०५; 'नैतदस्त्यपृथग्भावः किञ्चिद्दुःखतरम्' इति कुं.पाठः ।

३. BORI पृ. १०५; 'न ततोऽस्ति महत्तरम्' इति कुं.पाठः ।

४. महानारायणोपनिषत् १०-२०

**न प्रहृष्यन्ति ।** स्वयोग्यतातिरेकेण न प्रहृष्यन्ति, न प्रहृष्यन्तीति न, किन्तु सदा प्रहृष्यन्त्येवेति नञावृत्त्या वा योजना । **न च बिभ्यति** इत्यत्र 'तत्र प्रविष्टा जना' इति योग्यपदाध्याहारः ।

**तस्मिन्वने सप्त महाद्रुमाश्च**
**फलानि सप्तातिथयश्च सप्त ।**
**सप्ताश्रमाः सप्त समाधयश्च**
**दीक्षाश्च सप्तैतदरण्यरूपम्** ॥ ७ ॥

**सप्त महाद्रुमा** इत्यत्र **सप्त महाद्रुमाः** अग्निष्टोमाद्याः सप्त क्रतवः कृष्णार्पणबुद्ध्या तच्चरणे समर्पिताः सन्ति । फलानि सप्त, अतिथयश्च सप्त यज्ञफलभोक्तारः, एतत् **अरणं** तारणं तद्योग्यं, भगवतो रूपम् ।

**[१]पञ्चपर्वाणि दिव्यानि पुष्पाणि च फलानि च ।**
**सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम्** ॥ ८ ॥

**पञ्चपर्वाणि** पञ्चरात्रोक्तपञ्चपर्वाणि पुष्पाणि फलानि च लीलया सृजन्तः **पादपाः** हरिपादेन आत्मानं पान्ति रक्षन्तीति हरिपादाश्रयाः मुक्ताश्च यद्वनं व्याप्य तिष्ठन्ति । हरेर्मुक्ताधारत्वादिति भावः ।

**[२]सुरभीण्येव पर्णानि पुष्पाणि च फलानि च ।**
**सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम्** ॥ ११ ॥

**सुरभीण्येव पर्णानि** इत्यत्र **पादपाः** मन्दारपारिजाताद्याः मुक्ततरु-जीवाः सन्ति ।

---

१. '**पञ्चवर्णानि**' इति कुं.पाठः ।
२. '**सुरभीणि द्विवर्णानि**' इति कुं.पाठः ।

[१] एको ह्यग्निः सुमहान् ब्राह्मणोऽत्र
[२] सप्तेन्द्रियाणि समिधश्चात्र सन्ति ।
[३] तेभ्यो मोक्षात् सप्त फलन्ति दीक्षा
गुणाः फलान्यतिथयः फलाशाः ॥ १४ ॥

**ब्राह्मणः** ब्रह्मणः सम्बन्धी सुमहान् एकः **अग्निः** ज्ञानाग्निः, अत्र वर्तते, **सप्तेन्द्रियाणि** स्वरूपभूतसप्तेन्द्रियाख्येन्धनानि ।

**तेभ्यो मोक्षात्** इत्यत्र **मोक्षात्** मोक्षादनन्तरं **तेभ्यः** इन्द्रियेभ्यः **गुणाः** ज्ञानादिगुणाः, **फलानि** नानाविधसुखाख्यफलानि, **फलाशाः** फलाशनकर्तारः ते मुक्ताः अन्योन्यमतिथयश्च यत् हर्याख्यवनं प्रविश्य सर्वतः सम्भवन्ति, तद्वनम् अहमपि प्रविष्टोऽस्मि ।

आतिथ्यं प्रतिगृह्णन्ति तत्र सप्त महर्षयः ।
[४] अर्चितेषु व्यतीतेषु तेष्वन्यद्रोचते वनम् ॥ १५ ॥

**अर्चितेषु व्यतीतेषु** इत्यत्र **अर्चितेषु** तेषु भगवद्रूपेषु, **व्यतीतेषु** परिसमापितेषु सत्सु, **अन्यत् वनं** पूजायोग्यरूपान्तरं **रोचते**, अर्चायै रोचते ।

[५] प्रतिज्ञावृक्षम् अफलं शान्तिच्छायासमन्वितम् ।
ज्ञानाश्रयं तृप्तितोयं तमःक्षेत्रज्ञभास्करम् ॥ १६ ॥

येऽधिगच्छन्ति तत्सन्तस्तेषां नास्ति पुनर्भवः ॥ १७ ॥

---

१. 'एको वह्निः सुमना' इति कुं.पाठः ।; २. 'पञ्चेन्द्रियाणि' इति कुं.पाठः ।
३. 'तेभ्यो वृक्षाः' इति कुं.पाठः ।; ४. 'अर्चितेषु प्रलीनेषु' इति कुं.पाठः ।
५. BORI पृ. १०७; 'प्रज्ञावृक्षं मोक्षफलम्' इति कुं.पाठः ।

**प्रतिज्ञावृक्षम् अफलम्** इत्यत्र प्रति ज्ञायन्त इति **प्रतिज्ञाः** स्वबिम्बाकृतयः, ता एव 'वृङ् छेदने' इति धातोः संसारच्छेदकत्वाद्वृक्षा यस्मिन् तम् । **अफलं** काम्यफलविरोधि, **तमःक्षेत्रज्ञभास्करम्** तमसा अन्धीभूतस्य जीवस्य भासं प्रकाशं करोतीति भास्करम् । **तत्** नारायणाख्यवनं ये अधिगच्छन्ति त एव सन्तः, तेषां पुनर्भवोऽपि नास्ति ।

**सप्त स्त्रियस्तत्र चरन्ति सत्यास्त्ववाङ्मुखा भानुमत्यो जनित्र्यः ।**
**ऊर्ध्वं रसानाददते प्रजाभ्यः सर्वान् यथा नित्यमनित्यता च १८**

**सप्त स्त्रियः** कालिन्दीपूर्विकाः षट्, लक्ष्मीश्चेति सप्त स्त्रियः **अवाङ्मुखाः** लज्जयाऽवाङ्मुखाः । **प्रजाभ्यः रसान्** सस्त्रीकाय हरये दत्तानि **रसानि** षड्रसानि **ऊर्ध्वम्** उत्कृष्टतया आददते, सर्वानतीत्य यथा हरिरादत्ते तथा ताश्च सर्वमतीत्य आददते ।

**नदीनां सङ्गमश्चैव वैताने समुपह्वरे ।**
**स्वात्मतृप्ता यतो यान्ति साक्षादेव पितामहम् ॥ २२ ॥**

**नदीनां** मुक्तनदीनां, **समुपह्वरे** समीपे, **पितामहं** मुक्तब्रह्माणम् ।

**॥ इति सप्तविंशोऽध्यायः ॥**

## ॥ अथ अष्टाविंशोऽध्यायः ॥

**निरस्य[१] चैतस्य भवन्ति नित्या निरीक्ष्यमाणस्य बहुस्वभावान्[२] ।**
**न सज्जते कर्मसु भोगजालं दिवीव सूर्यस्य मयूखजालम् ॥ ४ ॥**

---

१. कुं.२९ अध्यायः । **'नित्यस्य चैतस्य'** इति कुं.पाठः ।
२. **'बहून्स्वभावान्'** इति कुं.पाठः ।

**निरस्य चैतस्य** इत्यत्र **एतस्य** जीवजातस्य **निरस्य** एकवारं विषयान्निरस्य स्थितस्यापि **नित्याः** विषयाः **भवन्ति** पुनः पुनर्भवन्ति । बहुस्वभावान्निरीक्ष्यमाणस्य मम **कर्मसु** विषयेषु भोगजालं न सज्जते ।

**अनु त्वां मन्यते माता अनु त्वां मन्यते पिता ।**
**[१]मन्त्रमस्यैवमुन्नीय परवन्तं विशेषतः ॥ १२ ॥**

**मन्त्रमस्यैवमुन्नीय** इत्यत्र **अस्य** तव एवं **मन्त्रं** यज्ञविषयालोचनम् **उन्नीय** उत्कृष्टं ज्ञात्वा, विशेषतः **परवन्तं** सनाथं मन्यते । पुनरपि परवन्तं मन्यते ।

**अध्वर्युरुवाच–**

**प्राणा अप्यस्य च्छागस्य प्रापितास्ते स्वयोनिषु ।**
**शरीरं केवलं शिष्टं निश्चेष्टमिति मे मतिः ॥ १४ ॥**

**प्रापितास्ते स्वयोनिषु** इत्यत्र **ते** दुष्कर्मत्वात् छागत्वं प्राप्ता जीवाः **स्वयोनिषु** स्वसहजयोनिषु ।

**इन्धनस्य तु तुल्येन शरीरेण विचेतसा ।**
**[२]हिंसां निर्वेष्टुकामानामिन्धनं पशुसञ्ज्ञितम् ॥ १५ ॥**

**शरीरेण विचेतसा हिंसां निर्वेष्टुकामानाम्** इत्यत्र **निर्वेष्टुकामानां** परिहर्तुकामानाम् । प्राणिनां जडोऽप्ययं देहः भोगायतनत्वात् न नश्यत्विति कामवतामित्यर्थः । **इन्धनम्** इन्धनस्थानीयं शरीरमेव **पशु-**

---

१. BORI पृ. ११०;$T_2$,$M_4$; **'मन्त्रविज्ञानमुन्नीय परित्रर्ते'** इति कुं.पाठः ।
२. BORI पृ. ११०; **'हिंसा हि यष्टुकामानामिन्धनम्'** इति कुं.पाठः ।

**सञ्ज्ञितं** पशुरूप जीव इति सञ्ज्ञितम्, स पशुः स्वदेहनाश एव स्वनाशं (सर्वनाशं) मन्यते। अतस्तस्य हिंसा न कर्तव्येति भावः ।

**प्राणादाने निवृत्तोऽसि हिंसायां वर्तते भवान् ।**
**नास्ति चेष्टा विना हिंसां किं वा त्वं मन्यसे द्विज ॥ २१ ॥**

**नास्ति चेष्टा विना हिंसाम्** इत्यत्र हिंसां विना कापि चेष्टा नास्ति। पुष्पच्छेदन-अभ्भक्षण-अग्निज्वालन-वाय्वभिघातादावपि प्राणिनां हिंसा स्यादेवेति भावः ।

**यतिरुवाच–**

**अक्षरं च क्षरं चैव द्वैधीभावोऽयमात्मनः ।**
**अक्षरं तत्र तद्भावः[1] स्वभावः क्षर उच्यते ॥ २२ ॥**

**अक्षरं तत्र तद्भाव** इत्यत्र **तत्र** क्षराक्षरभावयोः मध्ये **तद्भावः** तेषां विषयाणामेव सदा भावना विषयक्षरणाख्यवैराग्याभावादक्षरमित्युच्यते । **स्वभावः** विषयान् परित्यज्य स्वतन्त्रपरमात्मनो भावना विषयक्षरणात् क्षर इत्युच्यते ।

**भगवन्भगवद्बुध्या प्रतिबुद्धो ब्रवीम्यहम् ।**
**मतं मन्तुः[2] क्रतुः कर्तुर्नापराधोऽस्ति मे द्विज ॥ २६ ॥**

**मतं मन्तुः** इत्यत्र **मन्तुः** मननशीलस्य मुनेः **मतं** मननविषयीभूतं परमात्मस्वरूपमेव प्राप्यं भवति । **कर्तुः** यागकर्तुस्तु **क्रतुः** क्रतुना पूजितः परमात्मा प्राप्यो भवति। प्रवृत्तिकर्मणि क्रियमाणहिंसा स्वोदर-

१. **'अक्षरं तत्र सद्भावः'** इति कुं.पाठः ।
२. BORI पृ. ११२; **'व्रतं मन्त्रकृतम्'** इति कुं.पाठः ।

पूरकत्वात् हिंसैव । निवृत्तिकर्मणि क्रियमाणा तु विष्णुपूजाङ्गत्वात् न हिंसेति भावः । अतः मे **अपराधः** हिंसारूपापराधः नास्तीति योजना ।

**ब्राह्मण उवाच –**

**उपपत्त्या यतिस्तूष्णीं वर्तमानस्ततः परम् ।**
**अध्वर्युरपि निर्मोहः प्रचचार महामखे ॥ २७ ॥**

**उपपत्त्या** युक्त्या । **॥ इत्याश्वमेधिके अष्टाविंशोऽध्यायः ॥**

## ॥ अथ एकोनत्रिंशोऽध्यायः ॥

[१] **तेषां स्वविहितं कर्म तद्भयान्नानुतिष्ठताम् ।**
**प्रजा वृषलतां प्राप्ता ब्राह्मणानामदर्शनात् ॥ १५ ॥**
**एवं ते द्रविडाऽभीरा पुण्ड्राश्च शबरैः सह ।**
**वृषलत्वं परिगता [२] व्युत्थानात् क्षत्रधर्मिणः ॥ १६ ॥**

**ब्राह्मणानामदर्शनात्** दुर्गस्थ क्षत्रियभयेन अदर्शनात् । **क्षत्रधर्मिणः** क्षत्रियवर्गस्य **व्युत्थानात्** पलायनात् ।

**॥ इत्याश्वमेधिके एकोनत्रिंशोऽध्यायः ॥**

## ॥ अथ त्रिंशोऽध्यायः ॥

[३] **स सागरान्तां धनुषा विनिर्जित्य महीमिमाम् ।**
**कृत्वा सुदुष्करं कर्म मनः सूक्ष्मे समादधे ॥ ३ ॥**

---

१. कुं.३० अध्यायः ।
२. BORI पृ. ११४; $T_2$,$G_{2.3}$; 'व्युत्थानात्क्षत्रधर्मतः' इति कुं.पाठः ।
३. कुं.३१ अध्यायः ।

सूक्ष्मे परमात्मनि । ॥ इत्याश्वमेधिके त्रिंशोऽध्यायः ॥

## ॥ अथ एकत्रिंशोऽध्यायः ॥

**ब्राह्मण उवाच–**

**[१]त्रयो वै रिपवो लोके नवधा गुणतः स्मृताः ।**
**हर्षः स्तम्भोऽतिमानश्च त्रयस्ते सात्त्विका गुणाः ॥ १ ॥**

**हर्षःस्तम्भोऽतिमानश्च** इत्यत्र सत्त्वगुणो हि ज्ञानजनकः । ज्ञानेन चानिर्जितमनसः अहमेव विद्वानिति हर्षः स्तम्भः अतिमानश्च भवतीति भावः ।

**तस्मादेतं सम्यगवेक्ष्य लोभं**
**निगृह्य धृत्याऽऽत्मनि राज्यमिच्छेत् ।**
**एतद्राज्यं नान्यदस्तीह विद्याद्**
**[२]यस्तेन राज्ञा विजितोऽमुयैकः ॥ १२ ॥**

**यस्तेन राज्ञा विजितोऽमुयैक** इत्यत्र **अमुया** विद्यया **एकः** लोभः विजितः ।

॥ इत्याश्वमेधिके एकत्रिंशोऽध्यायः ॥

## ॥ अथ द्वात्रिंशोऽध्यायः ॥

**[३]ब्राह्मणं जनको राजा सन्नं कस्मिंश्चिदागसि ।**
**विषये मे न वस्तव्यमिति [४]शिष्यार्थमब्रवीत् ॥ २ ॥**

---

१. कुं.३२ अध्यायः ।; २. 'राज्यमात्मैव राजा विदितो यथावत्' इति कुं.पाठः
३. कुं.३३ अध्यायः ।
४. BORI पृ. १२१; $T_1$,$M_3$; 'शिष्ट्यर्थमब्रवीत्' इति कुं.पाठः ।

**विषये मे न वस्तव्यम्** इत्यत्र **शिष्यार्थं** शिष्यशिक्षार्थं मम विषये न वस्तव्यमित्यब्रवीत् ।

**पितृपैतामहे राज्ये वश्ये जनपदे सति ।**
**विषयं नाधिगच्छामि विचिन्वन् पृथिवीमहम् ॥ ८ ॥**

**विषयं नाधिगच्छामि** इत्यस्य मरणे सति पितृपितामहवच्च ममापि (मयापि) सर्वराज्यस्य त्याज्यत्वात् न कोऽपि मे विषय इति भावः ।

**नाध्यगच्छं यदा पृथ्व्यां मिथिला मार्गिता मया ।**
**नाध्यगच्छं यदा तस्यां स्वप्रजा मार्गिता मया ॥ ९ ॥**

**मिथिला मार्गिता मया** इत्यत्र मिथिला **मार्गिता** मदीया भवति न वेति विचारिता ।

[1]**तया न विषयं मन्ये सर्वो वा विषयो मम ।**
**आत्माऽपि चायं न मम सर्वा वा पृथिवी मम ॥ ११ ॥**

**तया न विषयं मन्य** इत्यत्र **तया** बुद्ध्या कमपि विषयं न मन्ये । सर्वस्याप्यन्ते सहागमनाभावादिति भावः । गमनागमनमात्रेण विषयत्वे सर्वोऽपि मम विषयः **वा** वै, अयम् **आत्मा** देहोऽपि मम न ।

**यथा मम तथाऽन्येषामिति मन्ये द्विजोत्तम ।**
**उष्यतां**[2] **यावदुत्साहं भुज्यतां यावदिष्यते ॥ १२ ॥**

**यावदुत्साहं** स्व(कृत)कर्तव्यकर्मपर्यन्तं सर्वोऽपि देशः उष्यतां, यावत् कर्मणा इष्यते तावद्भुज्यताम् च ।

---

१ BORI पृ. १२२; **'तदा न विषयं मन्ये'** इति कुं.पाठः ।
२ **'यावदुत्साहो'** इति कुं.पाठः ।

जनक उवाच–

[1] अभवन्त इहारम्भा विदिताः सर्वकर्मसु ।
नाध्यगच्छमहं तस्मान्ममेदमिति यद्भवेत् ॥ १५ ॥

कस्येदमिति कस्य स्वमिति [2] वेदवचः सदा ।
नाध्यगच्छमहं बुद्ध्या ममेदमिति यद्भवेत् ॥ १६ ॥

**अभवन्त इहारम्भा** इत्यत्र इह लोके सर्वकर्मसु आरम्भाः **अभवन्तः** आन्तम् अजायमाना विदिताः । यः अयं प्रपञ्चः स कस्य ? न कस्यापीत्यर्थः । इति वेदवचः सदा ब्रवीति इति योजना ।

नाहमात्मार्थमिच्छामि गन्धान् घ्राणगतानपि ।
तस्मान्मे निर्जिता भूमिर्वशे तिष्ठति नित्यदा ॥ १८ ॥

**नाहमात्मार्थम्** इत्यत्र घ्राणगतान् गन्धानपि **आत्मार्थं** स्वभोगार्थं नेच्छामि । किन्तु हरेः पूजार्थमेव । अतः हर्यनुग्रहात् सर्वेऽपि विषयाः मम श्रेयस्करा एवेति भावः । एवमुत्तरत्रापि द्रष्टव्यम् ।

[3] त्वमस्य ब्रह्मभावस्य बुद्धावस्यानिवर्तिनः ।
सत्त्वनेमिनिरुद्धस्य चक्रस्यैकः प्रवर्तकः ॥ २६ ॥

**त्वमस्य ब्रह्मभावस्य** इत्यत्र बुद्धौ **अनिवर्तिनः** सर्वदा वर्तमानस्य सत्त्वगुणाख्यानेमिना निरुद्धस्य तस्यास्य **ब्रह्मभावस्य** ब्रह्मणि मनोभावाख्यस्य चक्रस्य त्वमेक एव प्रवर्तकः । **॥ इति द्वात्रिंशोऽध्यायः ॥**

---

१. **'अन्तवन्त इहारम्भा'** इति कुं.पाठः ।

२. **'वेदवचः तथा'** इति कुं.पाठः ।

३. **'त्वमस्य ब्रह्मनाभस्य दुर्वारस्यानिवर्तिनः'** इति कुं.पाठः ।

## ।। अथ पञ्चत्रिंशोऽध्यायः ।।

**ब्रह्मोवाच –**

**[1] सत्याद्भूतानि जातानि स्थावराणि चराणि च ।**
**तपसा तानि जीवन्ति जीवितं तद्धि सुव्रतम् ।।३२।।**

**सत्याद्भूतानि जातानि** इत्यत्र सत् यं ज्ञानं यस्य तस्मात्, नारायणात् ।

**।। इत्याश्वमेधिके पञ्चत्रिंशोऽध्यायः ।।**

## ।। अथ षट्त्रिंशोऽध्यायः ।।

**[2] त्रीणि स्रोतांसि यान्यस्मिन्नाप्यायन्ते पुनः पुनः ।**
**प्रनाड्यस्तिस्र एवैताः प्रवर्तन्ते गुणात्मिकाः ।। ३ ।।**

**प्रनाड्यस्तिस्र** इत्यत्र **तिस्रः प्रनाड्यः** सात्त्विकराजसतामसभेदेन ।

**शूद्रयोनिमतिक्रम्य ये चान्ये तामसा गुणाः ।**
**[3] स्रोतोमध्यमथागम्य वर्तन्ते तामसे गुणे ।। ३१ ।।**

**स्रोतोमध्यमथागम्य** इत्यत्र **स्रोतोमध्यं** गुणत्रयमध्यम् ।

**।। इत्याश्वमेधिके षट्त्रिंशोऽध्यायः ।।**

## ।। अथ एकोनचत्वारिंशोऽध्यायः ।।

**[4] व्यतिरिक्तं तमो यत्र तिर्यग्भावगतं भवेत् ।**
**अल्पं तत्र रजो ज्ञेयं सत्त्वमल्पतरं तथा ।। ६ ।।**

---

१. कुं.३६ अध्यायः ।; २. कुं.३७ अध्यायः ।
३. **'स्रोतोमध्ये समागम्य'** इति कुं.पाठः ।; ४. कुं.४० अध्यायः ।

**व्यतिरिक्तं तमो यत्र** इत्यत्र विशेषेण अतिरिक्तं **व्यतिरिक्तं** व्यतिरेकवत् तमः यत्र भवति ।

**अहस्त्रिधा तु विज्ञेयं त्रिधा रात्रिर्विधीयते ।**
**मासार्धमासवर्षाणि ऋतवः सन्धयस्तथा ॥ १८ ॥**

**अहस्त्रिधा तु विज्ञेयम्** इत्यत्र प्रातः कालः सात्त्विकः। मध्याह्नकालस्तु राजसः । सायङ्कालस्तु आलस्यभरितत्वात् तामसः । पूर्वरात्रिस्तु राजसी, मध्यरात्रिस्तु तामसी, अपररात्रिस्तु प्रसन्नकालत्वात् सात्त्विकी । एवं मासार्धमासादिष्वपि शुक्लपक्षान्तिमभागः सात्त्विकः, कृष्णपक्षान्तिमभागः तामसः, अष्टमीपर्यन्तं प्रकाशाप्रकाशवत्त्वाद्राजसः। पक्षेऽपि पौर्णमास्यमावास्ये सात्त्विकतामसे । पक्षादिस्तु कृष्णपक्षे प्राक् सात्त्विकः, उपरि राजसः । शुक्लपक्षेऽपि प्राग्भागस्तामसः, मध्यमभागस्तु राजसः । वर्षेऽपि उत्तरायणे दक्षिणायने सात्त्विकतामसे, अयनान्तस्तूभयोरपि राजसः ।

**॥ इत्याश्वमेधिके एकोनचत्वारिंशोऽध्यायः ॥**

## ॥ अथ चत्वारिंशोऽध्यायः ॥

**महानात्मा विभुर्विष्णुर्जिष्णुः शम्भुश्च वीर्यवान् ।**[१]
**बुद्धिप्रज्ञोपलब्धिश्च तथाख्यातिर्धृतिः स्मृतिः ॥ २ ॥**

**महानात्मा विभुर्विष्णुः** इत्यत्र **महानात्मा** परमात्मा, विशेषेण नानावतारेषु भवतीति **विभुः** । व्याप्तत्वाच्च **विष्णुः** ।

**॥ इत्याश्वमेधिके चत्वारिंशोऽध्यायः ॥**

---

१. कुं.४१ अध्यायः । '**महानात्मा मतिर्विष्णुर्जिष्णुः**' इति कुं.पाठः ।

## ।। अथ एकचत्वारिंशोऽध्यायः ।।

**[१]यदुत्पन्नो महान्पूर्वमहङ्कारः स उच्यते ।**
**अहमित्येव सम्भूतो द्वितीयः सर्ग उच्यते ।। १४ ।।**

**यदुत्पन्नो महान्पूर्वम्** इत्यत्र यः पूर्वमुत्पन्नः स **महान्**, महत्तत्त्वाभिमानी, यः पश्चादुत्पन्नः सोऽहङ्कार इति योजना ।

**[२]अहङ्कारस्तु भूतादिर्वैकारिक इति स्मृतः ।**
**[३]तैजसश्चेतना धातुः प्रजासर्गः प्रजापतिः ।। १५ ।।**

**अहङ्कारस्तु भूतादिर्वैकारिक** इत्यत्र **भूतादिः** पञ्चभूतानामादिः, मनसः इन्द्रियाभिमानिदेवानां देहस्य चोत्पादकः वैकारिकः । तैजसो धातुः **तैजसः** तैजसेन्द्रियजनकः । **प्रजानां** जीवानां **सर्गः** सृष्टिकर्ता, **प्रजापतिः** ब्रह्मा ।

**अध्यात्मज्ञानतृप्तानां मुनीनां भावितात्मनाम् ।**
**स्वाध्यायक्रतुसिद्धानामेष लोकः सनातनः ।। १७ ।।**

**एष लोक** इत्यत्र एषः ब्रह्मा । **लोकः** 'लोकृ दर्शने' इति धातोः, ज्ञानप्रदः ।

।। इत्याश्वमेधिके एकचत्वारिंशोऽध्यायः ।।

* * *

---

१. BORI पृ. १४८; $G_3$,$S_1$,$K_1$; **'य उत्पन्नो महान्'** इति कुं.पाठः ।
२. **'अहङ्कारश्च'** इति कुं.पाठः ।
३. BORI पृ. १४८; $K_2$,$B_2$,M,$D_{n1}$; **'तेजसश्चेतना'** इति कुं.पाठः ।

## ।। अथ द्विचत्वारिंशोऽध्यायः ।।

[१] अन्तरात्मेति चाप्येते नियताः पञ्च वायवः ।
वाङ्मनोबुद्धिरित्येभिः सार्धमष्टात्मकं जगत् ।। ९ ।।

**अन्तरात्मेति चाप्येते नियता** इत्यत्र एते पञ्च वायवः **अन्तरात्मा** परमात्मेति, **नियताः** देहिनां देहे देहे नियताः ।

[२] अवाग्गतिरपानश्च वायुरध्यात्ममिष्यते ।
अधिभूतं विसर्गश्च मित्रस्तत्राधिदैवतम् ।। ३५ ।।

**अवाग्गतिरपानश्च वायुः** इत्यत्र अवाग्गतिः अपानः वायुः अध्यात्ममिष्यते ।

वैश्वदेवी मनःपूर्वा वागध्यात्ममिहोच्यते ।
वक्तव्यमधिभूतं च [३]वह्निस्तत्राद्विदैवतम् ।। ३८ ।।

**वैश्वदेवी** समस्तदेव(ता)मन्त्रावृत्तिकरी । 'यन्मनसा ध्यायति त(य)द्वाचा वदति' इति वचनात् मनःपूर्वा, **द्विदैवतं** जीवान्तर्यामी, देहान्तर्यामी चेति द्विदैवतम् ।

[४] दुस्तरं प्रतिलोकेऽस्मिन्सत्त्वं प्रति समाश्रितम् ।
एतदेव हि लोकेऽस्मिन्कालचक्रं प्रवर्तते ।। ५५ ।।

---

१. BORI पृ. १५०; **'अन्तरात्मनि'** इति कुं.पाठः ।
२. $B_2,K_{1,3},S,D_1$;BORI पृ. १५३; **'अवाग्गतिरपानश्च पायुः'** कुं.पाठः ।
३. **'वह्निस्तत्राधिदैवतम्'** इति कुं.पाठः ।
४. BORI पृ. १५५; $K_{2,4,5}$; **'दुश्चरं जीवलोकेऽस्मिन्'** इति कुं.पाठः ।

**दुस्तरं प्रतिलोकेऽस्मिन्सत्त्वं प्रति समाश्रितम्** इत्यत्र **सत्त्वं,** प्राणिनं प्रति प्रति समाश्रितं **दुस्तरं** यच्छरीरम् एतदेव कालचक्र-मित्याहुः ।

**सर्ववित्सर्वभूतेषु द्रक्ष्यत्यात्मानमात्मनि ।**
**एकधा बहुधा चैवं विकुर्वाणस्ततस्ततः ॥ ६१ ॥**

**ध्रुवं पश्यति रूपाणि दीपाद्दीपशतं यथा ।**
**स वै विष्णुश्च मित्रश्च वरुणोऽग्निः प्रजापतिः ॥६२॥**

**एकधा बहुधा चैव विकुर्वाण** इत्यत्र यस्मात्परमात्मनः सकाशात् एकधा बहुधा च विकुर्वाणो जीवः, **रूपाणि** स्वस्य मनुष्यपशुपक्ष्यादि रूपाणि दीपाद्दीपशतं यथा तथा पश्यति । **सः** उक्तविधया जीवस्य नानायोनिप्रापको विष्णुः वरुणादिवैदिकशब्दैर्वाच्यः परमात्मा वै ।

**॥ इत्याश्वमेधिके द्विचत्वारिंशोऽध्यायः ॥**

## ॥ अथ त्रिचत्वारिंशोऽध्यायः ॥

**एते पर्वतराजानो गणानां मरुतस्तथा ।**
**सूर्यो ग्रहाणामधिपो नक्षत्राणां च चन्द्रमाः ॥ ६ ॥**

**गणानाम्** = इन्द्रियगणानाम्, **मरुतः** = पञ्च प्राणाः ।

**सर्वेषामेव भूतानामहं ब्रह्ममयो महान् ।**
**भूतं परतरं मत्तो विष्णोर्वाऽपि न विद्यते ॥ १२ ॥**

**भूतं परतरं मत्त** इत्यत्र अधिकारिषु मत्तः परतरं भूतं नास्ति । विष्णोस्तु परतरं सर्वेष्वपि नास्तीति योजना ।

एतदेव विवृणोति– **राजाधिराजः सर्वेषां विष्णुः** इत्यादिना ।

**राजाधिराजः सर्वेषां विष्णुर्ब्रह्ममयो महान् ।**
**ईश्वरं तं विजानीमः स विभुः स प्रजापतिः** ॥ १३ ॥
**मनसो लक्षणं चिन्ता तथोक्ता बुद्धिरन्वया[1] ।**
**मनसा चिन्तितानर्थान् बुद्ध्या चेह व्यवस्यति** ॥ २४ ॥

**मनसो लक्षणं चिन्ता तथोक्ता बुद्धिरन्वया** इत्यत्र 'अयपयगतौ' इति धातोः तत्तदर्थानुसारेण ज्ञानवती **अन्वया** ।

**बुद्धिरध्यवसायेन ध्यानेन च महांस्तथा ।**
**निश्चित्यग्रहणं[2] नित्यमव्यक्तं नात्र संशयः** ॥ ३५ ॥

**निश्चित्यग्रहणं नित्यम्** इत्यत्र **निश्चित्य** सकलजगन्मूलकारणतां निश्चित्य ग्रहणं यस्य तत् निश्चित्यग्रहणम्, **अव्यक्तं** प्रकृतितत्त्वम् ।

**अव्यक्तं क्षेत्रमुद्दिष्टं गुणानां प्रभवाप्ययम् ।**
**सदा पश्याम्यहं लीनं विजानामि शृणोमि च** ॥ ३७ ॥

**सदा पश्याम्यहं लीनम्** इत्यत्र **लीनम्** अव्यक्ततत्त्वे लीनं महदादि जगदेव सदा अहं पश्यामि शृणोमि च ।

**पुरुषस्तद्विजानीते तस्मात् क्षेत्रज्ञ उच्यते ।**
**गुणवृत्तं तथा कृत्स्नं क्षेत्रज्ञः परिपश्यति** ॥ ३८ ॥

**पुरुषो** नारायणः **तत्** अव्यक्ततत्त्वं विजानीते, तस्मात् क्षेत्रज्ञ इत्युच्यते इति योजना ।

---

१. BORI पृ. १५९; K5,M3.4,B4; **'बुद्धिरन्वयात्'** इति कुं.पाठः ।
२. BORI पृ. १६१; **'निश्चित्य ग्रहणात् व्यक्तमव्यक्तम्'** इति कुं.पाठः ।

**[१]न सत्त्वं वेत्ति वै कश्चित्क्षेत्रज्ञस्त्वेव विन्दति ।**
**गुणानां गुणभूतानां यत्परं परतो महत्** ॥ ४० ॥

**सत्त्वं** प्राणिसमूहः न वेत्ति । **गुणानां** सत्त्वादिगुणानां सर्वादिगुणानां, **गुणभूतानां** गुणेभ्यो जातानां महदादीनां च यत् परं तत् **परतः** मुक्तवर्गादपि महत् ।

॥ इत्याश्वमेधिके त्रिचत्वारिंशोऽध्यायः ॥

## ॥ अथ चतुश्चत्वारिंशोऽध्यायः ॥

**[२]अहः पूर्वं ततो रात्रिर्मासाः शुक्लादयः स्मृताः ।**
**श्रविष्ठादीनि चर्क्षाणि ऋतवः शिशिरादयः** ॥ २ ॥

**श्रविष्ठादीनि चर्क्षाणि** इत्यत्र **श्रविष्ठम्** अतिशयेन श्रेष्ठं श्रवणम् ।

**श्येनः पतत्रिणामादिर्यज्ञानां [३]होत्रमुत्तमम् ।**
**प्रसर्पिणां तु सर्वेषां ज्येष्ठः सर्पो द्विजोत्तमाः** ॥ ८ ॥

**होत्रम्** अग्निहोत्रम् ।

**आश्रमाणां च सर्वेषां गार्हस्थ्यं नात्र संशयः ।**
**लोकानामादिरव्यक्तं सर्वस्यान्तस्तदेव च** ॥ १७ ॥

**लोकानामादिरव्यक्तम्** इत्यत्र उत्पत्तिस्थानत्वात् **आदिः** नाशस्थानत्वात् **अन्त** इत्युच्यते । **अव्यक्तं** प्रकृतिः ।

॥ इत्याश्वमेधिके अनुगीतासु चतुश्चत्वारिंशोऽध्यायः ॥

---

१. **'न सत्यं वेद'** इति कुं.पाठः ।
२. BORI पृ. १६२; $B_{1.2.4}$, $M_4$; **'श्रवणादीनि ऋक्षाणि'** इति कुं.पाठः ।
३. **'हुतमुत्तमम्'** इति कुं.पाठः ।

## ।। अथ पञ्चचत्वारिंशोऽध्यायः ।।

**[१] मनोजवमविश्रान्तं कालचक्रं प्रवर्तते ।। ९ ।।**

**अविश्रान्तं** कदापि अवसानरहितम् ।

**संस्कारैः संस्कृतः पूर्वं यथावच्चरितव्रतः ।**
**जातौ गुणविशिष्टायां समावर्तेत वेदवित् ।। १५ ।।**

गुणविशिष्टायां जातौ जातः ।

।। इत्याश्वमेधिके अनुगीतासु पञ्चचत्वारिंशोऽध्यायः ।।

## ।। अथ षट्चत्वारिंशोऽध्यायः ।।

**[२] त्यक्तदेहः सदा दक्षो वननित्यः समाहितः ।**
**एवं युक्तो जयेत्स्वर्गं वानप्रस्थो जितेन्द्रियः ।। १६ ।।**

**त्यक्तदेहः** देहाभिमानरहितः ।

**नाददीत परस्वानि न [३] गृह्णीयादयाचितम् ।**
**न किञ्चिद्विषयं भुक्त्वा स्पृहयेत्तस्य वै पुनः ।। ३५ ।।**

**न गृह्णीयादयाचितम्** इत्यत्र दात्रा इदमवश्यं स्वीकर्तव्यमिति याचितं न भवतीति **अयाचितम्** ।

**मृदमापस्तथाऽन्नानि पत्रपुष्पफलानि च ।**
**असंवृतानि गृह्णीयात्प्रवृत्तानि च कार्यवान् ।। ३६ ।।**

---

१. BORI पृ. १६६; K2.5,D5; **'मनोजवनमश्रान्तम्'** इति कुं.पाठः ।
२. BORI पृ. १७०; **'न्यस्तदेहः'** इति कुं.पाठः ।
३. BORI पृ. १७०; **'गृह्णीयान्न याचयेत्'** इति कुं.पाठः ।

**असंवृतानि** इत्यत्र **संवृतानि** आच्छादितानि न भवन्तीत्यसंवृतानि, केनचित्स्वार्थमपेक्षितमिति आच्छाद्य निक्षिप्तं वस्तु न स्वीकर्तव्यमिति भावः ।

**न शिल्पजीविकां जीवेद् [१] विरामं कामयीत च ।**
**न द्वेष्टा नोपदेष्टा च भवेच्च निरुपस्कृतः ॥ ३७ ॥**

**विरामं कामयीत च** इत्यत्र विशेषेण **रामं** रमणं क्रीडनं न कामयीत । **निरुपस्कृतः** निरलङ्कारः निर्गतोपकरणो वा ।

**श्रद्धापूतानि भुञ्जीत निमित्तानि विवर्जयेत् [२] ।**
**मुधावृत्तिरसक्तश्च सर्वभूतैरसंधितः ॥ ३८ ॥**

**निमित्तानि** श्राद्धादिनिमित्तप्राप्तानि विवर्जयेत् । **मुधा** प्रयोजनोद्देशं विना **वृत्तिः** प्रवृत्तिर्यस्य स **मुधावृत्तिः** ।

**कृत्वा प्राज्ञे चरेद्भैक्ष्यं विधूमे भुक्तवज्जने ॥ १९ ॥**
**वृत्ते [३] धारावसम्पाते भैक्ष्यं लिप्सेत मोक्षवित् ।**
**लाभेन च न हृष्येत नालाभे विमना भवेत् ॥ २० ॥**

**भुक्तवज्जने** भुक्तवान् जनो यस्मिन्गृहे तस्मिन् ।

**वृत्ते धारावसम्पात** इत्यत्र **धारावसम्पाते** जलधारायाः सम्यक्पाते वृत्ते सति । 'धारासम्पात आसार' [४] इत्यमरः ।

---

१. **'द्विरन्नं नोत कामयेत्'** इति कुं.पाठः ।; २. **'च वर्जयेत्'** इति कुं. पाठः ।
३. **'शरावसम्पाते'** इति कुं.पाठः ।
४. अ.को. प्र. दिग्वर्गः श्लो. ११

[१] **मात्राशी कालमाकाङ्क्षंश्चरेद् भैक्ष्यं समाहितः ।**
**लाभं साधारणं नेच्छेन्न भुञ्जीताभिपूजितः ॥ २१ ॥**

**मात्राशी** = अल्पाशी ।

**अभिपूजितलाभाद्धि विजुगुप्सेत भिक्षुकः ।**
[२] **शुक्तान्यम्लानि तिक्तानि कषायकटुकानि च ॥ २२ ॥**

**शुक्तान्यम्लानि** इत्यत्र **शुक्तानि** शुचा नरकशोकेन **तानि** ततानि व्याप्तानि पापसाधनवृन्ताकादीनि इत्यर्थः ।

**न सन्निकाशयेद्धर्मं विविक्ते चारजाश्चरेत् ।**
**शून्यागारमरण्यं वा वृक्षमूलं नदीं तथा ॥ २५ ॥**

**न सन्निकाशयेद्धर्मम्** इत्यत्र **सम्यक्** नितरां न **काशयेत्**, न प्रकाशयेत् ।

[३] **बुद्ध्वा सूर्येण निर्दिष्टं कीटवच्च चरेन्महीम् ।**
**दयार्थं चैव भूतानां समीक्ष्य पृथिवीं चरेत् ॥ २७ ॥**

**बुद्ध्वा सूर्येण निर्दिष्टम्** इत्यत्र **सूर्येण** सूर्यतापेन, **निर्दिष्टम्** अत्र प्राणिनो न सन्ति सुखेन गच्छेत्याज्ञप्तं, दर्शितमित्यर्थः ।

**निर्द्वन्द्वो निर्नमस्कारो निःस्वाहाकार एव च ।**
**निर्ममो निरहङ्कारो निर्योगक्षेम आत्मवान् ॥ ४५ ॥**

---

१. BORI पृ. १७१; **'यात्रार्थी'** इति कुं.पाठः ।
२. BORI पृ. १७१; **'भुक्तान्यन्नानि'** इति कुं.पाठः ।
३. **'अध्वा सूर्येण निर्दिष्टः'** इति कुं.पाठः ।

**निर्नमस्कारः** परकृतनमस्कारापेक्षारहितः।

[1]**अपाणिपादपृष्ठं तदशिरस्कमनूदरम्।**
**अभिन्नगुणकर्माणं केवलं विमलं स्थिरम्** ॥ ४७ ॥

**अपाणिपादपृष्ठम्** इत्यत्र प्राकृतपाणिपादादिरहितम्। एवमुत्तरत्रापि।

**यत्र ज्ञानवतां** [2]**प्राप्तिरलिङ्गग्रहणे स्मृते।**
**तस्मादलिङ्गधर्मज्ञो धर्मतत्त्वमुपाचरेत्** ॥ ५१ ॥

**अलिङ्गग्रहणे स्मृत** इत्यत्र **अलिङ्गग्रहणे** लिङ्गेषु कुतर्केषु **ग्रहणम्** आग्रहः। तदभावे अलिङ्गग्रहणे सति।

**गूढधर्माश्रितो विद्वान् विज्ञानचरितं चरेत्।**
[3]**अगूढो गूढरूपेण चरेद्धर्ममदूषयन्** ॥ ५२ ॥

**अगूढो गूढरूपेण** इत्यत्र आन्तरज्ञानाख्यरूपेण गूढः, बहिर्देहाख्य-रूपेण गूढः।

॥ इत्याश्वमेधिके षट्चत्वारिंशोऽध्यायः ॥

## ॥ अथ सप्तचत्वारिंशोऽध्यायः ॥

[4]**यो विद्वान् सहवासं च विवासं चैव पश्यति ॥**
**तथैवैकत्वनानात्वे स दुःखात् प्रतिमुच्यते** ॥ ७ ॥

---

१. BORI पृ. १७३; '**अपादपाणिपृष्ठम्**' इति कुं.पाठः।
२. '**अलिङ्गग्रहणा स्मृता**' इति कुं.पाठः।
३. '**अमूढो मूढरूपेण**' इति कुं.पाठः।; ४. **कुं ४७ अध्यायः।**

**यो विद्वान् सहवासं च** इत्यत्र **सहवासं** मुनिभिः सहवासं, **विवासं** गेहबन्धुजनादिभ्यो विवासम्, **एकत्वं** ब्रह्मणि, **नानात्वं** जीवेषु ।

**हित्वा गुणमयं सर्वं कर्म जन्तुः शुभाशुभम् ।**
**उभे सत्यानृते हित्वा मुच्यते नात्र संशयः ॥ ११ ॥**

**उभे सत्यानृते हित्वा** इत्यत्र ''यन्नेत्याह तदनृतं यदोमित्याह तत्सत्यम्'' इति श्रुतेः न दीयते इति वाक्यमनृतं, दीयत इति वाक्यं सत्यम्, तदुभयमपि विरक्तस्य मुनेस्त्याज्यमिति भावः ।

**[१]अव्यक्तबुद्धिप्रभवः बुद्धिस्कन्धमयो महान् ।**
**महाहङ्कारविटप इन्द्रियान्तरकोटरः ॥ १२ ॥**

**अव्यक्तबुद्धिप्रभव** इत्यत्र शैशवे बुद्धेरल्पत्वात् अव्यक्तबुद्धिप्रभव इत्युक्तम् ।

**महाभूतविशाखश्च विशेषप्रतिशाखवान् ।**
**सदापत्रः सदापुष्पः शुभाशुभफलोदयः ॥ १३ ॥**

**विशेषप्रतिशाखवान्** इत्यत्र **विशेषाः** वर्णविशेषाः आश्रमविशेषाश्च । त एव शाखाः तद्वान् ।

**आजीव्यः सर्वभूतानां ब्रह्मवृक्षः सनातनः ।**
**एनं छित्वा च भित्त्वा च तत्त्वज्ञानासिना बुधः ॥ १४ ॥**

**ब्रह्मवृक्षः** समिदाद्यर्थं ब्राह्मणानामपेक्षितो वृक्षः ब्रह्मवृक्षः, अत्र तु संसाराख्याश्वत्थो ग्राह्यः ।

---

१. **'अव्यक्तबीजप्रभवो'** इति कुं.पाठः ।

**हित्वा सङ्गमयान् पाशान् मृत्युजन्मजरोदयान् ।**
**निर्ममो निरहङ्कारो मुच्यते नात्र संशयः ॥ १५ ॥**

**हित्वा** पुण्यपापे हित्वा ।

**द्वावेतौ[1] पक्षिणौ नित्यौ सक्षेपौ चाप्यचेतनौ ।**
**एताभ्यां तु पुरो योऽन्यश्चेतनावान् स उच्यते ॥ १६ ॥**

**द्वावेतौ** इत्यत्र देहः देहबद्धो जीवश्चेति द्वौ । जीवस्य चेतनत्वेऽपि अचेतनदेहसम्बन्धेनाभिभूतज्ञानत्वादचेतनत्वमिति ज्ञेयम् ।

**अचेतनः सत्त्वसङ्घातयुक्तः[2] सत्त्वात्परं चेतयतेऽन्तरात्मा ।**
**स क्षेत्रज्ञः[3] सर्वसङ्घातबुद्धिर्गुणातिगो मुच्यते[4] मृत्युपाशान् ॥१७॥**

**अचेतनः सत्त्वसङ्घातयुक्त** इत्यत्र **सत्त्वम्** अन्तःकरणम् । **सङ्घातः** पञ्चमहाभूतानि, तैर्युक्तः यः **अचेतनः अन्तरात्मा** जीवः । **सत्त्वात्** प्राणिसमूहात् **परं** विलक्षणं **चेतयते** जानाति । **क्षेत्रज्ञः** 'क्षि क्षये' इति धातोः संसारक्षेतृत्वात् क्षेत्रो नारायणः, तं जानातीति क्षेत्रज्ञः, नश्वरोऽयं देहो न ममेति शरीरज्ञो वा । **सर्वसङ्घातबुद्धिः** सर्वेषां गुणानां **सङ्घातः** समूहो यस्मिन् तस्मिन् बुद्धिर्यस्य स तथोक्तः । **गुणातिगः** त्रिगुणातीतः सन् जीवः मृत्युपाशान्मुच्यत इति योजना ।

**॥ इत्याश्वमेधिके अनुगीतासु सप्तचत्वारिंशोऽध्यायः ॥**

---

१. BORI पृ. १७७; **'द्वाविमौ'** इति कुं.पाठः ।
२. BORI पृ. १७७; **'सत्त्वसङ्ख्याविमुक्तः'** इति कुं.पाठः ।
३. BORI पृ. १७७; **'क्षेत्रवित्सर्वसङ्ख्यातबुद्धिः'** इति कुं.पाठः ।
४. BORI पृ. १७७; **'मुच्यते सर्वपापैः'** इति च कुं.पाठः ।

## ।। अथ अष्टचत्वारिंशोऽध्यायः ।।

**ब्रह्मोवाच –**

**केचिद्ब्रह्ममयं[1] वृक्षं केचिद्ब्रह्ममयं[2] महत् ।**
**केचित्परममव्यक्तं केचित्परमनामयम् ।**
**मन्यन्ते सर्वमप्येतदव्यक्तप्रभवाप्ययम्[3] ।। १ ।।**

**उच्छ्वासमात्रमपि चेद्योऽन्तकाले समो भवेत् ।**
**आत्मानमुपसङ्गम्य सोऽमृतत्वाय कल्पते ।। २ ।।**

**प्राणायामैरथ प्राणान् संयम्य स पुनः पुनः ।**
**दशद्वादशभिर्वापि चतुर्विंशात्समन्ततः ।। ४ ।।**

**केचिद्ब्रह्ममयं वृक्षम्** इत्यत्र **केचित्** ज्ञानिनः श्वासविमोक्षकाले **ब्रह्ममयं** परब्रह्मप्रधानकम् 'ओ व्रश्चू छेदने' इति धातोः देहाभिमानच्छेदनकर्तृत्वात् वृक्षनामकं योगिनमाहुः (योगिस्वरूपमाहुः) । केचित् श्वासवायोः शरीर(शिरसि)स्थितोदानवायौ प्रवेशे सति नेत्रनिमीलनसमये **ब्रह्ममयं** केवलपरब्रह्मप्रधानकं **महत्** देहाभिमानराहित्येन पूर्वयोगिनोऽपि महत्त्वान्महन्नामकं योगिस्वरूपमाहुः । केचित् सत्येव देहे पुनःपुनः प्राणानायम्य निर्द्धूतसकलकल्मषं **ब्रह्ममयं** परब्रह्मप्रधानकम् अपरोक्षीकृतपरमात्मस्वरूपम् **अव्यक्तं** परचित्तवृत्तेरप्रत्यक्षत्वात् बहिष्ठैः कैरप्यज्ञातं पुरुषं योगिपुरुषमाहुः । (केचित् अव्यक्तात् लक्ष्मीतत्त्वा-

---

१. कुं.४८ अध्यायः ।
२. BORI पृ. १७७; **'केचिद्ब्रह्ममयं वनम्'** इति कुं.पाठः ।
३. **'प्रभवाव्ययम्'** इति कुं. पाठः ।

दप्युद्रिक्तं नारायणं प्राप्यं) यस्तु **अमृतत्वाय कल्पते** लिङ्गशरीर-भङ्गाख्यामृतत्वाय कल्पते । तं **ब्रह्ममयं** साक्षात् ब्रह्मप्रधानकं संसारान्मुच्यमानत्वात् **अनामयं**, **परं** 'पृ पालनपूरणयोः' इति धातोः स्वयोग्यसुखपूरितत्वात् परात्मकं चाहुः । एवं मुमुक्षूणां विष्णुभक्तानामेव अवस्थाभेदेन चातुर्विध्यं वदन्ति । **एतत् सर्वं** योग्यजीवचतुष्टयम् **अव्यक्तम्** अन्यैरज्ञातस्वभावं **प्रभवाप्ययं** जीवेषु प्रकृष्टं भवतीति प्रभवम्, अप्येति संसारादित्यप्ययं मन्यन्ते इति योजना । एतदेव स्पष्टयति– **उच्छ्वासमात्रमपि चेत्** इत्यादिना । **आत्मानं** परमात्मानम् **उपसङ्गम्य** सम्यगपरोक्षीकृत्य ।

**एवं पूर्वं प्रसन्नात्मा लभते यद्यदिच्छति ।**
**अव्यक्तात्सत्त्वमुद्रिक्तममृतत्वाय कल्पते** ॥ ५ ॥

**एवं पूर्वं प्रसन्नात्मा** इत्यत्र **प्रसन्नात्मा** प्रसन्नचित्तः । प्रसन्नीकृत-परमात्मा वा । **अव्यक्तात्** लक्ष्मीतत्त्वात् **उद्रिक्तं** श्रेष्ठम् । **सत्त्वं** सत्त्व-गुणप्रवर्तकं शोभनगुणात्मकं वा नारायणं प्राप्येति योग्यपदाध्याहारः ।

**आहुरेते[१] महात्मानः ये ज्ञानेषु प्रतिष्ठिताः ।**
**क्षेत्रज्ञसत्त्वयोरैक्यमित्येतन्नोपपद्यते** ॥ ६ ॥

**आहुरेते महात्मान** इत्यत्र ये ज्ञानेषु प्रतिष्ठिताः एते उक्तविधया योगिनां चातुर्विध्यं वदन्तो महात्मानः । **क्षेत्रज्ञसत्त्वयोः** ब्रह्मजीवयोः ऐक्यमित्येतन्मतं नोपपद्यत इत्याहुः ।

---

१. BORI पृ. १९७८; $G_3$; **'आहुरेके च विद्वांसो ये ज्ञाने सुप्रतिष्ठिताः'** इति कुं.पाठः ।

[1] **पृथग्भूतं ततो नित्यमित्येतदपि वारितम् ।**
**पृथग्भावश्च विज्ञेयः सहजश्चापि तत्त्वतः ॥ १० ॥**

**पृथग्भूतं ततो नित्यम्** इत्यत्र नित्यम् अनित्यं च जगत् **ततः** ईश्वरात् **पृथक्** स्वनिष्ठपारमार्थिकत्वापेक्षया प्रकारान्तरेण मिथ्यात्वेनेति यावत् । भावप्रत्ययस्य प्रकारवाचित्ववत् पृथगिति पदं प्रकारान्तर-वाचीति सुप्रसिद्धम् । **भूतं** जातम् इत्येतन्मतमपि, पूर्वार्धे दूषित-जीवब्रह्मैक्यमतसमुच्चयार्थमपिपदं, **वारितं** भवद्भिर्निवारितम् । न केवलमैक्यनिषेधमात्रं कुर्वन्ति प्रत्युत जीवब्रह्मणोरनौपाधिकं पारमा-र्थिकत्वादबाध्यमत्यन्तभेदं च साधयन्तीत्याह– **पृथग्भाव** इति । **सहजः** स्वाभाविकः क्षेत्रज्ञसत्त्वयोः **पृथग्भावः** पृथक्त्वाख्यो भेदः । ततः (ईश्व-रात्) ईश्वरतत्त्वात् पृथग्भावो वा तत्त्वतः विज्ञेय इत्याहुः । पूर्ववाक्ये स्पष्टमैक्यनिषेधात् उत्तरवाक्ये भेदसमर्थनाच्च, मध्यस्थितवाक्ये 'पृथग्भूतं वारितम्' इति आपाततः प्रतीतार्थो नैव ग्राह्यः । किन्तु अस्मदुक्तरीत्या ऐक्यनिषेधप्रसञ्जितो मिथ्यात्वनिषेध एवार्थः । [2] 'सत्त्वमस्त्री तु जन्तुषु' इत्यमरः । अन्यथा 'अहं ब्राह्मणो, नाहं ब्राह्मण' इतिवत् 'पृथग्भावो न, पृथग्भावोऽपि विज्ञेयः' इति वाक्ययोः परस्परविरोधेन व्याहतिः स्यात् । ऐक्यनिषेधस्य भेदाविनाभूतत्वेन प्रक्रमविरोधश्च स्यात् । अत एव 'ये ज्ञानेषु प्रतिष्ठिताः, एते महात्मानः' [3] इति मीमांसानिपुणमहा-पुरुषसङ्ग्रहणाय प्राग्विशेषणद्वयमुक्तम् ।

---

१. BORI पृ. १७८; $D_{5.6}$,$G_3$; **'पृथग्भूतस्तथा नित्यमित्येतदविचारितम्'** इति कुं.पाठः ।

२. **अ.को. तृ. नानार्थवर्गः श्लो. २१३ ।**

३. **अश्वमेधिकपर्व ४८-९**

इदानीं भिन्नसकलजीवाधारतया तत्तद्धृदिस्थितभगवद्रूपाणां भेदो न मन्तव्यः । किन्तु स्वगतभेदवर्जितनारायणेन नियम्यजीवानामेव भेदो वक्तव्य इति सदृष्टान्तमुपपादयति ।

**तथैवैकत्वनानात्वमिष्यते विदुषां[1] नयात् ।**
**मशकोदुम्बरे[2] त्वैक्यं पृथग्भावश्च दृश्यते ॥ ११ ॥**
**मत्स्यो यथाऽन्यः स्यादप्सु सम्प्रयोगस्तथानयोः[3] ।**
**सम्बन्धस्तोयबिन्दूनां पर्णैः कोकनदस्य च ॥ १२ ॥**

मशकाश्च उदुम्बराश्च मशकौदुम्बरम् इति द्वन्द्वैकवद्भावः । तस्मिन् मशकाधारभूते उदुम्बरस्यैक्यम् । आधेयभूतमशकानां **पृथग्भावः** उदुम्बरादत्यन्तभेदः । मशकानामन्योन्यं भेदः । बहुत्वेन तदेव नानात्वं चेति त्रिविधः पृथग्भावः । मशकौदुम्बरयोः **सम्प्रयोगः** आधाराधेयभावरूपसम्यक्सम्बन्धश्च यथा दृश्यते । नतु जडाजडयोस्तयोरैक्यम् ।

मत्स्यः इति जात्येकवचनम् । अप्सु **अन्यः** पूर्ववत् त्रिविधभेदवान् स्यात् । **तथा** तथापि **अनयोर्**मत्स्यजलयोराधारभूतजले ऐक्यम्, आधेयानां मत्स्यानाम् अन्यपदोक्तं त्रिविधं पृथक्त्वं च, **तथा** तथापि अनयोर्मत्स्यजलयोराधारभूतः सम्प्रयोगः, आधाराधेयभावरूपः सम्यक् सम्बन्धश्च यथा दृश्यते न तु जडाजडयोस्तयोरप्यैक्यम् ।

**कोकनदस्य** नीलोत्पलस्य । 'नीलोत्पलं कोकनदम्'[4] इत्यमरः। **पर्णे**

---

१. **'विदुषां नयः'** इति कुं.पाठः ।
२. BORI पृ. १७९; **'मशकोदुम्बरे चैक्यं पृथक्त्वमपि दृश्यते'** इति कुं.पाठः ।
३. BORI पृ. १७९; BORI; **'सम्प्रयोगस्तथा तयोः'** इति कुं.पाठः ।
४. **'रक्तोत्पलं कोकनदम्'** इति प्रचलितपाठः ।**अ.को. वारिवर्ग प्र.का. श्लो.४२**

पत्रे तोयबिन्दूनां च । तन्मध्ये आधारभूतपर्णस्यैक्यम् । उक्तविधया त्रिविधः पृथग्भावः आधाराधेयभावरूपः सम्बन्धश्च यथा दृश्यते । न तु नीलश्वेतयोस्तयोरप्यैक्यम् । अत एवातिनीलत्वेन भेदं स्फोरयितुं कोकनदग्रहणम् । दृष्टान्तत्रयस्यापि ऐकविध्यतया अन्योन्यपदसङ्कलनमपि ग्रान्थिकमुद्राभिज्ञानां सम्मतमेव, तथैव उक्तदृष्टान्तत्रयानुसारेणैव न तु स्वमतदुराग्रहेण । ततश्च आधाराधेययोर्ब्रह्मजीवयोर्भेदोऽभेदः च इति भास्करमतं गतम् । मशकौदुम्बरयोर्जलमत्स्ययोः कोकनदपत्रतोयबिन्द्वोश्च तन्मतेऽपि अभेदाऽभेदाभावेन दृष्टान्तानानुगुण्यात् । भूतभविष्यद्वर्तमानानेकदेहेषु जीवस्यैकत्वं देहानां नानात्वमित्यपि योजना दुर्योजनैव । तथा सति 'वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि'[१] इत्यादि न्यायेन पटेष्वनेकत्वं तद्धारकजीवस्य तु एकत्वमिवेति वा । एकस्यैव सर्पस्य बहवः त्वच इवेति वा दृष्टान्तो वक्तव्यः स्यात् । न तु मशकौदुम्बरादिदृष्टान्तः । अत्र हि आधारभूतोदुम्बरादेरेकत्वम् । तदाधेयानां मशकादीनां युगपदेव नानात्वं चोच्यते । इदं च निदर्शनं दार्ष्टान्तिकेऽपि । आधारभूतब्रह्मण एकत्वे तदाधेयानां जीवानां युगपदेव नानात्वे च प्रतिज्ञाते सत्यनुगुणं स्यात् । नान्यथा । अत इयमपि योजना न विदुषां सम्मता । तस्मात् क्षेत्रज्ञजीवयोर्मध्ये आधारभूतब्रह्मण्येकत्वं, तदुदरमध्ये आधेयानां जीवानां नानात्वम्, आधारभूतब्रह्मणः पृथग्भावः, आधेयानां जीवानां मिथः पृथग्भावः जीवबहुत्वेन नानात्वं चेति त्रिविधं नानात्वं, ब्रह्मणो जीवानां चाधाराधेयभावरूपः **सम्प्रयोगः**, सम्यक् प्रकृष्टो योगः सम्बन्धश्च । योगस्य मुक्तावपि अनुवृत्तिसूचनाय प्राशस्त्यार्थकोप-

---

१. भ.गी. २/२२

सर्गद्वयम् । न तु सर्वज्ञाल्पज्ञयोस्तयोरैक्यम् । एतदेव सूचयितुं प्राग् ब्रह्मणि क्षेत्रज्ञपदं जीवेषु जन्तुसाधारणं सत्त्वपदं च प्रयुक्तम् । अन्यथा जीवब्रह्मणोरित्यवक्ष्यत् ।

विदुषां नयात् इष्यते । 'नेह नानास्ति किञ्चन'[१], 'द्वा सुपर्णा सयुजा सखाय'[२] इत्यादिवाक्यद्वयविवेकज्ञतासूचनाय विदुषामित्युक्तम् । 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते'[३] इत्यादिन्यायसूत्रसूचनाय नयात् इत्युक्तम् इति योजना ।

**[४]ऊर्ध्वं देहाद्वदन्त्यन्ये नैतदस्तीति चापरे ।**
**केचित्संशयितं सर्वं निःसंशयमथापरे ॥ २ ॥**
**अनित्यं नित्यमित्येके नास्त्यस्तीत्यपि चापरे ।**
**त्रिधेत्येके द्विधेत्येके [५]व्यामिश्रमिति चापरे ॥ ३ ॥**
**मन्यन्ते ब्राह्मणा एव [६]प्रौढास्तत्त्वार्थदर्शिनः ।**
**एकमेके पृथक्चान्ये बहुत्वमिति चापरे ॥ ४ ॥**

**ऊर्ध्वं देहाद्वदन्त्यन्य** इत्यत्र **अन्ये** नास्तिकेभ्योऽन्ये आस्तिकपुरुषाः देहादूर्ध्वमपि परलोकादिकम् अस्तीति वदन्ति । **अपरे** चार्वाकादयः **एतत्** परलोकादिकं नास्तीति वदन्ति । **केचित्** मध्यम-जीवाः नित्यं **संशयितं** सतां समागमे सति तद्वदेव वदन्ति । असतां समागमे च तन्मतमेवाश्रयन्ते इत्यर्थः । **अपरे** उत्तमजीवाः निस्संशयं

---

१. बृ.उ. ६-४-२९; २. आ.उ. ५-२ ; ३. ब्र.सू. १-२-२०
४. BORI पृ. १७९; **'ऊर्ध्वं देहाद्वदन्त्येके'** इति कुं.पाठः । कुं.४९ अध्यायः ।
५. BORI पृ. १७९; **'व्याकीर्णमिति'** इति कुं.पाठः ।
६. **'ब्रह्मज्ञास्तत्त्वदर्शिनः'** इति कुं. पाठः ।

हरेः सर्वोत्तमत्वादिकमेव वदन्ति । **अपरे** अधमजीवास्तु निस्संशय-मैक्यादिकमेव वदन्ति । **एके** बौद्धविशेषाः सर्वमनित्यं क्षणिकं वदन्ति । **एके** सत्कार्यवादिनः सर्वं नित्यमिति वदन्ति । **अपरे** मायावादिनः जगत् परमार्थतो नास्ति, व्यवहारतोऽस्तीति वदन्ति । **एके** तेष्वेव माया-वादिष्वेके **द्विधा** ब्रह्मचैतन्यं जीवचैतन्यं चेति द्विधैव चैतन्यं वदन्ति । एके तु जीवेश्वरनिर्गुणब्रह्मरूपेण **त्रिधा** इति वदन्ति । **अपरे** माया-वादिष्वेव केचन ब्रह्म **व्यामिश्रम्** अज्ञानशबलमाहुः । **अपरे** केचन ईश्वरं मायाशबलमाहुः । दुस्तर्केण वा सत्तर्केण वा **प्रौढाः** प्रज्ञाः **तत्त्वार्थदर्शिनः** मदुक्त एवार्थः मदुक्त एव तत्त्वार्थ इति दर्शिनः ।

**देशकालावुभौ केचिन्नैतदस्तीति चापरे ।**
**जटाजिनधराश्चान्ये मुण्डाः केचिदसंवृताः** ॥ ९ ॥

**देशकालावुभौ केचित्** इत्यत्र पुण्यदेशः पुण्यकालश्च इति **उभौ** स्त इति केचित् वदन्ति । **अपरे** नास्तिकास्तु एतत् पुण्यकालादिकं नास्तीति वदन्ति ।

**धनानि केचिदिच्छन्ति निर्धनत्वमथापरे ।**
**उपास्यां[1] साधयन्तीत्येके नैतदस्तीति चापरे** ॥ ८ ॥

**उपास्यां साधयन्ति** इत्यत्र देवतां साधयन्ति ।

**सद्भावे[2] निरताश्चान्ये केचित् संशयिते स्थिताः ।**
**दुःखान्यन्ये[3] सुखान्यन्ये ध्यानमित्यपरे जनाः** ॥ १० ॥

---

१. **'उपास्य साधनं त्वेके'** इति कुं.पाठः ।
२. BORI पृ. १८०; $G_3$; **'सद्भाव'** इति कुं.पाठः ।
३. BORI पृ. १८०; $G_3$; **'दुःखादन्ये सुखादन्ये'** इति कुं. पाठः ।

**सद्भावे** उत्तमस्वभावे । **संशयिते** मिश्रस्वभावे । **अन्ये** तपस्विनः । **दुःखानि** कायक्लेशादिदुःखानि ।

**अतः परं तु यद्गुह्यं तद्भवान् वक्तुमर्हति ।**
**सत्त्वक्षेत्रज्ञयोश्चैव**[१] **सम्बन्धः केन हेतुना ॥ १६ ॥**

**सत्त्वक्षेत्रज्ञयोश्चैव** इत्यत्र **सत्त्वक्षेत्रज्ञयोः** सत्त्वपदोपलक्षितगुणत्रयात्मकदेहस्य क्षेत्रज्ञपदोदितजीवस्य च सत्त्वसम्बन्धः केन हेतुना ?

**॥ इत्याश्वमेधिके अष्टचत्वारिंशोऽध्यायः ॥**

## ॥ अथ एकोनपञ्चाशोऽध्यायः ॥

[२]**ज्ञानान्निश्रेयसं प्राहुर्वृद्धा निश्चयदर्शिनः ।**
**तस्माज्ज्ञानेन शुद्धेन मुच्यते सर्वकिल्बिषैः ॥ ३ ॥**

**ज्ञानान्निश्रेयसं प्राहुः** इत्यत्र **निश्चयदर्शिनः** ब्रह्ममीमांसोक्तप्रकारेण उपक्रमादिलिङ्गैः सकलगुणपूर्णस्य निर्दोषस्य सकलजगद्भिन्नस्य च नारायणस्य श्रुतिवाक्येषु निश्चितं **निश्चयं** पश्यन्तीति निश्चयदर्शिनः । **वृद्धाः** ज्ञानवृद्धाः देवर्ष्यादयः, **ज्ञानात्** 'तमेवं विद्वान्' इति श्रुत्युक्तप्रकारेण पुरुषसूक्तप्रतिपाद्यनारायणज्ञानात् **निःश्रेयसं** मोक्षं प्राहुः ।

इदानीं देहस्य जीवस्य च गगनदेहसंयोगवन्न संयोगमात्रेण देहित्वं किन्तु अभिमानविशेषेणेति देहसंयोगप्रकारं प्राक् निरूप्य पुनर्देह-

---

१. BORI पृ. १८१; **'सत्त्वक्षेत्रज्ञयोश्चापि'** इति कुं.पाठः ।
२. कुं.५० अध्यायः। **'ज्ञानं निःश्रेय इत्याहुर्वृद्धा निश्चितदर्शिनः'** इति कुं.पाठः ।

वियोगाख्यो मोक्षः कदा स्यादित्याशङ्क्य स्वावरकस्वोपभोज्यौ-दुम्बरफलनाशे सति मशकानां ततोऽपवर्गदर्शनेन प्रागुक्तमेव दृष्टान्त-मत्रापि दृष्टान्तीकृत्य मोक्षप्रकारं सविस्तरं वक्तुमारभ्यते – **अतःपरं प्रवक्ष्यामि** इत्यादिना ।

**अतः परं प्रवक्ष्यामि सत्त्वक्षेत्रज्ञयोर्यथा ।**
**संयोगो विप्रयोगश्च तन्निबोधत सत्तमाः ॥ ७ ॥**

**सत्त्वक्षेत्रज्ञयोः** इत्यत्र सत्त्वपदोपलक्षितत्रिगुणात्मकदेहस्य, क्षेत्रज्ञ-स्य जीवस्य च । 'सयुजा सखायौ'[1] इत्युक्तजीवब्रह्मणोः संयोग-विप्रयोगायोगादत्रायमेवार्थः ।

**विषयो विषयित्वं च सम्बन्धोऽयमिहोच्यते ।**
**विषयी पुरुषो नित्यं सत्त्वं च विषयः स्मृतः ॥ ८ ॥**

**विषयो विषयित्वं च सम्बन्धोऽयमिहोच्यत** इत्यत्र देहादिः **विषयः** । देही जीवस्तु स्वसाक्षिणा तद्देहादिकं ममेति पश्यन् **विषयी** । अयमेव **इह** संसारे तयोः देहजीवयोः सम्बन्ध उच्यते । न तु काला-काशादिसाधारणं संयोगमात्रम् । अत्रापि पूर्वं जीवेश्वरविषये दृष्टान्ततयोक्तमशकोदुम्बरावेव दृष्टान्तावित्याह ।

**व्याख्यातं पूर्वकल्पेन मशकोदुम्बरं यथा ।**
**भुज्यमानं न जानीते नित्यं सत्त्वमचेतनम् ।**
**यस्त्वेवं तं विजानीते यो भुङ्क्ते यश्च भुज्यते ॥ ९ ॥**

---

१. आ.उ. ५-१

**व्याख्यातं पूर्वकल्पेन** इत्यादिना। उदुम्बरफलस्य मशकाधारत्वात् भगवतोऽपि स एव दृष्टान्तः। उदुम्बरस्य रसद्वारा मशकभोगायतनत्वात् आवृत्य स्थितत्वाच्च तस्यैव जीवदेहसदृशतया देहोपमा च। अत एव पक्षद्वयसूचनाय **पूर्वकल्पेन**, पूर्वमीश्वरजीवयोर्भेदपक्षेण व्याख्यात-मित्युक्तम्.। तत्रोक्तं युगपदेकत्वनानात्वयोर्जीवदेहविषये अयोगेन युगपद्बहुजीवाश्रयभूतो भगवानेव तत्र निरूपितः। अत्र तु एकत्व-नानात्वप्रस्तावस्यैव मूले अकथनात् प्रत्युत देहदेहिसंयोगविप्रयोगयोरेव प्रस्तावितत्वात् देहिदेहविषय एव विवक्षाभेदेन दृष्टान्तता॥ एतदेव विशदयति – **भुज्यमानम्** इत्यादिना।

**अनित्यं द्वन्द्वसंयुक्तं सत्त्वमाहुर्मनीषिणः।**
**[१]निर्द्वन्द्वो निर्गुणो नित्यः क्षेत्रज्ञो निष्कलात्मकः ॥ १० ॥**

**सत्त्वं** सत्त्वपदोपलक्षितत्रिगुणात्मकदेहः।

**निर्द्वन्द्वो निर्गुण** इत्यत्र **निर्द्वन्द्वः** शीतोष्णादेरतिदूरः, **निष्कलः** प्राकृतषोडशकलारहितः। **निर्गुणः** सत्त्वादिगुणत्रयरहितः परमात्मा।

**[२]समासज्ञानतत्त्वेन यदा सर्वत्र दृश्यते।**
**न सज्जते [३]तदा सत्त्वमापः पुष्कर[४]पत्रवत् ॥ ११ ॥**

**समासज्ञानतत्त्वेन** ब्रह्मसूत्रे सङ्कोचात् कथितज्ञानतत्त्वेन **सर्वत्र**

---

१. BORI पृ. १८२; $K_{2.4}$; $D_1$; **'निर्द्वन्द्वो निष्कलो नित्यः क्षेत्रज्ञो निर्गुणात्मकः'** इति कुं.पाठः।

२. BORI पृ. १८३; $G_3$; BORI; **'समः सञ्ज्ञानुगश्चैव स सर्वत्र व्यवस्थितः'** इति कुं.पाठः।

३. $S_1$, BORI पृ. १८३; **'सदा'** इति कुं. पाठः।

४. BORI पृ. १८३; $G_2$; **'पर्णवत्'** इति कुं.पाठः।

अणुरेण्वादिषु यदा संदृश्यते तदा जीवः **सत्त्वं** देहं प्रति सज्जते । आपः पुष्करपत्रवत् ।

**सर्वैरपि गुणैर्विद्वान् व्यतिषक्तो न लिप्यते ।**
**जलबिन्दुर्यथा लोलः पद्मिनीपत्रसंस्थितः ॥ १२ ॥**

**गुणैः** प्राकृतरूपादिगुणैः ।

**एवमेवाप्यसंयुक्तः पुरुषः स्यान्न संशयः ॥ १३ ॥**

**पुरुषः** जीवः ।

**यथा द्रव्यं च कर्ता च संयोगोऽप्यनयोस्तथा ।**
**यथा प्रदीपमादाय कश्चित्तमसि गच्छति ।**
**तथा सत्त्वप्रदीपेन गच्छन्ति परमर्षयः ॥ १४ ॥**

**यथा द्रव्यम्** इत्यत्र **द्रव्यं** धनकनकादिकम् । संयोग इत्युपलक्षणं विप्रयोगोऽपि ग्राह्यः ।

**तथा सत्त्वप्रदीपेन** इत्यत्र 'सत्त्वात् सञ्जायते ज्ञानम्'[१] इति वचनात् सत्त्वगुणोत्पन्नज्ञानाख्यदीपेन ।

**यावद्द्रव्यं गुणास्तावत्प्रदीपः सम्प्रकाशते ।**
**क्षीणे द्रव्ये गुणे ज्योतिरन्तर्धानाय गच्छति ॥ १५ ॥**

**यावद्द्रव्यं गुणा** इत्यत्र **द्रव्यं** पञ्च महाभूतानि । **गुणाः** रूपरसादयः तदात्मको देहः **यावत्** दण्डपटवत् तिष्ठति तावत् प्रकाशते । **ज्योतिः** ज्योतीरूपो जीवः ।

---

१. भ.गी. १४-१७

**व्यक्तः सत्त्वगुणस्त्वेवं पुरुषो द्रव्यमुच्यते ॥ १६ ॥**

**व्यक्त** इत्यत्र सत्त्वं गुणात्मको देहो यस्य सः **सत्त्वगुणः**।

**सहस्रेणापि दुर्मेधा न बुद्धिमधिगच्छति।**
**चतुर्थेनाप्यथांशेन बुद्धिमान् सुखमेधते ॥ १७ ॥**

**चतुर्थेनाप्यथांशेन** इत्यत्र 'अष्टौ ग्रासाः मुनेः प्रोक्ताः' इति वचनात् द्वात्रिंशत् कबलानां चतुर्थेनांशेन।

[1]**यथाऽधान्यमुपादेयं प्रवपन् मानवः क्वचित्।**
**क्लेशेन याति महता विनश्यत्यन्तराऽपि च ॥ १९ ॥**

**यथाऽधान्यमुपादेयं प्रवपन् मानवः क्वचित्** इत्यत्र उपपन्नतया क्षेत्रेषु आधानयोग्यं **धान्यं** कलमादिबीजम्।

**तथा कर्मसु विज्ञेयं फलं भवति वा न वा।**
**पुरुषस्यात्मनिःश्रेयः शुभाशुभनिदर्शनम् ॥ २० ॥**

**पुरुषस्यात्मनिःश्रेयः शुभाशुभनिदर्शनम्** इत्यत्र शुभाशुभे एव भावे अभावे च निदर्शनं यस्य ।

**ऊर्ध्वं पर्वतमारुह्य नान्ववेक्षेत भूतलम्।**
**रथेन रथिनं पश्येत् क्लिश्यमानमचेतनम् ॥ २३ ॥**

**रथेन रथिनं पश्येत्** इत्यत्र 'रथ गतौ' इति धातोः **रथिनं** पद्भ्यां गन्तारं **रथेन** निमित्तेन न पश्येदिति नञावृत्त्या योजना।

---

१. '**यथाऽध्वानमपाथेयः प्रपन्नो मनुजः क्वचित्**' इति कुं.पाठः।

[1]
नावा कयापि च विभागज्ञस्त्वरित्रया ।
अश्रान्तः सलिलं गाहेच्छीघ्रं संतरते ह्रदम् ॥ २७ ॥

**कयापि च विभागज्ञ** इत्यत्र **त्वरी** तरणे त्वरावान् त्वरी । तं त्रायत इति त्वरित्रा नौः ।

स्नेहात्सम्मोहमापन्नो नावि दाशो यथा तथा ।
ममत्वेनाभिभूतस्तु स कथञ्चित् न मुह्यति ॥ २९ ॥

**स कथञ्चित् न मुह्यत** इत्यत्र कथञ्चिन्न मुह्यत इति न । किन्तु मुह्यत्येव ।

यन्नैव गन्धि नो रसन्[2] रूपसंस्पर्शशब्दवत् ।
मन्यते न मनो बुद्ध्या तत्प्रधानं प्रचक्षते ॥ ३२ ॥

**रसन् रूपसंस्पर्शशब्दवत्** इत्यत्र **रूपसंस्पर्शशब्दवत्** शाष्कुल्यादिकं **रसन्**, 'रस आस्वादने' इति धातोः आस्वादयन् **मनः न मन्यते** परमात्मा न मन्यते ।

तत्र प्रधानमव्यक्तमव्यक्तस्य गुणो महान् ।
महत्प्रधानभूतस्य गुणोऽहङ्कार एव च ॥ ३३ ॥

**अव्यक्तस्य गुणो महान्** इत्यत्र **गुणः** अप्रधानभूतं कार्यम् । **अव्यक्तस्य महान्** अव्यक्तसम्बन्धी महान् ।

बीजधर्मिण इत्याहुः प्रसवं च प्रकुर्वते ।
विशेषाः पञ्चभूतानां तेषां वित्त विशेषणम् ॥ ३७ ॥

---

१. 'नावा चापि यथा प्राज्ञो विभागज्ञस्त्वरित्रया' इति कुं.पाठः ।
२. 'रस्यं न रूपस्पर्शशब्दवत्' इति कुं.पाठः ।

**तेषां वित्त विशेषणम्** इत्यत्र **विशेषणं** विशिष्यते अनेनेति विशेषणं विशेषम् ।

**तत्रैकगुणमाकाशं द्विगुणो वायुरुच्यते ।**
**त्रिगुणं ज्योतिरित्याहुरापश्चापि चतुर्गुणाः ॥ ३८ ॥**

**द्विगुणो वायुः** इत्यत्र द्वौ शब्दस्पर्शौ गुणौ यस्य तम्, एवमुत्तरत्रापि ।

**अहङ्कारात् परा बुद्धिर्बुद्धेरात्मा ततः परः ।**
**तस्मात्तु परमव्यक्तमव्यक्तात् पुरुषः परः ॥ ५५ ॥**

**बुद्धेरात्मा** इत्यत्र **आत्मा** महत्तत्त्वाभिमानी चतुर्मुखः। **पुरुषो** नारायणः ।

॥ इत्याश्वमेधिके एकोनपञ्चाशोऽध्यायः ॥

## ॥ अथ पञ्चाशोऽध्यायः ॥

**अधिष्ठातृमनो[१] नित्यं भूतानां महतां तथा ।**
**बुद्धिरैश्वर्यमाचष्टे क्षेत्रज्ञः[२] सर्व उच्यते ॥ २ ॥**

**क्षेत्रज्ञः सर्व उच्यत** इत्यत्र **क्षेत्रज्ञः** परमात्मा । **सर्वः** मनोबुद्धि-भूतादीनां सर्वेषां नियामकः । देहाख्यरथेन सरति, स्वातन्त्र्येण गच्छति वर्तयति जीवमिति वा सर्वः ।

**इन्द्रियग्रामसंयुक्तो मनःसारथिरेव च ।**
**बुद्धिसंयमनो नित्यं महान् ब्रह्ममयो रथः ॥ ५ ॥**

---

१. कुं.५१ अध्यायः ।
२. BORI पृ. १८९; '**क्षेत्रज्ञश्च स उच्यते**' इति कुं.पाठः ।

**महान्ब्रह्ममयो रथ** इत्यत्र **ब्रह्ममयः** परब्रह्मप्रधानकः ।

**अव्यक्तादिविशेषान्तं सहस्थावरजङ्गमम् ।**
**सूर्यचन्द्रप्रभालोकं ग्रहनक्षत्रमण्डितम्** ॥ ७ ॥

**अव्यक्तादिविशेषान्तम्** इत्यत्र **विशेषः** पृथिवी ।

**अजितं सर्वभूतानां सर्वप्राणभृतां गतिः ।**
[१] **एतद्ब्रह्मपदं नित्यं तस्मिंश्चरति क्षेत्रवित्** ॥ ९ ।

**एतद्ब्रह्मपदम्** इत्यत्र **एतत्** भूगोलाख्यं **ब्रह्मपदं** परब्रह्मणः स्थानम् । 'अत्यतिष्ठद् दशाङ्गुलम्' इति श्रुतेः । दशाङ्गुलमूर्त्याख्य रथमधिष्ठाय इतस्ततः सञ्चरति । परमात्मा व्याप्तमूर्त्या राजमन्दिर इव भूगोलाख्यस्थाने तिष्ठति इति भावः ।

**देवा मनुष्या गन्धर्वाः पिशाचासुरराक्षसाः ।**
[२] **सर्वे स्वभावतः सृष्टा न क्रियातो न कारणात्** ॥ ११ ॥
[३] **एते विश्वकृतो विप्रा जायन्तीह पुनः पुनः** ॥ १२ ॥

**सर्वे स्वभावतः सृष्टा** इत्यत्र **क्रियातः** अदृष्टाख्यकर्मणः सृष्टा न भवति । **कारणात्,** केवलं प्रधानाख्यकारणाच्च सृष्टा न भवन्ति । तथा सति देवर्ष्यादयः सुकृतिनः, दानवाद्याः केवलं दुष्कृतिनः, मानवास्तु उभयविधा इति कार्ये वैचित्र्यायोगात् । किन्तु **स्वभावतः** उत्तममध्यमाधमाख्यं तत्तज्जीवस्वभावमनुसृत्य सृष्टाः । **विश्वकृतः** एते महदादयः ।

---

१. BORI पृ. १८९; $G_3$,$M_4$; **'एतत् ब्रह्मवनम्'** इति कुं.पाठः ।
२. **'सर्वे स्वभावतः सृष्टा न क्रियाभ्यो न कारणात्'** इति कुं.पाठः ।
३. BORI पृ. १९०; **'एते विश्वसृजो'** इति कुं.पाठः ।

**विश्वसृग्भ्यस्तु भूतेभ्यो महाभूतानि[१] गच्छति ।**
**भूतेभ्यश्चापि पञ्चभ्यो मुक्तो गच्छेत् परां गतिम् ॥ १३ ॥**

**विश्वसृग्भ्यस्तु भूतेभ्य** इत्यत्र विश्वसृग्भ्यः भूतेभ्यः जातं कार्यं महाभूतानि गच्छति ।

**यद्दुरापं दुराम्नायं दुराधर्षं दुरन्वयम् ॥ १७ ॥**

**दुराम्नायम्** अभ्यासासाध्यम् ।

**आशीर्युक्तानि कर्माणि कुर्वते ये त्वतन्द्रिताः ।**
**अहङ्कारसमायुक्तास्ते सकाशे प्रजापतेः ॥ २१ ॥**

**ते सकाशे प्रजापते** इत्यत्र तेऽपि प्रजापतेः सकाशे ।

**ध्यानयोगमुपागम्य प्रसन्नमतयः सदा ।**
**[२]सुखोपायमव्यक्तं प्रविशन्त्यात्मवत्तया ॥ २३ ॥**

**सुखोपायमव्यक्तम्** इत्यत्र 'अ इति ब्रह्म' इति श्रुतेः **अं** परमात्मानम् । **आत्मवत्तया** जितमनस्कतया ।

**अव्यक्तादेव सम्भूताः समयज्ञा गताः पुनः ।**
**तमोरजोभ्यां निर्मुक्ताः [३]सङ्गात् सञ्ज्ञां गता हि ते ॥ २५ ॥**

**सङ्गात् सञ्ज्ञां गता** इत्यत्र **सङ्गात्** सत्सङ्गात् । **सञ्ज्ञां** सम्यक् ज्ञानम् ।

---

१. BORI पृ. १९०; **'महाभूतास्तु सर्वशः'** इति कुं.पाठः ।
२. BORI पृ. १९१; **'सुखोपचयमव्यक्तं प्रविशन्त्यात्मवित्तमाः'** कुं. पाठः ।
३. **'सत्त्वमास्थाय केवलम्'** इति कुं.पाठः ।

**निर्मुक्तः सर्वपापेभ्यः सर्वं त्यजति निष्कलः ।**
**क्षेत्रज्ञ इति तं [१] चिन्त्यात् यस्तं वेद स वेदवित्** ॥ २६ ॥

**क्षेत्रज्ञ इति तं चिन्त्यात्** इत्यत्र तं मुक्तिस्थानगतं परमात्मानम् । **चिन्त्यात्** चिन्ताकारिदुर्विषयात् ।

**अव्यक्तादिविशेषान्तमविद्यालक्षणं स्मृतम् ।**
**निबोधत तथा ज्ञानं गुणैर्लक्षणमित्युत** ॥ २८ ॥

**गुणैर्लक्षणमित्युत** इत्यत्र **गुणैः** ज्ञानादिगुणैः । लक्ष्यत इति **लक्षणं** ब्रह्म । यद्वा [२] 'जन्माद्यस्य यतः' इति वचनात् **गुणैः** जन्मकारणत्वादि-गुणैर्लक्षणं यस्येत्यलुक्समासः ।

**कर्मणा जायते जन्तुर्मूर्तिमान् षोडशात्मकः ।**
**[३] पुरुषं सृजतेऽविद्या अग्राह्यममृताशिनम्** ॥ ३१ ॥

**पुरुषं** जीवम् अविद्या सृजते । **अग्राह्यं** सूक्ष्मत्वाद् ग्रहणायोग्यम् ।

**अपूर्वमकृतं नित्यं [४] स्वयैनमभिचारिणम् ।**
**य एनं विन्दतेऽऽत्मानमग्राह्यममृताशिनम् ।**
**अग्राह्योऽमृतो भवति स एभिः कारणैर्ध्रुवः** ॥ ३४ ॥

**स्वयैनमभिचारिणम्** इत्यत्र **स्वया** स्वसम्बन्धिन्या अविद्यया **अभितः** स्वर्गनरकादिषु **चारिणं** सञ्चरन्तम् **एनं** पुरुषम् ।

---

१. **'विद्याद्यस्तम्'** इति कुं.पाठः ।; २. ब्र.सू. १-१-२
३. BORI पृ. १९२; **'पुरुषं ग्रसते विद्या तद्ग्राह्यममृताशिनम्'** इति कुं.पाठः ।
४. **'य एनमविचारिणम्'** इति कुं.पाठः ।

**प्रसादेन[१] हि सत्त्वस्य प्रसादं समवाप्नुयात् ।**
**लक्षणं हि प्रसादस्य यथा स्यात् स्वप्नदर्शनम् ॥ ३६ ॥**

**प्रसादेन हि सत्त्वस्य** इत्यत्र **सत्त्वस्य** चित्तस्य **प्रसादेन** प्रसन्नतया **प्रसादं** हर्यनुग्रहम् ।

**॥ इत्याश्वमेधिके पञ्चाशोऽध्यायः ॥ ॥ इत्यनुगीता समाप्ता ॥**

## ॥ अथ एकपञ्चाशोऽध्यायः ॥

**रतिस्तुष्टिर्धृतिः[२] क्षान्तिर्मतिः कान्तिश्चराचरम् ।**
**त्वमेवेह युगान्तेषु निधनं प्रोच्यतेऽनघ[३] ॥ १३ ॥**

**निधनं प्रोच्यतेऽनघ** इत्यत्र निधीयते लयकाले जगत् उदरे येन तत् **निधनं** परं ब्रह्म ।

**आत्मा च परमो वक्तुं नमस्ते नलिनेक्षण ॥ १४ ॥**

**आत्मा** स्वयमेव वक्तुं **परमः** समर्थः ।

**॥ इत्याश्वमेधिके एकपञ्चाशोऽध्यायः ॥**

## ॥ अथ चतुःपञ्चाशोऽध्यायः ॥

**ततो[४] दिग्वाससं धीमान् मातङ्गं मलपङ्किनम् ।**
**अपश्यत मरौ तस्मिञ्श्वयूथपरिवारितम् ॥ २१ ॥**

---

१. **'प्रसादे चैव'** इति कुं.पाठः ।; २. कुं.५२ अध्यायः ।
३. BORI पृ. १९६; $K_{2.4}$, $D_{1.2.6}$, $G_{2.3}$; **'प्रोच्यसे अनघ'** इति कुं.पाठः ।
४. कुं.५५ **अध्यायः** ।

**मातङ्गं मलपङ्किनम्** इत्यत्र **मातङ्गं** चण्डालं [१]'चण्डालप्लवङ्ग-मातङ्गदिवाकीर्तिजनङ्गमाः' इत्यमरः ।

**भीषणं बद्धनिस्त्रिंशं बाणकार्मुकधारिणम् ।**
**[२]तस्याथ स्रोतसोऽपश्यद्वारि भूरि द्विजोत्तमः ॥ २२ ॥**

**तस्याथ स्रोतसोऽपश्यत्** इत्यत्र स्रवत्यस्मान् मूत्रमिति **स्रोतः** मेढ्रं तस्मात् ।

॥ इत्याश्वमेधिके चतुःपञ्चाशोऽध्यायः ॥

## ॥ अथ षट्पञ्चाशोऽध्यायः ॥

**सौदास उवाच–**

**[३]पत्न्यास्त्वमपि विप्रर्षे रुचिरे मणिकुण्डले ।**
**[४]वरयार्थं त्वमन्यं मे तं ते दास्यामि सुव्रत ॥ १३ ॥**

**पत्न्यास्त्वमपि विप्रर्षे** इत्यत्र रुचिरे मणिकुण्डले त्वमपि पत्न्याः सकाशात् वरय । **मे** मत्तः इदमन्यत् । अर्थादनुवरय ।

**अभिज्ञानं तु किञ्चित्त्वं समानयितुमर्हसि ॥ २१ ॥**

**अभिज्ञानं** चिह्नम् । 'अङ्कश्चिह्नमभिज्ञानम्'[५] इति हलः ।

॥ इत्याश्वमेधिके षट्पञ्चाशोऽध्यायः ॥

---

१. अ.को. द्वि. शूद्रवर्गः श्लो १९
२. BORI पृ. २१०; $T_1$,$G_{1.2}$; **'तस्याधः'** इति कुं.पाठः ।
३. कुं.५७ अध्यायः । BORI पृ. २१८; $G_3$; **'पत्न्यास्ते मम विप्रर्षे उचिते'** इति कुं.पाठः ।
४. $S_1$,$D_{5.6}$; BORI पृ. २१८; **'वरयार्थं त्वमन्यं वै'** इति कुं.पाठः ।
५. ह.को. १-४५

## ।। अथ सप्तपञ्चाशोऽध्यायः ।।

**सौदास उवाच –**

**[१] न चैवैषा गतिः क्षेम्या न चान्या विद्यते गतिः ।**
**एतन्मे तत्त्वमाज्ञाय प्रयच्छ मणिकुण्डले ।। २ ।।**

**न चैवैषा गतिः क्षेम्या न चान्या विद्यते गतिः** इत्यत्र एषा इदानीं विद्यमाना **गतिः** स्थितिः । मे **क्षेम्या** क्षेमयोग्या न । अन्या **गतिः** स्थितिः मे शापान्न विद्यते ।

**सौदास उवाच–**

**[२] प्रजातिसर्गात् विप्रान् वै क्षत्रियाः पूजयन्ति ह ।**
**विप्रेभ्यश्चापि बहवो दोषाः प्रादुर्भवन्ति नः ।। ५ ।।**

**प्रजातिसर्गात्** इत्यत्र प्रकृष्टान्नारायणाज्जातः **प्रजः** ब्रह्म, तस्य अतिसर्गात् ।

**सोऽहं द्विजेभ्यः प्रणतो विप्राद्दोषमवाप्तवान् ।**
**गतिमन्यां न पश्यामि मदयन्तीसहायवान् ।। ६ ।।**

**द्विजेभ्यः प्रणत** इत्यत्र प्राक् प्रणतः ।

**[३] समश्चेदिह वक्तव्यं मया द्विजवरोत्तम ।**
**मत्समीपं द्विजश्रेष्ठ नागन्तव्यं कथञ्चन ।। १५ ।।**

---

१. कुं.५८ अध्यायः ।
२. BORI पृ. २२१; $D_1$; **'प्रजाविसर्गात्'** इति कुं.पाठः ।
३. BORI पृ. २२२; $M_{1.2}$; **'क्षमं चेदिह'** इति कुं.पाठः ।

**समश्वेदिह वक्तव्यम्** इत्यत्र **समश्चेत्** यथा त्वयि तथा मय्यपि समश्चेदित्यर्थः। मम दुर्दशां दृष्ट्वा मय्यपि प्रीतिं करोषि चेदिति भावः।

**॥ इत्याश्वमेधिके सप्तपञ्चाशोऽध्यायः ॥ ॥ इत्युदङ्कोपाख्यानं समाप्तम् ॥**

## ॥ अथ अष्टपञ्चाशोऽध्यायः ॥

[१] **वर्तमाने महाराज महे रैवतकस्य च।**
**उपायात् पुण्डरीकाक्षो युयुधानानुगस्तदा** ॥ ४ ॥

**महे रैवतकस्य** इत्यत्र **महे** पूजारूपोत्सवे [२] 'मह उद्धव उत्सवः' इत्यमरः।

**॥ इत्याश्वमेधिके अष्टपञ्चाशोऽध्यायः ॥**

## ॥ अथ एकोनषष्टितमोऽध्यायः ॥

[३] **हते शल्ये तु शकुनिं सहदेवो महामनाः।**
**आहर्तारं कलेस्तस्य जघानामितविक्रमः** ॥ २५ ॥

**आहर्तारं कलेः** इत्यत्र **कलेः** युद्धस्य, [४] 'कलिसंस्फोटसंयुगा' इत्यमरः।

**॥ इत्याश्वमेधिके एकोनषष्टितमोऽध्यायः ॥**

## ॥ अथ षष्टितमोऽध्यायः ॥

[५] **कच्चिन्न निकृतो बाणैः द्रोणकर्णकृपादिभिः।**
**धरण्यां निहतः शेते तन्ममाचक्ष्व केशव** ॥ १३ ॥

---

१. कुं.५९ अध्यायः।; २. अ.को. प्र. नाट्यवर्गः श्लो. २४६
३. कुं.६० अध्यायः।; ४. अ.को. द्वि. क्षत्रियवर्गः श्लो. १०५
५. कुं.६१ अध्यायः। BORI पृ. २३५;$G_3$; **'कच्चिन्न निकृतो बालो'** कुं. पा.

**कच्चिन्न निकृतो बाणैः** इत्यत्र **निकृतः** वञ्चितो न कच्चित् । किन्तु बाणैरेव निहत इति योजना । [1]'निकृतः स्यात् विप्रकृतो विप्रलब्धस्तु वञ्चितः' इत्यमरः ।

**[2]न तेन विहितं वक्त्रं कृतं सङ्ग्राममूर्धनि ।**
**न पृष्ठतः कृतश्चापि सङ्ग्रामस्तेन दुस्तरः ॥ १६ ॥**

**न तेन विहितं वक्त्रम्** इत्यत्र पृष्ठतो न विहितम् ।

**[3]ननु नामास्मि वैराटि श्रुत्वा मम गिरं सदा ।**
**भवनान्निष्पतत्याशु कस्मान्नाभ्येति ते पतिः ॥ २८ ॥**

**ननु नामास्मि वैराटि** इत्यत्र हे **वैराटि** उत्तरे **अमा** मम पुत्रेण सह अहं नास्मि ननु । अव्ययानामनेकार्थत्वात् अहं सुतम् **अमा** विना नास्मि ननु, न जीवामीति वा ।

**[4]अभिमन्यो कुशलिनो मातुलास्ते महारथाः ।**
**कुशलं चाब्रुवन् सर्वे त्वां युयुत्सुमिहागतम् ॥ २९ ॥**

**अभिमन्यो कुशलिनो मातुला** इत्यत्र **कुशलिनो** युद्धकौशलवन्तो **मातुलाः** कृष्णधृष्टद्युम्नाद्याः ।

**॥ इत्याश्वमेधिके षष्टितमोऽध्यायः ॥**

---

१. अ.को. तृ. विशेष्यनिघ्नवर्गः श्लो. ४९
२. **'न तेन विकृतम्'** इति कुं.पाठः ।
३. **'ननु नामाद्य वैराटि'** इति कुं.पाठः ।
४. BORI पृ. २३७; **'अभिमन्योऽनुशयिनो'** इति कुं.पाठः ।

॥ अथ द्विषष्टितमोऽध्यायः ॥

[१] रत्नं च यन्मरुत्तेन निहितं वसुधातले ।
तदवाप कथं चेति तन्मे ब्रूहि द्विजोत्तम ॥ २ ॥

**रत्नं च यन्मरुत्तेन** इत्यत्र **रत्नं** रत्नमयं यज्ञोपकरणम् ।

संस्मृत्य तदहं सम्यक्कर्तुमिच्छामि पाण्डवाः ।
आयत्यां च तदात्वे च सर्वेषां तद्धि नो हितम् ॥ ७ ॥

**आयत्यां च तदात्वे च** इत्यत्र **आयत्याम्** उत्तरकाले, **तदात्वे** अस्मिन् काले । [२] 'तत्कालस्तु तदात्वं स्यात् उत्तरः काल आयतिः' इत्यमरः ।

मूले निक्षिप्य कौरव्यं युयुत्सुं धृतराष्ट्रजम् ।
सम्पूज्यमानाः पौरैश्च ब्राह्मणैश्च मनीषिभिः ।
'प्रययुः पाण्डवा वीरा नियमस्थाः शुचिव्रताः' ॥ ३१ ॥

**मूले निक्षिप्य** इत्यत्र **मूले** धृतराष्ट्रस्य पादमूले ।

॥ इत्याश्वमेधिके द्विषष्टितमोऽध्यायः ॥

॥ अथ चतुःषष्टितमोऽध्यायः ॥

[३] ततः पत्राणि करकाः साश्मन्तकमनोरमाः ।
भृङ्गाराणि कटाहानि [४] कलशान्वर्धमानकाः ॥ १४ ॥

---

१. कुं.६३ अध्यायः ।; २. अ.को. द्वि. क्षत्रियवर्ग श्लो. २९
३. कुं.६५ अध्यायः । 'ततः पात्रीः सकरका बहुरूपा मनोरमाः' इति कुं पाठः ।
४. BORI पृ. २४७; $K_2$;'वर्धमानकान्' इति कुं.पाठः ।

**ततः पत्राणि करका साश्मन्तकमनोरमा** इत्यत्र **अश्मन्तकानि** सौवर्णरत्नखचितचुल्यः तैः सहिताः, मनोरमाः करका इति सम्बन्धः। [१] 'अश्मन्तमुद्धानमधिश्रयणी चुल्लिरन्तिका। अङ्गारधानिकाङ्गारशकटयपि हसन्त्यपि' इत्यमरः। 'वोले'[२] इत्यपभ्रंशभाषा। **वर्धमानकाः** अग्नेरभिवृद्धिकारकाः सौवर्णधमन्यः। 'ऊदुगोळवि'[३] इत्यपभ्रंशभाषा।

**[४]तेषां लक्षाणि चाप्यासन् महाकरपुटस्तदा।**
**नद्धं च भाजनं राजंस्तुलार्धमभवन्नृप ॥ १६ ॥**

**तेषां लक्षाणि चाप्यासन् महाकरपुटस्तदा** इत्यत्र **तदा** बिलात् उद्धारसमये। उष्ट्रादीनां बिलान्तःप्रवेशायोगात् रुद्रप्रसादेन उद्धरणकाले सर्वं लघु जातम्। पश्चात् सर्वं वस्तु पूर्ववत् गुर्वेव जातम्। अत एवोष्ट्रादीनामुपयोग इति भावः। **महाकरपुटः** स्थूलहस्ताञ्जलिः।

**द्वैपायनाभ्यनुज्ञातः पुरस्कृत्य पुरोहितम्।**
**गोरुते गोरुते[५] चापि न्यवसत्पुरुषर्षभः ॥ २१ ॥**

**गोरुते गोरुते चापि** इत्यत्र **गोः** स्थूलवृषभस्य, **रुतं** नर्दनं ध्वनिरित्यर्थः। यावति प्रदेशे श्रूयते तावत् दूरं गोरुतमित्युच्यते।

॥ इत्याश्वमेधिके चतुःषष्टितमोऽध्यायः ॥

---

१. अ.को. द्वि.वैश्यवर्गः श्लो. २९
२. कन्नडभाषाशब्दोऽयम्
३. कन्नडभाषाशब्दोऽयम्
४. B3.5,D; BORI पृ. २४७; 'तेषां रक्षणमप्यासीन्महान्करपुटस्तथा' इति कुं.पाठः।
५. 'चैव' इति कुं. पाठः।

## ।। अथ सप्तषष्टितमोऽध्यायः ।।

[१]अजातानामिषीकेयं जनित्रीं हन्त्विति प्रभो ।
अहमेव विनष्टा स्यां [२]नेदमेवङ्गतं भवेत् ।। १५ ।।

**अजातानामिषीकेयं जनित्रीं हन्त्विति प्रभो** इत्यत्र **अजातानां** स्वोदरादजातानां पुत्राणां या **जनित्री** नाममात्रेण जनित्री तामेव हन्तुं न तु पुत्रमातरम् इति यद्वाक्यं भवद्भिः पूर्वमुक्तं तद्वाक्यम् अस्य पुत्रस्य मरणे शवमातुर्मम पुत्रमातृत्वाभावात् मयैव शापरूपतया निपतति । तेन कारणेन अहमेव **विनष्टा** इषीकास्त्रेण विनष्टा स्यां तस्मादिदमपत्यमेवं गतं न भवेत् । अस्मिन्नपत्ये त्वया रक्षिते सति पुत्रमातृत्वान्ममापि रक्षणं भवेत्, नो चेत् पुत्रस्तु मृत एव । भवद्वाक्यादहमपि मरिष्यामीति भावः ।

**।। इत्याश्वमेधिके सप्तषष्टितमोऽध्यायः ।।**
**।। इत्याश्वमेधिके परीक्षदुज्जीवनं नाम अष्टषष्टितमोऽध्यायः ।।**

## ।। अथ एकोनसप्ततितमोऽध्यायः ।।

[३]तत्र मल्ला नटाः झल्ला रञ्जिकाः सौख्यशायिकाः ।
सूतमागधसङ्घाश्चाप्यस्तुवंस्तं जनार्दनम् ।। ७ ।।

**नटा झल्ला** इत्यत्र झल्लाः ज्झिल्ली प्राणिवत् नादं कुर्वन्ते वेत्रपाणयः ।

---

१. कुं.६८ अध्यायः । BORI पृ. २५६; $M_{1,2}$,$G_1$; **'अजानतीम् इषीकेयं जनित्रीं हन्त्विति प्रभो'** इति कुं.पाठः ।

२. BORI पृ. २५६; **'नायमेवं गतो भवेत्'** इति कुं.पाठः ।

३. कुं.७० अध्यायः । BORI पृ. २६१; **'तत्र मल्ला नटाश्चैव ग्रन्थिकाः'** इति कुं.पाठः ।

**रञ्जिकाः** अलङ्कारकर्तारः । **सौख्यशायिकाः** सुखशयनसम्बन्धि पाद-संवहनादिकर्तारः परिचारकविशेषाः ।

॥ इत्याश्वमेधिके एकोनसप्ततितमोऽध्यायः ॥

## ॥ अथ द्विसप्ततितमोऽध्यायः ॥

**[१] श्वेताश्वः कृष्णसारङ्गं ससाराश्वं धनञ्जयः ।**
**विधिवत् पृथिवीपाल धर्मराजस्य शासनात् ॥ ७ ॥**

**कृष्णसारङ्गं ससाराश्वम्** इत्यत्र कृष्णसारमृगवत् चित्रवर्णमङ्गं यस्य तम् अश्वम् ।

**विक्षिपन् गाण्डिवं राजन् बद्धगोधाङ्गुलित्रवान् ।**
**तमश्वं पृथिवीपाल मुदा युक्तः ससार च ॥ ८ ॥**

**बद्धगोधाङ्गुलित्रवान्** इत्यत्र [२] 'कोटिरस्याटनी गोधे तले ज्याघात-वारणे' इत्यभिधानात् तले ज्याघातवारणे चर्म गोधेत्युच्यते ।

**एवं शुश्राव वदतां गिरो जिष्णुरुदारधीः ।**
**स्वस्ति तेऽस्तु व्रजारिष्टं पुनश्चैहीति भारत ॥ १३ ॥**

**स्वस्ति तेऽस्तु व्रजारिष्टम्** इत्यत्र **अरिष्टं** क्षेमकरं पन्थानं, [३] 'रिष्टं क्षेमाशुभाभावेषु अरिष्टे तु शुभाशुभे' इत्यमरः ।

---

१. कुं.७३ अध्यायः । BORI पृ. २६९; $T_2$,$K_5$; '**श्वेताश्वः कपिकेतुश्च**' इति कुं.पाठः ।

२. अ.को. द्वि. क्षत्रियवर्गः श्लो. ८४

३. अ.को. तृ. नानार्थवर्गः श्लो ३६

[१] अपामार्जन्स राष्ट्राणि पार्थिवानां हयोत्तमः ।
शनैस्तदा परिययौ श्वेताश्वश्च महारथः ॥ २२ ॥

**अपामार्जन्स राष्ट्राणि** इत्यत्र 'मृजूष् शुद्धौ' इति धातोः **अपामार्जन्** शुद्धीकुर्वन् ।

[२] तत्र सङ्कल्पना नास्ति राज्ञामयुतशस्तदा ।
येऽयुध्यन्त महाराज क्षत्रिया हतबान्धवाः ॥ २३ ॥

**तत्र सङ्कल्पना नास्ति** इत्यत्र **सङ्कल्पना** एतावदेवेति क्लृप्तिः नास्ति । अपरिमितमित्यर्थः ।

[३] किराता विष्कृता राजन् बहवोऽसिधनुर्धराः ।
म्लेच्छाश्चान्ये बहुविधाः पूर्वं ये निकृता रणे ॥ २४ ॥

**किराता विष्कृता** इत्यत्र **विष्कृताः** आविष्कृताः ।

**॥ इत्याश्वमेधिके द्विसप्ततितमोऽध्यायः ॥**

## ॥ अथ त्रिसप्ततितमोऽध्यायः ॥

[४] स हि वीरः प्रयास्यन्वै धर्मराजेन वारितः ।
[५] अबान्धवा रणे वीर हन्तव्याः पार्थिवा इति ॥ ७ ॥

---

१. **'अवमृद्नन्स राष्ट्राणि इति'** कुं.पाठः ।
२. BORI पृ. २७१; $S_1$,$K_3$; **'तत्र सङ्गणना'** इति कुं.पाठः ।
३. **'किराता यवना'** इति कुं.पाठः ।
४. कुं.७४ अध्यायः ।
५. **'हतबान्धवा न ते पार्थ हन्तव्या पार्थिवा इति'** इति कुं.पाठः ।

**अबान्धवा रणे वीर हन्तव्या** इत्यत्र न विद्यते **बान्धवं** बन्धुत्वं येषां ते **अबान्धवाः** ।

॥ इत्याश्वमेधिके त्रिसप्ततितमोऽध्यायः ॥

## ॥ अथ चतुःसप्ततितमोऽध्यायः ॥

[१]**सहयं पाण्डुपुत्रं तु विषयान्तमुपागतम् ।**
**युयुधे भरतश्रेष्ठ यज्ञदत्तो महीपतिः** ॥ २ ॥

**सहयं** हयसहितम् ।

**विक्षरन्तं महामेघं परवारणवारणम् ।**
**शस्त्रवत् कल्पितं सङ्ख्ये** [२]**त्रिसाहं युद्धदुर्मदम्** ॥ १० ॥

**शस्त्रवत्कल्पितं सङ्ख्य** इत्यत्र दन्तद्वये शस्त्रवत्तया कल्पितम् । **त्रिसाहं** कर्णद्वयमूले पादद्वयघातं शिरस्यंकुशघातं च सहत इति त्रिसाहः गजः, तम् ।

॥ इत्याश्वमेधिके चतुःसप्ततितमोऽध्यायः ॥

## ॥ अथ षट्सप्ततितमोऽध्यायः ॥

[३]**ततो रथसहस्रेण गजानामयुतेन च ।**
**कोष्ठकीकृत्य बीभत्सुं प्रहृष्टमनसोऽभवन्** ॥ ११ ॥

१. कुं.७५ अध्यायः ।
२. BORI पृ. २७७; 'विवशं युद्धदुर्मदम्' इति कुं.पाठः ।
३. कुं.७७ अध्यायः ।

**कोष्ठकीकृत्य** इत्यत्र अन्तर्गृहवत् मध्ये स्थितं कृत्वा । 'पुंसि[१] कोष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा' इत्यमरः ।

**रासभारुणसङ्काशा धनुष्मन्तः सविद्युतः ।**
**आवृत्य गगनं मेघा मुमुर्चुर्मांसशोणितम् ॥ २० ॥**

**रासभारुणसङ्काशा** इत्यत्र रासभस्य **अरुणं** लोहितं रक्तमित्यर्थः । तस्य सङ्काशाः । **धनुष्मन्तः** इन्द्रचापवन्तः ।

॥ इत्याश्वमेधिके षट्सप्ततितमोऽध्यायः ॥

## ॥ अथ सप्तसप्ततितमोऽध्यायः ॥

[२]**एष योत्स्यामि सर्वांस्तु निवार्य शरवागुराम् ।**
**तिष्ठध्वं युद्धमनसो दर्पं शमयितास्मि वः ॥ ५ ॥**

**वागुराम्** जालं, 'वागुरा[३] मृगबन्धनि' इत्यमरः ।

[४]**तारामृगमिवाकाशं यथा देवः पिनाकधृक् ।**
**ससार तं तथा वीरो विधिवद्यज्ञियं हयम् ॥ ४५ ॥**

**तारामृगमिवाकाशम्** इत्यत्र आकाशे **तारामृगं** तारामध्ये गच्छन्तं मृगम् । यद्वा आकाशे **तारामृगं** तारं तारकासुरम् आसमन्तात् मृगयत इति तारामृगम् षण्मुखमिव । 'स्वकराग्रस्थितमृगं पिनाकधृक् देवदेव इव मणलूरपतेर्देशमुपायात् सहपाण्डवः' इत्यारभ्य अध्यायपञ्चकेऽर्जुनवधः पुनरुत्थानं च यत्सविस्तरं कथितम् इयमेव कथाप्रसङ्गादादि-

१. अ.को. तृ. नानार्थवर्गः श्लो. ४० ; २. अ.को. द्वि. शूद्रवर्गः २६
३. कुं.७८ अध्यायः ।; ४. 'ततो मृगमिवाकाशे' इति कुं.पाठः ।

पर्वणि कथिता । तद्भिरर्जुनवधो न मन्तव्यः । किन्तु अश्वमेधाश्वस्य सञ्चारसमये एकवारमेवेति ज्ञेयम् ।

**[1]परमार्चितमुच्छ्रित्य ध्वजं हंसं हिरण्मयम् ।**
**प्रययौ पार्थमुद्दिश्य [2]यो राजा बभ्रुवाहनः ॥ १६ ॥**

**ध्वजं हंसं हिरण्मयम्** इत्यत्र **हंसो** हिरण्मयः अयोरथम् । ध्वजं हिरण्मयम् ।

॥ इत्याश्वमेधिके सप्तसप्ततितमोऽध्यायः ॥

## ॥ अथ अष्टसप्ततितमोऽध्यायः ॥

**[3]नापराधोऽस्ति सुभगे नराणां बहुभार्यता ।**
**[4]नारीणां न भवत्येतत् मा ते भूद्बुद्धिरीदृशी ॥ १४ ॥**

**नारीणां न भवत्येतत्** इत्यत्र **एतत्** एतद्वत् नारीणां बहुभर्तृत्वं न भवति ।

॥ इत्याश्वमेधिके अष्टसप्ततितमोऽध्यायः ॥

## ॥ अथ एकोनाशीतितमोऽध्यायः ॥

**[5]दुर्मरं पुरुषेणेह मन्ये काले ह्यनागते ।**
**यत्र नाहं न मे माता न वियुक्तौ स्वजीवितात् ॥ २४ ॥**

---

१. कुं.७९ अध्यायः ।; २. 'स' इति कुं. पाठः ।; २. कुं.८० अध्यायः ।
४. BORI पृ. २९७; BORI, T,G; 'प्रमदानां भवत्येष' इति कुं.पाठः ।
५. कुं.८१ अध्यायः ।

**दुर्मरं पुरुषेणेह** इत्यत्र **अनागते** पूर्वमनागते अध्वनि आगतेऽपि पुरुषेण दुर्मरं मर्तुमशक्यं हि इति मन्ये । अतिसङ्कष्टे प्राप्तेऽपि मूर्खोऽपि जीवितं न जहातीति भावः ।

**।। इत्याश्वमेधिके एकोनाशीतितमोऽध्यायः ।।**

## ।। अथ अशीतितमोऽध्यायः ।।

**[१]उत्थिते पुरुषव्याघ्रे [२]पुनर्लक्ष्मीपतिः प्रभो ।**
**दिव्याः सुमनसः पुण्या ववृषे पाकशासनः ।। १४ ।।**

**पुनर्लक्ष्मीपतिः प्रभो** इत्यत्र **लक्ष्मीपतिः** स्वर्गैश्वर्याधिपतिः ।

**।। इत्याश्वमेधिके अशीतितमोऽध्यायः ।।**

## ।। अथ एकाशीतितमोऽध्यायः ।।

**[३]युधिष्ठिरस्याश्वमेधः [४]परश्चैत्र्यां भविष्यति ।**
**तत्रागच्छेः सहामात्यो मातृभ्यां सहितो नृप ।। २३ ।।**

**परश्चैत्र्यां भविष्यति** इत्यत्र **चैत्र्याम्** चैत्रमाससम्बन्धिन्यां पौर्णमास्याम् ।

**।। इत्याश्वमेधिके एकाशीतितमोऽध्यायः ।।**

---

१. **कुं.८१ अध्यायः ।**
२. BORI पृ.३०२; $D_{3.5.6}$,$G_{1.2}$,$M_2$; **'पुनर्लक्ष्मीवति प्रभो'** इति कुं.पाठः
३. **कुं.८२ अध्यायः ।**
४. BORI पृ. ३०५; $D_6$; **'परिचैत्रीम्'** इति कुं.पाठः ।

## ।। अथ द्व्यशीतितमोऽध्यायः ।।

**[१]संरक्ष्यमाणः पार्थेन [२]शरीरे फल्गुणस्य ह ।**
**मन्यमानः स्ववीर्यं तन्मागधः प्राहिणोच्छरान् ।। १४ ।।**

**संरक्ष्यमाणः पार्थेन** इत्यत्र पार्थेन शरीरे संरक्ष्यमाणः मेघसन्धिः । फल्गुणस्य **तत्** कर्म स्ववीर्यं मन्यमानः सन् प्राहिणोदिति योजना ।

**अवध्यमानः सोऽभ्यघ्नन्मागधः पाण्डवर्षभम् ।**
**तेन तस्थौ स कौरव्य लोकवीरस्य दर्शने ।। १६ ।।**

**तेन तस्थौ स कौरव्य** इत्यत्र **तेन** अर्जुनस्योपेक्षणेन **लोकवीरस्य** अर्जुनस्य **दर्शने** दृष्टिपथे स तस्थौ ।

**सा गदा शकलीभूता विशीर्णमणिबन्धना ।**
**[३]व्याली निर्मुच्यमानेव पपात धरणीतले ।। २१ ।।**

**व्याली निर्मुच्यमानेव** इत्यत्र निर्मुच्यमाना **व्याली** = सर्पसम्बन्धिनी त्वक्, निर्मोकः ।

**।। इत्याश्वमेधिके द्व्यशीतितमोऽध्यायः ।।**

## ।। अथ चतुरशीतितमोऽध्यायः ।।

**[४]ततो ययौ भीमसेनः प्राज्ञैः स्थपतिभिः सह ।**
**ब्राह्मणानग्रतः कृत्वा कुशलान् यज्ञकर्मणि ।। १० ।।**

---

१. **कुं.८३ अध्यायः ।**
२. BORI पृ. ३०८; $S_1$,$K_3$; **'शरीरे सव्यसाचिना'** इति कुं.पाठः ।
३. BORI पृ. ३०९; **'व्याली विमुच्यमानेव'** इति कुं.पाठः ।
४. **कुं.८६ अध्यायः ।**

**प्राज्ञैः स्थपतिभिः** इत्यत्र **स्थपतिभिः** कारुभिः। [१]'स्थपतिः कारुभेदे च' इत्यमरः ।

[२]**युतं सालवनग्रामं सप्रतोलीविटङ्कितम् ।**
**मापयामास कौरव्यो यज्ञवाटं यथाविधि ॥ ११ ॥**

**युतं सालवनग्रामम्** इत्यत्र सालवनेन सहितं ग्रामं **सालवन-ग्रामम्**। **प्रतोली** रथयोग्यवीथिः। [३]'रथ्या प्रतोली विशिखा' इत्यमरः। **विटङ्कितं** विटङ्कं कपोतपालिका, [४]'कपोतपालिकायां तु विटङ्कं पुन्नपुंसकम्' इत्यमरः। ताभ्यां सहितं सप्रतोलीविटङ्कितम्। **मापयामास** मानदण्डेन प्रमाणीचकार।

**सदः स पत्नीसदनं साग्नीध्रमपि चोत्तरम् ।**
**कारयामास विधिवद्धेमरत्नविभूषितम् ॥ १२ ॥**

**साग्नीध्रमपि चोत्तरम्** इत्यत्र अग्निं धारयन्तीति **अग्नीध्राः** यज्ञ-कुण्डानि ऋत्विजो वा। तेषां सम्बन्धिनी शाला **आग्नीध्रा**, तया सहितम्, **उत्तरम्** उत्कृष्टं कारयामासेति योजना।

[५]**तथा तस्यानुगा यज्ञे धर्मराजस्य धीमतः ।**
**समाजग्मुर्मुनिगणा बहवो ब्रह्मवादिनः ॥ २२ ॥**

---

१. अ.को. तृ. नानार्थवर्गः श्लो. ६१

२. BORI पृ. ३१७; $B_{1.3.5}$;$D_5$; **'तं ससालचयं श्रीमत्सप्रतोलीसुघट्टितम्'** इति कुं.पाठः ।

३. अ.को. द्वि. पुरवर्गः श्लो. ३ ; ४. अ.को. द्वि. पुरवर्गः श्लो. १५

५. **'तथा तस्मिन्महायज्ञे'** इति कुं.पाठः ।

**तथा तस्यानुगा यज्ञ** इत्यत्र अनुकूलतया आगच्छन्ति इति **अनुगाः** ।

॥ इत्याश्वमेधिके चतुरशीतितमोऽध्यायः ॥

## ॥ अथ पञ्चाशीतितमोऽध्यायः ॥

**[१]यूपांश्च शास्त्रपठितान् [२]तारवान् हेमभूषितान् ।**
**उपाकृतान् यथाकालं विधिवद्भूरिवर्चसः ॥ ३१ ॥**

**तारवान् हेमभूषितान्** इत्यत्र **तारवान्** यूपयोग्यखदिरादितरु-सम्बन्धिनः ।

**अनिशं दीयते च स्म तत्र भोज्यं पृथग्विधम् ।**
**ब्राह्मणानां विशां चैव [३]बहुनिष्ठान्नमृद्धिमत् ॥ ३६ ॥**

**बहुनिष्ठान्नमृद्धिमत्** इत्यत्र बहु नितराम् अन्नोपरि परितश्च स्थाप्यत इति **निष्ठान्नम्** मुद्गशाकादि तद्युक्तम् । 'अन्ननिष्ठोत्कर्षे व्यवस्थायाम्' इति वचनात् उत्कृष्टान्नम् । निष्ठया नियमेन कृतमन्नं वा ।

**अन्नस्य सुबहून् राजन्नुत्सर्गान् पर्वतोपमान् ।**
**दधिकुल्याश्च ददृशुः सर्पिषश्च ह्रदाञ्जनाः ॥ ३८ ॥**

**उत्सर्गाः** राशयः अन्नस्य । **कुल्याः** कृत्रिमसरितः [४]'कुल्याल्पा कृत्रिमा सरित्' इत्यमरः । **॥ इत्याश्वमेधिके पञ्चाशीतितमोऽध्यायः ॥**

---

१. कुं पाठानुसारेण अत्र पूर्वाध्यायएवानुसरति ।
२. BORI पृ. ३२०; $G_3$,M; **'दारवान्हेमभूषितान्'** इति कुं.पाठः ।
३. BORI पृ. ३२०; M; **'बहुमृष्टान्नमृद्धिमत्'** इति कुं.पाठः ।
४. अ.को. प्र. वारिवर्गः श्लो. ३४

## ॥ अथ षडशीतितमोऽध्यायः ॥

**आगमद्द्वारकावासी समाप्तः पुरुषो नृप ।[1]**
**योऽद्राक्षीत्पाण्डवश्रेष्ठं बहुसङ्ग्रामकर्शितम् ॥ ९ ॥**

**समाप्तः पुरुषो नृप** इत्यत्र सम्यगाप्तः **समाप्तः** । अर्जुनेन समं प्राप्तो वा ।

**इदमाह महाराज पार्थवाक्यं नरेश्वरः ।**
**यद्वाच्यं[2] भवता कृष्ण काले वाक्यमिदं मम ॥ १४ ॥**

**यद्वाच्यं भवता कृष्ण** इत्यत्र हे कृष्ण, त्वया धर्मराजसमीपे यद्वाक्यं वाच्यं तदिदं वाक्यं मया पूर्वमेव त्वां प्रति **काले** पूर्वकाल एव वाच्यम् इति कृत्वा द्वारकां प्रत्येव मनुष्यः प्रेषितः ।

**इत्येतद्वचनाद्राजा विज्ञाप्यो मम मानद ।**
**न[3] तदाप्यायिकं न स्याद् अर्घ्यानयने[4] भवेत् ॥१६॥**

**न तदाप्यायिकं न स्यात्** इत्यत्र **तत्** अर्घ्यानयनम् । आगतानां राज्ञाम् अर्घ्यानयनं भवान् करोतीति यत्, तत् **आप्यायिकं** तृप्तिकरं न स्यादिति न, किन्तु धर्मराजेन स्वेनैव अर्घ्यमानीतमिति सर्वे राजानः तृप्ता भवन्तीति भावः ।

॥ इत्याश्वमेधिके षडशीतितमोऽध्यायः ॥

---

१. कुं.८७ अध्यायः ।
२. 'वाच्यो युधिष्ठिरः' इति कुं.पाठः ।
३. 'तथा चात्ययिकं न स्यात्' इति कुं.पाठः ।
४. BORI पृ. ३२३; 'अर्घाहरणेऽभवत्' इति कुं. पाठः ।

## ।। अथ सप्ताशीतितमोऽध्यायः ।।

[१] **न ह्यस्य नृपते किञ्चिदनिष्टमुपलक्षये ।**
**ऋते पुरुषसिंहस्य पिण्डिकेऽस्याधिके यतः ॥ ८ ॥**

**पिण्डिकेऽस्याधिके यत** इत्यत्र **पिण्डिके** गुल्फौ । [२] 'पदङ्घ्रिश्च-रणोऽस्त्रियाम् । तद्ग्रन्थी पिण्डिके (घुटिके) गुल्फौ' इत्यमरः ।

।। इत्याश्वमेधिके सप्ताशीतितमोऽध्यायः ।।

## ।। अथ अष्टाशीतितमोऽध्यायः ।।

[३] **अहीनो नाम राजेन्द्र क्रतुस्तेऽयं विकल्पवान् ।**
**बहुत्वात्काञ्चनस्यास्य ख्यातो बहुसुवर्णकः ॥ १५ ॥**

**क्रतुस्तेयं विकल्पवान्** इत्यत्र विविधः कल्पो **विकल्पः** तद्वान् ।

**कृत्वा प्रवर्ग्यं धर्मज्ञा यथावद्द्विजसत्तमाः ।**
**चक्रुस्ते विधिवद्राजंस्तथैवाभिषवं द्विजाः ॥ २३ ॥**

**कृत्वा प्रवर्ग्यम्** इत्यत्र **प्रवर्ग्यं** प्रवर्गाख्यं कर्म कृत्वा । **अभिषवं** सोमरसस्रवणम् ।

**अभिषूय ततो राजन्सोमं सोमपसत्तमाः ।**
**सवनानि आनुपूर्व्येण चक्रुः शास्त्रानुसारिणः ॥ २४ ॥**

**सवनानि** प्रातःसवनादिसवनानि ।

---

१. कुं.८८ अध्यायः । ; २. अ.को. द्वि. मनुष्यवर्गः श्लो ७१,७२
३. कुं.८९ अध्यायः ।

**संस्तरे कुशलाश्चापि सर्वकार्याणि याजकाः ।**
**दिवसे दिवसे चक्रुर्यथाशास्त्रानुदर्शनात् ॥ २७ ॥**

**संस्तरे** कुशानां संस्तरणे ।

**इष्टकाः काञ्चनीश्चात्र चयनार्थं कृता विभो ।**
**शुशुभे चयनं तच्च दक्षस्येव प्रजापतेः ॥ ३३ ॥**

**चयनार्थम्** अग्निसङ्ग्रहार्थम् ।

[१] **चतुश्चैत्यः स तस्यासीदष्टादशकरात्मकः ।**
**स रुक्मपक्षो निचितस्त्रिकोणो गरुडाकृतिः ॥ ३४ ॥**

**चतुश्चैत्यः स तस्यासीत्** इत्यत्र चिताः इष्टकाः प्रत्यङ्गं चतुश्चतुरिष्टका सम्बन्धी चतुश्चैत्यः ।

**॥ इत्याश्वमेधिके अष्टाशीतितमोऽध्यायः ॥**

## ॥ अथ एकोननवतितमोऽध्यायः ॥

[२] **ततः सञ्ज्ञप्य तुरगं विधिवद्याजकर्षभाः ।**
**उपसंवेशयाश्चक्रुस्ततस्तां द्रुपदात्मजाम् ।**
**कलाभिस्तिसृभी राजन्यथाविधि मनस्विनीम् ॥ २ ॥**

**ततः सञ्ज्ञप्य तुरगम्** इत्यत्र **सञ्ज्ञप्य** हिंसयित्वा । [३]'निषूदनं निहिंसनं नर्वासनं सञ्ज्ञपनम्' इत्यमरः ।

---

१. **'चतुश्चित्यश्च'** इति कुं.पाठः ।

२. कुं.९० अध्यायः ।

३. अ.को. द्वि. क्षत्रियवर्गः श्लो. ११३.

**कलाभिस्तिसृभी राजन्** इत्यत्र **तिसृभिः कलाभिः** इन्द्राग्निसूर्यकलाभिः सहितां त्रिविधकलासन्निधानात्सभां सर्वान्भासयन्तीमित्यर्थः ।

**[१]भक्ष्याः षडवराङ्गाणां दीयतां भुज्यतां तथा ।**
**पशूनां वध्यतां चैव नान्तं ददृशिरे जनाः ॥ ४० ॥**

**भक्ष्याः षडवराङ्गाणाम्** इत्यत्र **अवराङ्गाणाम्** अन्धपङ्ग्वादीनाम् । षट् षट् षट् च **भक्ष्याः** अपूपाः भोज्यलेह्यपेयैः सह गत्वा गत्वा दीयन्ते ।

**दीयतां भुज्यतां चापि तत्र शब्दो महानभूत् ।**
**दीयतां दीयतां चेति दिवारात्रमवारितम् ॥ ४२ ॥**

दीयतां भुज्यतामिति नादश्च श्रूयते ।

अश्वान् पुरतः प्रापयित्वा तन्निरोद्धॄणां विजये अश्वप्राधान्यादश्वमेधत्वं, स्वयमेव चतुर्दिक्षु गत्वा राज्ञो जित्वाश्वमेधकरणे राजप्राधान्याद्राजसूयत्वमिति विवेकः ।

**॥ इत्याश्वमेधिके एकोननवतितमोऽध्यायः ॥**

## ॥ अथ एकनवतितमोऽध्यायः ॥

**[२]धर्मक्षेत्रे कुरुक्षेत्रे धर्मज्ञैर्बहुभिर्वृते ।**
**उञ्छवृत्तिर्द्विजः कश्चित् [३]कापोतिरभवत्तदा ॥ २ ॥**

---

१. BORI पृ. ३३७; $K_{2.4.5}$; **'भक्ष्यखाण्डवरागाणां क्रियताम्'** कुं. पाठः ।
२. **कुं.९२ अध्यायः ।**
३. BORI पृ. ३४१; $B_{1.3.5}$; **'कापोतिरभवत् पुरा'** इति कुं.पाठः ।

**उञ्छवृत्तिर्द्विजः कश्चित् कापोतिरभवत्तदा** इत्यत्र **कापोतिः** कपोत-वद्वृत्तिमान् ।

**कृतजप्याह्निकास्ते तु हुत्वा चाग्निं यथाविधि ।**
**कुडुपं कुडुपं सर्वे व्यभजन्त तपस्विनः** ॥ १२ ॥

'कुडवं कुडवम्' इति अपभ्रंशभाषा ।

**कुडुपं कुडुपं सर्व** इत्यत्र **कुडुप**पदेन प्रस्थस्य चतुर्भागेष्वेको भागः । 'कुडते'[1] इत्यपभ्रंशभाषा ।

**सब्रह्मचर्यं गोत्रं ते तस्य ख्यात्वा परस्परम् ।**
**कुटीं प्रवेशयामासुः क्षुधार्तमतिथिं तदा** ॥ १६ ॥

**कुटीं प्रवेशयामासुः** इत्यत्र **कुटीं** मन्दिरम् । 'गेहं कुटीमन्दिरम्'[2] इति हलः ।

**इदमर्घ्यं च पाद्यं च बृसी चेयं तवानघ ।**
**शुचयः सक्तवश्चेमे नियमोपार्जिताः प्रभो** ॥ १७ ॥

**बृसी** व्रतिनामासनम् । 'व्रतिनामासनं बृसी'[3] इत्यमरः ।

**सत्यं रतिश्च धर्मश्च स्वर्गश्च गुणनिर्जितः ।**
**[4]स्त्रीणां पतिसमाधानं काङ्क्षितं च द्विजर्षभ** ॥ २८ ॥

---

१. इति तौळवभाषायाम् ।
२. ह.को. २-१९१
३. अ.को. द्वि. ब्रह्मवर्गः श्लो. ४६
४. BORI पृ. ३४४; $K_{1.2}$,$D_{2.4}$; **'स्त्रीणां पतिसमाधीनम्'** इति कुं.पाठः ।

**स्त्रीणां पतिसमाधानम्** इत्यत्र **पतिसमाधानं** पत्युः समाधानं चित्त-सौहित्यकरणं हि ।

**[१] भ्रातुर्मातुः पितुर्बीजं दैवतं परमं पतिः ।**
**भर्तुः प्रसादान्नारीणां रतिपुत्रफलं तथा ॥ २९ ॥**

**भ्रातुर्मातुः पितुर्बीजम्** इत्यत्र भ्रातुर्मातुः पितुश्च पिण्डदायक-सन्तानाङ्कुरहेतुत्वात् **बीजं** बीजस्थानीयः ।

**[२] धर्मं याति तथा त्रेता वह्नित्रेता तथैव च ।**
**तथैव पुत्रपौत्राणां स्वर्गस्त्रेता किलाक्षयः ॥ ४८ ॥**

**धर्मं याति तथा त्रेता** इत्यत्र पौत्रेण स्वपिता स्वपितामहः स्व-प्रपितामहश्चेति त्रेता **धर्मं** पुण्यं याति । वह्नित्रेता च **धर्मं** धारणं याति । तथैव पुत्राणां पुत्रपितुश्चेति त्रेता स्वर्गे अक्षयः भवति किल । (देव्याः शस्ताः ।)

**न विस्मयस्ते नृपते [३] यज्ञे कार्यः कदाचन ।**
**ऋषिकोटिसहस्राणि तपोभिर्ये दिवं गताः ॥ ९७ ॥**

**न विस्मयस्ते नृपते यज्ञे कार्यः कदाचन** इत्यत्र नकुलवाक्यं श्रुत्वा यज्ञे **विस्मयः** विशेषेणापहासः त्वया कदाचन न कार्यः । 'ऋषिकोटि-सहस्राणि तपोभिः ये दिवं गता' इति यत् नकुलेनोक्तं तेन कारणेन यज्ञे **विस्मयः** विशेषेणापहासः त्वया न कर्तव्यः । धनरहितानां तपसा

---

१. BORI पृ. ३४४; T,G; **'ऋतुर्मातुः'** इति कुं.पाठः ।
२. **'धर्माद्या हि यथा'** इति कुं.पाठः ।
३. BORI पृ. ३५२; M,$K_3$; **'यज्ञे कार्यः कथञ्चन'** इति कुं.पाठः ।

लोकाः । राज्ञां तु यज्ञ एव श्रेयस्करः । अतो धर्मराजकृतयज्ञस्य सक्तुप्रस्थं कलामपि नार्हतीत्येव योजना । अन्यथा उत्तराध्यायोक्तयज्ञप्रशंसा विरुद्धा स्यादिति ज्ञेयम् ।

॥ इत्याश्वमेधिके एकनवतितमोऽध्यायः ॥

## ॥ अथ द्विनवतितमोऽध्यायः ॥

**[१]शतक्रतुस्तु तद्वाक्यमृषिभिस्तत्त्वदर्शिभिः ।**
**उक्तं न प्रतिजग्राह [२]मानमोहवशानुगः ॥ १७ ॥**

**उक्तं न प्रतिजग्राह मानमोहवशानुग** इत्यत्र **मानं** यज्ञविधायकवेदरूपप्रमाणं तत्र **मोहो** मिथ्याज्ञानं तस्य वशाः ऋषयः, तेषामनुगो भूत्वा **उक्तम्** ऋषिभिरुक्तं वचनं न प्रतिजग्राहेति योजना । अवैदिकपाषण्डमतमेतदित्युपेक्षितवानिति भावः ।

**तेषां विवादः सुमहाञ्शक्रयज्ञे तपस्विनाम् ।**
**जङ्गमैः स्थावरैर्वाऽपि यष्टव्यमिति भारत ॥ १८ ॥**

**जङ्गमैः** अजाश्वादिभिः । **स्थावरैः** यवबीजादिभिः ।

**महाभाग कथं यज्ञेष्वागमो नृपसत्तम ।**
**यष्टव्यं पशुभिर्मेध्यैरथो बीजैरजैरिति ॥ २० ॥**

**पशुभिः** अजाश्वादिपशुभिः । **अजैः** अजातफलैः **बीजैः** यवादिबीजैः। जङ्गमस्थावरैरित्यस्यैव विवरणमिदम् ।

---

१. कुं.९३ अध्यायः ।
२. BORI पृ. ३५४; **'मानमोहवशं गतः'** इति कुं.पाठः ।

**तच्छ्रुत्वा तु वसुस्तेषामविचार्य बलाबलम् ।**
**यथोपनीतैर्यष्टव्यमिति प्रोवाच पार्थिवः ॥ २१ ॥**

**यथोपनीतैः** यथाप्राप्तैः पशुषु प्राप्तेषु पशुभिर्यज्ञः कर्तव्यः । बीजेषु प्राप्तेषु बीजैः कर्तव्य इति ऋषिपक्षनिपातेन सामान्येनैवोक्तवान् । न तु वैदिकयज्ञैः परमादरं कृतवानिति भावः ।

**धर्मसंशयमापन्नान् सत्यं ब्रूहि महामते ।**
**महाभाग कथं यज्ञेष्वागमे[1] नृपतिस्थिते ॥ २० ॥**

**आगमे नृपतिस्थित** इत्यत्र नृपतिषु स्थिते आगमे सत्यपि नृपति-पक्षपातिन्यागमे सत्यपीत्यर्थः ।

**उञ्छं मूलं फलं शाकमुदपात्रं तपोवनम्[2] ।**
**दानं विभवतो दत्त्वा नराः स्वर्यान्ति धार्मिकाः ॥ ३२ ॥**

**तपोवनम्** इत्यत्र **अवनं** रक्षकं **तपः** पुण्यं दत्वा । **विभवतः** विभवे सति दानं वा इति ।

**॥ इत्याश्वमेधिके द्विनवतितमोऽध्यायः ॥**

## ॥ अथ त्रिनवतितमोऽध्यायः ॥

**[3]यदि द्वादशवर्षाणि न वर्षिष्यति वासवः ।**
**स्पर्शयज्ञं करिष्यामि विधिरेष सनातनः ॥ १८ ॥**

**स्पर्शयज्ञम्** पूजार्थं सालग्रामादिस्पर्शयज्ञः, तम् ।

---

१. **‘आगमो नृपसत्तम’** इति कुं.पाठः ।; २. **‘तपोधनाः’** इति कुं.पाठः ।
३. कुं.९४ अध्यायः ।

**यदि द्वादशवर्षाणि न वर्षिष्यति वासवः ।**
**व्यायामेनाहरिष्यामि यज्ञानेतान्यतव्रतः ॥ १९ ॥**

**व्यायामः** शारीरक्लेशेन तीर्थयात्रा ।

**॥ इत्याश्वमेधिके त्रिनवतितमोऽध्यायः ॥**

## ॥ अथ चतुर्नवतितमोऽध्यायः ॥

**तत्पयः[१] स्थापयामास नवे भाण्डे दृढे शुचौ ।**
**तच्च क्रोधं[२] स्वरूपेण पिठरं पर्यकर्षयत् ॥४॥**

**तच्च क्रोधं स्वरूपेण** इत्यत्र **क्रोधः** क्रोधाभिमानी दैत्यः ।

**इत्युक्तो जातसंत्रासस्तत्रैवान्तरधीयत ।**
**पितॄणामभिषङ्गात्तु[३] नकुलत्वमुपागतः ॥११॥**

**पितॄणामभिषङ्गात्तु** इत्यत्र **अभिषङ्गात्** शापात् ।

**॥ इत्याश्वमेधिके चतुर्नवतितमोऽध्यायः ॥**

## ॥ अथ पञ्चनवतितमोऽध्यायः ॥

**वैशम्पायन उवाच –**
**पश्चिमेनाश्वमेधेन[४] यदा स्नातो युधिष्ठिरः ।**
**तदा राजा नमस्कृत्य केशवं पुनरब्रवीत् ॥ २ ॥**

---

१. कुं.९५ अध्यायः । ; २. '**क्रोधो नकुलरूपेण**' इति कुं.पाठः ।
३. BORI पृ. ३६३; '**पितॄणामभिषङ्गाच्च**' इति कुं.पाठः ।
४. कुं.९६ अध्यायः ।

**पश्चिमेनाश्वमेधेन** इत्यत्र **पश्चिमेन** सर्वेषामश्वमेधानामन्तिमेन ।

**जन्मान्तरसहस्रेषु तपसा भावितात्मनाम् ।**
**[1]मद्भक्तिर्विद्यते तात मनुष्याणां न संशयः ।। ४७ ।।**

**मद्भक्तिर्विद्यते तात** इत्यत्र **विद्यते** लभ्यते । 'विद्लृ लाभे' इति धातुः ।

**तमोमूलोऽहमव्यक्तो रजोमध्ये प्रतिष्ठितः ।**
**ऊर्ध्वं सत्त्वं विना लोभं [2]ब्रह्मादिस्तम्बसंहितः ।। ५३ ।।**

**ब्रह्मादिस्तम्बसंहित** इत्यत्र ब्रह्मादिस्तम्बपर्यन्तजीवेषु **संहितः** सन्निहितः ।

**मम चैवान्धकारस्य मार्गितव्यस्य नित्यशः ।**
**[3]निर्वाणस्येव दीपस्य गतिर्नैवोपलभ्यते ।। ६८ ।।**

**निर्वाणस्येव दीपस्य** इत्यत्र **निर्वाणस्य** नष्टस्य ।

**किञ्चात्र बहुनोक्तेन सत्यमेतद्ब्रवीमि ते ।**
**यद्भूतं [4]यद्भविष्यद्वा तत्सर्वमहमेव तु ।। ७१ ।।**

**यद्भूतं यद्भविष्यद्वा तत्सर्वमहमेव तु** इत्यत्र [5]'न तदस्ति क्वचिद्राजन्

---

१. BORI पृ. ३७३; $G_3$,$M_4$; **'भक्तिरुत्पद्यते'** इति कुं.पाठः ।
२. **'ब्रह्मादिस्तम्बपर्यतः'** इति कुं.पाठः ।
३. BORI पृ. ३७४; $M_2$;**'प्रशान्तस्येव'** इति कुं.पाठः ।
४. **'यद्भविष्यच्च'** इति कुं.पाठः ।
५. **पर्व.९६ श्लो. ६९**

यत्र नाहं प्रतिष्ठितः’ इति प्रागुक्तत्वात्। ‘ओ हाक् त्यागे’ इति धातोश्च तत्सर्वम् **अहं** मां त्यक्तुमशक्तम्।

**॥ इत्याश्वमेधिके वैष्णवधर्मशास्त्रे पञ्चनवतितमोऽध्यायः ॥**

## ॥ अथ षण्णवतितमोऽध्यायः ॥

**[१]सायम्प्रातर्हुताशाश्च शूद्रभोजनवर्जिताः।**
**डम्भानृतविमुक्ताश्च स्वदारनिरताश्च ये ॥ १६ ॥**

**सायम्प्रातर्हुताशाश्च** इत्यत्र हुतशेषमश्नन्तीति **हुताशाः**।

**ख्यापनेनानुतापेन प्रायः पापं विनश्यति।**
**[२]तथाकृतश्च राजेन्द्र धर्मो नश्यति मानद ॥ ४४ ॥**

**तथाकृतश्च राजेन्द्र** इत्यत्र तथा ख्यापनेन बहु द्रविणं गतमिति अनुतापेन च कृतः।

**॥ इत्याश्वमेधिके षण्णवतितमोऽध्यायः ॥**

## ॥ अथ सप्तनवतितमोऽध्यायः ॥

**[३]वृषलीपतये दत्तं यद्दत्तं शस्त्रजीविने।**
**भृतकाय च यद्दत्तं व्यालग्राहिहृतं च यत् ॥ २३ ॥**

**व्यालग्राहिहृतं च यत्** इत्यत्र [४]‘विषवैद्यो जाङ्गुलिको व्यालग्राह्यहितुण्डिक’ इत्यभिधानात् **व्यालग्राही** सर्पग्राही गारुडिक इत्यर्थः।

---

१. कुं.९७ अध्यायः।; २. ‘तथा कृतस्तु’ इति कुं.पाठः।
३. कुं.९८ अध्यायः।; ४. अ.को. प्र. पातालभोगिवर्ग श्लो. ११

**स्त्रीजिताय च यद्दत्तं यद्दत्तं राजसेविने ।**
**गणकाय च यद्दत्तं यच्च कारणिकाय च ॥ २२ ॥**

**यच्च कारणिकाय च** इत्यत्र **कारणिकाय** शूद्रायां वैश्याज्जाताय । [१]'शूद्राविशोस्तु करण' इत्यमरः ।

**तमोनिविष्टचित्तेन दत्तं दानं तु यद्भवेत् ।**
**तदस्य फलमश्नाति नरो गर्भगतो नृप ॥ ४१ ॥**

**ईर्ष्यामत्सरसंयुक्तो डम्भार्थं चार्थकारणात् ।**
**ददाति दानं यो मर्त्यो बालभावे तदश्नुते ॥ ४२ ॥**

'तमोनिविष्टचित्तेन' इति श्लोकद्वयस्य **तम** ईर्ष्यादिदोषदूषितदान-कारित्वात् गर्भे बाल्ये च दुःखशबलसुखमश्नातीति भावः ।

**[२]भोक्तुं भोगानशक्तस्तु व्याधिभिः पीडितो भृशम् ।**
**ददाति दानं यो मर्त्यो वृद्धभावे तदश्नुते ॥ ४३ ॥**

**भोक्तुं भोगानशक्तस्तु** इत्यत्र यः तस्मै इति योग्यपदाध्याहारेण योजना ।

**सम्बन्धिने च यद्दत्तं प्रमत्ताय च पाण्डव ।**
**[३]लोभादितरपात्राय तद्दानं राजसं स्मृतम् ॥ ५० ॥**

**लोभादितरपात्राय** इत्यत्र **लोभादितरः** अतिशयेन लोभादिमान् तस्मै पात्राय ।

---

१. अ.को. द्वि. शूद्रवर्ग श्लो. २; २. '**भोक्तुं भोगमशक्तस्तु**' इति कुं.पाठः ।
३. BORI पृ. ३७९; $M_4$; '**फलार्थिभिरपात्राय**' इति कुं.पाठः ।

**[1] येषां दाता प्रतीक्षेत सहस्रस्येव लम्भनम् ।**
**भुक्तशेषस्य भक्तस्य [2] तान्निमन्त्रय भारत ॥ ६५ ॥**

**येषां दाता प्रतीक्षेत सहस्रस्येव लम्भनम्** इत्यत्र **येषां** ब्राह्मणानां दाता । **प्रति** एकैकं ब्राह्मणं प्रति **सहस्रस्य** ब्राह्मणानां सहस्रस्य **लम्भनं** प्राप्तिमिव ईक्षेत । एकस्मिन् योग्ये ब्राह्मणे आगते सति सहस्रं ब्राह्मणा आगता इति बुद्धिः कार्येत्यर्थः ।

**भुक्तशेषस्य भक्तस्य तान्निमन्त्रय भारत** इत्यत्र **भुक्तशेषस्य** भक्तस्य अन्नस्यार्थो दरिद्राणाम् ।

**आमन्त्र्य तु निराशानि न कर्तव्यानि भारत ।**
**कुलानि सुदरिद्राणि तेषामाशा हता भवेत् ॥ ६६ ॥**

**तेषाम् आशा हता भवेत्** इत्यत्र **भवेत्** अभिभवेत् ।

**तेषां तु पावनायाहं नित्यमेव युधिष्ठिर ।**
**[3] उभे सन्ध्येऽनुतिष्ठामि ह्यस्कन्नं तद् व्रतं मम ॥ ६८ ॥**

**उभे सन्ध्येऽनुतिष्ठामि** इत्यत्र उभे सन्ध्ये **अनुतिष्ठामि** अनुसृत्य वर्ते।

**[4] भूष्णुः** भवितुमिच्छुः । [5] 'भूष्णुर्भविष्णुर्भविता' इत्यमरः ।

॥ इत्याश्वमेधिके सप्तनवतितमोऽध्यायः ॥

---

१. BORI पृ. ३८०; $M_4$; **'येषां दाराः प्रतीक्षन्ते'** इति कुं.पाठः ।
२. BORI पृ. ३८०; $G_3$,$M_4$; **'तान्निमन्त्रय पाण्डव'** इति कुं.पाठः ।
३. **'उभे सन्ध्येऽधितिष्ठामि'** इति कुं.पाठः ।
४. एतत्प्रतीकघटितः श्लोकः मुद्रितकोशेषु नोपलभ्यते ।
५. अ.को. तृ. विशेष्यनिघ्नवर्गः श्लो. २९

## ।। अथ अष्टनवतितमोऽध्यायः ।।

[१] **कानीनश्च सहोढश्च तथोभौ कुण्डगोलकौ ।**
**आरूढपतिताज्जातः पतितस्यापि यः सुतः ।। १५ ।।**

**कानीनश्च सहोढश्च** इत्यत्र **सहोढः** बहूनां वराणां सहैव विवाहे सति अविवेकाद् व्यस्तस्तभार्यायां जातः सहोढ इत्युच्यते । **आरूढपतितात्** यत्याश्रमभ्रष्टात् पुरुषात् ।

**शूद्रयोनौ पतेद्बीजं हाहाशब्दं द्विजन्मनः ।**
**कुर्यात्पुरीपगर्तेषु पतितोऽस्मीति दुःखितः ।। १८ ।।**

**शूद्रयोनौ पतेद्बीजम्** इत्यत्र **बीजं** बीजभूतवीर्याभिमानी देवता ।

**सावित्रीमात्रसारोऽपि वरो विप्रः सुयन्त्रितः ।**
**नायन्त्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी ।। ३२ ।।**

**सावित्रीमात्रसारोऽपि वरो विप्रः सुयन्त्रित** इत्यत्र **यन्त्रणं** नियमः, तद्वान् **सुयन्त्रितः** ।

[२] **मृतांस्तान् करपत्रेण यमदूता महाबलाः ।**
**निकृन्तन्ति यथाकामं सूत्रमार्गेण शिल्पिनः ।। ४८ ।।**

**मृतांस्तान् करपत्रेण** इत्यत्र **करपत्रेण** क्रकचेन । 'क्रकचः करपत्रं स्यात्'[३] इति हलः ।

---

१. कुं.९९ अध्यायः ।
२. BORI पृ. ३८४; $T_2$,$G_3$,$M_4$: **'मृतांश्चात्र परत्रेमान्यमदूता'** कुं.पाठः ।
३. ह.को. २-४७५

**आक्रम्योरसि पादेन क्रूरः संरक्तलोचनः ।**
**अग्निवर्णैस्तु संदंशैर्यमो जिह्वां समुद्धरेत् ॥ ५० ॥**

**अग्निवर्णैस्तु संदंशैः** इत्यत्र सम्यक् दशन्त्युभयतः सङ्गृह्णन्तीति **संदंशाः** अयोमययन्त्रविशेषाः तैः । 'इक्कळ'[१] इत्यपभ्रंशभाषा ।

**बहुवर्षसहस्राणि पच्यमानस्त्ववाक्छिराः ।**
**नावमुच्येत दुर्मेधा न[२] तस्य क्षीयते मतिः ॥ ५४ ॥**

**न तस्य क्षीयते मतिः** इत्यत्र **मतिः** एतादृशपापेनैवमभूदिति बुद्धिः ।

**[३]ब्राह्मणायवगुर्यैव व्रजन्वै वधकाङ्क्षया ।**
**शतवर्षसहस्राणि तामिस्रे परिपच्यते ॥ ५५ ॥**

**ब्राह्मणायवगुर्यैव** इत्यत्र 'गुरी उद्यमने' इति धातोः अवगुरणं कृत्वा **अवगुर्य** गालीं दत्वेत्यर्थः ।

**तस्मान्नाकुशलं ब्रूयात् न[४] शुग्धां गिरमीरयेत् ।**
**न ब्रूयात् परुषां वाणीं न चैवैनानतिक्रमेत् ॥ ५७ ॥**

**न शुग्धां गिरमीरयेत्** इत्यत्र शुचं दुःखं दधातीति **शुग्धा** । तां गिरं न ईरयेत् ।

॥ इत्याश्वमेधिके अष्टनवतितमोऽध्यायः ॥

---

१. कन्नडभाषाशब्दोऽयम् ।
२. BORI पृ. ३८५; $T_1$,$G_2$,$M_2$; **'न तस्य क्षीयते गतिः'** इति कुं.पाठः ।
३. BORI पृ. ३८५; $M_3$; **'ब्राह्मणान्वा विचार्यैव'** इति कुं.पाठः ।
४. **'न शुष्कां गतिमीरयेत्'** इति कुं.पाठः ।

## ।। अथ एकोनशततमोऽध्यायः ।।

**[१] शरीराच्चाल्यते जीवो ह्यवशो मातरिश्वना ।**
**निर्गतो वायुभूतस्तु षट्कोशात्तु कलेवरात्** ।। १५ ।।

**षट्कोशात्तु कलेवरात्** इत्यत्र त्वक्चर्मणोरैक्याभिप्रायेण षट्कोशादित्युक्तम् ।

**सोऽन्तरात्मा देहवतामष्टाङ्गो यस्तु सञ्चरेत् ।**
**छेदनाद्भेदनाद्दाहात्ताडनाद्वा न नश्यति** ।। १७ ।।

**सोऽन्तरात्मा देहवतामष्टाङ्गो यस्तु सञ्चरेत्** इत्यत्र **अष्टाङ्गः** अणिमाद्यष्टैश्वर्याणि **अङ्गेषु** पादाद्यङ्गेषु यस्य स तथोक्तः । छेदनाद्यभावे हेतुगर्भमिदं विशेषणम् । **स** ईदृशः यः **आत्मा** परमात्मा । **देहवतां** जीवानाम् अन्तःसञ्चरेत् सः छेदनदहनादिना न नश्यतीति सम्बन्धः ।

**[२] बलुस्थैर्वा** इत्यत्र **बलुं** तैलयन्त्रम् । 'गाण' [३] इत्यपभ्रंशभाषा ।

**ये च नित्यं प्रभाषन्ते सत्यं निष्कल्मषं वचः ।**
**ते च यान्त्यमलाभ्राभैरुद्यानैः [४] वृषयोजितैः** ।। ६७ ।।

**अमलाभ्राभैरुद्यानैः** इत्यत्र उत्कृष्टैर्यानैः **उद्यानैः** ।

**ते यान्त्यश्वैर्वृषैर्वाऽपि कुञ्जरैरप्यलङ्कृताः ।**
**[५] धनदस्य पुरं रम्यं सौवर्णच्छत्रशोभिताः** ।। ७१ ।।

---

१. कुं.१०० **अध्यायः** ।; २. एतत्प्रतीकघटितः श्लोकः मुद्रितकोशेषु नोपलभ्यते ।
३. कन्नडभाषाशब्दोऽयम् । ; ४. **'विमानैर्वृषयोजितैः'** इति कुं.पाठः ।
५. BORI पृ. ३८९; $M_4$,$G_3$; **'धर्मराजपुरम्'** इति कुं.पाठः ।

**धनदस्य पुरं रम्यम्** इत्यत्र **धनदस्य** धनदातुः पुरुषस्य यत्पुरं तत्पुरम् ।

**नमोऽस्तु [1]प्रियदत्तायैत्येवंवादी दिनेदिने ।**
**भूमिमाक्रमते प्रातः शयनादुत्थितश्च यः ॥ १०८ ॥**

**नमोऽस्तु प्रियदत्तायै** इत्यत्र **प्रियाणि** धनधान्यादीनि दत्तानि यया सा तथोक्ता । तस्यै भूम्यै नमोऽस्त्वित्युक्त्वा ।

**चतुर्थेन च भुक्तेन वर्तन्ते ये जितेन्द्रियाः ।**
**यान्ति ते धर्मनगरं यानैर्बर्हिनियोजितैः ॥ १०९ ॥**

**चतुर्थेन** इत्यत्र चतुर्थेन चतुर्थयामे विद्यमानेन ।

**तृतीयदिवसेनेह भुञ्जते ये जितेन्द्रियाः ।**
**तेऽपि हस्तिरथं यान्ति तत्पथं कनकोज्ज्वलैः ॥ ११० ॥**

**तृतीयदिवसेनेह** इत्यत्र **तृतीयदिवसेन** तृतीयदिवसस्य तृतीययामे विद्यमानेन ।

[2]**प्राणांस्त्यजति यो विप्रो मां प्रपन्नो ह्यनाशकः ।**
**स बालार्कप्रकाशेन व्रजेत् यानेन तत्पथम् ॥**

**मां प्रपन्नो ह्यनाशक** इत्यत्र **अनाशकः** अशनरहितः ।

॥ इत्याश्वमेधिके एकोनशततमोऽध्यायः ॥

* * *

---

१. **'प्रियदत्ताय'** इति कुं.पाठः ।
२. BORI पृ. ३९१

## ।। अथ शततमोऽध्यायः ।।

[१] **भवकरः** शोभनकरः ।

[२] **याचतेऽन्नं न दद्याद्यो विद्यमाने धनागमे ।**
**स लुब्धो नरकं याति कृमीणां कालसूत्रकम्** ।। ४५ ।।

**कालसूत्रकं** नरकम् ।

**मोघं ध्रुवं प्रोर्णयति मोघमस्य तु पच्यते ।**
**मोघमन्नं सदाऽश्नाति योऽतिथिं न च पूजयेत्** ।। ६९ ।।

**मोघं ध्रुवं प्रोर्णयति** इत्यत्र प्रकर्षेण **ऊर्णम्** अर्जितं येन सः प्रोर्णः । प्राणिहिंसार्थं विस्तरितोर्णवान् ऊर्णनाभिः । तद्वदाचरति **प्रोर्णयति** परोपद्रवायैव गृहं निर्माय तिष्ठतीत्यर्थः ।

**देवानिव स्वयं विप्रानर्चयित्वा पितॄनपि ।**
[३] **विप्रानुग्रासमाशी यस्तस्य पुण्यफलं शृणु** ।। ८३ ।।

**विप्रानुग्रासमाशी य** इत्यत्र **विप्रानु** विप्रेभ्यः अनन्तरं **ग्रासम्** अन्न-कबलम् **आशी** अश्नातीत्याशी, एतस्य पुण्यफलं शृणु इति योजना ।

**सत्यसन्धो जितक्रोधः शाखाधर्मविवर्जितः ।**
**अधर्मभीरुर्धर्मिष्ठो मायामात्सर्यवर्जितः** ।। ८७ ।।

---

१. एतत्प्रतीकघटितः श्लोकः मुद्रितकोशेषु नोपलभ्यते ।

२. कुं.१०१ अध्यायः ।

३. BORI पृ. ३९६; $M_4$; '**विप्रानग्राशनाशी**' इति कुं.पाठः ।

**शाखाधर्मविवर्जित** इत्यत्र शाखा हि कदाचित् पुष्पमेव दिशति न फलम् । कदाचित् फलमेव दिशति न पुष्पम् । एवं प्रियवाक्यं वदति न करोति, यदा तु करोति तदा निष्ठुरमेव वदति न प्रियवाक्यम् इति यो धर्मः स **शाखाधर्मः** । आश्रितानामेव छायां करोति न दूरस्थानाम् इति वा **शाखाधर्मः** तेन विवर्जितः ।

**[१]तिलषण्डप्रयुक्तो जाम्बूनदविभूषितम् ।**
**विमानं दिव्यमारूढः पितृलोके महीयते** ॥ ६२ ॥

**तिलषण्डप्रयुक्त** इत्यत्र तिलषण्डः प्रयुक्तो येन स **तिलषण्डप्रयुक्तः** ।

**[२]अष्टाढकैस्तिलैः कृत्वा तिलधेनुं नराधिप ।**
**द्वात्रिंशन्निष्कसंयुक्तं विषुवे यः प्रयच्छति** ॥ ६७ ॥

**आढकैः** द्रोणपरिमाणैः ।

**विषुवे यः प्रयच्छति** इत्यत्र **विषुवं** मेषसङ्क्रमणं तुलासङ्क्रमणं च । [३]'समरात्रिंदिवे काले विषुवत् विषुवं च तत्' इत्यमरः । तस्मिन् ।

**द्वादशाक्षरतत्त्वज्ञश्चतुर्व्यूहविभागवित् ।**
**आच्छिद्रः पञ्चकालज्ञः स विप्रस्तारयिष्यति** ॥ ८४ ॥

**आच्छिद्रः पञ्चकालज्ञ** इत्यत्र **पञ्चकालज्ञः** अभिगमनोपादानेज्या-जपस्वाध्याययोगाख्यपञ्चकालान् जानातीति स तथोक्तः । ॥ अ१०० ॥

---

१. कुं.१०२ अध्यायः । BORI पृ. ३९९; $G_3$,$M_4$; **'तिलपण्डं प्रयुञ्जानो'** इति कुं.पाठः ।

२. BORI पृ. ४००; $M_2$; **'अष्टाढकतिलैः'** इति कुं.पाठः ।

३. अ.को. तृ. नानार्थवर्गः श्लो.८८

## ।। अथ एकोत्तरशततमोऽध्यायः ।।

[१] **छन्दोभिः सम्प्रयुक्तेन विमानेन विराजता ।**
**सप्तर्षिलोकान् व्रजति पूज्यते ब्रह्मवादिभिः** ।। २३ ।।

**छन्दोभिः सम्प्रयुक्तेन** इत्यत्र **छन्दोभिः** स्ववशैः अश्वैः । [२] 'अभिप्राय-वशौ छन्दौ' इत्यमरः ।

**यः प्रयच्छति विप्राय आसनं माल्यभूषितम् ।**
**स याति मणिचित्रेण रथेन[३] हरिकेतनम्** ।। ३२ ।।

**हरिकेतनम्** इत्यत्र **हरिः** इन्द्रः तस्य **केतनं** मन्दिरम् ।

**देवालयेषु वा राजन् ब्राह्मणावसथेषु वा ।**
**चत्वरे वा चतुष्के वा रात्रौ वा यदि वा दिवा** ।। ४७ ।।

**चत्वरे वा चतुष्के वा** इत्यत्र **चत्वरे** अङ्गणे । **चतुष्के** चतुर्वीथ्याम् ।

**वैशाखे मासि वैशाखे दिवसे पाण्डुनन्दन ।**
**वैवस्वतं समुद्दिश्य परां भक्तिमुपागताः** ।। ७९ ।।

**वैशाखे मासि वैशाख** इत्यत्र **वैशाखे** विशाखानक्षत्र-सम्बन्धिनि ।

[४] **यस्तु नैवेशिकं दद्यात्** इत्यत्र **नैवेशिकं** निवेशनयोग्यं गृहम् ।

---

१. कुं.१०३ अध्यायः ।; २. अ.को. तृ. नानार्थवर्गः श्लो. ८८
३. **'रथेन इन्द्रनिकेतनम्'** इति कुं.पाठः ।
४. एतत्प्रतीकघटितः श्लोकः मुद्रितकोशेषु नोपलभ्यते ।

**अनन्तराशी यश्चापि वर्तते व्रतवत्सदा ।**
**सत्यवाक् क्रोधरहितः शुचिः स्नानरतः सदा ॥ ८५ ॥**

**अनन्तराशी** इत्यत्र प्रातर्मध्याह्नयोर्मध्ये मध्याह्नसायंकालयोर्मध्ये च अन्नवान्न भवतीत्य**नन्तराशी** ।

**कारीषं साधयन्यस्तु मां प्रपन्नः शुचिव्रतः ।**[१]
**नमो ब्रह्मण्यदेवायेत्येतन्मन्त्रमुदाहरन् ॥ ११३ ॥**

**कारीषं साधयन्** इत्यत्र **कारीषं** करीषाग्निम् ।

**निवेशयति मन्मूर्त्यामात्मानं मद्वतः शुचिः ।**
**रुद्रदक्षिणमूर्त्यां वा चतुर्दश्यां विशेषतः ॥ ११५ ॥**

**रुद्रदक्षिणमूर्त्यां वा** इत्यत्र रुद्रस्य **दक्षिणा** कुशला मूर्तिः तया ।

**अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ।**
**अदत्त्वा काञ्चनं गां च दरिद्रो नाम जायते ॥ १२३ ॥**

**अनुपोष्य त्रिरात्राणि** इत्यत्र **त्रिरात्राणि** मासि मासि आदिमध्यावसानेषु एकादशीरात्राणि ।

**॥ इत्याश्वमेधिके वैष्णवधर्मशास्त्रे एकोत्तरशततमोऽध्यायः ॥**

## ॥ अथ द्व्युत्तरशततमोऽध्यायः ॥

**युधिष्ठिर उवाच –**

**विप्रयोगे शरीरस्य सेन्द्रियस्य विशेषतः ।**[२]
**अन्तरा वर्तमानस्य गतिः प्राणस्य कीदृशी ॥ १ ॥**

---

१. BORI पृ. ४०६; $M_{2,3}$; **'कर्षणं साधयन्यस्तु'** इति कुं.पाठः ।
२. कुं.१०४ अध्यायः ।

**गतिः प्राणस्य कीदृशी** इत्यत्र **प्राणस्य** प्रकृष्टचेष्टावतो जीवस्य ।

**शुभाशुभकृतं सर्वं प्राप्नोतीह फलं नरः ।**
**न तु सर्वस्य भूतस्य पञ्चत्वं विद्यते नृप ॥ २ ॥**

**न तु सर्वस्य भूतस्य पञ्चत्वं विद्यत** इत्यत्र **पञ्चत्वं** स्वरूपेण मरणम् । न तु विद्यते ।

**पञ्चत्वं पाण्डवश्रेष्ठ भूरिभूतिकरं[१] परम् ।**
**तेषां पञ्च महायज्ञान् ये कुर्वन्ति द्विजोत्तम ॥ ३ ॥**

पञ्चमहायज्ञान् ये कुर्वन्ति **तेषां** पुण्यात्मनां **पञ्चत्वं** देहवियोगलक्षणं पञ्चत्वं, परं भूरि भूतिकरम् । स्वरूपेण प्राणिनां नाशो नास्त्येव । देहवियोगाख्यनाशोऽपि पुण्यकृतां स्वर्गे महैश्वर्यदायकम् इत्यर्थः ।

**प्रायेण मरणं नाम पापिनामेव पाण्डव ।**
**येषां तु न गतिः पुण्या तेषां मरणमुच्यते ॥ ५ ॥**

**प्रायेण मरणं नाम** इत्यत्र **मरणं** देहवियोगाख्यं मरणं पापिनामेव भयङ्करमिति योग्यपदाध्याहारेण योजना ।

**[२]न च प्रक्षालयेत्तीरमद्भिर्विद्वान् कदाचन ।**
**न च पादेन वा हन्याद्धस्तेनान्येन तज्जलम् ॥ २४ ॥**

**न च प्रक्षालयेत्तीरमद्भिर्विद्वान् कदाचन** इत्यत्र **तीरं** कूलम् ।

---

१. BORI पृ. ४०७; $M_{2.4}$,$G_3$; 'भूरिभूतिकरं नृणाम्' इति कुं.पाठः ।
२. BORI पृ. ४०८; $M_2$; 'न च प्रक्षालयेत् विद्वांस्तीर्थमद्भिः' इति कुं. पाठः ।

**गोसूक्तेनाश्वसूक्तेन शुद्धवर्णेन[१] चाप्यथ ।**
**वैष्णवैर्वारुणैः सूक्तैः सावित्रैरिन्द्रदेवतैः ॥ ३४ ॥**

**शुद्धवर्णेन चाप्यथ** इत्यत्र **शुद्धवर्णेन** केवलेन अकारादिक्षकारान्तवर्णेन ।

**सव्याहृतीकां सप्रणवां गायत्रीं वा ततो जपेत् ।**
**[२]आश्वासमुक्तान् प्रणवं जपेद्वा मामनुस्मरन् ॥ ३६ ॥**

**आश्वासमुक्तान् प्रणवम्** इत्यत्र **आश्वासं** पुनः श्वासागमनपर्यन्तम् । **उक्तान्** सूक्तान् प्रणवं वा जपेत् ।

**उत्प्लुत्य तीर्थमासाद्य धौते शुक्ले च वाससी ।**
**[३]शुक्ले चाच्छादयेत्कक्षे अनुकुर्यात् परिपाशकम् ॥ ३७ ॥**

**शुक्ले चाच्छादयेत्कक्षे अनुकुर्यात् परिपाशकम्** इत्यत्र **शुक्ले** शुद्धे अङ्गे, धौते शुक्ले च वाससी आच्छादयेत् **कक्षे** धात्रकच्छायाम् **अनु** अनुकूलतया **परिपाशकं** परितः कटिसूत्रं कुर्यात्।

**समाहितो जपेत्तस्मात् सावित्र्या चाभिमन्त्र्य च ।**
**मन्देहानां विनाशाय रक्षसां विक्षिपेज्जलम् ॥ ४३ ॥**

**मन्देहानां विनाशाय** इत्यत्र मन्दाख्यद्वीपे **ईहा** चेष्टा येषां तेषां रक्षसाम् ।

---

१. '**शुद्धवर्गेण चात्मनः**' इति कुं.पाठः ।

२. '**आश्वासमोक्षात्प्रणवम्**' इति कुं.पाठः ।

३. BORI पृ. ४०९; $M_4$; '**शुद्धे चाच्छादयेत्कक्षे न कुर्यात्परिपाशके**' इति कुं.पाठः ।

**उद्वर्गोसीत्यथाचान्तः प्रायश्चित्तजलं क्षिपेत् ॥ ४४ ॥**

**उद्वर्गोसीत्यथाचान्त** इत्यत्र **उद्वर्गः** उद्गतः वर्गः राक्षसवर्गो यस्मात् स त्त्वमसीत्युक्त्वा ।

**ततो द्वादशकृत्वस्तु सूर्यस्यैकाक्षरं जपेत् ।**
**[१] ततः षडक्षरादीनि त्रिःकृत्वः परिवर्तयेत् ॥ ४६ ॥**

**सूर्यस्यैकाक्षरं जपेत्** इत्यत्र ओमित्यर्कबीजं द्वादशकृत्वो जपेदित्यर्थः ।

**ततः षडक्षरादीनि त्रिःकृत्वः परिवर्तयेत्** इत्यत्र **षडक्षरादीनि** 'ब्रह्मभूर्भुवःस्वरोम्' इति षडक्षरमन्त्रादीनि 'ओमापोज्योतीरसोऽमृतम्'; 'असावादित्यो ब्रह्म' इति मन्त्रत्रयाणि **त्रिःकृत्वः** त्रिरुच्चार्य प्रदक्षिणं परिवर्तयेत् ।

**[२] तर्पयेदुपवीती तु प्रत्येकं तृप्यतामिति ।**
**अन्वारभ्य च सव्येन पाणिना दक्षिणेन तु ॥ ५४ ॥**

**तर्पयेदुपवीती तु प्रत्येकम्** इत्यत्र **उपवीती** यथास्थित यज्ञोपवीती । [३] 'उपवीतं ब्रह्मसूत्रं प्रोद्धृते दक्षिणे करे' इत्यमरः ।

**निवीती तर्पयेद्विद्वानृषीन्मन्त्रकृतस्तथा ।**
**मरीच्यादीनृषींश्चैव नारदाद्यान्समाहितः ॥ ५५ ॥**

---

१. BORI पृ. ४०९; $G_3$,$M_4$; **'ततः षडक्षरादीनि षट्कृत्वः'** इति कुं.पाठः ।
२. BORI पृ. ४०९; **'तर्पयेदुपवीती च'** इति कुं.पाठः ।
३. अ.को. द्वि.ब्रह्मवर्गः श्लो. ४९

**निवीती तर्पयेत्** इत्यत्र **निवीती** कण्ठलम्बितयज्ञोपवीती । [१]'निवीतं कण्ठलम्बितम्' इत्यमरः ।

**प्राचीनावीत्यथैतांस्तु तर्पयेद्देवताः पितृन् ।**
**ततस्तु कव्यवाडग्निं सोमं वैवस्वतं तथा** ॥ ५६ ॥

**प्राचीनावीत्यथैतांस्तु** इत्यत्र **प्राचीनावीती** वामभागे कृतयज्ञोपवीती, [२]'प्राचीनावीतमन्यस्मिन्' इत्यमरः ।

**बकपुष्पं ततस्तस्मात् सौवर्णं तु ततोऽधिकम् ।**
**सौवर्णात्तु प्रसूनाच्च मत्प्रियं नास्ति पाण्डव** ॥ ७५ ॥

**बकपुष्पं तत** इत्यत्र **बकपुष्पं** बकुलपुष्पम् ।

**प्रत्यक्षलवणं नाद्यात् [३]शोभाञ्जनकगृञ्जना ।**
**ग्रासमुष्टिं गवे दद्याद्धान्याम्लं चैव वर्जयेत्** ॥ ९५ ॥

**शोभाञ्जनकगृञ्जना** इत्यत्र **शोभाञ्जनं** शिग्रुशाकम् । [४]'शोभाञ्जने शिग्रु तीक्ष्णगन्धकाक्षीवमोचका' इत्यमरः । **धान्याम्लम्** आरनालं, [५]'धान्याल्ममारनालं सन्धानं काञ्जुकं च सौवीरम्' इति हलः ।

**तथा पर्युषितं चापि पक्वं परगृहागतम् ।**
**[६]निवेदितं च यद्द्रव्यं तत्प्रयत्नेन वर्जयेत्** ॥ ९६ ॥

---

१. अ.को. द्वि. ब्रह्मवर्गः श्लो. ४०; २. अ.को. द्वि. ब्रह्मवर्गः श्लो. ४०
३. **'सौभाञ्जनकराञ्जनौ'** इति कुं.पाठः । ; ४. अ.को. द्वि. वनौषधिवर्गः ३९
५. ह.को. २-३१८
६. BORI पृ. ४१२; $G_1$; **'अनिवेदितं यद्द्रव्यम्'** इति कुं.पाठः ।

**निवेदितं च यद्द्रव्यम्** इत्यत्र अन्यस्मै दास्यामीति प्रतिज्ञातं द्रव्यं निवेदितं द्रव्यम् ।

**सात्त्विका राजसाश्चैव तामसाश्चैव पाण्डव ।[१]**
**मामर्चयन्ति मद्भक्तास्तेषामीदृग्विधा गतिः ॥ ९८ ॥**

**सात्त्विका राजसाश्चैव तामसाश्चैव पाण्डव** इत्यत्र **राजसाः** विषयाभिलाषादिदोषकलिलाः । **तामसाः** क्रोधेर्ष्यादिदोषदूषिताः ।

**एकस्तम्भे नवद्वारे त्रिस्थूणे पञ्चसाक्षिके ।**
**एतस्मिन्देहनगरे राजसस्तु सदा भवेत् ॥ १०१ ॥**
**उदिते सवितर्याप्य क्रियायुक्तस्य धीमतः ॥ १०२ ॥**

**एकस्तम्भे नवद्वार** इत्यत्र **एकस्तम्भे** एकप्रकृत्याख्यमूलस्तम्भवति। **त्रिस्थूणे** त्रिगुणाख्यस्थूणासहिते । तस्य विप्रस्य देहे **उदिते** उत्पन्ने ।

**येषु येषु हि भावेषु यत्कालं वर्तते द्विजः ।**
**तत्कालं वै स विज्ञेयो ब्राह्मणो ज्ञानदुर्बलः ॥ ११० ॥**

**येषु येषु हि भावेषु** इत्यत्र **भावेषु** कामादिवृषलभावेषु यत्कालं तिष्ठति तत्कालं ब्राह्मणोऽपि वृषल इत्युच्यते । एवं क्षत्रियादिष्वपि ।

**॥ इत्याश्वमेधिके द्व्युत्तरशततमोऽध्यायः ॥**

## ॥ अथ चतुरुत्तरशततमोऽध्यायः ॥

**याश्चैताः कपिलाः प्रोक्ता दश राजन् मया तव ।[२]**
**तासां चतस्रः प्रवराः पुण्याः पापप्रणाशनाः ॥ १८ ॥**

---

१. **'सात्त्विका राजसाश्चापि तामसाश्चापि पाण्डव'** इति कुं.पाठः ।
२. कुं.१०६ अध्यायः ।

**सुवर्णकपिला पुण्या तथा रक्ताक्षिपिङ्गला ।**
**पिङ्गलाक्षी च या गौश्च या स्यात् पिङ्गलपिङ्गला ॥ १९ ॥**

प्रथमा सुवर्णकपिला, द्वितीया गौरपिङ्गला, तृतीया रक्तपिङ्गाक्षी, चतुर्थी गलपिङ्गला, पञ्चमी बभ्रुवर्णा, षष्ठी श्वेतपिङ्गला, सप्तमी वक्त्र-पिङ्गाक्षी, अष्टमी चरपिङ्गला, नवमी पाटला ज्ञेया, दशमी पुच्छ-पिङ्गला ।

**॥ इत्याश्वमेधिके कपिलप्रशंसा नाम चतुरुत्तरशततमोऽध्यायः ॥**

## ॥ अथ पञ्चोत्तरशततमोऽध्यायः ॥

**[1]जातवीर्यबलैर्युक्ताः सत्त्ववन्तो जितेन्द्रियाः ।**
**[2]सदेवमातृकाः सर्वाः पालयिष्यथ वै प्रजाः ॥ ३८ ॥**

**सदेवमातृकाः सर्वा** इत्यत्र **देवमातृकाः** वृष्टिनिष्पाद्यसस्यवान् देशः देवमातृकः, तेन सहिताः प्रजाः । [3]'नद्यम्बुजीवनो देशो नदीमातृक उच्यते । वृष्टिनिष्पाद्यसस्यस्तु विज्ञेयो देवमातृकः' इति हलः ।

**[4]क्लीबी प्लीही च कुष्ठी च राजयक्ष्मान्वितश्च यः ।**
**अपस्मारी च यश्चापि पित्र्ये नार्हति सत्कृतिम् ॥ ७४ ॥**

**क्लीबी प्लीही च कुष्ठी च** इत्यत्र **प्लीही** उदरे गुल्मव्याधिमान् । [5]'आन्त्रं पुरीतत् गुल्मस्तु प्लीहा पुंस्यथवस्नसा' इत्यमरः ।

**॥ इत्याश्वमेधिके कपिलप्रशंसा नाम पञ्चोत्तरशततमोऽध्यायः ॥**

---

१. कुं.पूर्वाध्याय एवानुसरति । ; २. **'असङ्ख्येयबलाः सर्वे'** इति कुं.पाठः ।
३. **ह.को. २-१६१ ;** ४. **'क्लीवः प्लङ्गी च'** इति कुं.पाठः ।
५. **अ.को. द्वि. मनुष्यवर्गः श्लो. ६६**

## ।। अथ षडुत्तरशततमोऽध्यायः ।।

[१] **शैलूषी तन्तुवायान्नं कृतघ्नस्यान्नमेव च ।**
**अम्बष्ठकनिषादानां रङ्गावतरकस्य च ।। १७ ।।**

**शैलूषी तन्तुवायान्नम्** इत्यत्र **शैलूषी** वेदोक्तमर्यादाभङ्गकरणात् या शिरसि भुजयोर्वा मुण्डनश्वानमुद्रादिना विरूपता शैलूषम् । तद्वान् शैलूषी । [२] 'शैलालिनस्तु शैलूषा जाया जीवाः कृशाश्विनः । उमाणुभङ्गा द्विरन्वती' इत्यमरः । **तन्तुवायः** सूच्याच्छिन्नवस्त्राणां सन्धानकर्ता । [३] 'तन्तुवायः कुविन्दः स्यात्तुन्नवायस्तु सौचिकः' इत्यमरः ।

**सुवर्णकर्तुर्वैणस्य शस्त्रविक्रयिणस्तथा ।**
**सूतानां शौण्डिकानां च वैद्यस्य रजकस्य च ।। १८ ।।**

**वैणस्य** वेणुवादनशीलस्य । **शौण्डिकः** मद्यकारी ।

**स्त्रीजितस्य नृशंसस्य तथा माहिषकस्य[४] च ।**
**अनिर्दशानां प्रेतानां गणिकानां तथैव च ।। १९ ।।**

**तथा माहिषकस्य** इत्यत्र **माहिषकः** वैश्यायां क्षत्रियाज्जातः । [५] 'माहिष्योऽर्याक्षत्रिययोः' इत्यमरः । अर्या वैश्या स्यात् [६] 'अर्यः स्वामिवैश्ययोः' इत्यमरः ।

---

१. कुं.१०७ अध्यायः । **'शैलूषम्'** इति कुं.पाठः ।
२. अ.को. द्वि. शूद्रवर्गः श्लो. ११; ३. अ.को. द्वि. शूद्रवर्गः श्लो. ६
४. **'माहिषिकस्य'** इति कुं.पाठः ।
५. अ.को. द्वि. शूद्रवर्गः श्लो. ३
६. अ.को. तृ. नानार्थवर्गः श्लो. १४६

**बन्दिनो द्यूतकर्तुश्च तथा द्यूतविदामपि ।**
**[१]परिवित्तेश्च यच्चान्नं परिवेत्तुस्तथैव च ॥ २० ॥**

**परिवित्तेश्च यच्चान्नं परिवेत्तुस्तथैव च** इत्यत्र **परिवेत्ता** अनूढे ज्येष्ठे दारपरिग्रही कनिष्ठः परिवेत्ता । तत्पत्नी **परिवित्तिः** । [२]'परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात् । परिवित्तिस्तु तज्ज्ञाया' इत्यमरः । भर्तृमरणानन्तरमपि परिवित्तेरन्नं न ग्राह्यमिति सूचनाय पृथग्ग्रहणम् ।

**यश्चाग्रदिधिपुर्विप्रो दिधिपूपपतिस्तथा ।**
**तयोरप्युभयोरन्नं राज्ञां चापि विवर्जयेत् ॥ २१ ॥**

**यश्चाग्रदिधिषुर्विप्र** इत्यत्र [३]'पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषुः पतिः । स तु द्विजोऽग्रे दिधिषूः सैव यस्य कुटुम्बिनी' इत्यभिधानात् द्विर्विवाहवती या काचन नारी सा **दिधिषूः** इत्युच्यते । तस्याः पतिः क्षत्रियादिश्चेत् दिधिषुरित्येवोच्यते । ब्राह्मणश्चेत् अग्रेदिधिषुरित्युच्यते । दिधिषुश्च स उपपतिश्चेति विग्रहः । पूर्वमन्यपत्न्याः पतित्वादयमपि जार एवेति भावः ।

**अमात्यान्नमथैतेषां [४]भुक्त्वा तु त्र्यक्षरं जपेत् ।**
**मत्या भुक्त्वा सकृद्वाऽपि प्राजापत्यं चरेद् द्विजः ॥२५ ॥**

**भुक्त्वा तु त्र्यक्षरं जपेत्** इत्यत्र **त्र्यक्षरम्** अकार उकार मकारात्मकं प्रणवम् ।

---

१. BORI पृ. ४२६; $G_2$,$M_4$; **'परिवित्तस्य'** इति कुं.पाठः ।
२. अ.को. द्वि.ब्रह्मवर्गः श्लो. ५५-५६
३. अ.को. द्वि. मनुष्यवर्गः श्लो. २३
४. **'भुक्त्वा तु त्रियहं क्षिपेत्'** इति कुं.पाठः ।

[1] योऽर्चितं प्रतिगृह्णाति दद्यादुचितमेव च ।
तावुभौ गच्छतः स्वर्गं नरकं च विपर्यये ॥ ३२ ॥

योऽर्चितं प्रतिगृह्णाति इत्यत्र अर्चितं कृष्णार्पणीकृतम् ।

॥ इत्याश्वमेधिके भोज्याभोज्यविवेको नाम षडुत्तरशततमोऽध्यायः ॥

## ॥ अथ सप्तोत्तरशततमोऽध्यायः ॥

[2] नान्तरा गमनं कुर्यान्न चामेध्यं विनिक्षिपेत् ।
उच्छिष्टो न स्पृशेदग्निमाशौचस्थो न जातुचित् ॥ १४ ॥

नान्तरा गमनं कुर्यात् इत्यत्र अन्तरा अग्न्योर्मध्ये ।

प्राप्तमूत्रपुरीषस्तु न स्पृशेद्वह्निमात्मवान् ।
यावत्तु धारयेद्वेगं तावदप्रयतो भवेत् ॥ १६ ॥

यावत्तु धारयेद्वेगम् इत्यत्र वेगं मूत्रपुरीषयोः ।

अलुब्धाः शुचयो वैद्या ह्रीमन्तः सत्यवादिनः ।
स्वधर्मनिरता ये तु तेभ्यो दत्तं महाफलम् ॥ २३ ॥

वैद्याः विद्यासम्बन्धिनः ।

॥ इत्याश्वमेधिके सप्तोत्तरशततमोऽध्यायः ॥

---

१. BORI पृ. ४२७; 'योऽर्चितः' इति कुं.पाठः ।
२. कुं.१०८ अध्यायः ।

## ।। अथ अष्टोत्तरशततमोऽध्यायः ।।

[१] स्वमुच्छिष्टं तु [२] यो भुङ्क्ते यो भुङ्क्ते मुक्तमोदनम् ।
**चान्द्रायणं चरेत् कृच्छ्रं प्राजापत्यमथापि वा ।। १५ ।।**

**यो भुङ्क्ते मुक्तमोदनम्** इत्यत्र **मुक्तं** स्वमुखात् पतितम् ।

**पिबतः पतिते तोये भोजने मुखनिस्सृते ।**
**अभोज्यं तद्विजानीयाद्भुक्त्वा चान्द्रायणं चरेत् ।। १७ ।।**

**अभोज्यं तद्विजानीयात्** इत्यत्र **अभोज्यम्** अपेयम् । **भुक्त्वा** पीत्वा ।

**पानीयानि पिबेद्येन [३] पात्रेण द्विजसत्तमः ।**
**अनुच्छिष्टं भवेत्तावद्यावद्भूमौ न निक्षिपेत् ।। १९ ।।**

**पानीयानि पिबेद्येन पात्रेण** इत्यत्र **पात्रेण** पत्रपुटादिपात्रेण ।

**मौनी वाऽप्यथवा भूमौ नावलोक्य दिशस्तथा ।**
**भुञ्जीत विधिवद्विप्रो [४] न चोच्छिष्टानि चावपेत् ।। २० ।।**

**न चोच्छिष्टानि चावपेत्** इत्यत्र **उच्छिष्टानि** चूतफलादिबीजानि नावपेत् ।

**उदक्यामपि चण्डालं श्वानं सूकरमेव वा ।**
**भुञ्जानो यदि वा पश्येत्तदन्नं च परित्यजेत् ।। २२ ।।**

---

१. कुं.१०९ अध्यायः ।
२. BORI पृ. ४३१; $M_4$; **'यो भुङ्क्ते मुक्तभोजनम्'** इति कुं.पाठः ।
३. BORI पृ. ४३१;$M_4$; **'तत्पात्रम्'** इति कुं.पाठः ।
४. BORI पृ. ४३१; T,$G_3$,$M_{2.4}$; **'न चोच्छिष्टं प्रदापयेत्'** इति कुं.पाठः ।

**उदक्या** रजस्वला । [१]'ऋतुमत्यप्युदक्यापि स्याद्रजः पुष्पमार्तवम्' इत्यमरः ।

**तस्मिन्नाचमनं कुर्यात् [२]यस्मिन् भाण्डे स भुक्तवान् ।**
**यद्युत्तिष्ठत्यनाचान्तो भुक्तवानासनात्ततः ।**
**स्नानं सद्यः प्रकुर्वीत सोऽन्यथाऽप्रयतो भवेत् ॥ २६ ॥**

**तस्मिन्नाचमनं कुर्यात् यस्मिन्भाण्डे स भुक्तवान्** इत्यत्र **आचमनम्** उत्तरापोशनरूपाचमनम् ।

**सभा प्रपा गृहाश्चापि देवतायतनानि च ॥ २९ ॥**

**प्रपा** पानीयशाला । [३]'आवेशनं शिल्पिशाला वाजिशाला तु मन्दुरा । प्रपा पानीयशालिका' इत्यमरः ।

**॥ इत्याश्वमेधिके अष्टोत्तरशततमोऽध्यायः ॥**

## ॥ अथ नवोत्तरशततमोऽध्यायः ॥

**[४]दूराध्वगमनात्खिन्नो द्विजाऽलाभेऽथ शूद्रतः ।**
**अकृतान्नं तु यत्किञ्चिद् गृह्णीयादात्मवृत्तये ॥ ३ ॥**

**अकृतान्नम्** इत्यस्य आममित्यर्थः ।

**प्रशस्याः कीदृशा विप्रा निन्द्याश्चापि सुरेश्वर ।**
**अष्टकायाश्च कः कालस्तन्मे कथय सुव्रत ॥ ९ ॥**

---

१. अ.को. द्वि. मनुष्यवर्गः श्लो. २१
२. BORI पृ. ४३१; $T_2$,$M_{2.4}$; **'यस्मिन्पात्रे स भुक्तवान्'** इति कुं.पाठः ।
३. अ.को. द्वि. पुरवर्गः ७ श्लोकः ; ४. कुं.११० अध्यायः ।

**अष्टकायाः** महालयस्य ।

[१]**इहचैकस्य नामुत्र अमुत्रैकस्य नो इह ।**
**इह चामुत्र चैकस्य नामुत्रैकस्य नो इह ॥**

**इह चैकस्य नामुत्र** इत्यत्र **एकस्य** उदरम्भरस्य । इह सुखमस्ति परलोके नास्ति ।

**अग्निचित् कपिला सत्री राजा भिक्षुर्महोदधिः ।**
**दृष्टमात्रात्पुनन्त्येते तस्मात्पश्येत तान् सदा ॥ ३६ ॥**

**अग्निचित्** अग्निहोत्री ।

**गौरेकस्यैव दातव्या न बहूनां युधिष्ठिर ।**
**सा गौर्विक्रयमापन्ना दहत्यासप्तमं कुलम् ॥ ३४ ॥**

**गौरेकस्यैव दातव्या** इत्यत्र एका गौरेकस्यैव दातव्या । एकैव गौर्बहूनां न दातव्येति योजना ।

**आक्रम्य ब्राह्मणैर्भुक्तमनार्याणां तु[२] वेश्मनि ।**
**गोभिश्च पुण्यं तत्तेषां राजसूयाद्विशिष्यते ॥ ३९ ॥**

**आक्रम्य ब्राह्मणैर्भुक्तमनार्याणां तु वेश्मनि** इत्यत्र **अनार्याणां** नीचानां वेश्मनि स्थितं यद्वस्तु तत् केनचित् प्रभुणा **आक्रम्य** बलात्कारेण नीतं सत् ब्राह्मणैः गोभिर्वा भुक्तं चेत् **तेषां** प्रभूणां तद्दानं राजसूयात् विशिष्यते । दुष्टनिग्रहादानीतधनस्य अग्निमुख इव गोब्राह्मणमुखे हुतत्वात् राजसूयात् विशिष्यते इति भावः ।

---

१. BORI पृ. ४३४; २. BORI पृ. ४३५; **'च'** इति कुं. पाठः ।

**हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि[1] ।**
**प्रत्यगेव प्रयागात्तु मध्यदेशः प्रकीर्तितः ॥ ४८ ॥**

**यत्प्राग्विनशनादपि** इत्यत्र **विनशनात्** (विशासनात्) कुरुक्षेत्रात् ।

**वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।**
**कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥ ५२ ॥**

**निषेकादिर्द्विजन्मनाम्** इत्यत्र **निषेकादिः** गर्भाधानादिः ।

॥ इत्याश्वमेधिके नवोत्तरशततमोऽध्यायः ॥

## ॥ अथ दशोत्तरशततमोऽध्यायः ॥

**[2]ब्रह्मत्वेनासृजं लोकानहमादौ महाद्युते ।**
**सृष्टोऽग्निर्मुखतः पूर्वं लोकानां हितकाम्यया ॥ ११ ॥**

**ब्रह्मत्वेनासृजं लोकान्** इत्यत्र **ब्रह्मत्वेन** परब्रह्माख्यमूलरूपत्व-दशायाम् ।

**[3]यस्मादग्रे सतां भूतः सर्वेषां निर्मितो मया ।**
**तस्मादग्नीत्यभिहितः पुराणज्ञैर्मनीषिभिः ॥ १२ ॥**

**यस्मादग्रे सतां भूतः** इत्यत्र **सर्वेषां सतां भूतः** उपकारीभूतः अग्निः यस्मादग्रे निर्मितः तस्मादित्युत्तरेणान्वयः ।

---

१. **'यत्प्राग्विशसनादपि'** इति कुं.पाठः ।
२. **कुं.१११ अध्यायः ।**
३. **'यस्मादग्रे स भूतानाम्'** इति कुं.पाठः ।

[१]स्थालीपाकश्च गार्ह्यं च सर्वे चास्मिन्प्रतिष्ठिताः ।
गृह्यकर्मवहो यस्मात्तस्माद्गृहपतिस्तु सः ॥ २३ ॥

**स्थालीपाकश्च गार्ह्यं च** इत्यत्र गृहिणो भावः गार्ह्यम् ।

[२]आहुतिं सम्यगाख्यातां वहन्तं हव्यवाहनम् ।
सर्वहव्यवहो वह्निर्गतश्चाहवनीयताम् ॥ २८ ॥

**आहुतिं सम्यगाख्यातां वहन्तं हव्यवाहनम्** इत्यत्र यस्मादाहुरिति योग्यपदाध्याहारेण योजना ।

अहमाहवनीयोऽग्निराहोमाद्यस्य वै मुखे ।
सभ्योऽग्निः पञ्चमो यस्तु स्कन्द एव नराधिप ॥ ३२ ॥

**अहमाहवनीयोऽग्निराहोमाद्यस्य वै मुख** इत्यत्र आसमन्ताद्धोमा यस्य मम मुखे वै ।

वृत्तश्च गार्हपत्योऽग्निर्यस्माद्वृत्ता च मेदिनी ।
[३]अर्धचन्द्राकृतिं खं वै दक्षिणाग्निस्तथा भवेत् ॥ ३४ ॥

**अर्धचन्द्राकृतिं खं वै** इत्यत्र **खम्** अन्तरिक्षलोकम् आहुरिति योग्यपदाध्याहारः ।

[४]स तु सप्तर्पिलोकेषु सपत्नीकः प्रमोदते ।
[५]यश्चाग्न्युपासनः सभ्यं विधिवत्प्रयतात्मवान् ॥

---

१. BORI पृ. ४३७; $M_{2.4}$,$T_2$,; **'स्थालीपाकं च गार्हं च'** इति कुं.पाठः ।
२. **'आहुतिः सर्वमाख्याति हव्यं वै वहनं स्मृतम्'** इति कुं.पाठः ।
३. **'अर्धचन्द्राकृतिस्तं वै'** इति कुं.पाठः ।; ४. BORI पृ. ४३८
५. **'यश्चाप्युपासते सभ्यम्'** इति कुं पाठः ।

**यश्चाग्न्युपासनः सभ्यम्** इत्यत्र जुहुयादिति पूर्वेण सम्बन्धः ।

**यस्माद्वै त्रायते दुःखाद्यजमानं हुतोऽनलः ।**
**तस्मात्तु विधिवत्प्रोक्तमग्निहोत्रमिति श्रुतौ ॥ ४४ ॥**

**तस्मात्तु विधिवत्प्रोक्तमग्निहोत्रमिति श्रुतौ** इत्यत्र **अग्निम्** अग्न्युपासकं होमनामकात् दुःखात् त्रायत इति अग्निहोत्रमित्यर्थः ।

**वसन्ते ब्राह्मणस्य स्यादाधेयोऽग्निर्नराधिप ।**
**[१]वसन्तो ब्राह्मणः प्रोक्तो वेदयोनिः स उच्यते ॥ ४८ ॥**

**वसन्तो ब्राह्मणः प्रोक्त** इत्यत्र **वसन्तः** वसन्तकालाभिमानी ।

**ऋग्यजुःसाममन्त्राणां श्लोकतत्त्वार्थचिन्तनात् ।**
**प्रत्यापत्तिविकल्पानां छन्दोज्ञानं प्रकल्पितम् ॥ ६२ ॥**

**प्रत्यापत्तिविकल्पानाम्** इत्यत्र परिहारार्थमिति योग्यपदाध्याहारः ।

**[२]विष्णुक्रमोऽनुत्क्रमणं दक्षिणावभृथं तथा ।**
**त्रिकालमर्चनं चैव स्थानेषूपहृतं तथा ॥ ७० ॥**

**विष्णुक्रमोऽनुत्क्रमणम्** इत्यत्र विष्णुः क्रामति यजमानमनेनेति **विष्णुक्रमः** दीक्षाहोमः । **अनुत्क्रमणं** तदुपरितनकर्मारम्भः ।

**[३]यूपास्तु मन्त्रसंस्कारैर्दर्भाश्च पशवस्तथा ।**
**यजमानेन सहिताः स्वर्गं यान्ति नरेश्वर ॥ ७५ ॥**

---

१. BORI पृ. ४३९; '**वसन्तो ब्राह्मणो ज्ञेयो**' इति कुं.पाठः ।
२. '**विष्णुक्रमाणां क्रमणम्**' इति कुं.पाठः ।
३. '**यूपास्तन्मन्त्रसंस्कारैः**' इति कुं.पाठः ।

**यूपास्तु मन्त्रसंस्कारैः** इत्यत्र **यूपाः** यूपोपकारिणः स्थावरजीवाः ।

**दर्भाः संस्तरणार्थं तु रक्षसां रक्षणाय च ।**
**यजनार्थं द्विजाः सृष्टास्तारका दिवि देवताः ॥ ७९ ॥**

**रक्षसां रक्षणाय च** इत्यत्र रक्षसां सकाशात् रक्षणायेत्यर्थः ।

**॥ इत्याश्वमेधिके वैष्णवधर्मशास्त्रे दशोत्तरशततमोऽध्यायः ॥**

## ॥ अथ एकादशोत्तरशततमोऽध्यायः ॥

**[१]शोधयेत् तु शरीरं स्वं पञ्चगव्येन यन्त्रितः ।**
**[२]सशिरः कृष्णपक्षस्य न च कुर्वीत वापनम् ॥ ४ ॥**

**सशिरः कृष्णपक्षस्य** इत्यत्र कृष्णपक्षस्य शिरः अमावास्यां प्राप्य वापनं न कुर्वीत ।

**[३]नदीं गत्वा विमुक्ताय सोमाय वरुणाय च ।**
**आदित्याय नमस्कृत्वा ततः स्नायात्समाहितः ॥ १० ॥**

**नदीं गत्वा विमुक्ताय** इत्यत्र **विमुक्ताय** नारायणाय ।

**नारायणं वा रुद्रं वा ब्रह्मणमथवापि च ।**
**[४]आरण्यं मम सूक्तं वा प्राग्भोजनमथापि वा ॥ १३ ॥**

---

१. कुं.११२ अध्यायः ।

२. BORI पृ. ४४२; $G_2$,$M_4$; **'सशिरः कृष्णपक्षस्य ततः कुर्वीत वापनम्'** इति कुं.पाठः ।

३. BORI पृ. ४४३; $M_4$; **'नदीं गत्वा विशुद्धात्मा'** इति कुं.पाठः ।

४. BORI पृ. ४४३; $M_4$; **'वारुणं मन्त्रसूक्तम्'** इति कुं.पाठः ।

**आरण्यम्** उपनिषदं, **मम सूक्तं** विष्णुसूक्तम् । **प्राग्भोजनमथापि वा** इत्यत्र भोजनात् प्राक् पठ्यमानं **प्राग्भोजनम्** । महाशान्तिसूक्तम् ।

**वीरघ्नमृषभं वाऽपि तथा चाप्यघमर्षणम् ।**
**गायत्रीं मम देवीं वा सावित्रीं च जपेत्ततः ॥ १४ ॥**

**वीरघ्नं** रक्षोघ्नसूक्तम् । **ऋषभम्** 'ऋषभं मा समानानामि' ति सूक्तम् । **मम देवीं** लक्ष्मीसूक्तम् । **सावित्रीं** सवितृसूक्तम् ।

**ततो मध्याह्नकाले वै पायसं[१] पावकं हि वा ।**
**पाचयित्वा प्रयत्नेन प्रयतः सुसमाहितः ॥ १५ ॥**

**पायसं पावकं हि वा** इत्यत्र **पायसं** पयःसम्बन्धि आप्यसूक्तम् । **पावकम्** अग्निसूक्तम् ।

**यो हि पादुकामारुह्य[२] सर्वदा प्रचरेद्द्विजः ।**
**तं दृष्ट्वा पापकर्माणमादित्यमवलोकयेत् ॥ २१ ॥**

**पादुकां** पादरक्षाम् ।

**प्रक्षाल्य पादावाजान्वोर्हस्तावाकूर्परं पुनः ।**
**आचम्य वारिणा तेन वह्निं विप्रांश्च पूजयेत् ॥ २२ ॥**

**तेन** अन्नेन ।

**आकाशस्थं तु हस्तस्थमधः स्रस्तं तथैव च ।**
**परहस्तस्थितं चैव भुक्त्वा चान्द्रायणं चरेत् ॥ ३७ ॥**

---

१. **'पायसं यावकम्'** इति कुं.पाठः ।; २. **'पादुकम्'** इति कुं.पाठः ।

**हस्तस्थम्** इत्यत्र **हस्तस्थं** वामहस्तस्थम् ।

**एवमन्यानि पापानि पातकीयानि यानि च ।**
**चान्द्रायणेन नश्यन्ति वायुना पांसवो यथा ॥ ३४ ॥**

**चान्द्रायणेन नश्यन्ति** इत्यत्र पञ्चमहापातकानां द्वादश वार्षिकेण चान्द्रायणेन अन्येषां यथा योगेनेति विवेकः ।

**[१]तुम्बीं कोशातकीं चैव पलाण्डुं गृञ्जनं तथा ।**
**छत्राकं लशुनं चैव भुक्त्वा चान्द्रायणं चरेत् ॥ ४४ ॥**

**तुम्बीं कोशातकीं चैव** इत्यत्र **तुम्बीम्** अलाबुम् । **कोशातकीं** पटोलम् । [२]'तुम्ब्यलाबुश्च दुग्धिका' । '[*]कोशातकी पटोली स्यात्' इति च हलः ।

॥ इत्याश्वमेधिके एकादशोत्तरशततमोऽध्यायः ॥

॥ अथ द्वादशोत्तरशततमोऽध्यायः ॥

**[३]कार्तिके यस्तु वै मासे नन्दायां संयतेन्द्रियः ।**
**एकभुक्तेन मद्भक्तो मासमेकं तु वर्तते ॥ ५ ॥**

**नन्दायां** शुक्लपक्षप्रतिपदि ।

**व्रतान्ते भोजयेद्विप्रान् [४]दक्षिणां च ददौ पुनः ।**
**क्रोधलोभविनिर्मुक्तस्तस्य पुण्यफलं शृणु ॥ ७ ॥**

---

१. 'तुम्बकोशातकम्' इति कुं.पाठः ।; २. ह.को. २-२०९; [*]२-२०२
३. कुं.११३ अध्यायः । ; ४. 'दक्षिणां सम्प्रदाय च' इति कुं.पाठः ।

**दक्षिणां च ददौ पुनः** इत्यत्र यः ददौ तस्येति सम्बन्धः ।

**विधिवत्कपिलादाने यत्पुण्यं समुदाहृतम् ।**
**तत्पुण्यं समनुप्राप्य सूर्यलोके महीयते ।**
**ततश्चापि च्युतः कालात् पुरुषेषूपजायते ॥ ८ ॥**

**पुरुषेषूपजायत** इत्यत्र **पुरुषेषु** किंपुरुषेषु ।

**॥ इत्याश्वमेधिके एकभुक्तवर्णनं नाम द्वादशोत्तरशततमोऽध्यायः ॥**

## ॥ अथ त्रयोदशोत्तरशततमोऽध्यायः ॥

[१]
**शृणु पाण्डव सत्यं मे वचनं पुण्यमुत्तमम् ।**
**यदकृत्वाऽथवा कृत्वा नरः पापैः प्रमुच्यते ॥ २ ॥**

**यदकृत्वाऽथवा कृत्वा** इत्यत्र यत्कृत्वा अथवा करणशक्त्यभावे **अकृत्वा** कर्म अकृत्वा पुण्यकथाश्रवणमात्रेण नरः पापात्प्रमुच्यते । अत एव शृणु पाण्डव सत्यं मे वचनमित्युक्तम् । यद्वा यत् पापं कृत्वा वक्ष्यमाणव्रतं करोति तर्हि तस्मात् पापात् प्रमुच्यते । अथवा पापमकृत्वा यत् व्रतं कृत्वा **पापात्** संसारात् प्रमुच्यते ।

**द्वादश्यामेव वा कुर्यादुपवासमशक्नुवन् ।**
**तेनाहं परमां प्रीतिं यास्यामि नरपुङ्गव ॥ १६ ॥**

**द्वादश्यामेव वा कुर्यात्** इत्यत्र **द्वादशी** शुद्धैकादशी ।

**॥ इत्याश्वमेधिके एकादशीमाहात्म्यकथनं नाम त्रयोदशोत्तरशततमोऽध्यायः ॥**

---

१. कुं.११४ अध्यायः । BORI पृ. ४४८; '**शृणु पाण्डव तत्त्वम्**' कुं.पाठः ।

## ।। अथ चतुर्दशोत्तरशततमोऽध्यायः ।।

**[१] राजन्नयनयोर्मध्यं विषुवं सम्प्रचक्षते ।**
**समे [२] रात्रिंदिने तत्र सन्ध्यायां विषुवे नृप ।। ४ ।।**

**राजन्नयनयोर्मध्यम्** इत्यत्र **अयनयोः** उत्तरायणदक्षिणायनयोः षण्मासात्मकयोर्यन्मध्यम् । दक्षिणायनस्य तु तुलासङ्क्रमणं मध्यम् । उत्तरायणस्य मेषसङ्क्रमणं मध्यं तदित्यर्थः । अन्यथा 'समरात्रिंदिवे काले विषुवद् विषुवं च तत्' [३] इत्युक्तरात्रिंदिवयोः साम्यं न स्यात् । यथा स्थितायनयोर्मध्ये कर्काटकसङ्क्रमणे मकरसङ्क्रमणे च तदयोगात् उक्तैव योजना ।

**अस्माकमेकीभूतानां निष्फलं परमं पदम् ।**
**तन्मुहूर्तं परं पुण्यं राजन्विषुवसञ्ज्ञितम् ।। ६ ।।**

**अस्माकमेकीभूतानाम्** इत्यत्र 'ब्रह्माहं शङ्करश्चापि तिष्ठामः सहिताः सकृत्' [४] इत्युक्तसहभावस्यैवात्रापि वक्तव्यत्वात् ।

**[५] विषुवे स्नापनं यस्तु मम कुर्याद्धरस्य वा ।**
**अर्चनां च यथान्यायं तस्य पुण्यफलं शृणु ।। १४ ।।**

**विषुवे स्नापनं यस्तु मम कुर्याद्धरस्य वा** इत्यत्र मोक्षकामश्चेत् मम

---

१. कुं.११५ अध्यायः । BORI पृ. ४५१; $T_2$,$G_{2.3}$,$M_4$; **'राजन्नयनयोर्मध्ये'** इति कुं.पाठः ।

२. **'रात्रिदिने'** इति कुं. पाठः । $G_{1.2}$; BORI पृ. ४५१

३. **अ.को. प्र. कालवर्गः श्लो. १४;** ४. **आश्वमेधिकपर्व अ ११५. श्लो. ५**

५. BORI पृ. ४५१; G; **'विषुवे स्नपनम्'** इति कुं.पाठः ।

पूजां कुर्यात् । ऐहिकफलकामश्चेत् हरस्य पूजां कुर्यादिति । यद्वा 'शङ्करात् ज्ञानमन्विच्छेत् मोक्षमिच्छेत् जनार्दनात्' इति वचनात् मोक्षोपयोगिज्ञानकामश्चेत् हरस्य, सम्पन्नज्ञानत्वात् केवलं मोक्षकामश्चेत् ममेति योजना ।

**सूर्येन्दूपप्लवे चैव श्रोत्रियेभ्यः प्रदीयते ।**
**तत्सहस्रगुणं भूत्वा दातारमुपतिष्ठति ॥ २२ ॥**

**सूर्येन्दूपप्लवे चैव** इत्यत्र **सूर्येन्दूपप्लवः,** सूर्येन्दुसङ्गमः । दर्शः इत्युक्तदर्शग्रहणेन सूर्यग्रहण इत्यर्थः । [1]'उपराग उपप्लवः' इति हलः ।

**व्रतस्य पारणं तीर्थमार्जवं तीर्थमुच्यते ।**
**देवशुश्रूषणं तीर्थं गुरुशुश्रूषणं तथा ॥ ३४ ॥**

**व्रतस्य पारणं तीर्थम्** इत्यत्र **पारणं** परिसमापनम् **तीर्थं** पावनमित्यर्थः ।

[2]**सलिलेन च विग्रहे स्नायात् सकृदेव रविग्रहे ।**
**तस्य यत्संचितं पापं तत्क्षणादेव नश्यति ॥ ५४ ॥**

**सलिलेन च विग्रह** इत्यत्र **सलिलेन** नदीसलिलेन च, **विग्रहे** देहे यः **स्नायात्** निमज्य सर्वाङ्गस्नानं कुर्यादित्यर्थः ।

**गोमूत्रेणापि यः स्नायाद्रोहिण्यां मम वा दिने ।**
**विप्रपादच्युतैर्वाऽपि तोयैः पापं प्रणश्यति ॥ ५५ ॥**

---

१. ह.को. १-४१
२. 'सलिलेन तु यः स्नायात्' इति कुं.पाठः ।

**रोहिण्यां मम वा दिन** इत्यत्र **मम दिने** एकादश्याम् ।

**नमस्येद्यस्तु मद्भक्त्या शिंशुमारं प्रजापतिम् ।**
**चतुर्दशाङ्गसंयुक्तं तस्य पापं प्रणश्यति ॥ ५६ ॥**

**शिंशुमारं प्रजापतिम्** इत्यत्र शिंशुमाराख्यं प्रजापतिं ज्योतिश्चक्रस्थितशिंशुमारं, सूर्यचन्द्रादिदेवप्रजापालकं ममावतारं नमस्येत् । मोक्षमार्गत्वात् प्रतिदिनं नमस्येत् ।

**अभयं च ततः पश्चात्स एव ध्रुवसञ्ज्ञिकः ।**
**एतान्यङ्गानि सर्वाणि शिंशुमारप्रजापतेः ॥ ६० ॥**

**अभयं च ततः पश्चात्** इत्यत्र **ततः** शिंशुमारदेवात् पश्चात् उपरि **अभयं** मृत्युभयरहितम् । स एव ध्रुवमण्डललोकः ।

**॥ इत्याश्वमेधिके चतुर्दशोत्तरशततमोऽध्यायः ॥**

## ॥ अथ पञ्चदशोत्तरशततमोऽध्यायः ॥

**श्वदृतौ[१] च यथा क्षीरं ब्रह्म वै वृषले तथा ।**
**दुष्टतामेति तत्सर्वं शुना लीढं हविर्यथा ॥ १९ ॥**

**श्वदृतौ च यथा क्षीरम्** इत्यत्र **श्वदृतौ** शुनः दृतौ शिरः कपाले ।

**मद्भक्तान् शूद्रसामान्यादवमन्यन्ति ये नराः ।**
**नरकेष्वेव तिष्ठन्ति वर्षकोटिं नराधमाः ॥ २१ ॥**

---

१. कुं.११६ अध्यायः । BORI पृ. ४५५; $T_2$,$G_3$; **‘श्वदृतौ तु यथा क्षीरम्’** इति कुं.पाठः ।

**मद्भक्तान् शूद्रसामान्यात्** इत्यत्र **शूद्रसामान्यात्** शूद्रत्वजातेः [१] 'जातिर्जातं च सामान्यम्' इत्यमरः ।

**॥ इत्याश्वमेधिके चतुर्दशोत्तरशततमोऽध्यायः ॥**

## ॥ अथ षोडशोत्तरशततमोऽध्यायः ॥

**[२] अहं च शङ्करश्चापि गावो विप्रास्तथैव च ।**
**अश्वत्थोऽमररूपं हि त्रयमेतद्युधिष्ठिर ॥ ३ ॥**

**अहं च शङ्करश्चापि** इत्यत्र अहं सर्वेषां हृदिस्थतया अहेयत्वात् अहंनामा, तेषां सर्वेषां सुखकरत्वात् शङ्करनामा च ।

**॥ इत्याश्वमेधिके षोडशोत्तरशततमोऽध्यायः ॥**

## ॥ अथ सप्तदशोत्तरशततमोऽध्यायः ॥

**[३] त्रीणि षष्टि शतान्याहुरस्थीन्यस्य युधिष्ठिर ।**
**तेषां विकल्पता कार्या यथा शास्त्रं विनिश्चितम् ॥ ३ ॥**

**त्रीणि षष्टि शतानि आहुः** इत्यत्र **त्रीणि** शतानि षष्टिश्चेति योजना ।

**त्रैलोक्येऽस्मिन्निरुद्विग्नो न बिभेमि कुतश्चन ।**
**न दिवा यदि वा रात्रावुद्वेगः शूद्रलङ्घनात् ॥ १२ ॥**

---

१. अ.को. प्र. कालवर्गः श्लो. ३१

२. कुं.११७ अध्यायः । BORI पृ. ४५७; T; 'नन्वहं शङ्करश्चापि' इति कुं. पाठः ।

३. कुं.११८ अध्यायः ।

**दिवा वा यदि वा रात्रावुद्वेगः शूद्रलङ्घनात्** इत्यत्र **शूद्रलङ्घनात्** शूद्रस्य मर्यादालङ्घनात् ।

**न भयं देवदैत्येभ्यो रक्षोभ्यश्चैव मे नृप ।**
**[१]शूद्रवक्त्राच्च्युताद् ब्राह्माद्भयं तु मम सर्वदा ॥ १३ ॥**

**शूद्रवक्त्राच्च्युताद् ब्राह्मात्** इत्यत्र ब्रह्मसम्बन्धी **ब्राह्मो** वैदिकमन्त्रः तस्मात् ।

**द्वादशाक्षरतत्त्वज्ञश्चतुर्व्यूहविभागवित् ।**
**अच्छिद्रपञ्चकालज्ञः स वै भागवतः स्मृतः ॥ ३३ ॥**

**द्वादशाक्षरतत्त्वज्ञ** इत्यत्र **द्वादशाक्षरं** वासुदेवद्वादशाक्षरमन्त्रः । तस्य तत्त्वं जानातीति स तथोक्तः । **चतुर्व्यूहविभागवित्** चतुर्व्यूहानां क्रुद्धोल्काद्याः वासुदेवाद्याः केशवाद्या मत्स्याद्या इति यो विभागः तं वेत्तीति स तथोक्तः ।

**[२]अनाश्रित्योच्छ्रयो नास्ति मुख्यमाश्रयमाश्रयेत् ।**
**[३]देवा रुद्रास्तथादित्या मरुतो ब्रह्म माश्रिताः ॥ ३७ ॥**
**[४]ब्रह्मा मामाश्रितो नित्यं नाहं कश्चिदुपाश्रितः ।**
**ममाश्रयो न कश्चित्तु सर्वेषामाश्रयो ह्यहम् ॥ ३८ ॥**

**अनाश्रित्योच्छ्रयो नास्ति मुख्यमाश्रयमाश्रयेत् । देवा रुद्रास्त-**

---

१. **'शूद्रवक्त्राच्च्युतं ब्रह्म'** इति कुं.पाठः ।
२. **'अनाश्रित्योच्छ्रयम्'** इति कुं. पाठः । $M_2$; BORI पृ. ४६०
३. **'रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः'** इति कुं.पाठः ।
४. **'ब्रह्मा मामाश्रितो राजन्'** इति कुं.पाठः ।

**थादित्या मरुतो ब्रह्म माश्रिता** इत्यत्र सर्वोत्तमान्मत्तोऽतिरिक्त-जीवानां, कश्चित् अनाश्रित्य उच्छ्रयो नास्ति । तत्रापि स्वतोदीनस्य स्वोच्छ्रयदानाशक्तत्वात् मुख्यम् आश्रयम् आश्रयेत् । तर्हि सर्वेषां जीवानां मुख्यः आश्रयः क इत्याशङ्क्य अहमेवेत्याह **देवा रुद्रा** इत्यादिना । **देवाः** ब्रह्मादिदेवताः । **रुद्राः** एकादश रुद्राः । **आदित्याः** विष्णुव्यतिरिक्ता एकादशादित्याः । **मरुतः** एकोनपञ्चाशन्मरुतश्च । **ब्रह्म** ज्ञानबलवीर्यशौर्यादिसर्वगुणैरभिवृद्धत्वात् ब्रह्मनामकं **मा** मामेवा-श्रिताः । किं सर्वेऽपि साक्षादेव मामाश्रिता इत्याशङ्क्य परम्परयेत्याह – **रुद्रं समाश्रिता देवा इति । नाहं कञ्चिदुपाश्रित** इत्युक्तमेव तात्पर्यद्योतनाय पुनर्विशिनष्टि – **ममाश्रयो न कश्चिदिति** । देवानां रुद्रवत् रुद्रस्य चतुर्मुख इव चतुर्मुखस्याहमिव ममाश्रयः **कश्चित्तु** कश्चिदपि न । किन्तु सर्वेषामहमेव आश्रयो हि । **हि** इत्यनेन 'अग्निर्वै देवानामवमो विष्णुः परमः', 'तदन्तरेण सर्वा अन्या देवता' इत्यादिश्रुतिप्रसिद्धिं सूचयति । [१]'देवासुराणां मघवान् प्रधानो दक्षादयो ब्रह्मसुताश्च तेषाम् । भवः परः सोऽथ विरिञ्चवीर्यः स मत्परोऽहं द्विज-देवदेवः । मत्तोऽप्यनन्तात्परतः परस्मात् स्वर्गापवर्गाधिपतेः न किञ्चित्' इति भागवतप्रसिद्धिं च सूचयति । (**स** ब्रह्मा **मत्परः** अहं परो यस्य सः मत्परः । अतः अहं द्विजानां देवानां च देव इति मध्यस्थितपदानां योजना ।)

**एवमेतन्मया प्रोक्तं रहस्यमिदमुत्तमम् ।**
**धर्मप्रियस्य ते नित्यं राजन्नेवं समाचर ॥ ३९ ॥**

---

१. भागवत

**एवमेतत्** इत्यत्र **एवम्** उक्तविधया मया प्रोक्तं यदेतत् प्रमेयम् इदं उत्तमं रहस्यं च । उत्तमं रहस्यं चेति वदता अतीतपर्वसु लोक-विडम्बनार्थमेतद् विरुद्धतया क्वचित् क्वचिन्मया व्यासेन चोक्तं रुद्राद्याधिक्यं कैलासयात्राद्याचरणं च अनुत्तमम् अरहस्यं चेति सूचितम् ।

**॥ इत्याश्वमेधिके वैष्णवधर्मशास्त्रे सप्तदशोत्तरशततमोऽध्यायः ॥**

**॥ इति आश्वमेधिकपर्व समाप्तम् ॥**

# मौसलपर्व

## ।। अथ द्वितीयोऽध्यायः ।।

**वैशम्पायन उवाच–**

**षट्त्रिंशेऽथ ततो वर्षे वृष्णीनामनयो महान् ।**
**[1]अन्योन्यं मौसलैस्ते तु निजघ्नुः कालचोदिताः ।। २ ।।**

**अन्योन्यं मौसलैः** इत्यत्र **मौसलैः** मुसलसम्बन्धिशापादिभिः ।

**इयं स्त्री पुत्रकामस्य बभ्रोरमिततेजसः ।**
**ऋषयः साधु जानीत किमयं जनयिष्यति ।। ६ ।।**

**बभ्रोरमिततेजस** इत्यत्र **बभ्रोः** बभ्रुनामकयादवस्य । अमिततेजसः इति ऋषीणां सम्बुद्धिः ।

**समुद्रं यास्यति श्रीमांस्त्यक्त्वा देहं हलायुधः ।**
**जरः कृष्णं महात्मानं [2]शयानं भुवि वेत्स्यति ।। १० ।।**

**शयानं भुवि वेत्स्यति** इत्यत्र **वेत्स्यति** शरवेधं करिष्यति । **जरः** जरनामको व्याधः ।

**।। इति मौसले द्वितीयोऽध्यायः ।।**

---

१. **'अन्योन्यं मुसलैस्ते तु'** इति कुं.पाठः ।

२. BORI पृ. ५; $T_2$,$B_4$,$G_{1.2.5}$; **'शयानं भुवि भेत्स्यति'** इति कुं.पाठः ।

## ।। अथ तृतीयोऽध्यायः ।।

**विवृद्धमूषिका रथ्या विभिन्नमणिकास्तथा ।**
**केशा नखाश्च सुप्तानामद्यन्ते मूषिकैर्निशि ।। ५ ।।**
**चीचीकूचीति वाशन्ति शारिका वृष्णिवेश्मसु ।**

**विभिन्नमणिकास्तथा** इत्यत्र (**विभिन्न**)**मणिकाः** वस्त्रादिस्थापनार्थं कृतमृण्मयभाण्डानि 'अलिञ्जरस्यान्मणिकः कर्कर्यालुर्गलन्तिका' [१] इत्यमरः ।

**वृक्णान्** छिन्नान् । **शारिकाः** शुकस्त्रियः । **अभ्याशे** समीपे ।

**परस्परं च नक्षत्रं हन्यमानं पुनः पुनः ।**
**ग्रहैरपश्यन् सर्वे ते [२] आत्मनस्तु न पश्यन्ते ।। १६ ।।**

**आत्मनस्तु न पश्यन्त** इत्यत्र आत्मनः अनिष्टमिति न पश्यन्तीत्यर्थः ।

**।। इति मौसले कृष्णवाक्यं नाम तृतीयोऽध्यायः ।।**

## ।। अथ चतुर्थोऽध्यायः ।।

**तच्छ्रुत्वा केशवस्याङ्कमगमद्रुदती तदा ।**
**सत्यभामा प्रकुपिता कोपयन्ती जनार्दनम् ।। २५ ।।**

**अङ्कं** समीपम् । 'अङ्को नाटकविच्छेदे सङ्ख्यायां युधि भूषणे । समीपे रूपके स्थाने मन्था उत्सङ्गचिह्नयोः' इत्यमरः ।

**।। इति मौसले यादवसंहारो नाम चतुर्थोऽध्यायः ।।**

---

१. अ.को. द्वि. वैश्यवर्गः श्लो. ३१; २. '**नात्मनस्तु कथञ्चन**' इति कुं.पाठः ।

## ।। अथ पञ्चमोऽध्यायः ।।

**गुणैर्मुनीनां पूजितस्तत्र कृष्णो**
**ऊर्ध्वं गच्छन्[1] व्याप्य लोकान् स्वलक्ष्म्या ।। २६ ।।**

**ऊर्ध्वं गच्छन्** इत्यत्र स्वलक्ष्म्या सह ऊर्ध्वं गच्छन् । रुग्मिण्याः स्वस्य च ऊर्ध्वं गमनमेव न तु देहत्याग इति सूचितम् ।

**इत्येवमुक्त्वा देवसङ्घोऽनुगम्य**
**श्रिया युक्तं पुष्पवृष्ट्या ववर्ष ।**
**[2]वाणी ह्यासीत्संश्रुणी रूपिणी च**
**[3]भानोर्मध्यं विशितश्चास्य राजन् ।। ३३ ।।**

**वाणी ह्यासीत्संश्रुणी** इत्यत्र सम्यक् श्रूयमाणा संश्रुणी ।

**।। इति मौसले वासुदेवस्वर्गारोहणं नाम पञ्चमोऽध्यायः ।।**

## ।। अथ षष्ठोऽध्यायः ।।

**ततोऽर्जुनस्तानामन्त्र्य केशवस्य प्रियः सखा ।**
**प्रययौ मातुलं द्रष्टुं [4]नैतदस्तीति चाब्रवीत् ।। ३ ।।**

**नैतदस्तीति चाब्रवीत्** इत्यत्र कृष्णस्योपेक्षणात् एतत् राज्यमेव नास्तीत्यब्रवीत् । **।। इति मौसले षष्ठोऽध्यायः ।।**

---

१. BORI पृ. २२; **'गच्छन् ऊर्ध्वं व्याप्य लोकान्सलक्ष्म्या'** इति कुं.पाठः ।
२. BORI पृ. ४६; $M_5$; **'वाणी चासीत्संश्रिता रूपिणी सा भानोर्मध्ये प्रविश त्वं तु राजन्'** इति कुं.पाठः ।
३. **'भानोर्मध्ये'** कुं. पाठः।; ४. BORI पृ. २४; $K_5$; **'नेदमस्तीति'** कुं.पाठः

## ।। अथ सप्तमोऽध्यायः ।।

**तस्य मूर्धानमाघ्रातुमियेषानकदुन्दुभिः ।**
**स्वस्त्रीयस्य महाबाहुर्न शशाक[१] वचो हरेः ।। ३ ।।**

**न शशाक वचो हरेः** इत्यत्र अर्जुन आयास्यति, भवतां योगक्षेमं वहिष्यतीति हरिणा यत्प्रागुक्तं तद्धरेर्वचः वक्तुं वसुदेवः न शशाकेति योजना ।

**यौ तौ वृष्णिप्रवीराणां द्वावेवातिरथौ मतौ ।**
**प्रद्युम्नो युयुधानश्च[२] कथां कथयसे च यौ ।। ७ ।।**

**कथां कथयसे च यौ** इत्यत्र **यौ** प्रद्युम्नयुयुधानावुद्दिश्य कथां कथयसे इति योजना ।

[३] **पश्चात्** पश्चिमतो विद्यमानान् ।

[४] **त्वं हि तं नादराच्चैव मुनयश्च सनातनम् ।**
**गोविन्दमनघं देवमभिजानीध्वमच्युतम् ।। १३ ।।**

**त्वं हि तं नादराच्चैव** इत्यत्र **नादरात्**, अनादरात् स्थिते, तच्च व्यवसितम् ।

[५] **तत्र तस्मिन्महात्मानि चिन्तयन् रामकेशवौ ।**
**घोरं ज्ञातिवधं चैव न भुङ्क्ते शोककर्शितः ।। २५ ।।**

---

१. **'न शशाक च शत्रुहन्'** इति कुं.पाठः ।
२. **'कथयन्कत्थसे च यौ'** इति कुं.पाठः ।
३. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
४. **'त्वं हि तं नारदश्चैव'** इति कुं.पाठः ।
५. **'सोऽहं तौ च महात्मानौ'** इति कुं.पाठः ।

**तत्र तस्मिन्महात्मनि** इत्यत्र **तत्र** युद्धमध्ये स्थिते, तस्मिन्महात्मनि । तच्च तदेव, यदुकुलसंहरणमेव, तच्च व्यवसितं निश्चितम् ।

**॥ इति मौसले वासुदेववाक्यं नाम सप्तमोऽध्यायः ॥**

## ॥ अथ अष्टमोऽध्यायः ॥

**[१]तस्याश्वमेधिके क्षेत्रे दीप्यमानाश्च पावकाः ।**
**पुरस्तात्तस्य यानस्य याजकाश्च ततो ययुः** ॥ २१ ॥

**तस्याश्वमेधिके क्षेत्र** इत्यत्र **क्षेत्रे** कुण्डे ।

**[२]ततः शरीरं रामस्य वासुदेवस्य चोभयोः ।**
**अन्वीक्ष्य दाहयामास पुरुषैराप्तकारिभिः** ॥ ३२ ॥

**ततः शरीरं रामस्य वासुदेवस्य चोभयोः** इत्यत्र वासुदेवस्य **शरीरं**, स्वर्गारोहणसमये जनमोहनार्थं कृतं कृत्रिमं शरीरं, सहजविश्वरूपदेहस्य दाहायोगात् ॥ अन्यथा 'वाणी ह्यासीत् संश्रुणी रूपिणी च भानोर्मध्यं विशतश्चास्य राजन् । भुजैश्चतुर्भिः समुपेतं ममेदं रूपं विशिष्टं दिवि संस्थितं च । भूमौ गतं पूजयताऽप्रमेयम्' इति प्रागुक्तकृष्णवचनविरोधात्, तत्र हि सूर्यमण्डले चतुर्भुजं मम रूपमस्ति, भूमावपि अप्रमेयं चतुर्भुजं मम रूपमस्तीति कृष्णेनैव कथ्यते ।

**[३]पुनर्यत्रावतारोऽस्य भविष्यति कृते युगे ।**
**कोशधारो ह्यहन्तस्य नश्येदण्वपि नो धनम्** ॥

---

१. **'तस्याश्वमेधिकं छत्रम्'** इति कुं.पाठः ।
२. BORI पृ. ३२; $T_1, G_3, D_{8.9}$; **'ततः शरीरे रामस्य'** इति कुं.पाठः ।
३. BORI पृ. ३३

**पुनर्यत्रावतारोऽस्य भविष्यति कृते युगे । कोशधारो ह्यहन्तस्य नश्येदण्वपि नो धनम्** इत्यत्र कृतयुगे ब्रह्मणो दिनान्तरे दिनमध्ये कृते योऽयं **युगः** वैवस्वतमनोरष्टाविंशतितमद्वापरयुगः । तस्मिन्सर्वं धनं सप्राकारपुरी च कृष्णाय मया दातव्या । अहं तु तावत्पर्यन्तं कृष्णस्य कोशधारः, अतः अण्वपि धनं न नश्येत् । यद्यपि दैनन्दिनप्रलये पातालादिभूम्यन्तसप्तलोकानाम् अन्तरिक्षस्वर्गयोश्च नाशोऽस्ति, तथापि स्वाधिष्ठितबहुकोटिप्रमाणस्य घनोदकस्य नाशाभावात् तस्मिन् दैनन्दिनप्रलये सति सप्राकाराया द्वारकायाः तत्रस्थितसकलवस्तूनां च संरक्षणं कृत्वा कृष्णावतारे सति पुनर्दास्यामीति भावेनोक्तम् कोशधारो ह्यहं तस्येति । अतो ब्रह्मप्रलयपर्यन्तं कृष्णनगर्याः द्वारकायाः नाशो नास्तीति माहात्म्यं ज्ञातव्यम् ।

**ततो यष्टिप्रहरणा दस्यवस्ते सहस्रशः ।**
**अभ्यधावन्त वृष्णीनां तं जनं लोप्त्रहारिणः** ॥ ५० ॥

**लोप्त्रहारिणः** तस्कराः । [1]'द्रव्यं ह्यपहृतं लोप्त्रं स्तेयं चौर्यमिति स्मृतम्' इति हलः ।

**निवर्तध्वमधर्मज्ञाः [2]यदि स्थानं मुमूर्षवः ।**
**इदानीं शरनिर्भिन्नाः शोचध्वं निहता मया** ॥ ५३ ॥

**यदि स्थानं मुमूर्षव** इत्यत्र **स्थानम्** अवस्थानम् ।

**बभूव विमनाः पार्थो दैवमित्यनुचिन्तयन् ।**
**न्यवर्तत ततो राजन् [3]नेदमस्तीति चाब्रवीत्** ॥ ६७ ॥

---

१. ह.को. २-३३१

२. $K_5$,$G_{1.3}$; BORI पृ. ३५; **'यदि जीवितुमिच्छथ'** इति कुं.पाठः ।

३. BORI पृ. ३६; **'नेदमस्तीति चिन्तयन्'** इति कुं.पाठः ।

**नेदमस्तीति चाब्रवीत्** इत्यत्र **इदम्** उर्वरितधनं नास्तीत्यब्रवीत् ।

**॥ इति मौसले व्यासार्जुनसमागमो नाम अष्टमोऽध्यायः ॥**

## ॥ अथ नवमोऽध्यायः ॥

**[१]पञ्च पञ्चशतं तेषां सहस्रं बाहुशालिनाम् ।**
**निधनं समनुप्राप्तं समासाद्येतरेतरम् ॥ १३ ॥**

**पञ्च पञ्चशतं तेषां सहस्रं बाहुशालिनाम्** इत्यत्र पञ्च पञ्च सङ्ख्याकं **शतं** सहस्रं, पुनरपि पञ्च पञ्चसङ्ख्याकं शतं सहस्रम् । मिलित्वा सेनापतीनां दशलक्षमिति यावत् ।

**[२]तमपश्यन्विमुक्तोऽस्मि घूर्णामीव च सत्तम ।**
**परिनिर्विण्णचेताश्च शान्तिं नोपलभेऽपि च ॥ २४ ॥**

**तमपश्यन्विमुक्तोऽस्मि** इत्यत्र **विमुक्तोऽस्मि** जीविताय विमुक्तोऽस्मि ।

**॥ इति मौसले अर्जुननगरप्रवेशो नाम नवमोऽध्यायः ॥**
**॥ समाप्तं मौसलपर्व ॥**

---

१. **'हतं पञ्चशतम्'** इति कुं.पाठः ।
२. G5,M; **'तमपश्यन्विषीदामि'** इति कुं.पाठः ।

# अथ आश्रमवासिकपर्व

## ॥ अथ प्रथमोऽध्यायः ॥

**द्रौपदी च सुभद्रा च याश्चान्याः पाण्डवस्त्रियः ।**
**समां वृत्तिमवर्तन्त तयोः श्वश्रोर्यथाविधि** ॥ ९ ॥

**तयोः श्वश्रोर्यथाविधि** इत्यत्र **श्वश्रोः** कुन्तीगान्धार्योः ।

**आरालिकाः सूपकारा रागपाडविकास्तथा ।**
**उपातिष्ठन्त राजानं धृतराष्ट्रं यथापुरम्** ॥ १९ ॥

**आरालिकाः सूपकारा** इत्यत्र **आरालिकाः** आन्धसिकाः, अन्नकर्तार इत्यर्थः । [1]'आरालिका औदनिका गुणाः' इत्यमरः । 'अन्धः कूरं भक्तम्'[2] इति हलः ।

**रागषाडविकास्तथा** इत्यत्र षण्णां रसानां सम्बन्धि **षाडवं** चित्रान्नभक्ष्यलेह्यपेयादिकं, तत् कुर्वन्तीति षाडविकाः ।

**॥ इत्याश्रमवासिके धृतराष्ट्रशुश्रूषणं नाम प्रथमोऽध्यायः ॥**

## ॥ अथ तृतीयोऽध्यायः ॥

[3]**तिष्ठन्तं धर्मजं नृपम्** इत्यत्र **तिष्ठन्तम्** अनुतिष्ठन्तम् ।

**॥ इत्याश्रमवासिके तृतीयोऽध्यायः ॥**

**॥ इति भीमसञ्चारो(प्रचारो) नाम चतुर्थोऽध्यायः ॥**

---

१. अ.को. द्वि वैश्यवर्गः श्लो. २८ ; २. ह.को. २-३१९

३. एतत्प्रतीकघटितः श्लोकः मुद्रितकोशेषु नोपलभ्यते ।

## ॥ अथ पञ्चमोऽध्यायः ॥

[१] **चतुर्थे नियते काले कदाचिदपि चाष्टमे ।**
**तृष्णाविनयनं भुङ्क्ते गान्धारी वेद तन्मम** ॥ २६ ॥

**तृष्णाविनयनं भुङ्क्ते** इत्यत्र तृष्णायाः विशेषेण **नयनम्** उपगमनं यथा भवति तथा ।

**॥ इति धृतराष्ट्रवनवासप्रार्थनं नाम पञ्चमोऽध्यायः ॥**

## ॥ अथ षष्ठोऽध्यायः ॥

[२] **नाहं राजा भवान्राजा भवता परवानहम् ।**
**कथं गुरुं त्वां धर्मज्ञमनुज्ञातुमिहोत्सहे** ॥ ९ ॥

**भवता परवान्** इत्यत्र **परवान्** नाथवान् । [३] 'परवान्नाथवानपि' इत्यमरः ।

**तापस्ये मे मनस्तात वर्तते कुरुनन्दन ।**
**उचितं च कुलेऽस्माकमरण्यगमनं प्रभो** ॥ १६ ॥

**तापस्ये मे मनस्तात** इत्यत्र **तापस्ये**, तपःसम्बन्धिनि पुण्ये ।

**अहमप्युपवत्स्यामि यथैवायं गुरुर्मम ।**
**यदि राजा न भुङ्क्तेऽयं गान्धारी च यशस्विनी** ॥२६॥

**उपवत्स्यामि** उपोषणं करोमि । **॥ इत्याश्रमवासिके षष्ठोऽध्यायः ॥**

---

१. कुं.पूर्वाध्याय एवानुसरति । ; २. कुं.४ अध्यायः ।
३. अ.को. तृ. विशेष्यनिघ्नवर्गः श्लो. १६

## ।। अथ नवमोऽध्यायः ।।

**[१] अप्रमादस्त्वया कार्यः सर्वथा कुरुनन्दन ।**
**अष्टाङ्गे राजशार्दूल राज्ये धर्मपुरस्कृते ।। ८ ।।**

**अष्टाङ्गे राजशार्दूल** इत्यत्र 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च' इत्यभिधानात् स्वामी, राजा, अमात्यादयस्त्वष्टौ तस्याङ्गानि ।

**।। इति आश्रमवासिके राज्यरक्षणोपायो नाम नवमोऽध्यायः ।।**

## ।। अथ दशमोऽध्यायः ।।

**[२] अतिपानेन राजाऽपि सर्वं कोशं विनाशयेत् ।**
**वितरेद्गायकेभ्यश्च [३] प्रधानद्रव्यसञ्चयम् ।। ३३ ।।**

**वितरेद्गायकेभ्यश्च प्रधानद्रव्यसञ्चयम्** इत्यत्र **प्रधानात्** प्रधान-पुरुषात् मन्त्रिण इत्यर्थः । लब्धं द्रव्यसञ्चयमेव वितरेत् । न तु कोशस्थम् ।

**शब्दमात्मनि दोषांश्च [४] पिबेदेकः स्वजायया ।**
**युक्त्या प्रकाशमयति सुवीर्यस्य विवृद्धये ।। ३४ ।।**

**शब्दमात्मनि दोषांश्च पिबेदेकः स्वजायया** इत्यत्र 'शब्देनापः पयः पीत्वा शब्देन घृतपायसम् । शब्देनापोशनं पीत्वा सुरापानसमं भवेत्'

---

१. कुं.६ **अध्यायः** । ; २. कुं.पूर्वाध्याय एवानुसरति ।
३. BORI पृ. ३०; **'वृथा च द्रव्यसञ्चयम्'** इति कुं.पाठः ।
४. **'पिबेदेकश्च जायया'** इति कुं.पाठः ।

इति वचनात् । जायया सह मधुक्षीरादिपाने शब्दम् आत्मनि दोषान् जानन् पिबेत् इति योजना ।

**पश्येथाश्च ततो योधान् सदा त्वं प्रतिहर्षयन् ।**
**दूतानां च चराणां च प्रदोषस्ते सदा भवेत् ॥ ३६ ॥**

**दूतानां च चराणां च** इत्यत्र विचारणायेति योग्यपदाध्याहारः । **प्रदोषः** 'प्रदोषो रजनीमुखम्'[1] इति वचनात् अस्तमयकालः ।

**सर्वे त्वात्यायिके[2] काले कार्याणां भरतर्षभ ।**
**तथैवालङ्कृतः काले तिष्ठेथा भूरिदक्षिणः ॥ ३८ ॥**

**सर्वे त्वात्यायिके काले कार्याणाम्** इत्यत्र कार्याणाम् आत्यायिके काले, **अत्ययो** नाशः, तत्सम्बन्धिनि काले सर्वेऽप्यनुसर्तव्या इत्यर्थः ।

**कोशस्य निचये यत्नं कुर्वीथा न्यायतः सदा ।**
**[3]द्विविधस्य महाराज विपरीतं विवर्जयेः ॥ ४० ॥**

**द्विविधस्य महाराज** इत्यत्र न्यायस्य कोशसङ्ग्रहस्य चेति **द्विविधस्य** ।

**देशजाश्चैव पुरुषा विक्रान्ताः स्वेषु कर्मसु ।**
**[4]मात्राभिरनुरूपाभिरनुग्राह्या हितास्त्वया ॥ ४६ ॥**

---

१. अ.को. प्र. कालवर्गः श्लो. ६
२. BORI पृ. ३१; $T_{2.3}$,$G_{2.5}$,$M_5$; **'त्वौपायिकाः कालाः'** इति कुं.पाठः ।
३. BORI पृ. ३१; $B_{3.5}$,M,$D_N$; **'विविधस्य'** इति कुं.पाठः ।
४. BORI पृ. ३१; **'यात्राभिरनुरूपाभिरनुग्राह्या'** इति कुं.पाठः ।

**मात्राभिरनुरूपाभिः** इत्यत्र **मात्राभिः** प्रमाणैः ।

॥ इति आश्रमवासिके दशमोऽध्यायः ॥

## ॥ अथ एकादशोऽध्यायः ॥

**पञ्चद्वादशकौन्तेय[1] राजानो वै विविधात्मकाः ।**
**मन्त्रिप्रधानाश्च गुणाः षट्[2] द्वादश च स्मृताः ॥ ४ ॥**

**पञ्चद्वादशकौन्तेय** इत्यत्र 'सहायाः साधनोपायाः विभागो देशकालयोः । विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्गमित्यपि' इति वचनात् **पञ्च** सहायादिपञ्चाङ्गानि, **सिद्धिः** कार्यसिद्धिः । **द्वादश** अध्ययनं यजनं, दानं, शस्त्रास्त्रकौशलं, युद्धेष्वपलायनं, बाह्यान्तरशत्रुजयः, क्षमाशीलत्वं, दयाशीलत्वं, गाम्भीर्यं, स्थैर्यं, शौर्यमनहङ्कारश्चेति द्वादश । एवं विविधगुणात्मका राजानः ज्ञातव्याः इति योजना ।

**षट् द्वादश च स्मृता** इत्यत्र 'षड्गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजा' इत्यभिधानात् । 'सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रय' इत्युक्तषड्गुणाः । 'प्रभावोत्साहमन्त्रजा' इति वचनात् प्रभुशक्तिरुत्साहशक्तिर्मन्त्रशक्तिश्चेति शक्तित्रयं, 'क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम्' इति वचनात्; शत्रुजयः, स्थानसिद्धिः, कोशवृद्धिश्चेति सिद्धित्रयम् ।

'धर्मोदयः कीर्त्युदयो जयोदयश्चेति उदयत्रयम् ।

चारसञ्चारणं चोरनिवारणं न्यायान्यायविचारणा च' इति नीतित्रयम् । एवं द्वादश गुणाः । एते मन्त्रिप्रधानगुणाः स्मृताः ।

---

१. कुं.७ **अध्यायः । 'ते च द्वादश'** इति कुं.पाठः ।
२. **'षष्टिर्द्वादश च प्रभो'** इति कुं.पाठः ।

**एतन्मण्डलमित्याहुराचार्या नीतिकोविदाः ।**
**अत्र षाड्गुण्यमायत्तं युधिष्ठिर निबोध तत् ॥ ५ ॥**

**अत्र षाड्गुण्यमायत्तम्** इत्यत्र **अत्र** सप्तदशराजगुणेषु अष्टादशमन्त्रिगुणेषु च **षाड्गुण्यं** स्वरक्षणं, स्वदेशरक्षणं, स्वमित्ररक्षणं, शत्रुसंहरणं, शत्रुदेशापहरणं, शत्रुमित्रापहरणञ्चेति षाड्गुण्यम् आयत्तम् ।

**वृद्धिक्षयौ च विज्ञेयौ स्थानं च कुरुसत्तम ।**
**द्विसप्तत्यां महाबाहो ततः षाड्गुण्यचारणा[१] ॥ ६ ॥**

**द्विसप्तत्यां महाबाहो** इत्यत्र चतुःषष्टिकलाः, चत्वार उपायाः, चतुरङ्गसेनाश्चेति द्व्युत्तरसप्तत्या कारणेन, **वृद्धिक्षयौ** स्वस्य वृद्धिः परेषां क्षयः, **स्थानं** स्वराज्यस्थानं चेति फलत्रयम् आयत्तं भवति, ततः **षाड्गुण्यचारणा** पूर्वोक्तषाड्गुण्यसञ्चारणा सम्पन्ना भवति ।

**यथा स्वपक्षो बलवान् परपक्षस्तथाऽबलः ।**
**विगृह्य शत्रून् कौन्तेय यायात् क्षितिपतिस्तदा ॥ ७ ॥**

**यायात्** इत्यत्र **यायात्**, दण्डयात्रां कुर्यात् ।

**॥ इति आश्रमवासिके एकादशोऽध्यायः ॥**

## ॥ अथ द्वादशोऽध्यायः ॥

**धृतराष्ट्र उवाच –**

**सन्धिविग्रहमप्यत्र[२] पश्येथा राजसत्तम ।**

---

१. BORI पृ. ३४; G5,M2.3; **'षाड्गुण्यजा गुणाः'** इति कुं.पाठः ।
२. कुं.८ अध्यायः ।

**द्वियोनिं त्रिविधोपायं[१] बहुकल्पं युधिष्ठिर ॥ १ ॥**

**द्वियोनिं त्रिविधोपायम्** इत्यत्र स्वस्य दौर्बल्यं, परस्य प्राबल्यं चेति सन्धेर्योनिद्वयं, स्वस्य प्राबल्यं, परस्य दौर्बल्यं चेति विग्रहस्य योनिद्वयम् । सामवचनं, द्रव्यदानं, सम्बन्धकरणं चेति सन्धेरुपाय-त्रयम् । यानम्, आसनम्, अस्त्रशस्त्रादिभिः दण्डनं चेति विग्रहस्य उपायत्रयम् । **बहुकल्पम्** उक्तविधया बहुप्रकारम् ।

**कौरव्य पर्युपासीथाः स्थित्वा द्वैविध्यमात्मनः ।**
**[२] तुष्टपुष्टबलं शत्रुम् अर्थवानिति च स्मरेत् ॥ २ ॥**

**तुष्टपुष्टबलं शत्रुम्** इत्यत्र यदा स्वस्य शत्रुर्भवति । तदा तं तुष्टपुष्ट-बलम् अर्थवानिति च स्मरेत् ।

**पर्युपासनकाले तु विपरीतं विधीयते ।**
**आमर्दकाले राजेन्द्र व्यवसायस्ततोऽपरः ॥ ३ ॥**

**पर्युपासनकाले** तस्यैवानुसरणकाले, **विपरीतम्** उक्तगुणत्रयस्य विपरीतं विधीयताम् ।

**[३] प्रयास्यमानस्तु नृपतिस्त्रिविधं परिचिन्तयेत् ।**
**आत्मनश्चैव शत्रोश्च शक्तिं शास्त्रविशारदः ॥ ५ ॥**

**प्रयास्यमानस्तु नृपतिस्त्रिविधं परिचिन्तयेत्** इत्यत्र **त्रिविधं** वक्ष्य-माणशक्तित्रयम् ।

---

१. **'विविधोपायम्'** इति कुं. पाठः । BORI पृ. ३६
२. BORI पृ. ३६; $K_3$; **'तुष्टपुष्टजनः शत्रुर्'** इति कुं.पाठः ।
३. **'प्रयास्यमानो'** इति कुं.पाठः ।

**आददीत बलं राजा मौलं मित्रबलं तथा ।**
**अटवीबलं भृतं चैव तथा श्रेणीबलं प्रभो ॥ ७ ॥**

**मौलं मित्रबलम्** इत्यत्र **मौलं** मूलसम्बन्धि धनबलम् । **अटवीबलं भृतं चैव** इत्यत्र **भृतं** वेतनदानेन रक्षितं सैन्यं, **श्रेणीबलं** जनपदग्रामग्रामस्थभटश्रेणीबलम् ।

**मित्रामित्रबलं राजन् न्यायाद् वृद्ध्युदये धृतः ।**
**तत्र मित्रबलं राजन् मौलं चैव विशिष्यते ।**
**श्रेणीबलं भृतं चैव तुल्य एवेति मे मतिः ॥ ८ ॥**

**मित्रामित्रबलं राजन्** इत्यत्र मित्रस्य यो मित्रं तत्सैन्यम् । **वृद्ध्युदये** धनवृद्धेरुदये सति **यायात्** प्राप्नुयात् ।

**यात्रां गच्छेद्बलैर्युक्तो राजा षड्भिः परन्तप ।**
**युक्तश्च देशकालाभ्यां बलैरात्मगुणैस्तथा ॥ १२ ॥**

**राजा षड्भिः परन्तप** इत्यत्र हस्तिबलम्, अश्वबलं, रथबलं, पदातिबलं, धनबलं, बुद्धिबलं चेति **षड्भिः** बलैः ।

**हृष्टपुष्टबलो गच्छेद्राजा वृद्ध्युदये रतः ।**
**आहूतश्चाप्यथो[१] यायाद् अमृतादपि पार्थिवः ॥ १३ ॥**

**अमृतादपि पार्थिव** इत्यत्र **अमृतात्** अमृतसदृशभोजनं विहाय ल्यब्लोपनिमित्ता पञ्चमी । **आहूतः** युद्धार्थमाहूतः ।

---

१. BORI पृ. ३८; BORI,M1.2.4,G5; **'अकृशश्चाप्यथो यायाद् अनृतावपि पाण्डव'** इति कुं.पाठः ।

[1] **सुबन्धिनीं वाजिरथप्रधानो ध्वजद्रुमैः संवृतकूलरोधसम् ।**
**पदातिनागैर्बहुकर्दमां नदीं [2] स्थूलाश्मकां तोयवतीं च यायात् १४**

**सुबन्धिनीं वाजिरथप्रधान** इत्यत्र **सुबन्धिनीं** शोभनसेतुबन्धवर्ती कृत्वा वा, वायुवेगे वाजिबद्धरथप्रधानो वा, नागैः अश्वैर्वा **तोयवतीं** बहुतोयवतीं नदीमतिक्रम्य यायात् ।

[3] **यथोपपत्त्या शकटं पद्मवज्रं च भारत ।**
**उशना वेद यच्छास्त्रं तत्रैतद्विहितं विभो ॥ १५ ॥**

**यथोपपत्त्या शकटम्** इत्यत्र **शकटं** शकटव्यूहं चक्रव्यूहं चेत्यर्थः ।

[4] **साधयित्वा परबलं कृत्वा स्वबलकर्षणम् ।**
**स्वभूमौ योजयेद्युद्धं परभूमौ तथैव च ॥ १६ ॥**

**साधयित्वा परबलम्** इत्यत्र **परबलम्** उत्कृष्टसैन्यं **बलकर्षणं,** धनादिकं दत्वा शत्रुसैन्यस्य आकर्षणम् ।

[5] **बलं प्रशमयेद् राजा निक्षिपेद्बलिनो नरान् ।**
**ज्ञात्वा स्वविषयं तत्र सामादिभिरुपक्रमेत् ॥ १७ ॥**

---

१. **'तूणाश्मानं वाजिरथप्रवाहाम्'** इति कुं.पाठः ।
२. BORI पृ. ३९; $G_{2.5}$,$T_2$,$M_{2.3}$; **'सपत्ननाशे नृपतिः प्रयोजयेत्'** इति कुं. पाठः ।
३. **'अथोपपत्त्या'** इति कुं.पाठः ।
४. BORI पृ. ३९; $G_{1.3.5}$,$T_3$; **'चारयित्वा परबलं कृत्वा स्वबलदर्शनम्'** इति कुं.पाठः ।
५. BORI पृ. ३९; B,$T_{1.4}$,$G_{1.3}$;**'बलं प्रसादयेत्'** इति कुं.पाठः ।

**बलं प्रशमयेत्** धनदानादिना यथा कोपो न भवति तथा कुर्यात् ।

॥ इति आश्रमवासिके द्वादशोऽध्यायः ॥

## ॥ अथ चतुर्दशोऽध्यायः ॥

[१] **अनन्तरं हि पितरौ अनुज्ञानो युधिष्ठिरः ।**
**नात्र किञ्चिन्मृषा जातु भाषतेति मतिर्मम** ॥ ३ ॥

**अनन्तरं हि पितरौ** इत्यत्र **पितरौ** [२]'मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ' इत्यभिधानात् यौ पितरौ गान्धारी अहञ्च आवाभ्यामनुज्ञात इति योजना ।

**अवश्यमेव वक्तव्यमिति कृत्वा ब्रवीमि वः ।**
**एष न्यासो मया दत्तः सर्वेषां वो युधिष्ठिरः ।**
**भवन्तोऽस्य च वीरस्य न्यासभूताः कृता मया** ॥ १५ ॥

**एष न्यासो मया दत्त** इत्यत्र **न्यासः** निक्षिप्तधनम् ।

॥ इति आश्रमवासिके चतुर्दशोऽध्यायः ॥

## [३]॥ अथ पञ्चदशोऽध्यायः ॥

[४] **तत्र स्वे चरणे वृद्धः सम्मतोऽर्थविशारदः ।**
**सम्भाव्यो बह्वृचो राजन्वक्तुं समुपचक्रमे** ॥ ११ ॥

---

१. कुं.१० अध्यायः । 'अनन्तरं हि पितरम्' इति कुं.पाठः ।
२. अ.को. द्वि. मनुष्यवर्गः श्लो. ३७; ३. कुं.११ अध्यायः ।
४. BORI पृ. ४७; $G_{3,5}$; $M_{1,4,5}$; 'ततः स्वाचरणो विप्रः' इति कुं.पाठः ।

**तत्र स्वे चरणे वृद्ध** इत्यत्र **स्वे चरणे** स्वकीयाचारे अर्थविचारणे च सम्मतः ।

**नात्र मिथ्या वचः किञ्चित् सुहृत्वं नः परस्परम् ॥ १४ ॥**
**न जात्वस्य च वंशस्य राज्ञां[1] किञ्चित् कदाचन ।**
**राजाऽऽसीद्यः प्रजापालः प्रजानामप्रियोऽभवत् ॥ १५ ॥**

**राज्ञां किञ्चित् कदाचन** इत्यत्र किञ्चिद्वचः कदाचन मिथ्या न, इति मिथ्यावचःपदयोरावृत्त्या योजना, तव वचो मिथ्या नेति किं वक्तव्यम् । तव वंशोत्पन्नानां राज्ञामपि वचो मिथ्या नैवेति भावः ।

**तथा वर्षसहस्राणि कुन्तीपुत्रेण धीमता ।**
**पाल्यमाना धृतिमता सुखं विन्दामहे नृप ॥ २२ ॥**

**तथा वर्षसहस्राणि** इत्यत्र वर्षसहस्राण्यारभ्य ये तव पूर्वे राजानः, कुन्तीपुत्रः युधिष्ठिरोऽपि, **तथा** महाविवेकीति भावः ।

**वृत्तं समनुयात्येष धर्मात्मा भूरिदक्षिणः ।**
**नात्र वाच्यं महाराज सुसूक्ष्ममपि विद्यते ॥ २४ ॥**

**नात्र वाच्यम्** इत्यत्र **वाच्यं** निन्दायोग्यम् ।

**॥ इति आश्रमवासिके धृतराष्ट्रतपोवनवासगमनाभ्यनुज्ञा नाम पञ्चदशोऽध्यायः ॥**

* * *

---

१. BORI पृ. ४८; $G_{1.2}$,$T_2$,$D_{4.6.8}$; **'राज्ञां कश्चित्कदाचन'** इति कुं. पाठः ।

## ।। अथ षोडशोऽध्यायः ।।

[१] **मा तेऽन्यत्पुरुषव्याघ्र दानाद्भवतु दर्शनम् ।**
**अयशास्यमतोऽन्यत्स्यादधर्मश्च महाभुज ।। १३ ।।**

**दानाद्भवतु दर्शनम्** इत्यत्र **दर्शनं** सिद्धान्तः ।

**।। इति आश्रमवासिके नारदवचनं नाम षोडशोऽध्यायः ।।**
**।। इति आश्रमवासिके विदुरवाक्यं नाम अष्टादशोऽध्यायः ।।**
**।। इति धृतराष्ट्रवानप्रस्थं नाम एकोनविंशोऽध्यायः ।।**
**।। इति भीष्मादीनां श्राद्धदानं नाम विंशोऽध्यायः ।।**

## ।। अथ एकविंशोऽध्यायः ।।

[२] **समाधेयस्त्वया राजंस्त्वय्यद्य कुलधूर्गता ।**
**श्वश्रूश्वशुरयोः [३] पादौ शुश्रूषन्ती वने त्वहम् ।**
**गन्धारी सहिता वत्स्ये तापसी मलपङ्किनी ।। १६ ।।**

**श्वश्रूः श्वशुरयोः पादौ** इत्यत्र **श्वश्रूः श्वशुरयोः** श्वश्रूश्वशुरस्थानीययोः, गान्धारीधृतराष्ट्रयोः ।

**।। इति आश्रमवासिके पर्वणि कुन्तीवानप्रस्थानं नाम एकविंशोऽध्यायः ।।**

## ।। अथ त्रयोविंशोऽध्यायः ।।

[४] **प्रधीतद्विजमुख्या सा सम्प्रज्वलितपावका ।**
**बभूव तेषां रजनी ब्राह्मीव प्रतिवर्धिनी ।। २२ ।।**

---

१. कुं.१२ अध्यायः । ; २. कुं.१७ अध्यायः ।
३. BORI पृ. ६६; $G_1$,$T_3$; **'पादाञ्शुश्रूषन्ती'** इति कुं.पाठः ।
४. कुं.१९ अध्यायः ।

**प्रधीतद्विजमुख्या** इत्यत्र प्रकृष्ट**मधीतम्** अध्ययनं येषां ते द्विजमुख्या यस्यां सा तथोक्ता ।

**॥ इति आश्रमवासिके त्रयोविंशोऽध्यायः ॥**

**॥ इति आश्रमवासिके पाण्डवशोककथनं नाम सप्तविंशोऽध्यायः ॥**

## ॥ अथ अष्टविंशोऽध्यायः ॥

**[१]सूदाः पौरोगवाश्चैव सर्वं चैव महानसम् ।**
**विविधं भक्ष्यभोज्यं च शकटैरुह्यतां मम ॥ २३ ॥**

**पौरोगवा** इत्यत्र **पौरोगवाः** दध्नः अध्यक्षाः । [२]'पौरोगवस्तदध्यक्षः सूपकारास्तु बल्लवा' इत्यमरः ।

**॥ इति आश्रमवासिके युधिष्ठिरवनप्रस्थानं नाम अष्टविंशोऽध्यायः ॥**

## ॥ अथ एकोनत्रिंशोऽध्यायः ॥

**[३]गजेन्द्रैर्गर्जितैर्वान्ये केचिदुष्ट्रैर्नराधिपः ।**
**पदातयस्तथैवान्ये नखरप्रासयोधिनः ॥ ४ ॥**

**गजेन्द्रैर्गर्जितैः** इत्यत्र **गर्जितैः** मदोन्मत्तैः । [४]'प्रभिन्नो गर्जितो मत्तः' इत्यमरः ।

**॥ इति आश्रमवासिके पाण्डववनप्रवेशो नाम एकोनत्रिंशोऽध्यायः ॥**

**॥ इति आश्रमवासिके धृतराष्ट्रसमागमो नाम त्रिंशोऽध्यायः ॥**

---

१. कुं.२४ अध्यायः ।; २. अ.को. द्वि. वैश्यवर्गः श्लो. २७

३. कुं.२५ अध्यायः । BORI पृ. ८७; $T_2$,$G_{1.2.5}$,$M_{1.3}$; **'गजेन्द्रैश्च तथैवान्ये'** इति कुं.पाठः ।; ४. अ.को. द्वि. क्षत्रियवर्गः श्लो. ३६

## ।। अथ एकत्रिंशोऽध्यायः ।।

**[१] इयं स्वसा राजचमूपतेश्च प्रवृद्धनीलोत्पलदामवर्णा ।**
**पस्पर्ध कृष्णेन सदा नृपो यो वृकोदरस्यैष प्रतिग्रहोऽग्र्यः १२**

**इयं स्वसा राजचमूपतेः** इत्यत्र **राजचमूपतेः** धृष्टद्युम्नस्य **स्वसा** द्रौपदी, **कृष्णेन** अर्जुनेन 'व्यासार्जुनाग्निहरिकोकिलकाकशूद्रतामिस्र-पक्षकलिनीलगुणेषु कृष्णः । द्रव्ये त्रिषु द्रुपदजा तटिनी कणा च कृष्णाथ लोह मरिचं दुरितं च कृष्णम्'' इति नानार्थरत्नमाला ।

**।। इति आश्रमवासिके सञ्जयवचनं नाम एकत्रिंशोऽध्यायः ।।**

## ।। अथ द्वात्रिंशोऽध्यायः ।।

**[२] लोकवैकर्मणा नाम भविष्यत्यस्य भारत ।**
**यतिधर्ममवाप्तोऽसौ नैष शोच्यः परन्तप ।। ३३ ।।**

**लोकवैकर्मणा नाम** इत्यत्र विगतं प्रवृत्तिकर्म येभ्यस्ते **विकर्माणः** शान्ता मुनीश्वराः, तेषां सम्बन्धिनो **वैकर्मणाः** ।

**।। इति आश्रमवासिके विदुरस्य युधिष्ठिरप्रवेशो नाम द्वात्रिंशोऽध्यायः ।।**

## ।। अथ त्रयस्त्रिंशोऽध्यायः ।।

**[३] वनेषु पुष्पनिकरैः राजन् धूमोद्गतैरिव ।**

---

१. कुं.२७ अध्यायः ।

२. कुं.२८ अध्यायः । BORI पृ.९९; G5; **'लोको वैकर्तनो नाम'** कुं.पाठः

३. कुं.२९ अध्यायः । BORI पृ. १०१; M1,G5,D1,M3; **'वानेय पुष्पनिकरैराज्यधूमोद्गमैरपि'** इति कुं.पाठः ।

*

**ब्राह्मेण वपुषा युक्ता[1] युक्तां मुनिजनस्य ताम्** ॥ ८ ॥

**वनेषु पुष्पनिकरैः राजन् धूमोद्गतैरिव** इत्यत्र **धूमोद्गतैः** धूपधूमोद्गतैः पुष्पैरिव वनेषु पुष्पनिकरैर्युक्ताम्, मुनिजनस्य ब्राह्मणवपुषा च युक्तां वेदिं ददर्श। तत्र तत्र ददर्शेति योजना।

**[2]भ्राता तव महाराज देवदेवः सनातनः।**
**[3]धारणाच्छ्रेयसो ज्ञानात् यं धर्मं कवयो विदुः** ॥ १६ ॥

**धारणाच्छ्रेयसो ज्ञानात्** इत्यत्र 'धृ धारणे', 'माङ् माने' च इति धात्वोः श्रेयसो धारणात् ज्ञानाच्च धर्म इत्यर्थः।

**॥ इति आश्रमवासिके व्यासवाक्यं नाम त्रयस्त्रिंशोऽध्यायः ॥**

## ॥ अथ चतुस्त्रिंशोऽध्यायः ॥

**[4]निषेदुस्ते ततः सर्वे पूजां प्राप्य युधिष्ठिरात्।**
**आसनेषु च पुण्येषु बर्हिष्केषु[5] नवेषु च** ॥ १३ ॥

**बर्हिष्केषु नवेषु** इत्यत्र बर्हिष्केषु, **बर्हिः** दर्भः। तत्सम्बन्धिषु तद्रचितेष्वित्यर्थः। [6]'बर्हिर्दर्भः कुशः कुथः' इति हलः।

**॥ इति आश्रमवासिके धृतराष्ट्रशोकवचनं नाम चतुस्त्रिंशोऽध्यायः ॥**

---

१. BORI पृ. १०१; $G_1$,$M_{1.3}$; **'ब्राह्मणेन वपुषा युक्ता युक्ता मुनिगणस्य ताः'** इति कुं.पाठः।
२. कुं.३० अध्यायः।
३. BORI पृ. १०५; $M_3$; **'धारणान्मनसा ध्यानाद्यम्'** इति कुं.पाठः।
४. कुं.३१अध्यायः।; ५. BORIपृ.१०८; $M_{1,3}$; **'बर्हिणेषु वरेषु च'**कुं.पाठः
६. ह.को. २-१९१

## ॥ अथ पञ्चत्रिंशोऽध्यायः ॥

[१]**पुत्रशोकसमाविष्टो निःश्वसन् ह्येष भूमिपः ।**
**न शेते वसतीः सर्वा धृतराष्ट्रो महामुने** ॥ ४३ ॥

[२]'विस्तारवल्ल्योर्व्रततिर्वसती रात्रिवेश्मनोः' इत्यमरः । **वसतीः** रात्रीः । **॥ इति आश्रमवासिके पञ्चत्रिंशोऽध्यायः ॥**

## ॥ अथ षट्त्रिंशोऽध्यायः ॥

[३]**यदि पापमपापं वा तदेतद्विवृतं मया ।**
[४]**तं मे भवन्तं भगवन् व्यपनेतुं त्वमर्हसि** ॥ १८ ॥

**तं मे भवन्तं भगवन्** इत्यत्र **भवन्तं** जायमानम्, तं दोषम् इत्यर्थः ।

**सर्वं बलवतां पथ्यं सर्वं बलवतां शुचि ।**
**सर्वं बलवतां धर्मः सर्वं बलवतां स्वकम्** ॥ २४ ॥

**सर्वं बलवताम्** इत्यत्र **बलवतां** तपोबलवताम् ।

**॥ इति आश्रमवासिके कुन्तीव्यासवचनं नाम षट्त्रिंशोऽध्यायः ॥**

## ॥ अथ अष्टत्रिंशोऽध्यायः ॥

[५]**ततो व्यासो महातेजाः पुण्यं भागीरथीजलम् ।**
**अवतीर्याजुहावाथ सर्वाँल्लोकान्महामुनिः** ॥ ४ ॥

---

१. कुं.पूर्वाध्याय एवानुसरति ।; २. अ.को. तृ. नानार्थवर्गः श्लो. ६७
३. कुं.३२ अध्यायः ।
४. BORI पृ. ११५; $T_2$; **'तं द्रष्टुमिच्छामि भगवन्'** इति कुं.पाठः ।
५. कुं.३४ अध्यायः ।

**सर्वांल्लोकान्महामुनिः** इत्यत्र **लोकान्** जनान् । [1]'लोकस्तु भुवने जनः' इत्यमरः ।

**।। इति आश्रमवासिके हतबन्धुदर्शनं नाम अष्टत्रिंशोऽध्यायः ।।**

## ।। अथ चत्वारिंशोऽध्यायः ।।

**[2]परावरज्ञस्तु नरो नातिमानादुदीरितः ।**
**अपरज्ञः परां बुद्धिं स्पृष्ट्वा मोहाद्विमुच्यते ।। १६ ।।**

**नातिमानादुदीरित** इत्यत्र परावरज्ञोऽपि नरः **अतिमानात्** दोषात् **उदीरितः** ऊर्ध्वं गतो न भवति इति योजना ।

**।। इति कर्मस्वरूपशरीरग्रहणकथनं नाम चत्वारिंशोऽध्यायः ।।**
**।। इति जनमेजयस्वपितृदर्शनं नाम एकचत्वारिंशोऽध्यायः ।।**
**।। इति युधिष्ठिरपुनरागमनं नाम द्विचत्वारिंशोऽध्यायः ।।**
**।। इति धृतराष्ट्रस्वर्गारोहणं नाम त्रिचत्वारिंशोऽध्यायः ।।**
**।। इति पाण्डवप्रलापो नाम चतुश्चत्वारिंशोऽध्यायः ।।**
**।। इति आश्रमवासिकपर्व समाप्तम् ।।**

---

१. अ.को. तृ. नानार्थवर्गः श्लो. २

२. कुं.३६ अध्यायः ।; BORI पृ. १२८; $M_{1.3}$,$G_5$; **'परावरज्ञस्त्वपरो नाभिमानादुदीक्षितः'**इति कुं.पाठः ।

# महाप्रस्थानिकपर्व

## ।। अथ प्रथमोऽध्यायः ।।

अभिषिच्य[1] हस्तिनपुरे शक्रप्रस्थे च यादवः ।
**वज्रो राजा त्वया रक्ष्यो मा चाधर्मे मनः कृथाः ।। १ ।।**

**अभिषिच्य हस्तिनपुरे शक्रप्रस्थ** इत्यत्र **हस्तिनपुरे** हस्तिनापुर-समीपस्थे शक्रप्रस्थे ।

**श्वा चैवानुययावेकः प्रस्थितान् पाण्डवान् वनम् ।**
**क्रमेण ते ययुर्वीरा लौहित्यं सलिलार्णवम् ।। ३४ ।।**

**लौहित्यं सलिलार्णवम्** इत्यत्र लोहितस्याग्नेः सम्बन्धिनं **सलिला-र्णवं** समुद्रम् ।

**।। इति महाप्रस्थानिके पर्वणि प्रथमोऽध्यायः ।।**
**।। इति महाप्रस्थानिके पर्वणि भीमादिपतनं नाम द्वितीयोऽध्यायः ।।**
**।। इति महाप्रस्थानिकपर्व समाप्तम् ।।**

* * *

---

१. **'परीक्षिद्धास्तिनपुरे'** इति कुं.पाठः । G4; BORI पृ. ४

# स्वर्गारोहणपर्व

## ।। अथ प्रथमोऽध्यायः ।।

**यदि दुर्योधनस्यैते वीरलोकाः सनातनाः ।**
**अधर्मज्ञस्य पापस्य पृथिवीसुहृदद्रुहः ।। २० ।।**

**यदि दुर्योधनस्यैते वीरलोकाः सनातना** इत्यत्र युद्धे आभिमुख्येन मृतानां वीराणां किञ्चित्कालं सुखभोगाय स्वर्गादर्वाक् अन्तरिक्षादुपरि कृता ये लोकाः ते **वीरलोकाः** ।

**।। इति स्वर्गारोहणिके युधिष्ठिरदुर्योधनसमागमो नाम प्रथमोऽध्यायः ।।**

## ।। अथ द्वितीयोऽध्यायः ।।

**तमसा संवृतं घोरं केशकङ्कालसङ्कुलम्[१] ।**
**युक्तं पापकृतां गन्धैर्मांसशोणितकर्दमम् ।। १७ ।।**

**केशकङ्कालसङ्कुलम्** इत्यत्र **कङ्कालः** शरीरास्थि, [२]'शरीरास्थ्नि कङ्कालः पृष्ठास्थ्नि तु कशेरुकः' इत्यमरः ।

**[३]अयोमुखैश्च काकोलैर्गृध्रैश्च समभिद्रुतम् ।**
**सूचीमुखैस्तथा प्रेतैर्विन्ध्यशैलोपमैर्वृतम् ।। २० ।।**

---

१. **'केशशैवलशाद्वलम्'** इति कुं.पाठः ।

२. **अ.को. द्वि. मनुष्यवर्गः श्लो. ६९**

३. BORI पृ. ८; **'अयोमुखैश्च काकाद्यैर्गृध्रैश्च'** इति कुं.पाठः ।

**अयोमुखैश्च काकोलैः** इत्यत्र **काकोलः** द्रोणकाकः। [1]'द्रोणकाकस्तु काकोलः' इत्यमरः।

**इत्युक्तास्ते ततः सर्वे समन्तादवभाषिरे।**
**कर्णोऽहं भीमसेनोऽहमर्जुनोऽहमिति प्रभो ॥ ४० ॥**

**इत्युक्तास्ते ततः सर्वे समन्तादवभाषिरे। कर्णोऽहं भीमसेनोऽहमर्जुनोऽहमिति प्रभो** इत्यत्र 'अश्वत्थामा हत इति वद' इति कृष्णवचनमविश्वस्य, उपांशु कुञ्जरश्चेति कथनात्, तत्कालोचितनरकदर्शनाय देवैस्तदैव कल्पितो नरकः। 'भ्रातॄन् द्रक्ष्यसि पुत्रांस्त्वमग्रतस्त्रिदिवङ्गतान्। कृष्णयाऽनुगतान् वीरान्मा शुचो भरतर्षभ' इति महाप्रस्थानिके पर्वणि [2]प्रागुक्तशक्रवचनविरोधात्। 'भीमोऽहं, कर्णोऽहम् अर्जुनोऽहम्' इत्यादि वदन्तोऽपि जीवाः धर्मराजस्य नरकयोग्यदुःखदानाय देवैस्तदैव कल्पिताः। अन्यथा भूमेरधस्तात् विद्यमाननरकस्य कथं स्वर्गमार्गे दर्शनम् (समादर्शनम्)। 'समागतेषु देवेषु व्यगमत्तत्तमो नृप' इत्यादि वक्ष्यमाणवचनविरोधाच्च।

**॥ इति युधिष्ठिरनरकदर्शनं नाम द्वितीयोऽध्यायः ॥**

## ॥ अथ तृतीयोऽध्यायः ॥

**शुभानामशुभानां च द्वौ राशी पुरुषर्षभ।**
**यः पूर्वं सुकृतं भुङ्क्ते पश्चान्निरयमेति सः ॥ १४ ॥**

---

१. अ.को. द्वि. सिंहादिवर्गः श्लो. २१

२. अध्याय ३ श्लो. ५

**पूर्वं नरकभाग्यस्तु पश्चात् स्वर्गमुपैति सः ।**
**भूयिष्ठपापकर्मा[1] यः स पूर्वं स्वर्गमश्नुते ॥ १५ ॥**
**भूयिष्ठशुभकर्मा त्वमल्पजिह्मतयाच्युत ।**
**तेन त्वमेवं गमितो मया श्रेयोऽर्थिना नृप ॥ १६ ॥**

'यः पूर्वं सुकृतं भुङ्क्ते पश्चान्निरयमेति सः, भूयिष्ठपापकर्मा यः स पूर्वं स्वर्गमश्नुते' इति शक्रवचनं दुर्योधनकटाक्षेण । 'पूर्वं निरयभाग्यश्च पश्चात् स्वर्गमुपैति सः, भूयिष्ठशुभकर्मा तु पूर्वं नरकमृच्छति' इति शक्रवचनं धर्मराजकटाक्षेणेति ज्ञेयम् ।

**व्याजेन हि त्वया द्रोण उपचीर्णः सुतं प्रति ।**
**व्याजेनैव ततो राजन् दर्शितो नरकस्तव ॥ १७ ॥**

**व्याजेन हि त्वया द्रोण उपचीर्णः सुतं प्रति** इत्यत्र यद्यपि अश्वत्थामा हतः, उपांशु कुञ्जरश्चेति कथनान्न व्याजोऽस्ति धर्मराजस्य, तथापि कृष्णवाक्ये व्याजत्वबुद्धिकरणमेव व्याज इति ज्ञेयम् ।

**यथैव त्वं तथा भीमस्तथा पार्थो यमौ तथा ।**
**द्रौपदी च तथा कृष्णा व्याजेन नरकं गताः ।**
**आगच्छ नरशार्दूल मुक्तास्ते चैव कल्मषात् ॥ १८ ॥**

**व्याजेन नरकं गता** इत्यत्र तव व्याजेन नरकं गता इव तेन दर्शिताः, न तु तेषां नरकोऽस्तीति भावः । अन्यथा 'न च ते भ्रातरः पञ्च नरकस्था विशाम्पते । मायैषा देवराजेन महेन्द्रेण प्रयोजिता' इति 'न सव्यसाची भीमो वा, यमौ वा पुरुषर्षभौ । कर्णो वा सत्यवाक्छूरो

१. BORI पृ. १४; $G_{1.3.5}$, $M_{1.3}$; **'भूयिष्ठं पापकर्मा'** इति कुं. पाठः ।

नरकार्हा विशाम्पते । न कृष्णा राजपुत्री च नरकार्हा युधिष्ठिरः' इति च विस्पष्टवचनविरोधः । अतो भारतहृदयं भारतीपतिरेव वेद नान्य इति ज्ञेयम् ।

॥ इति युधिष्ठिरमन्दाकिनीस्नानकथनं नाम तृतीयोऽध्यायः ॥

## ॥ अथ चतुर्थोऽध्यायः ॥

**तथा ददर्श पाञ्चालीं कमलोत्पलमालिनीम् ।**
**वपुषा स्वर्गमाक्रम्य तिष्ठन्तीमर्कवर्चसम्** ॥ १० ॥

**तथा ददर्श पाञ्चालीम्** इत्यत्र ददर्श मरुल्लोकस्थ भीमसेनसमीपे । द्रौपदीदेहे पञ्चकन्यासहितत्वात् भवतां स्पर्शयोग्या, इदानीं केवलं भारतीरूपत्वात् भीमस्यैव स्प्रष्टुं योग्या, नान्यस्येति भावेनाह – **ततोऽस्य भगवानिन्द्रः कथयामास देवराट्** इत्यादिना ।

**तत्रैनां सहसा राजा स्प्रष्टुमैच्छद्युधिष्ठिरः ।**
**ततोऽस्य भगवानिन्द्रः कथयामास देवराट्** ॥ ११ ॥

'शंरूपे तु रतेर्वायौ श्रीरित्येव च कीर्तिता । सैव च द्रौपदी नाम काली चन्द्रेति चोच्यते'[1] इति वचनात्, भारत्यपि श्रीशब्दवाच्येति भावेनोक्तम्– **श्रीरेषा द्रौपदीरूपा त्वदर्थे मानुषीकृता** इति ।

**श्रीरेषा द्रौपदीरूपा त्वदर्थे मानुषीकृता[2] ।**
**अयोनिजा लोककान्ता पुण्यगन्धा युधिष्ठिर** ॥ १२ ॥

---

१. महाभारततात्पर्यनिर्णय द्वि. अ. १२७

२. BORI पृ. २०; B3; **'मानुषं गता'** इति कुं.पाठः ।

[१]विराटद्रुपदौ चोभौ धृष्टकेतुश्च पार्थिवः ।
[२]निशठाक्रूरशङ्काश्च भानुः कण्वो विडूरथः ॥ १५ ॥

**निशठाक्रूरशङ्काश्च भानुः कण्वो विडूरथ** इत्यत्र शङ्ककण्वविडूरथाभिधाः यादवकुमाराः ।

यस्तु [३]वर्चा इति ख्यातः सोमपुत्रः बभूव ह ।
सोऽभिमन्युर्नृसिंहस्य फल्गुनस्य सुतोऽभवत् ॥ १८ ॥

**यस्तु वर्चा इति ख्यातः सोमपुत्रः बभूव ह** इत्यत्र **सोमपुत्रः** सोमस्यांशः, बभूव अंशिनः सकाशान्निसृतो बभूव, सः अभिमन्युरभवत् ।

षोडशस्त्रीसहस्राणि वासुदेवपरिग्रहाः ।
अमज्जंस्ताः सरस्वत्यां कालेन जनमेजय ॥ २४ ॥

तत्र त्यक्त्वा शरीराणि दिवमारुरुहुः पुनः ।
[४]ताश्चाप्यप्सरसो भूत्वा वासुदेवमुपागमन् ॥ २५ ॥

**षोडशस्त्रीसहस्राणि वासुदेवपरिग्रहा** इत्यत्र द्वारवत्यां ये कृष्णपरिग्रहाः ते सरस्वत्यां तनुं त्यक्त्वा, पुनः **दिवं** द्योतमानमर्चिर्लोकमारुरुहुः । या गोकुले कृष्णपरिग्रहा गोप्यः ताश्चापि अप्सरसो भूत्वा वासुदेवमुपागमन्निति योजना ।

---

१. कुं.५ अध्यायः ।
२. **'निशठाक्रूरसाम्बाश्च भानुः कण्वो विदूरथः'** इति कुं.पाठः ।
३. **'वर्चा नाम महातेजाः सोमपुत्रः प्रतापवान्'** इति कुं.पाठः ।
४. BORI पृ. २५; **'ताश्चैवाप्सरसो भूत्वा वासुदेवमुपाविशन्'** इति कुं.पाठः ।

उभयोरपि सेनयोर्मध्ये उत्तमजीवानां गतिं सङ्कलय्याह– **भवनं च महेन्द्रस्य** इत्यादिना ।

**भवनं च महेन्द्रस्य कुबेरस्य च धीमतः ।**
**वरुणस्य तथा लोकान्विविशुः पुरुषर्षभाः ॥ २८ ॥**

**पुरुषर्षभाः** = पुरुषेषु ऋषभाः = श्रेष्ठाः उत्तमजीवाः, विराटद्रुपद-भीष्मद्रोणाद्याः । अन्यथा 'धृतराष्ट्रात्मजाश्चैव यातुधाना मदोत्कटाः । दुर्योधनसहायास्तु पार्थिवा येऽनुकीर्तिताः । ते दानवान् गुह्यकांश्च गन्धर्वांश्च तथाऽविशन्' इति प्रागुक्तयातुधानप्रवेशाख्यगतिविरोधात् । **गुह्यकाः** शङ्खचूडाद्या दुर्जीवाः । **गन्धर्वाः** द्रमिळादयो दुर्जीवाः ।

**पुण्योऽयमितिहासाख्यः पवित्रं चेदमुत्तमम् ।**
**[1]व्यासेन मुनिना विप्र चरितं स्तव्यदर्शिना ॥ ३५ ॥**

**व्यासेन मुनिना विप्र चरितं स्तव्यदर्शिना** इत्यत्र **स्तव्याः** स्तोतुं योग्याः **स्तव्या** वेदाः, तान् पश्यतीति **स्तव्यदर्शी,** तेन ।

**ऐश्वर्ये वर्तता चैव साङ्ख्ययोगवता तथा ।**
**नैकतन्त्रविबुद्धेन दृष्ट्वा दिव्येन चक्षुषा ॥ ३७ ॥**

**ऐश्वर्ये वर्तता** इत्यत्र **ऐश्वर्ये** अणिमाद्यष्टैश्वर्ये ।

॥ इति स्वगारोहणिके चतुर्थोऽध्यायः ॥

* * *

---

१. BORI पृ. २६; D7,T3; **'कृष्णेन मुनिना विप्र निर्मितं सत्यवादिना'** इति कुं.पाठः ।

## ।। अथ पञ्चमोऽध्यायः ।।

[१]
**महाभारतमाख्यातं क्षितिं गां च सरस्वतीम् ।**
**ब्राह्मणान् केशवं चैव कीर्तयन्नावसीदति ।। ९२ ।।**

(श्रवणविधि अध्यायः)

**क्षितिं गां च सरस्वतीम् । ब्राह्मणान् केशवं चैव** इत्यत्र क्षितिं, गां, सरस्वतीं च भारते आख्यातमाहुः, ब्राह्मणं केशवं च भारते आख्यातानाहुरिति योजना ।

**।। इति स्वर्गारोहणिके फलश्रुतिर्नाम पञ्चमोऽध्यायः ।।**
**।। इति स्वर्गारोहणपर्व समाप्तम् ।।**

**।। सर्वापि आद्यन्तभारतस्य टिप्पणी समाप्ता ।।**
**।। श्रीकृष्णार्पणमस्तु ।।**
**।। अविघ्नमस्तु ।।**

**सर्वेभ्यः देवर्ष्यादीनाम् आचार्यगुरूणां**
**सर्वोत्तमस्य नारायणस्य च नमो नमः ।।**

व्यासस्य कृपया लक्षालङ्काराख्यः कृतो मया ।
ग्रन्थोऽयं यः प्रभुः कीटमकरोत्पृथिवीपतिम् ।। १ ।।
भारतस्य सुधाम्भोधेः भारतीशादयः सुराः ।
यथावन्मथने शक्ताः कृतशिक्षा हरेर्मुखात् ।। २ ।।
अहं तु मानुषः कुर्यां महाकार्ये कथं मतिम् ।
अत्रास्ति कारणं किञ्चिद् गुह्यं तच्छ्रूयतां बुधैः ।। ३ ।।

---

१. 'महाभारतमाख्यानं' इति कुं. पाठः ।

प्रयागे ब्रह्मणः सन्ध्यामठे जपपरायणः ।
अहमासं तदा लक्षालङ्कारं कुर्विति प्रभुः ॥ ४ ॥

भारतस्य श्लोकलक्षस्यार्थविस्तरणात्मकम् ।
कारयामास योगीन्द्रो लक्षालङ्कारमीदृशम् ॥ ५ ॥

व्यास एव यतः कर्ता दासस्य हृदि मे स्थितः ।
अतो न विस्मयः कार्यः किमकार्यं महाप्रभोः ॥ ६ ॥

सद्वाक्यरत्नमालेयं तद् व्यासस्य गलेऽर्पिता ।
सदा स्यात् स्वाङ्गकान्त्येमां स एव प्रथयेत्प्रभुः ॥ ७ ॥

नमोऽस्तु वासुदेवाय व्यासदेवाय धीमते ।
असुदेवाय देवेभ्यो गुरुभ्यश्च नमो नमः ॥ ८ ॥

श्रीदेव्यै भारतीदेव्यै गौरीदेव्यै नमो नमः ।
नमः शच्यै च रत्यै च मातृभ्यश्च नमो नमः ॥ ९ ॥

अक्षरं यत्परिभ्रष्टं मात्राहीनं तु यद्भवेत् ।
क्षन्तुमर्हन्ति विद्वांसः पिता पुत्रापराधवत् ॥ १० ॥

॥ वादिराजतीर्थपूज्यचरणविरचितलक्षालङ्काराख्यटिप्पणी समाप्ता[१] ॥

॥ श्रीहयग्रीवार्पणमस्तु ॥

॥ श्रीवादिराजगुर्वन्तर्गत मध्वेशार्पणमस्तु ॥

---

१. तारणे संवत्सरे चैव माघे शुक्ले च पञ्चमी ।
बुधवारे नारसिंहेन इदं लिखितपुस्तकम् ॥
॥ शुभमस्तु ॥
ग्रन्थसङ्ख्या अष्टादशादुपसहस्रादुपरि अष्टाविंशतिश्लोकाः ॥

# श्लोकानुक्रमणिका


अकर्तारममूर्तं च ३६४
अकल्कस्यापि विप्रस्य ४३१
अकामकामो २३०
अकामया कृतस्तत्र २६३
अकामां कामरूपेण ५
अकारणो हि नैवास्ति २४१
अकृत्रिममसंहार्यं २३१
अक्रुध्यन्तोऽनसूयन्तो २५९
अक्रोधनः क्रुध्यतां वै विशिष्ट- २९९
अक्षरं च क्षरं चैव ६०२
अक्षरं तत्परं नित्यं ९७
अक्षरं परमं ब्रह्म १०३
अक्षरं यत्परिभ्रष्टं ७३३
अक्षरक्षरयोरेष द्वयोः ३१३
अक्षरश्च क्षरश्चैव २१६
अगरुः सारिणां ४७४
अगारदाही गरदः ४५९
अग्निः पवनसंयुक्तः २१
अग्निचित् कपिला सत्री ६८६
अग्निमालभ्य तोयेन सर्वान् ४७९
अग्निर्वै देवताः सर्वा ५८७
अग्नीषोमाविदं सर्वमिति २८३
अग्नीषोमौ कथं पूर्वम् ३८०
अग्रणीर्ग्रामणीः ५३६
अग्रणीर्यः कृतः पूर्वं ४३०
अग्राह्यः शाश्वतः कृष्णो ५३०
अङ्गारेभ्योऽङ्गिरास्तात ४५५
अचिन्त्यां चामितं ४०१
अचेतनं जीवगुणं वदन्ति २२०
अचेतनः सत्त्वसङ्घातयुक्तः ६११
अचेतनश्चैष मतः ३४१
अचोद्यमानानि यथा १९
अच्युतः प्रथितः ५३९
अजः सर्वेश्वरः सिद्धः ५३२
अजरामरशुद्धात्मा यत्र १९३
अजातानामिषीकेयं ६४४
अजितं सर्वभूतानां ६३४
अजो महार्हः स्वाभाव्यो ५४६
अज्ञानाद्ब्राह्मणं हत्वा ४१०
अणुर्बृहत्कृशः स्थूलो ५५८
अतः परं तु यद्गुह्यं ६२७
अतः परं प्रवक्ष्यामि ६२८
अतमास्तम आत्मानम् ३११
अतिक्रान्ताः पुराणेष ३७२
अतिक्रामेन्मज्जमानो २८८
अतिक्ष्णूराच्च सूक्ष्मत्वात् ४८
अतिच्छेदातिवादाभ्यां ४९२
अतिपानेन राजाऽपि ७१०
अतिरिक्तः संविभजेत् २३९
अतिशक्त्या परं दानं ५१८

| | | | |
|---|---|---|---|
| अतीतत्रितयः सिद्धो | १४० | अथेङ्गितं वज्रधरस्य नारदः | १९० |
| अतुलश्शरभो भीमः | ५४० | अथैवोत्क्रमतां स्थान | ३४७ |
| अतुष्टिः परितापश्च | ४४ | अथैश्वर्यप्रसक्तः सञ्जापको | ५४ |
| अतो दानपवित्रेण | ४९२ | अदण्डिता वा ये मिथ्या | ५०७ |
| अतोऽन्यथा महात्मानम् | १३९ | अदृश्याय त्वगम्याय | २० |
| अत्र कौतूहलम् इति | ४१६ | अद्रवत्वादनग्नित्वात् | २२ |
| अत्र ते वर्तयिष्येऽहम् | २८२ | अद्वैधमनसं युक्तं | २९७ |
| अत्रावृत्य स्थितं ह्येतत् | १०१ | अधः स्रोतेन्द्रियग्रामम् | ३३६ |
| अत्राह कोऽन्वयं भावः | १२१ | अधर्मं धर्मसङ्काशं | २०२ |
| अत्राहुस्त्रितयं नित्यम् | १२२ | अधस्तिर्यग्गतिं चैव | २९६ |
| अत्रैवोदाहरन्तीमं | १२ | अधिभूतानिविष्टश्च | ३७८ |
| अत्रोच्यते यथा ह्येतत् | १२१ | अधिष्ठातृमनो नित्यं | ६३३ |
| अथ चेदेवमप्यस्ति | १३२ | अधिष्ठानानि बुद्धेर्हि | ४३ |
| अथ तं स्नायुपाशेन | ४०४ | अधो न क्षीयते यस्मात् | ३८९ |
| अथ दक्षिणमाश्रित्य | ४२१ | अध्यात्मज्ञानतृप्तानां | ६०९ |
| अथ पञ्चदशो राजन् | ३५५ | अध्यात्मध्यानसम्भूतम् | १६५ |
| अथ यः स्वार्थमुत्सृज्य | ३५४ | अनन्तं बत मे वित्तं | १५२ |
| अथ यन्मोहसंयुक्तं काये | १४७ | अनन्तरं हि पितरौ | ७१७ |
| अथ ये बुद्धिमप्राप्ता | ३ | अनन्तराशी यश्चापि | ६७४ |
| अथ वर्णावरे जाताः | ४२७ | अनन्तरूपोऽनन्तश्रीः | ५६० |
| अथ शची दुःखशोकाता | ३८३ | अनन्तो हुतभुग्भोक्ता | ५५९ |
| अथ श्वेतां गतिं गत्वा | २०६ | अनर्थोऽपि भवत्यर्थो | ५ |
| अथवा न प्रवर्तेत | १२० | अनवाप्तेषु कामेषु | ७ |
| अथवा मनसः सङ्गं | १२० | अनागतं सुकृतवतां परां गतिं | ९२ |
| अथवा संविभागेन | २६९ | अनादित्वादमध्यत्वात् | ८८ |
| अथवा सशरीरास्ते | २६९ | अनादिनिधनावेतौ | ३२४ |
| अथवाऽनन्तरकृतं | ३१३ | अनादिनिधनावेतौ | ३४२ |
| अथापश्यन् सुपीनांस | ..४६६ | अनादिनिधनोऽनन्तः | ३१६ |
| अथाहेदं तं भगवान् सनन्तं | १६९ | अनादिर्भूर्भुवो लक्ष्मीः | ५६० |

अनारम्भाः सुधृतयः २५६
अनाश्रित्योच्छ्रयो नास्ति ६९८
अनित्यं द्वन्द्वसंयुक्तं ६२९
अनित्यं नित्यमित्येके ६२५
अनिमित्तं परं यत्तदव्यक्तं ५४
अनिर्विण्णस्स्थविष्ठो ५४४
अनिवर्ती निवृत्तात्मा ५४९
अनिशं दीयते च स्म ६५३
अनिष्टस्य हि निर्वृत्तिः १७६
अनिष्टस्याभिनिर्वृत्ति- १७६
अनिष्टोऽनहङ्कारो ५२२
अनीश्वरः कथं मुच्ये- ३००
अनु त्वां मन्यते माता ६०१
अनुक्रोशादधर्मं च २६६
अनुजस्य पितुर्दायं ४८२
अनुतर्षुल एवार्थः ११
अनुनीय तथा काव्यः २०१
अनुपोष्य त्रिरात्राणि ६७४
अनुबन्धान्न विज्ञानं १३७
अनुमान्य यथान्यायं १५२
अनुयोक्ता च यो विप्रो ४३०
अनूच्यमानास्तु पुनस्ते २८१
अनेन कारणेनैतत् ३४३
अनेन धर्मप्राप्त्यर्थं ६०
अनेन साध्यं किं स्यात् १६३
अन्तरात्मेति चाप्येते ६१०
अन्तरिक्षादन्यतरं १२९
अन्तर्गतेन पापेन ७६
अन्तर्जाताः सुक्रयज्ञानलब्धाः ४४८
अन्तर्धानगतिज्ञं च ५८०
अन्तेषु रेमिरे धीरा ३
अन्धोऽहमत्र तत्त्वं हि १५३
अन्नदस्यान्नवृक्षाश्च ४४४
अन्नस्य सुबहून् ६५३
अन्यः स पुरुषोऽव्यक्तात् ३४४
अन्यत्र जामया सार्धं ४३८
अन्यश्च राजन्परमः ३५१
अन्यश्च शाश्वतोऽव्यक्तः ३४९
अन्यसङ्गां गतापत्यां ४२८
अन्यस्तु क्षेत्रजः पुत्रो ४४०
अन्यो ह्यग्निरुखाऽप्यन्या ३४५
अपरश्च परश्चैव ३०८
अपराधं समाचक्ष्व ३६५
अपरे मानुषा देव ५०४
अपरे यत्नकुर्वन्तः ५०१
अपश्यन्तो नविषयं २८१
अपां फेनोपमं लोकं ३०४
अपां शैत्यं रसः क्लेदो २३५
अपाणिपादपृष्ठं ६१७
अपान्तरतमा नाम सुता ३९८
अपामार्जन्स राष्ट्राणि ६४६
अपि चात्र सनत्कुमारगीताः ३८१
अपि चेदं पुरा राम ४५४
अपि वर्ण्यपकृष्टश्च २१८
अपूर्वमकृतं नित्यं ६३६
अपूर्विणा न कर्तव्यं २८९
अप्रक्षालितपादस्तु ४७२
अप्रबुद्धमथाव्यक्तम् ३१७

| | | | |
|---|---|---|---|
| अप्रमादस्त्वया कार्यः | ७१० | अम्मयं सर्वमेवेदम् | ३३ |
| अप्रमादाद्भयं रक्षेत् | २६५ | अयं न सुकृतं वेत्ति | २६१ |
| अप्रमेयो हृषीकेशः | ५३० | अयं नारायणः साक्षात् | ४९८ |
| अप्राप्तदमकाश्चैव | ४३२ | अयं मम भवेद्बन्धुः | ३२७ |
| अबुद्धिपतितेनाथ | ४५३ | अयं हि सर्वं किल सर्वभावः | १५१ |
| अभयं च ततः पश्चात्स | ६९६ | अयाज्यं क्षत्रियो व्रात्यं | ४३९ |
| अभयं चानिमित्तं च | ५५ | अयोनिरभियोनिर्वा | ४३३ |
| अभवन्त इहारम्भा | ६०६ | अयोमुखैश्च काकोलैर्गृध्रैश्च | ७२६ |
| अभावभवितेष्वेव | २६७ | अरिष्टानि च तत्त्वानि | ३४२ |
| अभिगतमसुखार्थमीहनार्थै | १४ | अरिष्टानि प्रवक्ष्यामि | ३४७ |
| अभिज्ञानं तु किञ्चित्त्वं | ६३८ | अरुन्धती तु तं दृष्ट्वा | ४६६ |
| अभिध्यापूर्वकं जप्यं | ५४ | अर्चिष्मन्तो बर्हिषदः | २५५ |
| अभिपूजितलाभाद्धि | ६१६ | अर्चिष्मादर्चितः कुम्भो | ५५० |
| अभिभूयेह चातिष्ठत् | १९९ | अर्चेद्देवानदम्भेन | ५७० |
| अभिमन्यो कुशिलनो | ६४१ | अर्थोऽहमर्थशक्तिस्त्वं | १९१ |
| अभिषिच्य हस्तिनपुरे | ७२५ | अलङ्घयद् सरितो वै जिघांसु | ५६९ |
| अभिषूय ततो राजन्सोमं | ६५५ | अलाभे यो गवां दद्यात् | ४४७ |
| अमर्त्यस्य च मर्त्येन | १४१ | अलिङ्गां प्रकृतिं त्वाहुः | ३१० |
| अमात्यान्नमथैतेषां | ६८२ | अलिङ्गाप्रकृतिर्लिङ्गैः | ३१५ |
| अमानी मानदो मान्यो | ५५४ | अलिङ्गो लिङ्गमात्मानम् | ३११ |
| अमार्गेण प्रयातानां | ४६९ | अलुब्धाः शुचयो | ६८३ |
| अमावास्यां महाप्राज्ञो | ४६२ | अवदध्यान्मनः पूर्वं | ५२३ |
| अमितानां महाशब्दा | २१ | अवधीरयमाणस्य संयोग | ४७१ |
| अमूनि यानि स्थानानि | ५५ | अवध्यमानः सोऽभ्यघ्नन्मागधः | ६५१ |
| अमूर्तेस्तस्य कौन्तेय | ३०६ | अवमानेन कुरुते न | ५३ |
| अमृतांशूद्भवो भानुः | ५३८ | अवर्षति च पर्जन्ये | ४९७ |
| अमृताच्चामृतं प्राप्तः | ६१ | अवश्यमेव वक्तव्यमिति | ७१७ |
| अमृत्युः सर्वदृक् सिंहः | ५३५ | अवाग्गतिरपानश्च | ६१० |
| अम्मयं सर्वमेवेदमाप- | १९६ | अविद्यया तरन्मृत्युं | १५४ |

अविद्यामाहुरव्यक्तं ३२२
अविभागगता बुद्धिः ४४
अवियोगाद्विमुच्यन्ते २०९
अविरोधेन भूतानां २५३
अवीनां पित्तभेदश्च २८०
अव्यक्तं क्षेत्रमित्युक्तं ३२०
अव्यक्तं क्षेत्रमुद्दिष्टं ६१२
अव्यक्तं प्रकृतिं त्वासां ३५६
अव्यक्तं बुद्ध्यहङ्कार- १०४
अव्यक्तं यदि वा व्यक्तं ३५६
अव्यक्तं व्यक्तधर्माण ३२८
अव्यक्तं सर्वदेहेषु ५२२
अव्यक्तकर्मजा बुद्धि- १०७
अव्यक्तनाभं व्यक्तार ११०
अव्यक्तबुद्धिप्रभवः ६१८
अव्यक्तबोधनाच्चापि ३२९
अव्यक्तरूपो भगवान् ३४०
अव्यक्तस्तु न जानीत ३४३
अव्यक्तस्थः परः यत्तत ३४१
अव्यक्तस्य परं प्राह- ३२३
अव्यक्तात् प्रसृतं ज्ञान ७८
अव्यक्तात् प्रसृत ७६
अव्यक्तात्मा पुरुषोऽव्यक्तकर्मा ९१
अव्यक्तादिविशेषान्तं ६३४
अव्यक्तादिविशेषान्तम् ६३६
अव्यक्तादेव सम्भूताः ६३५
अव्यक्ताद्व्यक्तमापन्न ३०८
अव्यक्ताद्व्यक्तमुत्पन्नं ३७३
अव्यक्तैकत्वमित्याहुः ३४४
अशक्नुवद्भिश्चरितुं २५७
अशक्नुवद्भिश्चरितुं २५९
अशोकस्तारणस्तारः ५४०
अश्रद्दधान एवैको २४६
अश्रुभ्योऽस्य समुत्पन्नावश्विनौ ४५५
अश्वत्थामा च रामश्च ४१०
अश्वस्तनोऽथ कापोती- २२१
अष्टमेन तु भक्तेन ४८४
अष्टाढकैस्तिलैः कृत्वा ६७२
अष्टौ च षष्टिं च शतानि यानि २७६
असंसर्गो हि भूतेषु १४३
असत्यविकृते कार्ये ४०६
असत्सु विनिविष्टेषु ४९३
असावश्नाति यद्वत् १३८
अस्ति धर्म इति ह्युक्त्वा २१९
अस्ति नास्तीति चाप्येतत् १३२
अस्तित्वं केवलत्वं च ३४२
अस्पर्शनमशृण्वानम् ७८
अस्माकमेकीभूतानां ६९४
अस्मादेकाद्बहवो रक्षितव्या ४०५
अस्य नाभ्यां पुष्करं सम्प्रसूतं ५६६
अस्याः पञ्चैव चिन्तायाः १८१
अस्याः पतिः कुतो १५२
अहङ्कार इति ख्यातः २०
अहङ्कारस्तु भूतादिः ६०९
अहङ्कारात् परा ६३३
अहं गात्रैकतःश्यामा १६०
अहं च शङ्करश्चापि ६९७
अहं तु मानुषः कुर्यां ७३२

| | |
|---|---|
| अहं त्वमेतदित्येव | १६१ |
| अहं पशुपतिर्नाम | ५२४ |
| अहं वाच्यं द्विजानां | १४४ |
| अहं विष्णुरहं ब्रह्मा | १९१ |
| अहंशब्दो ह्यहंभावो | १६० |
| अहः पूर्वं ततो रात्रिः | ६१३ |
| अहन्यहनि पाकविशेषो | १६९ |
| अहमप्युपवत्स्यामि | ७०९ |
| अहमाहवनीयोऽग्निराहोमाद्यस्य | ६८८ |
| अहमित्येव भावेन | १५५ |
| अहमित्येष भावोऽत्र | १५६ |
| अहमित्येष वै भावो | १४८ |
| अहमेव हि सम्मोहात् | ३२६ |
| अहस्त्रिधा तु विज्ञेयं | ६०८ |
| अहिंसादिकृतं कर्म | २४४ |
| अहीनो नाम राजेन्द्र | ६५५ |
| अहो त्वयाऽयं विप्रेषु | ५६३ |
| अहो नृशंसाः पच्यन्त | ५१४ |
| अहोरात्रमिदं द्वन्द्वं | ५८८ |
| अह्नायेह तपो जातु | ४६५ |
| आकाशं वायुरूष्मा | १३६ |
| आकाशकल्पं विमलं | १३८ |
| आकाशस्थं तु हस्तस्थमधः | ६९१ |
| आकाशस्य गुणं शब्दम् | २०० |
| आकाशस्याप्यथाकाशं | १६२ |
| आकाशो वायुरूष्मा | १४३ |
| आक्रम्य ब्राह्मणैः | ६८६ |
| आक्रम्योरसि पादेन | ६६८ |
| आक्रुश्यमानो न क्रोशे- | २९९ |
| आगच्छ गरुडेत्येव | १०६ |
| आगमद्वारकावासी | ६५४ |
| आग्नेयं वै लोहितमालभन्तां | ५७४ |
| आजग्मुः सहितास्तत्र | ४५४ |
| आजीव्यः सर्वभूतानां | ६१८ |
| आजेन वापि लौहेन | ४५८ |
| आतिथ्यं प्रतिगृह्णन्ति | ५९९ |
| आत्मकेवलतां प्राप्तः | ५६ |
| आत्मदृष्ट्या च तत्सर्वं | १५४ |
| आत्मना सप्तमं कामं | १२ |
| आत्मन्येव रतान् मत्वा | ५१६ |
| आत्मन्येवात्मना जात | ८ |
| आत्मभूतैरतद्भूतः | ३६३ |
| आत्मयोगपरो नित्यं | १५५ |
| आत्मयोनिः स्वयञ्जातो | ५६१ |
| आत्मा च परमः शुद्धः | १३८ |
| आत्मा च परमो वक्तुं | ६३७ |
| आत्माऽसौ वर्तते | १३६ |
| आत्मानं चार्चयेकश्चित् | ३७५ |
| आत्मानं तं विजानीहि | ३३ |
| आत्मानं दर्शयामास | १५२ |
| आत्मानं मन्यते | १३२ |
| आत्मानमनुसंयाति | १०९ |
| आत्मानममलं राजन् | ४० |
| आददीत बलं राजा मौलं | ७१५ |
| आदित्यसदृशाकारः | ९४ |
| आदिदेवसमुद्भूता | ३५ |
| आदीप्तमिव तैलान्ते | ४७५ |
| आद्यन्तनिधनं चैव | २१२ |

| | | | |
|---|---|---|---|
| आधारं तु प्रवक्ष्यामि | ४०१ | आहुः सर्वमिदं चिन्त्यं | १८१ |
| आधारनिलयो धाता | ५६१ | आहुतिं सम्यगाख्यातां | ६८८ |
| आधिपत्ये तथा तुल्ये | ३५२ | आहुरेते महात्मानः | ६२१ |
| आनतेनाथ शूलेन | २८४ | इच्छामि चापि युष्मासु | ४५३ |
| आनन्दः कर्मणां सिद्धिः | २६८ | इज्यते पितृयज्ञेषु | ३९२ |
| आपश्चैवान्तरिक्षं च | २६७ | इति सम्यङ्मनस्येते | १४२ |
| आपो नारा इति प्रोक्ता | ३७८ | इत्युक्तः प्रत्युवाचेदं | २१९ |
| आमन्त्र्य तु निराशानि | ६६६ | इत्युक्तास्ते ततः सर्वे | ७२७ |
| आमृष्टमद्भिर्निर्णिक्तं | ५१७ | इत्युक्तो जातसंत्रासः | ६६२ |
| आम्नायवचनं सत्यम् | २४० | इत्युक्त्वा ते जग्मुः | ४२९ |
| आयामे तां विजानाति | १७८ | इत्युक्त्वा स जगामाथ | ९६ |
| आयुर्नसुलभं लब्ध्वा | २८६ | इत्येतद्वचनाद्राजा | ६५४ |
| आयोजयित्वा क्लेशेन | २९४ | इत्येते चतुरो वर्णा | ३५ |
| आरणेयस्तु शुद्धात्मा | ३६१ | इत्येतैः पञ्चभिर्भूतैर्युक्तं | २२ |
| आरालिकाः सूपकारा | ७०८ | इत्येवमुक्त्वा देवसङ्घोऽनुगम्य | ७०३ |
| आवर्तनानि चत्वारि | ४८५ | इत्येषा भावजा बुद्धिः | २१० |
| आवर्तनो निवृत्तात्मा | ५३६ | इदं कृतयुगं नाम | ३७४ |
| आवाहाश्च विवाहाश्च | ४४४ | इदं तु पुरुषव्याघ | ४३६ |
| आशा श्रद्धा धृतिः क्षान्तिः | १९० | इदं विना परं नास्ति | ८२ |
| आशीर्युक्तानि कर्माणि | ६३५ | इदं विश्वं जगत्सर्वम् | ३६४ |
| आश्रमाणां च सर्वेषां | ६१३ | इदमर्घ्यं च पाद्यं च | ६५८ |
| आश्रयो नास्ति सत्त्वस्य | ४६ | इदमाह महाराज | ६५४ |
| आश्रयोऽन्योऽस्ति सत्त्वस्य | २१४ | इन्द्रश्च तस्मात्सरसः प्रत्युत्थाय | ३८४ |
| आश्चर्योऽसि च धन्योऽसि | १०१ | इन्द्रियग्रामसंयुक्तो मनः | ६३३ |
| आसुरिर्मण्डले तस्मिन् | १३१ | इन्द्रियाणां श्रमात् | १२२ |
| आसुरेः प्रथमं शिष्यं | १३१ | इन्द्रियाणि च भावाश्च | २६९ |
| आस्यं हि पायुसंयुक्तम् | २६ | इन्द्रियाणि मनश्चैव | ४२ |
| आहङ्कारिकमध्यात्ममाहुः | ३३९ | इन्द्रियेभ्यो मनः पूर्वं | ७६ |
| आहुः षष्टि भूतगुणान् वै | २३६ | इन्द्रियैस्तु प्रदीपार्थं | ४५ |

| | |
|---|---|
| इन्द्रेण गुह्यं विहितं वै गुहायां | ४७८ |
| इन्द्रो दधीचोऽभवत् | ३८३ |
| इन्द्रोऽथ धनदो राजा | २८४ |
| इन्धनस्य तु तुल्येन | ६०१ |
| इमं गुणसमाहारम् | १४५ |
| इमान् स्वलोकाननुपश्य सर्वान् | १५१ |
| इमान्यन्यानि सूक्ष्माणि | ३५६ |
| इमे शरीरैर्जलमेव गत्वा | ६७ |
| इयं स्त्री पुत्रकामस्य | ७०१ |
| इयं स्वसा राजचमूपतेश्च | ७२१ |
| इळोपहूतं गेहेषु हरे | ३८६ |
| इषुप्रपातमात्रं हि | २९२ |
| इष्टं च मे स्यादितरच्च न स्यात् | ६४ |
| इष्टकाः काञ्चनीश्चात्र | ६५६ |
| इष्टश्चानिष्टगन्धश्च | २५ |
| इष्टानिष्टविपत्तिश्च | २३५ |
| इष्टानिष्टसमायोगे वैरं | २९० |
| इष्टापूर्तादसाधूना | २४२ |
| इष्टे दत्ते च मन्येथा | ४४३ |
| इष्टैर्दारैरुपेतानां | ४७४ |
| इष्टो विशिष्टश्शिष्टेष्टः | ५३९ |
| इहचैकस्य नामुत्र | ६८६ |
| ईर्ष्याजं व्यसनं प्राहुः | २५१ |
| ईर्ष्यामत्सरसंयुक्तो | ६६५ |
| ईशानः प्राणदः प्राणो | ५३१ |
| ईश्वरो विक्रमी धन्वी | ५३१ |
| ईहमानो धनं मङ्कि- | ९ |
| उक्ताः स्मो यद्भगवता | ३६२ |
| उच्छेदनिष्ठा नेहास्ति | १४३ |
| उच्छ्वासमात्रमपि चेत् | ६२० |
| उञ्छं मूलं फलं शाकम् | ६६१ |
| उत यज्ञः उतायज्ञः | २४३ |
| उत्कोचनपराश्चैव | ५०६ |
| उत्तरन्यायसम्बद्धं | २६४ |
| उत्तरो गोपतिर्गोप्ता | ५४५ |
| उत्थिते पुरुषव्याघ्रे | ६५० |
| उत्पत्तिलक्षणं चेदं | १३८ |
| उत्पत्तिवृद्धिक्षयसन्निपातै- | ७० |
| उत्पन्नस्य रुरोः शृङ्गं | ४६५ |
| उत्प्लुत्य तीर्थमासाद्य | ६७६ |
| उत्सर्गेणापवादेन | ४०० |
| उत्सूर्यशायिनश्चासन् | १८९ |
| उदकायतने चैव | ४६२ |
| उदक्यामपि चण्डालं | ६८४ |
| उदानादुच्छ्वसति च | २४ |
| उदिते सवितर्याप्य | ६७९ |
| उदीर्णस्सर्वतश्चक्षुरनीशः | ५५० |
| उदुम्बराण्यथान्यानि | ४६५ |
| उद्भवः क्षोभणो देवः | ५४१ |
| उद्भवः सुन्दरः सुन्दो | ५५५ |
| उद्यम्योद्यम्य मे दम्यौ | १० |
| उद्वर्गोसीत्यथाचान्तः | ६७७ |
| उन्मत्ताऽहमनुन्मत्तं | ५ |
| उपगतभयरागमोहदर्पो | १३ |
| उपच्छन्नं प्रकाशं वा | ४४३ |
| उपतिष्ठति तिष्ठन्तं | १९ |
| उपदीपाश्च गृध्राश्च | ४८१ |
| उपदेशेन वर्तामि | १२ |

| | |
|---|---|
| उपपत्त्या यतिस्तूष्णीं | ६०३ |
| उपपन्नं हि यत्प्राज्ञो | २०२ |
| उपलभ्य त्रिभिर्ज्ञानं | ४७३ |
| उपस्थितिकृतौ तौ च | ६२ |
| उपस्थोऽध्यात्ममित्याहुः | ३३८ |
| उपासते महावृक्षं | २३५ |
| उपेन्द्रो वामनः प्रांशुः | ५३४ |
| उपोष्य संशितो भूत्वा | २४८ |
| उभयं सम्प्रधार्यैतत् | २२९ |
| उभावेतौ क्षरावुक्तौ | ३२४ |
| उभे चैवायने द्वन्द्वं | ५८९ |
| उभे शुभाशुभे द्वन्द्वं | ५८९ |
| उभे सत्यानृते त्यक्त्वा | ४ |
| उवाच चैवं भगवान् | ३६० |
| ऊर्जस्विन्यदूर्जवहाश्च यज्ञे | ४४९ |
| ऊर्ध्वं देहाद्वदन्त्यन्ये | ६२५ |
| ऊर्ध्वं पर्वतमारुह्य | ६३१ |
| ऊर्ध्वं पादतलाभ्यां | ४२ |
| ऊर्ध्वं स्रोतस्तथा | ३३६ |
| ऊष्मतो म्लायते वर्णं | २३ |
| ऋग्यजुःसाममन्त्राणां | ६८९ |
| ऋचश्चाप्यत्र शंसन्ति | ५९२ |
| ऋचो यजूंषि सामानि | ८८ |
| ऋतुः संवत्सराः तिथ्यः | १३५ |
| ऋतुस्सुदर्शनः कालः | ५४२ |
| ऋते आत्मानमेवेति | ३७७ |
| ऋषीणामाहुरेकं यं | १३१ |
| ऋषे ज्ञेयं मया चाऽपि | ९५ |
| एकं हि परमात्मान | ४०१ |
| एकः शास्ता न द्वितीयोऽस्ति | ५९३ |
| एकः श्रोता नास्ति ततो द्वितीयो | ५९४ |
| एकः स्थिरश्चराश्चान्ये | ५८७ |
| एकत्वं च बहुत्वं च | ३२३ |
| एकत्वान्यत्वनानात्वं | १०४ |
| एकस्तम्भे नवद्वारे | ६७९ |
| एकस्थूणं नवद्वारमपि | ५ |
| एकस्याद्या प्रवृत्तिस्तु | ८२ |
| एकाक्षरं द्व्यक्षरमेकनाम | ४१४ |
| एकाग्रता च मनसः | ३१८ |
| एकादशविकारात्मा | २१९ |
| एकादशाहैरयजं सदक्षिणैः | ४७८ |
| एकानेकात्मकं तेषां | १३७ |
| एकैकस्येह विज्ञानं | ३५५ |
| एको गुरुर्नास्ति ततो द्वितीयो | ५९३ |
| एको देवो ब्राह्मणानां बभूव | ४१४ |
| एको द्वेष्टा नास्ति ततो द्वितीयो | ५९४ |
| एको नैकः सवः | ५५४ |
| एको ह्यग्निः सुमहान् ब्राह्मणो | ५९९ |
| एतत्तु ते दिवा वृत्तं | ३६२ |
| एतत्ते कथितं राजन् | १९३ |
| एतत्ते नृपशार्दूल | १७४ |
| एतत्प्रपन्नमखिलं तस्मिन् | १६२ |
| एतदाहुः समाहारं | १४९ |
| एतदेवं च नैवं च | २१४ |
| एतदेवं विकुर्वाणं | ३२९ |
| एतदेवेदृशं सूक्ष्मं | ५९६ |
| एतद्प्राज्ञः कृत्यतमम् | ४३४ |
| एतद्रूपमुदानस्य परमं | ५८८ |

| | | | |
|---|---|---|---|
| एतद्वै ब्रह्मणः स्थानं | ५६ | एवं प्रवर्तमानस्तु | ४७३ |
| एतन्निदर्शनं सम्यग् | ३१७ | एवं प्राकृतविस्तारो | ११० |
| एतन्मण्डलमित्याहुराचार्या | ७१३ | एवं मयाऽनुभूतं हि | १०६ |
| एतन्मे सर्वमाचक्ष्व | ११३ | एवं युक्तसमाचारः | १७७ |
| एतस्मात् कारणाच्छ्रेयो | २८१ | एवं युगपदुत्पन्नं | ३०८ |
| एतस्य सूत्रभूतस्य | २१८ | एवं वक्तारमासाद्य | ५९५ |
| एतस्यापि च सङ्ख्यानं | ३३७ | एवं विद्वन्विजानीहि | ८४ |
| एतस्यामवस्थायां नारायण- | ३८० | एवं विस्तारसङ्क्षेपो | २०० |
| एतां बुद्धिं समास्थाय | १२ | एवं शुश्राव वदतां | ६४५ |
| एताः प्रकृतयश्चाष्टौ | ३१९ | एवं सति क उच्छेदः | १४९ |
| एते ते निरयाः प्रोक्ताः | ५७ | एवं सति कुतः सञ्ज्ञा | १५० |
| एते पर्वतराजानो | ६११ | एवं सप्तदशं देह | २१५ |
| एते भोगैरलङ्कारैरन्यैश्चैव | ४३५ | एवं सुगह्वरे युक्तो यत्र | १५७ |
| एते विश्वकृतो विप्रा | ६३४ | एवं हि तपसा युञ्ज्यात् | १२४ |
| एतेऽपि मुनयो वत्स | १५३ | एवं ह्येतेन योगेन | २०४ |
| एतेषां सहवासं च | ३४५ | एवंभूतस्त्वमित्यत्र | १३९ |
| एतेष्वपि हि जातेषु | २०६ | एवंयुक्तसमाचाराः | ५०४ |
| एतैरक्षैः समापन्नः | १७८ | एवमन्यानि पापानि | ६९२ |
| एतैर्लोकाः सुसंरुद्धा | २६२ | एवमप्यनुमानेन | ३१६ |
| एवं गायन्ति विप्राश्च | ४५२ | एवमव्यक्तविषयं | ३०९ |
| एवं जातिशतैर्युक्तो | २७१ | एवमाख्यातमत्यर्थं | १२५ |
| एवं तस्य विभोः | १३९ | एवमात्मा स एव गच्छति | १७१ |
| एवं ते द्रविडाऽभीरा | ६०३ | एवमुक्ता ततः प्राह | १९१ |
| एवं त्वक् चक्षुषी जिह्वा | १४७ | एवमुक्त्वा ततो ब्रह्मा | १०० |
| एवं त्वया च कर्तव्यं | १५५ | एवमेकेऽध्यव्यवस्यन्ति | ४७ |
| एवं परमसम्बोधात् | ३२७ | एवमेतन्मया प्रोक्तं | ६९९ |
| एवं पश्यंस्तमात्मानम् | ११९ | एवमेव कृतप्रज्ञा | २२८ |
| एवं पूर्वं प्रसन्नात्मा | ६२१ | एवमेव च क्षेत्रज्ञः | ३२५ |
| एवं प्रज्ञानतृप्तस्य | २४ | एवमेव च राजेन्द्र | ३१९ |

एवमेव ब्रह्मचारी २६०
एवमेवाप्यसंयुक्तः ६३०
एवमेवावगन्तव्य ३३३
एवमेष जगत्सृष्टिं १७३
एवमेष परस्तत्त्वो १२७
एवमेष महानात्मा ३०९
एवमेषा महाराज ४८८
एष कृष्णो महायोगी ९७
एष ते केशवः सर्वम् ५६५
एष ते पाण्डवश्रेष्ठ ४२१
एष मार्गोऽथ योगाना २७
एष योत्स्यामि सर्वांस्तु ६४८
एष राजन्नीदृशो वै ५६५
एषा तत्त्वचतुर्विंशत् ३०८
एषामुद्धर्तकः कालो १९७
ऐश्वर्ये वर्तता चैव ७३१
ऐहलौकिकमीहन्ते ३५७
ओजस्तेजोद्युतिधरः ५३८
औषधार्थं यथाज्ञानात् ५१७
कच्चिन्न निकृतो बाणैः ६४०
कणकुल्माषपिण्याक- १२०
कथं चास्य समुत्पत्तिः ४१०
कथं पञ्चगुणा बुद्धिः २३५
कथयित्वा स्वकान् प्रश्नान् ३८४
कथा च येयं नृपते प्रसक्ता ३०२
कथितं हि मया ५६२
कदाचित्प्रातरुत्थाय १८७
कन्या सुवर्चला नाम १७४
कपिर्वराहः श्रेष्ठश्च ३९०
करणे घटस्य या बुद्धिः २६५
कर्णावाकाशपाताले ३९६
कर्ताऽनुमन्ता ब्रह्मात्मा ५९१
कर्तृत्वाच्चापि तत्त्वानां ३४३
कर्मजैर्बन्धनैर्बद्धाः ३०१
कर्मणा जायते जन्तुः ६३६
कर्मणा बध्यते जन्तुः २१९
कर्मणा मनसा वाचा ५८१
कर्मतोऽन्यानि गोत्राणि २९३
कर्मेन्द्रियाणां सर्वेषां ३२३
कलया जायते जन्तुः ३१२
कस्माद्भवानद्य बिभेद मध्ये १००
कस्मिन्नेवानुतीर्थेन २४७
कस्येदमिति कस्य ६०६
काकृत्वमथ दासत्वं ५१३
कानि तीर्थानि भगवन् ४१३
कानीनश्च सहोढश्च ६६७
कामं देवाश्च ऋषयः ३९७
कामक्रोधौ च लोभश्च १६६
कामक्रोधौ विद्धि नौ ६१
कामदेवः कामपालः ५५१
कामभोगप्रियास्तीक्ष्णाः ३५
कामात्मानं न प्रशंसन्ति ५७८
कारणं यदि न स्याद्वै ४०६
कारणानुगतं कार्यं १४१
कारीषं साधयन्यस्तु ६७४
कार्तिके यस्तु वै ६९२
कार्यादि कारणान्तं १९४
कार्याभावे क्रिया न स्यात् ४०६

| | | | |
|---|---|---|---|
| कालं संवहते तत्र | ५६ | कृतं च विकृतं किञ्चित् | ४१० |
| कालनेमिनिहा वीरः | ५५१ | कृतं मया भवेत् | २६२ |
| कालात्मना त्विदं भिन्न- | १९७ | कृतः पुरुषकारस्तु | ४०९ |
| काले सम्प्राप्तमतिथिं | ५०० | कृतजप्याह्निकास्ते | ६५८ |
| कालेन त्वाऽहमजयं | १८५ | कृती सर्वत्र लभते | ४०८ |
| कालो धर्मस्तथा मृत्युः | ६१ | कृते युगे धर्म आसीत्समगः | ५६६ |
| कालोऽपि तन्मयोऽचिन्त्य- | १९७ | कृत्यास्त्रीशयना नासन् | १८८ |
| काषायाम्बरयित्वा च | २२४ | कृत्वा कर्म पुमान्स्त्री वा | ५११ |
| काष्ठा निमेषा दश पञ्च चैव | १९८ | कृत्वा चाध्ययनं तेषां | ३४८ |
| किं कष्टमनुपश्यामि | २८६ | कृत्वा प्रवर्ग्यं धर्मज्ञा | ६५५ |
| किं नु तत्सदनं श्रेष्ठ | ४०० | कृत्वा प्राह्णे चरेद्भैक्ष्यं | ६१५ |
| किं पुनर्हन्यमानानां | ४८९ | कृत्वाऽऽत्मस्थानि भूतानि | ३७० |
| किं मां तुदसि दुःखार्तं | ४३४ | कृषामि मेदिनीं पार्थ | ३८७ |
| किञ्चात्र बहुनोक्तेन | ६६३ | कृष्णद्वैपायनो राजन् | ४९१ |
| किञ्चित्स्निग्धं यथा च | ५१ | कृष्यादीनीह कर्माणि | २११ |
| किन्तु मोक्षविधिस्तेषां | ५०५ | केचिदात्मगुणं प्राप्तास्त | ११३ |
| किमहं कृतवानेवं | ३२६ | केचिदाहुर्द्विधा लोके | १६७ |
| किराता विष्कृता राजन् | ६४६ | केचिद्ब्रह्ममयं वृक्षं | ६२० |
| कीदृशं निरयं याति | ५४ | केन दुर्गाणि तरति | ४५० |
| कुक्कुटे शुनके चैव | ४९५ | केन वाहं त्वया सार्धम् | ५८० |
| कुटुम्बं पुत्रदाराश्च | ३६३ | केन सङ्कल्पितं श्राद्धं | ४६२ |
| कुप्यभागी भवेन्मर्त्यः | ४५७ | केवलं चाभिसन्धाय | ५०८ |
| कुमुदः कुन्दरः कुन्दः | ५५६ | केवलं पञ्चविंशं च | ३३० |
| कुरुष्वैतां पूर्वशीर्षां | ४२२ | केवलात्मा तथा चैव | ३३४ |
| कुर्यात् परिचयं योगे | २१८ | केवलेन समागम्य | ३३१ |
| कुलम्भराननडुहः शतं | ४६४ | केशवो भरतश्रेष्ठ | ९६ |
| कुलात्कुलं च गच्छामि | ४६७ | को विद्वानिह लोकेऽस्मिन् | १६८ |
| कुल्माषगोयुगेनाथ | ४६३ | को हि लोकस्य | १८० |
| कृच्छ्रोत्सृष्टाः पोषणाभ्यागताः | ४४७ | को ह्यक्षयप्रसादानां | ४४२ |

कोटिशश्च करोत्येष ३४०
कोशस्य निचये यत्नं ७११
कौरव्य पर्युपासीथाः स्थित्वा ७१४
क्रमशः पार्थिवं यच्च २०५
क्रमशस्त्ववधूयैनां २२३
क्रमात्तेऽहं विनेष्यामि ४९०
क्रियमाणं यदा कर्म २९२
क्रियमाणेऽपवर्गे च ४३०
क्रियायोगे च भेदाख्ये १२७
क्रोशादर्धं तृतीयात्तु ४६०
क्लीबी प्लीही च ६८०
क्लेदने शोकमनसोः २३१
क्षत्रजं सेवते कर्म ३६
क्षिप्रश्च सहसा रुद्र ३९०
क्षीणकोशो ह्यमावास्यां ७५
क्षीणस्याप्यायनं दृष्टं ४८५
क्षेत्रं हि दैवतमिव ब्राह्मणान् ४६५
क्षेत्रज्ञं तं विजानीहि ३३
क्षौमं च कुशचीरं च २८३
क्षौरकं सौरभेयीणाम् २८०
खं वायुमग्निं सिललं तथोवी ७२
खण्डाभासं दक्षिणतः ३४७
ख्यापनेनानुतापेन ६६४
गङ्गाया उत्तरे कूले ४०७
गच्छत्येव परित्यागी २५४
गजच्छायायां पूर्वस्यां ४९५
गजेन्द्रैर्गर्जितैर्वान्ये ७२०
गण्डं गण्डं गण्डवती ४६८
गतिं च यन् दर्शनमाह देवो २७४
गतिश्च सर्वभूतानां ३७८
गतीः सहस्राणि च पञ्च तस्य २७५
गते किल महादेव ५२५
गन्धर्वैरप्सरोभिश्च ४००
गभस्तिनेमिः सत्त्वस्थः ५४५
गम्भीरं गहनं ब्रह्म १८२
गरुडः पक्षिणां श्रेष्ठ ४१६
गवां शतसहस्रं च ४९५
गुणज्ञानमभिज्ञान १३५
गुणज्ञानामभिज्ञानं ५८६
गुणवद्भिर्गुणोपेतं ८०
गुणवित्पावको मह्यं ५९१
गुणस्त्वेकोऽपरस्तत्र ३५५
गुणस्वभावस्त्वव्यक्तो ३४३
गुणहीनो हि तं मार्गं ८१
गुणा गुणवतः सन्ति ३१६
गुणा गुणेषु लीयन्त ३२५
गुणा गुणेषु वर्तन्त ३१४
गुणात्मकं कर्म वदन्ति वेदा- ६५
गुणादाने विप्रयोगे च तेषां ९०
गुणानामपि यद्येतत् १२३
गुणानुरूपं स च कर्मरूपं १७९
गुणानोन्नीयते बुद्धिः २२७
गुणान्ते नीयते बुद्धिः ४३
गुणान्यदिह पश्यन्ति ८९
गुणेष्वेते प्रकाशन्ते ८८
गुणैर्मुनीनां पूजितस्तत्र ७०३
गुणैर्यस्त्ववरैर्युक्तः ८९
गुरुर्गुरुतमो धाम ५३६

